गतेषु राजसु विरागिता प्रर्यादेन्या वैसै । स्फुरद्धि शृङ्गारभङ्ग्या प्रकाशमाने । तथा एतेन वृतान् स्वयंवरशेषं प्रधानसमानिव प्राणेण धरिष्यतीति वचा आनन्दस्य महार्णवैरगाधसमुद्रे प्रमुदिततरैर्नैस्तत्कालमागतैर्नृपैर्वृते ॥ २ ॥

चलत्पदस्तत्पदयन्त्रणेङ्गितस्फुटाशयामासयति स्म राजके । श्रमं गता यानगतापीयमित्युदीर्य धुर्यः, कपटाउजनीञ्जनः ॥ ३ ॥

चलदिति । चलन्ति पदानि यस्य पुरस्तात् गच्छन् धुरं वहति धुर्यः शिबिकादाहवाही जनः जनीं भैमी राजके राजसङ्घमध्ये आसयति स्म प्रस्थापयत् । किं कृत्वा । यानगतापि शिबिकारोहणेनापि गमने सत्यपि इयं भैमी श्रमङ्गता नि सहा जातेति कपटाद्व्याजाद् उदीर्य उक्त्वा । किम्भूता शिबिका पटान्तरितेन तत्पदेन भैमीचरणेन च यन्त्रण यन्त्रणा या पीडन धुर्यजनस्य तदेव यदिङ्गित अवस्थापनसूचिका चेष्टा तेन स्फुट आशयो नवनृपदिदृक्षामात्रविषयोऽभिप्रायो यस्याः सा । जनीं । जायतेऽस्यां गर्भ इति जनिघसिभ्यां चेति औणादिक इ प्रत्यये जनिवध्योरिति ( पा० ७ । ३ । ३५ । ) वृद्धिनिषेधे कृदिकारादक्तिन (पा० ४ । १ । ४१ । सू० वार्तिकेन ङीप् ॥ ३ ॥

नृपानुपक्रम्य विभूषितासनान् सनातनी सा सुपुषे सरस्वती । विहारमारभ्य सरस्वतीः सुधासरःस्वतीवार्द्रतनूरनूदिता: ॥ ४ ॥

नृपानिति । सा सनातनी नित्या सरस्वती देवता विभूषित स्वीयसौन्दर्येण आसनं कृतमासनं यैस्तान्नृपानुपक्रम्योद्दिश्य सरस्वतीर्वाचः सुषुवे उवाचेत्यर्थः । किम्भूता वाच । सुधासरसु अमृतसमुद्रेषु विहारं जलक्रीडामारभ्य एत्याऽतीवातितरामार्द्रतनूः । तथाऽनु पश्चाद्विलम्बेन उदिताः तस्मान्निर्गता । अति मधुरा इत्यर्थः । समाभया । अभ्यस्तात्स्नुत्स्य ॥ ४ ॥

वृणीष्व वर्णान् सुवर्णकेतकीप्रसूनपर्णा*हृतुपर्ण-
माहृतं निजामयोध्यामपि पावनीमयं भवन्मयो
ध्यायति नावनीपतिः ॥ ५ ॥

वृणीष्वेति । गौरत्वलक्षणेन वर्णेन सुवर्णकेतकीप्रसूनस्य गौरत्वलक्षणाद्वर्णादाहृत्य प्रेमास्पदीकृतं तस्मादधिकं वा यस्य तं गौरं सुकुमारशरीरं ऋतुपर्णनामानं नृपं त्वं वृणीष्व । अयमवनीपतिर्भवन्मयस्त्वदेकचित्तः सन् निजामात्मीयां परम्परायातां पावनीं पवित्रीकरणशीलामयोध्यां मुक्तिपुरीमपि न ध्यायति न स्मरति । परमानन्दरूपत्वान्मुक्तेस्सकाशादपि तव प्राप्तिरेतस्याधिकेत्यर्थः । अन्योऽपि विलासी गुणवतीमपि निजां प्रियामचिन्तयन्नन्यामेव ध्यायतीत्युक्तिः । त्वय्यतितरामनुरक्तोऽयमेतं वृणीष्वेति भावः । वर्णात् । पञ्चमी विभक्ते इति (पा० २।३।४२।) पञ्चमी । भवन्मयः । सर्वनाम्नो वृत्तिमात्रे स्त्रियाः पुंवत् (पा० ६।३।३४।) सू० वार्तिकेन पुंवद्भावः ॥ ५ ॥

न पीयतां नाम चकोरजिह्वया कथंचिदेतन्मुख-
चन्द्रचन्द्रिका । इमां किमाचामयसे न चक्षुषी
चिरं चकोरस्य भवन्मुखस्पृशी ॥ ६ ॥

नेति । हे भैमि चकोरजिह्वया एतस्य ऋतुपर्णस्य मुखमेव चन्द्रस्तस्य चन्द्रिका प्रसन्नतारूपा ज्योत्स्ना कथञ्चित्केनापि प्रकारेण न पीयतां नाम । चकोरजिह्वया सत्यचन्द्रचन्द्रिका पीयते । इयं त्वलीकमुखचन्द्रिकेति पीयतां मा वा । अत्रास्माकमौदासीन्यमित्यर्थः । परन्तु चिरं भवन्मुखस्पृशी त्वदीयमुखसेवनतत्परे चकोरस्य चक्षुषी इमामेतन्मुखचन्द्रचन्द्रिकां किमिति न आचामयसे पाययसि अपि तु पाययस्व । अलीकत्वात्तादृग्रसाभावात् चकोरजिह्वया पानेऽकृतेऽपि तथा सुन्दरत्वात् वर्णनायामस्मदादीनामशक्तत्वेऽपि तादृगाह्लादकत्वस्य सौन्दर्यस्य च प्रत्यक्षेण द्रष्टुं शक्यत्वादेतन्मुखचन्द्रचन्द्रिकां चक्षुषी पाययस्वेत्यर्थः । अथ चकोरजिह्वया भवन्मुखसेवाया अकृतत्वादेतन्मुखचन्द्रचन्द्रिकापानं कर्तुमशक्यमिति युक्तं । तदीयचक्षुर्भ्यां तु चिरकालमु-

* वर्णादिति टीकासम्मतः पाठः ।

चमस्य भवन्मुखस्य सेवनात् सयोरेतन्मुखचन्द्रचन्द्रिकापानं युक्तं । उत्तमसेवया हि दुष्प्रापमपि वस्तु सुप्राप भवतीत्याशय । चिरकालसेवन्मुखकान्ति सादरं किं न पश्यस्यपि तु पश्यैनं सुधीश्चेतिभावः । यद्वा जिह्वाया अल्पएवास्वादे सामर्थ्यादेतन्मुखचन्द्रचन्द्रिकायाश्चातिबहुत्वाच्चकोरजिह्वयैव कथञ्चिन्न पीयतां नाम । त्वन्मुखस्पृशोश्चकोरनेत्रयोस्तु पानं युक्तमल्पीयसोरपि नेत्रयोर्भूयसी विषयस्य ग्रहणे सामर्थ्यसद्भावात् किं पुनर्विशालयोरनयोरिति भावः । एते चकोरस्येव नेत्रे भवन्मुख स्पृशत इति नेत्रयोरमणीयत्व चन्द्रिकापानयोग्यत्व चिलोकनचातुर्यं च सूचित । अत्र चक्षुः प्रत्यवसानार्थत्वाद्गतिबुद्धीत्यादिना (पा० १ । ४ । ५२ ।) चक्षुषोः कर्मत्वं । णिचश्चेति (पा० १ । ३ । ७४ ।) कर्त्रभिप्राये क्रियाफलविवक्षायामात्मनेपदे प्राप्तेऽपि निगरणत्वान्निगरणचलनार्थेभ्यश्चेति (पा० १ । ३ । ८७ । परस्मैपदप्राप्तेराचामयत इति चिन्त्य । एवं सति चकोरस्य चक्षुषी चिरं भवन्मुखस्पृशी वर्त्तेते। चत· त्वन्मुखसेवां बहुकाल कुर्वीत इत्यर्थः । अत एवैनामेतन्मुखचन्द्रचन्द्रिकां किं नाचामयसे सामर्थ्याच्चक्षुर्भ्यामिति शेष । इति समाधानं । आचमनमाचामः सोऽस्या अस्तीति आचामवती करोतीत्यर्थे तत्करोतीति (पा० ३ । १ । २६ ।) सूत्रस्थवार्तिकण्यन्तस्य लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तप्रत्यवसानाभावात् निगरणादि (पा० १ । ३ । ८७ ।) सूत्रेणानुवृत्तपरस्मैपदसञ्ज्ञया परस्मैपदस्य विधानात्सञ्ज्ञापूर्वका विधिरनित्य इति परिभाषयात्र परस्मैपदं न भवतीति वा । आचाम इति न कम्यमिचमाम् इति मित्वनिषेधाद्ध्रस्वत्वाभाव ॥ ६ ॥

अपां विहारे तव हारविभ्रमं करोतु नीरे पृषदुत्करस्तरन् । कठोरपीनोन्नकुचद्वयीतटत्रुटत्तरः सारवसारवोर्मिजः ॥ ७ ॥

अपामिति । हे भैमि आरवेण सहिताः सारवा सरयाश्च सारवा स्वरयुता ऊर्मयस्तेभ्यो जातः पृषदुत्करो बिन्दुसमूहः अपां विहारे प्रेम्णेन सह जलक्रीडायां गत्वा तव हारविभ्रमं त्वामप्यस्थितहारविला

सं करोतु । किम्भूतः । नीरे तरन् प्लवमानः । तथा कठोराऽतिकठिना पीना उच्चा त्वदीया कुचद्वयी स्तनद्वयी तस्यास्तटे परिसरे त्रुटत्तर अतिशयेन त्रुट्यन् विशीर्य्यमाणतर । अनङ्गक्रीडावशाद्विच्छिन्नस्त्वदीया मुक्ताहार इव शोभतां । अथ च पश्यतो लोकस्य भैमीहारः किमयमिति विशिष्टा भ्रान्तिं जनयतु । विगतहारे देशे हारविलास इति विरोधश्च । अथ च पृषदुत्करो शरीरमङ्गु क्रीडाप्रदेशे क्रीडां करोत्विति युक्तं । मत्पूक्रीडाप्राप्त्यर्थं मन वृणीष्वेतिभावः । देविकायां सरय्वां च भवेदाविकसारवावित्यसरः । दाविदुनायनादिसूत्रेण (पा० ६ । ४ । १७४ ।) साधुः ॥ ७ ॥

अखानि सिन्धुः समपारि गङ्गया कुले किलाऽस्य प्रसभं स भंत्स्यते । विलङ्घ्यते चास्य यशः शतैरहो सतां महत्सम्मुखधावि पौरुषं ॥ ८ ॥

अखानीति । अस्य कुले वंशे पूर्वजैः सगरपुत्रैः इन्द्रनीताश्वान्वेषणार्थं सिन्धुः समुद्रः पातालपर्य्यन्तं अखानि खातः । कपिलशापदग्धानां तेषामेवोद्धरणार्थं भगीरथेनानीतया गङ्गया समपूरि पूर्णीकृतः । तथा श्रीरघुनाथेन रावणवधार्थं प्रसभं हठेन स सिन्धुः भत्स्यते बन्धनं नेष्यते किलेति पुराणप्रसिद्धमेतत । स एवेदानीं अस्य यशःशतैः विलङ्घ्यते च । सर्वं समुद्रमेव प्रति पौरुषं किमिति कृतवन्त इत्यत आह अहो युक्तमेतत् । सतां महतां पौरुषं महतामेव सम्मुखं धावति प्रसरतीत्येवशील । कुत्राम् रूपयोपेत एवंविधा अस्य पूर्वजाः । श्रीरघुनाथश्च यस्मिन् वंशे समुत्पत्स्यते तस्मिन् वंशे समुत्पन्नोऽयं अस्य यशांसि समुद्रपारमाप्नोति एन वृणीष्वेति भाव । भत्स्यते । बधं कर्म्मणि लृटि बध्नातेर्वर्णे च रूप ॥ ८ ॥

एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनां । एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्त्तीः खटिकाः क्षिणोति ॥ ९ ॥

एतदिति । एतस्य यशस एव क्षीरधेयं: पूरः न गाहते स्वयशील एतदीययशोवर्णकं कवीनां वचन अगाधे अतलस्पर्शे स्थाने पतति नि मज्जति । स्तोतुमसामर्थ्याद्वागगोचरोऽस्य यशःसमुद्र इत्यर्थः । अ-न्योऽपि समुद्रः प्रवाहादवगाही अगाधे बुडति । तथा एतस्य शौर्या-दीनां गुणानां गणनार्थं अङ्कपातोऽङ्कविन्यासः प्रत्यर्थिनां वैरिणां कोष्ठी रेव खटिका. क्षिणोति छिनत्ति । यदङ्कविन्यासे हि खटिकाक्षयो भवति । एतद्गुणा अप्यतिभूयस्त्वाद्गणयितुमशक्याः । एतद्गुणानां पुर-स्तादरिकीर्तिर्न प्रतिभासत इत्यर्थः । एन वृणीष्वेत्यर्थः । क्षिणोति । लघूपधत्वात् (पा० ७ । ३ । ८६ ।) गुणप्रसक्तावपि सञ्ज्ञापूर्वकविधेर-नित्यत्वाद्गुणाभाव. ॥ ९ ॥

भास्वद्वंशकरीरतां दधदयं वीरः कथं कथ्यताम
ध्युष्टापि हि कोटिरस्य समरे रोमाणि शूराङ्कुराः । नीतः संयति बन्दिभिः श्रुतिपथं यन्ना
मवर्णावलीमन्त्रः स्तम्भयति प्रतिक्षिति*भुजां
दोःस्तम्भकुम्भीनमान् ॥ १० ॥

भास्वदिति । हे भैमि भास्वतो वंशस्तस्य करीरतां तदङ्कुरत्वं दधा नः सूर्यवंशोत्पन्नो यशःस्वी वर्तमानः अथ च मुक्तायुक्तत्वाद्भास्वा-न्यो यशो वंशस्तदङ्कुरश्च दधदतितेजस्वी अयमृतुपर्णनामा वीरः कथं केन प्रकारेण कथ्यतां वर्ण्यतां अपितु वर्णयितुं न शक्यत इत्यर्थः । हि यस्मात समरे यस्य मानवस्य अध्युष्टापि सार्द्धत्रयोऽपि प्रसिद्धापि कोटिः सार्द्धत्रिकोटीनि मानुषशरीरे स्थितानि रोमाणि सर्वस्यान्तर्वी ररसोत्सेकस्याङ्कुरा शूराङ्कुराः वीररसोत्साहेन सङ्ग्रामे रोमाञ्चयुक्तोऽयं भवतीत्यर्थ. । तथा अस्य नामवर्णावलीमन्त्रः ऋतुपर्ण इति नामाक्ष-रपङ्क्तिरूपो मन्त्रः संयति बन्दिभिः श्रुतिपथं कर्णपथं नीतः प्रापि-तः सन् प्रतिक्षितिभुजां रिपूणां दोषां बाहव एव स्तम्भास्त एव कौ-म्भ्यं दिग्वांश यं कुम्भीनसाः सर्पास्तान् स्तम्भयति । एतन्नाममन्त्राकर्ण-नाद्वीनानां शत्रूणां बाहवो युद्धाय न प्रसरन्तीत्यर्थ. । भिद्वैदिकम-

* क्षितिभुजामिति टीकाकृन्मतः पाठान्तरः ।

त्वत्रथ्याश्च फणिनां स्तम्भा भवति । अभ्युद्गतेति मादृक्कोटित्रयस्य म-
ज्ञा । अङ्कुरो नित्यपुलिङ्गः । कुम्भीनसो लेलिहान इत्यमरः ॥ १० ॥

तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृतां शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडवः । व्योमव्यापिविपक्षराजकयशस्तारापराभावुकः कासामस्य न स प्रतापतपनः पारदृगिरां गाहते ॥ ११ ॥

तादृगिति । हे भैमि अस्य राज्ञः स प्रताप एव तपनः सूर्यः का-
साङ्गिरां अपर परतीरं न गाहते । कस्यापि वर्णयितुमशक्य इत्यर्थः ।
स कः । अहं तादृग्दीर्घं चतुर्दशमन्वन्तरपरिमितत्वान्महापरिमाणं वि-
रिञ्चिवासरं ब्रह्मदिनं तस्य विधौ करणे यस्य यदीयस्य तेजोरूपस्य सू-
र्यस्य कर्तृता निर्मातृता जानामि । सूर्यस्य दिवसकर्तृत्वात् ब्राह्म-
मपि दिनं दिनत्वात् सूर्येण कर्तव्यं तच्चतुर्युगसहस्रपरिमाणत्वादेतद्दि-
नन्निर्मात्रा सूर्येण निर्मातुमशक्यमिति तद्विलक्षणेन चिरकालावस्था-
यिनाऽतिदीर्घेणैतदीयप्रतापतपनेनैव निर्मातुं शक्यं न त्वन्येनेत्यहं म-
न्ये इत्यर्थः । तथा अहं अम्बुधिपयसः पूरे प्रवाहमध्ये वाडवो व-
डवानलः यच्चैतदीयप्रतापतपनस्य प्रतिबिम्बरूप इति शङ्के । जलानि-
लयोः सहावस्थानविरोधात् वाडवोऽग्निर्न भवति किन्तु प्रतापसूर्य-
स्य सलिले प्रतिबिम्बं भवति । किम्भूतः सः । व्योमव्यापिन्या विप-
क्षराजकस्य रिपुराजकस्याल्पत्वाद्यशांस्येव तारा नक्षत्राणि स्वप्रभावेण
पराभावुकः तिरस्कर्ता । सूर्येणापि व्योमव्यापिवैरिचन्द्रस्य चन्द्रिका-
रूपं यशो नक्षत्राणि च पराभूयन्ते । एतत्प्रतापसूर्यस्य पुरस्ताद्वैरिय-
शांसि न प्रसरन्तीत्यर्थः । पराभावुकः । लषपतपदस्थाभूवृषेत्युकञ् ३
। २ । १५४ ॥ तद्योगे न लोकेति षष्ठीनिषेधात् (पा० २ । ३ । ६९ )
ताराइति द्वितीया ॥ ११ ॥

द्वेष्याकीर्त्तिकलिन्दशैलसुतया नद्याऽस्य यद्दोर्द्वयी

कीर्त्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तन्नास्मिन्विनिमज्य बाहुजभटैरारम्भि रम्भापरीरम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ १२ ॥

द्वयीति । अस्य राज्ञः दोर्द्वयी बाहुद्वयं तया जनिता कीर्त्तिश्रेणिः कीर्त्तिपरम्परा तन्मयी तद्रूपा श्वेतत्वाद्गङ्गा द्विष्याणां रिपूणां पलायनाज्जनिताऽकीर्त्तिः सैव कलिन्दशैलसुता यमुना तया नद्या सह यस्मात् रणप्राङ्गणे सङ्ग्रामभूमौ समागममगात् संयोगं प्राप तत्तस्मात् कारणात् तस्मिन् प्रयागसञ्ज्ञके गङ्गायमुनासङ्गमे बाहुजभटैः क्षत्रिययोधैः शूरतरैः विशेषेण निमज्य लवणया देहं त्यक्त्वा रम्भापरीरम्भानन्दस्य निकेते नन्दनवने देवोद्याने क्रीडायां यः आदरः आसक्तिस्तस्य डम्बरं बाहुल्यं आरम्भि आरब्धं । योऽपि प्रयागे निमज्जति सोऽपि सितासिते सरिते इत्यादि श्रुत्या * नन्दनवने रम्भाद्यप्सरोभिः सह क्रीडति । बाहुजः क्षत्रियो विराडित्यमरः । आरम्भि । रभेरशब्लिटोरिति नुम् (पा० ७ । १ । ६३ ।) परीरम्भ इति । उपसर्गस्य घञीति (पा० ६ । ३ । १२२) दीर्घः ॥ १२ ॥

इति श्रुतिस्वादिततद्गुणस्तुतिः * सरस्वतीवाङ्मयविस्मयोदयया । शिरस्तिरःकम्पनयैव भीमजा न तं मनोरन्वयमन्वमन्यत ॥ १३ ॥

इतीति । भीमजा शिरसस्तिरःकम्पनयैव वक्रचालनयैव कृत्वा तं मनोरन्वयं सूर्यवंशं मनुवंशसमुत्पन्नमृतुपर्णं नान्वमन्यत नाङ्गीचकार । किम्भूता । इति पूर्वोक्तप्रकारेण श्रुतिभ्यां कर्णाभ्यां स्वादिता सादरमाकर्णिता तद्गुणस्तुतिर्यया । किम्भूतया । सरस्वत्या वाङ्मयेन जनितः विस्मय आश्चर्यं तस्मादुदययोत्पन्नया । शिरःकम्पनस्योभयसूचक

* सितासिते सरिते यत्र सङ्गथे तत्राप्लुतासो दिवमुत्पतन्ति । ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते ॥ इति कश्चिदृक् ॥

* गुणस्तुतिरिति पाठान्तरः । सं० मु० पु० ।

स्वादाश्चर्याभिनयकृतः कम्पस्तन्निराकरणार्थो जात इत्यर्थः । अस्य मनुवंशत्वात्स्यास्य सोमवंशे साभिलाषत्वात् कन्याभिलषितसौन्दर्याद्यवस्र्ंनाद्वाऽननुरागः ॥ १३ ॥

युवान्तरं सा वचसामधीश्वरा स्वरामृतन्यक्कृतमत्तकोकिला । शशंस संसक्तकरैव तद्दिशा निशाकरज्ञातिमुखीमिमां प्रति ॥ १४ ॥

युवेति । सा वचसामधीश्वरा सरस्वती निशाकरस्य ज्ञातिः सदृशं मुखं यस्यास्तां चन्द्राननामिमां प्रति युवान्तरं अन्यं वरं शशंस वर्णयामास । किंभूता । स्वरामृतेन न्यक्कृतस्तिरस्कृतः मत्तो वसन्तहृष्टः कोकिलो यया । तथा हि तद्दिशा यस्यां दिशि वर्णनीयो युवा तिष्ठति तद्दिशा तदीयया दिशाऽभिमुख्येन संसक्तकरैव सम्बद्धहस्ता हस्तेन स निर्दिश्येति यावत् । सरस्वतीं वाणी माधुर्य्यैर्वैवाणृयोन्ततु राजन्यनुरागेणेति स्वरामृतपदेन सूचितं ।ईश्वरेति । स्थेशेति वरच् (पा० ३ । २ । १७५ ।) अथ मार्गेश्वरीत्यादेः कथं साधुत्व । अन्येभ्योऽपि दृश्यन्त इति (पा० ३ । २ । ७५ ।) ईशेर्वनिपि ङीब्रयोः सतोरित्यवेहि ॥ १४ ॥

न पाण्ड्यभूमण्डनमेणलोचने विलोचनेनापि नृपं पिपाससि । शशिप्रकाशाननमेनमीक्षितुं तरङ्गयाऽपाङ्गदिशा दृशस्त्विषः ॥ १५ ॥

नेति । हे एणलोचने मृगाक्षि त्वं पाण्ड्यभूमण्डनं नेत्राभ्यां न पिपाससि परमेकेनापि न पाण्ड्यदेशस्य चूडामणिं मुकुटरत्नभूतं नृपं पिपाससि पिबन्न पश्यसि तावत् पातुमिच्छस्यपि नेत्यपेरर्थः । अनुचितमेतदित्यर्थः । अधरेण तावन्न पिपाससि परं विलोचनेनापि न पिपाससीति द्वाभ्यां नेत्राभ्यां न पिपाससि परमेकेनापि न पिपाससीति वा । तस्मात् त्वं शशिवत् प्रकाशं प्रसन्नं आननं यस्य तमेनं नृपं ईक्षितुं दृशस्त्विषः नेत्ररश्मीन् अपाङ्गदिशा नेत्रप्रान्तदेशेन तरङ्गय अति सुन्दरमेनं कटाक्षैर्विलोकयेति भावः ॥ १५ ॥

भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्त्तुमभ्यासपरम्परापरा । युहो महावंशममुं समाश्रिता सकौतुकं नृत्यति कीर्त्तिनर्त्तकी ॥ १६ ॥

भुवीति । हे भैमि महावंशं महाकुलीनं अमुं समाश्रिता एतदीयेति यावत् एवंविधा कीर्त्तिरूपा नर्त्तकी सकौतुकं यथा तथा धनाभिलाषराहित्येन नृत्यति अहो आश्चर्यं लोकगत कौतुकं नर्त्तकीगतमिति न पौनरुक्तं । किम्भूता । पूर्वं भुवि भ्रमित्वा सकलं भूमण्डलं व्याप्येत्यर्थः । पश्चादनवलम्बं यथा तथाम्बरे गगने विहर्त्तुं चरणाभ्यासपरम्पराया परा आसक्ताऽभ्यासपरम्परया चापरोत्कृष्टा एतदीया कीर्तिर्भूलोकं पूर्वमभिव्याप्य लोकान्तरं व्याप्नोतीत्यर्थः । तेनाप्यनवलम्बनेन महोत्साहवन्तममुमिति वा । नर्त्तक्यपि पूर्वं भूमौ भ्रमित्वा निराश्रयं गगने नर्तितुं अभ्यासपरा सती महान्तं वेणुमाश्रित्य वेणोरुपरि सकौतुकं नृत्यति । अथच महान्तं पृष्ठवंशं आश्रिता नर्त्तकीति वा । या हि झटिति भूमावपि गन्तुं न शक्नोति सा निरालम्बं महान्त वेणुमाश्रित्य नृत्यतीत्यतीव चित्रं इत्यादि ज्ञातव्यं । वंशो वेणौ कुले वर्गे पृष्ठस्यावयवेऽपि चेति विश्वः ॥ १६ ॥

इतो भिया भूपतिभिर्वनं घनादटद्भिरुच्चैरटवी त्वमीयुषी । निजापि साऽथापि चिरात्पुनः पुरी पुनः स्वमध्यासि विलासमन्दिरं ॥ १७ ॥

इत इति । इत अस्माद्राज्ञः सकाशात् भिया भयेन घनाद्वनान्तरमटद्भिर्गच्छद्भिर्भूपतिभिरुच्चैरतिशयेनाटवीत्वमरण्यामीत्वमीयुषी प्राप्ता सा प्रसिद्धा निजा स्वीयापि पुरी चिराद्वनान्तरभ्रमात् पुनरथापि प्राप्तं । तथा तत्र पुर्यां स्वं स्वीयं विलासमन्दिरं रतिगृहं पुनरप्यध्यास्यधिष्ठितं यत्पुर्येवेत्यर्थः । राज्यभ्रंशदशापेक्षया ऽनेकवारं तत्रागत्य पुनरन्यत्र गत्वा पुनस्तत्रागच्छतीत्यर्थः । अनेन वैरिनगराण्युद्वासितानीति भावः । उपेयिवानित्यत्र सूत्रे (पा० ३ । २ । १०९ ।) उपसर्गस्यात न्त्रत्वादीयुषीत्यत्र क्वसुः ॥ १७ ॥

आसीद्वासीममूमीवलयमलयजालेपनेपथ्यकीर्त्ति
सप्ताकूपारपारीसदनजनघनोद्गीतचापप्रताप:।
वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपाति
भूयश्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखे
न्दुः ॥ १८ ॥

आसीदिति । हे भैमि अस्माद्वीरात्पर उत्कृष्टोऽन्यो ऽयं क आसी-
द्भवेद्वा अपि तु एवंविधोऽयमेव नत्वन्य कश्चिदित्यर्थ । किम्भूत ।
सीमा समुद्रलक्षणा आ अभिव्याप्य सीमासहित भूमीवलय तस्य म-
लयजालेपेन चन्दनाङ्गरागस्वरूप नेपथ्य भूषण तदेव कीर्त्तिर्यस्य की-
र्त्तिचन्दनधवलितसमुद्रमुद्रितभूमण्डल । तथा सप्तानां अकूपारपारीणां
समुद्रपरतीराणां समाहार सप्ताकूपारपारी सैव सदन निवासस्थान
यस्य सप्तसमुद्रपरतीरवासी यो जन लोकस्तेन घनमविच्छिन्न उद्गीत
उच्चैर्गीयमानश्चापप्रतापो यस्य चापस्य प्रतापश्च वा यस्य स । तथा प-
दयुगे चरणयुगले युगपत्समकालमेव पातिन पतनशीला नमस्कारका
रिणो भूपास्तेषामतिभूयांसि अतिबहूनि यानि चूडरत्नानि तान्येव नि-
र्मलत्वादुज्ज्वलत्वादुडुपत्न्यो नक्षत्ररूपाश्चन्द्रस्त्रिय तासां कराणां कि-
रणानां परिचरण सम्यक् मञ्जरण तेन अथ च तासां हस्तैर्यत्परिच-
रण चरणसेवा तया कृत्वाऽमन्द नन्दन्तोऽतितरां समृद्धकान्तयः नखा
एवेन्दवश्चन्द्रा यस्य चरणपतितसकलराजशिरोमणिकिरणसंवर्द्धितनख
कान्ति । यशस्वी प्रतापवान् अत एव सर्वनृपतिवन्द्यचरण एतादृ-
श कोऽपि नास्ति तस्मादेन वृणीष्वेति भाव । अन्या अपि पत्नीक-
रकृतचरणसंवाहनेन नन्दति ॥ १८ ॥

भङ्गाकीर्त्तिमषीमलीमसतमप्रत्यर्थिसेनाभटश्रेणीति
न्दुककाननेषु विलसत्यस्य प्रतापानलः । तस्मा
दुत्पतिता स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गा स्फुट

भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारिदम्भोलयः ॥ १९ ॥

भङ्क्तेति । अस्य प्रतापानलः भङ्क्त्या पराजयेन ज्वलिताऽकीर्त्तिः सैव श्यामत्वान्मषी तया मलीमसतमा अतितरां मलिनीभूताः प्रत्यर्थिसेनाभटाः शत्रुसैनिकशूराः तेषां श्रेणी समूहः सैव श्यामत्वात्तिन्दुककाननानि तेषु विलसति विशेषेण दीप्यते । तस्मादेतदीयप्रतापानलादुत्पतिता वल्गिता भालाल्ललाटादुद्भूतं भवाक्षि हरतृतीयनेत्रं भानुः सूर्यः हुतभुग्वह्निः जम्भारेरिन्द्रस्य दम्भोलिर्वज्रः एते स्फुलिङ्गाः स्फुटाग्निकणा इव जगदुत्सङ्गे जगतां भूम्यादीनां मध्ये स्फुरन्ति शोभन्ते । तिन्दुककाननानि हि श्यामानि भवन्ति तत्र पतितोऽग्निः चटचटाशब्दं कुर्वन् स्फुलिङ्गान् मुञ्चति । महत्स्वपि हरनेत्रादिषु स्फुलिङ्गत्वारोपेण प्रतापानलस्यातितरां माहात्म्यं सूचितं । यस्य कणा एवम्भूताः स कथंभूतो भवतीति ॥ १९ ॥

एतद्दन्तिवलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं सङ्ग्रामाङ्गणसीम्नि जङ्गमगिरिस्तोमाभ्रमाधायिभिः । पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनम्रामरश्रेणीमध्यचरः पुनः क्षितिधरक्षेपाय धत्ते धियं॥२०॥

एतदिति । हे भैमि एतस्य पार्थिवस्य उग्रसमरस्य प्रेक्षार्थं उपनम्रा समागताऽमरश्रेणी देवसङ्घः तन्मध्यचरः तस्य मध्ये विद्यमानो देवत्वं प्राप्त इति यावत् सम्प्रत्यपि पृथुर्वैन्यः पृथ्वीन्द्रः पुनः क्षितिधराणां पर्वतानां क्षेपाय प्रोत्सारणाय धियं बुद्धिं धत्ते । किं कृत्वा सङ्ग्रामाङ्गणस्य सीम्नि मर्यादायां जङ्गमानां स्थानात् स्थानान्तरं गच्छतां गिरीणां स्तोमस्य समूहस्य आधायिभिः भ्रान्तिं कुर्वाणैः एतद्दन्तिवलैरेतदीयैः गजसमूहैः आलिङ्गिताङ्गीं व्याप्तदेहां निखिलां भुवं विलोक्य । पुरा पृथुना स्वधनुःकोट्या जङ्गमपर्वतानुत्सार्य ग्रामादिविभागः कृतः । एतद्गजान् दृष्ट्वा सञ्चरद्गिरिभ्रमेणागतेन पृथुना पुनः पर्वता उ-

ति श्रुत्वा एतदुत्सारणे पुनरपि बुद्धिं कृतेत्यर्थः । सचतरगनवाहुल्य दारुणरणरसिकत्वञ्च सूचितं ॥ २० ॥

**अथ स दासीङ्गितविद्विदर्भजामितो ननु स्वामिनि पश्य कौतुकं । यदेष सौधाग्रनटे पटाञ्चले चलेऽपि काकस्य पदार्पणाग्रहः ॥ २१ ॥**

अथेति । इङ्गितवित् भैम्यभिप्रायज्ञा काचिद्दासी विदर्भजा अथ-स बभाषे । ननु हे स्वामिनि इतोऽस्यां दिशि एव कौतुकं पश्य । किं त-त । सौध सुधाधवलितगृह तस्याग्रमूर्द्धदेशस्तत्र वर्त्तमाने नट चल-त्वान्नर्त्तकतुल्ये वायुवशाच्चलेऽपि पटाञ्चले पताकावसनाञ्चल यत् एष काकस्य पदार्पणे चरणस्थापने आग्रह तत्रोपवेशनार्थं पौन पुन्येन प्र-वृत्तिर्निर्बन्ध तत्कौतुकं पश्येति सम्बन्ध । अननुरक्ताया भैम्या श्रृ-ङ्गारचेष्टा भावयत पाण्ड्यस्याप्यपि पटाञ्चले उपवेशनार्थं काकस्या-ग्रहाऽनुचितस्तथा । एतस्य पाण्ड्यस्याय भैम्या दुरभिनिवेश इति सूच-नार्थं तत्स्वीकृततद्वरणं मनिवारणार्थं वा इयमुक्ति । इत एतद्वृत्त न-कौतुकात् सकाशादिति वा ॥ २१ ॥

**ततस्तदप्रस्तुतभाषितोत्थितैः सदस्तदश्वेति हसैः सदःसदां । स्फुटाऽजनि म्लानिरतोऽस्य भूपतेः सिते हि जायेत शितेः सुलक्ष्यता ॥ २२ ॥**

तत इति । तत तस्या दास्या पूर्वोक्तमप्रस्तुत भाषितं वचन तस्मादुत्थितैः सद सदां सभ्यानां हसै हास्यै तत्सद सा सभा अश्वेति श्वेतीकृत । तद्वचन श्रुत्वा सभ्या हसन्ति स्मेत्यर्थः । अत सद श्वेतीक-रणाद्धेतोरस्य भूपतेर्म्लानि लज्जा वैवर्ण्यं स्फुटा अजनि । अत्रार्थान्तर-न्यासमलाह । हि यस्मात सिते शुभ्रवस्तुनि शिते कृष्णवर्णस्य सुलक्ष-ता प्रकटता जायेत । सभ्यहास्यवशात सोऽधिकविवर्णो जात इत्यर्थः । स स्वत एव श्याम सभ्यहास्यवशादधिक श्यामो जात इति वार्थः । अश्वेति । श्वितिङ् शौक्ल्ये इत्यस्मात् ण्यन्तात्कर्मणि लुङात्मनेपदं २२ ॥

ततोऽनु देव्या जगदे महेन्द्रभूपुरन्दरं सा जगदेकवन्द्यया। तदार्जवार्जिततर्जनीकया जनी कयाचिदरचित्स्वरूपया ॥ २३ ॥

तत इति । ततः कयाचिल्लोकोत्तरया अनिरूपितरूपया देव्या वाग्या महेन्द्रभुवः महेन्द्रनामकपर्वतसम्बन्धिनो देशस्य पुरन्दरं स्वामिनं अनु लक्षीकृत्य सा जनी स्वयम्वरा जगदे उक्ता । किम्भूतया जगत-एका देवतान्तरपरित्यागेन वन्द्यया । यतः परा श्रेष्ठा चिज्ज्ञानलक्षणं स्वरूपं यस्यास्तया । तया तस्या भैम्या यदार्जवं ऋजुता तेनार्जिता वर्णनार्थमूर्ध्वीकृता तर्जनी यया । तस्मिन् वर्णनीये नृपे विषये वा दे-व्या एव वा यदार्जवं कृपा तया । जगदे कर्मणि लङ् । धाचयमपुर-न्दरौ चेति निपातनात् पुरन्दरः साधु । तर्जनीकयेति नद्यृतश्चेति क-प् । (पा० ५ । ४ । १५३) अनुर्लक्षणे (१ । ४ । ८४) कर्मप्रवचनीय-त्वात् पुरन्दरमिति द्वितीया ॥ २३ ॥

स्वयम्वरोद्वाहमहे वृणीष्व हे महेन्द्रशैलस्य महेन्द्रमागतं । कलिङ्गजानां स्वकुचद्वयश्रिया कलिं गजानां शृणु तत्र कुम्भयोः ॥ २४ ॥

स्वयमिति । हे भैमि स्वयम्वर उद्वाहलक्षणे महे उत्सवे आगतं महेन्द्रशैलस्य महेन्द्रं स्वामिनं वृणीष्व । तत्र पर्वतोपलक्षिते देशे कलिङ्गदेशे जातानां गजानां कुम्भयोः स्वकुचद्वयश्रिया सह कलिं समान-शोभात्वद्व्याभिलाषनिमित्तं कलहं शृणु । हस्तिकुम्भास्त्वत्कुचसाम्य-मभिलषिष्यन्ति परं न प्राप्स्यन्तीति भावः । स्वयम्वरोद्वाह एव मह उत्सवो यस्यास्तस्यामित्युद्धिरिति वा ॥ २४ ॥

अयं किलायात इतीरिपौरवाग्भयाद्दयादस्य रिपुर्वृथा वनं । श्रुतास्तदुत्स्वापगिरस्तदक्षराः पठद्भिरत्रासि शुकैर्वनेऽपि सः ॥ २५ ॥

अयमिति । अयं कलिङ्गदेशाधिप आयातः किल श्रूयत इति ईरयन्तीति ईरिणः पौरास्तेषां वाक् तस्याः सकाशाच्छ्रुत्य तस्माद्धेतोः अस्य रिपुर्वनं भयात् पलाय्य गतवान् तद्यथा । रिपुरिति जात्येकवचनं । वैयर्थ्ये हेतुमाह । तान्येव अय समायात इत्येवंरूपाण्यक्षराणि याशु सः श्रुताः शुकैरेवाकर्णिताः तस्यै तदीयरिपोस्तस्यापगिरः अतिशयित निद्राम्लापवाधः एकस्याप्यक्षरस्य व्यत्यास विना पठद्भिः शुकैर्वने ऽपि स रिपुरत्रासि भीषितः । पलाय्य वने गतानामपि रिपूणां तदवस्थापप्रलापितात्मा गिरो बहुशः पठद्भिः शुकैर्वनेऽपि त्रासिता वैरिणः स्थातुं न शक्नुवन्तीत्यर्थः । अतिशूरोऽयमिति भावः ॥ २५ ॥

इतस्त्वसद्विद्रुतभूभृदुज्झिता प्रियाऽथ दृष्टा वनमानवीजनैः । शशंस पृष्टाद्भुतमात्मदेशजं शशित्विषः शीतलशीलतां किल ॥ २६ ॥

इत इति । इत अस्माद्राज्ञः सकाशात् त्रस्तो भीता अत एव विद्रुताः पलायिता भूभृतो राजानः तैरुज्झिता परित्यक्ता प्रिया स्वस्वमहेश्वरी वनमानवीजनैर्भिल्लिजनैर्दृष्टा । अथ पश्चात् आत्मदेशज भवत्या देशे किमपूर्वमिति अद्भुतं पृष्टा सती शशित्विषश्चन्द्रस्य शीतलशीलतां किल प्रसिद्धां हिमस्वभावत्वमेव स्वदेशजातमाश्चर्यं शशंस अकथयत् । स्वदेशे वियोगाभावाच्चन्द्रकराणां शीतलत्वं वने च वियोगाद्दुष्णत्वमित्यर्थः । प्रियेति जात्येकवचनं । भर्तृत्यक्ता वियोगज्वरभराक्रान्ता सती वने चन्द्रकान्तिमुष्णामनुभवतीत्यर्थः ॥ २६ ॥

इतोऽपि किं वीरयसे न कुर्वतो नृपान्धनुर्ज्याणगुणैर्वशंवदान् । गुणेन शुद्धेन विधाय निर्भरं तमेनमुर्वीवलयेऽवशी वशं ॥ २७ ॥

इत इति । हे भैमि त्व इतोऽपि राज्ञः सकाशात् किमिति न वीरयसे शूरा भवसि अपि तु तस्मादपि शूरा भव । किं वीरा न भवस्यपि तु वीरा भवस्येवेति वा । किंभूतादितः । नृपान् शत्रून् धनुश्च बाणाश्च

• अधीत्य शुकान्तर एव तां गिरमिति पाठान्तरः । परन्तु एव न टीकासम्मतः ।

गुणश्च चापशरमौर्व्वीरूपैर्बहुभिरुपकरणैः कृत्वा वशंवदान् वश्यान् कु-
र्वतः । किम्भूता त्वं । उर्व्वीवलय रूपैकशोरूपाऽतिसुन्दरी । किं कृत्वा ।
तमेन बहुभिर्धनुरादिभिरुपकरणैर्व्विद्विषां जैत्रं गुणेन केवलेन चापादि-
लेशसम्पर्करहितेन सौन्दर्य्यादिना गुणेन मौर्व्या च कृत्वा निर्भरमति-
शरां आयामरहितं वा यथा तथा वशं विधाय । बहुसाधनैः पराजय
तोऽस्यैकेनैव साधनेन जयकरणादित्यर्थः मौर्व्वीमात्रेण जयादाश्चर्य्यञ्च ।
अयं सर्व्वेभ्योऽपि वीरः अस्मादपि त्वमित्यपरोऽर्थः । वीरयते ।.शूरवी
रविक्रान्ताविति चुरादिः ॥ २७ ॥

एतद्गीतारिनारी गिरिबिलविगलद्वासरा निःसर-
न्ती स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्नि-
द्रचन्द्रा । आक्रन्दद्भूरि यन्नन्नयनजलमिलच्चन्द्र
हंमानुबिम्बप्रत्यासत्तिप्रहृष्यत्तनयविहसितैराश्वसी
न्यश्वसीच्च ॥ २८ ॥

एतदिति । एतस्माद्भीतानामरीणां नारी एतद्भीतारिनारी गिरि-
बिले पर्व्वतकन्दरायां विगलद्वासराऽतिवाहितदिवसा । तथा रात्रौ निः
सरन्ती बिलाद्बहिर्निर्गच्छन्ती । तथा तदनन्तरं स्वः स्वकीयो मदीयः
क्रीडाहंस इवायमिति मोहो भ्रान्तिस्तया ग्रहिलः मदीयमेनं हंसं दे-
हीति आग्रहवान् शिशुस्तेन भृशं प्रार्थितो याचित उन्निद्रश्चन्द्रो यामे-
वम्भूता सती चन्द्रदाने सामर्थ्याभावात् तदाग्रहशान्त्यभावात् दुःखव-
शाद्यस्माद्भूरि बहु आक्रन्दत रुरोद तस्माद्धेतोर्बहुतरे नयनजले मिलन्
प्रतिबिम्बरूपेण मज्जमानो यश्चन्द्ररूपो हंसस्तस्य योऽनुबिम्बः मिलन्
यश्चन्द्रहंसस्यानुबिम्बो वा तस्य प्रत्यासत्त्या सामीप्येन मदीयः क्रीडा-
हंसोऽयमागत इति बुद्ध्या प्रहृष्यतो मोदमानस्य तनयस्य विहसितैर्हा-
सैः एतया सदाग्रहशान्तेराश्वसीत् आश्वास प्राप । परित्यक्तस्योपवत्पत्
स्मरणात् कनकहंसं दृष्ट्वेव भ्रान्तोऽसीत्यादिमनसि कृत्वा न्यश्वसीच्च
शोकनिःश्वासं चामुञ्चत् । आश्वसीत् । लङि श्वस प्राणने इत्यपृक्त-
स्येट् धातुकस्येडागमः । लुङि वा हम्यन्तक्षणेति वृद्धिनिषेधे रूपं । न्यश्व

मीत्"। लङि अड्गार्ग्यगालवयोरित्यपृक्तसार्वधातुकस्याडागमः पा० ७।३।९९) ॥ २८ ॥

अस्मिन्दिग्विजयोद्यते पतिरयं मे स्तादिति
ध्यायती कम्पं सात्त्विकभावमञ्चति रिपुक्षोणी
न्द्रदारा धरा । अस्यैवाभिमुखं निपत्य समरे
यास्यद्भिरूर्ध्वं निजः पन्था भास्वति दृश्यते
बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥ २९ ॥

अस्मिन्निति । हे भैमि अस्मिन् राज्ञि दिग्विजयायोद्यते सति रिपवश्च ते क्षोणीन्द्रा राजानस्तेषां दारा, प्रिया वशवर्तिनी धरा पृथ्वी अयं राजा मे पतिः स्वामी स्ताद्भूयादिति ध्यायती चिन्तयन्ती सती सात्त्विकेषु मध्ये कम्पलक्षणं सात्त्विकभावमञ्चति गच्छति । अन्यस्वामिसूचकं भूकम्पलक्षणं भौममुत्पातं प्राप्नोतीत्यर्थः । एवमन्याप्येव ध्यायती सात्त्विकं भावं प्राप्नोति । तथा समरे अस्यैवाभिमुखं शस्त्राघातैर्निपत्य ऊर्ध्वं सर्वदेशमध्योत्तमं स्वर्गलोकं यास्यद्भिः गमिष्यद्भिः प्रत्यर्थिभिः पार्थिवैः भास्वति सूर्यमण्डलमध्ये निजः स्वीयो बिलमयः पन्था दृश्यते । द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ परिव्राड् योगयुक्तश्च रणे चाभिमुखो हत इति वचनात् । अयं च सूर्ये बिलरूपो मृत्योत्तोऽपि म्रियमाणैर्दृश्यते । अतिशूरोऽयमिति भावः ॥ २९ ॥

विद्राणे रणचत्वरादरिगणे त्रस्ते समस्ते पुनः
कोपात्कोऽपि निवर्तते यदि भटः कीटग्रो जग
त्युद्भटः । आगच्छन्नपि सम्मुखं विमुखतामेवा
धिगच्छत्यसौ द्रागेतच्छुरिकारयेण ठणिति च्छि
न्नापसर्पच्छिराः ॥ ३० ॥

विद्राण इति । त्रस्ते भीतेऽत एव रणचत्वरात् रणाङ्गणात् विद्राणे पलायिते समस्तेऽरिगणे मध्ये कोऽपि भटः शूरः कोपाद्यदि पुनर्नि-

वर्त्तते । यतो जगति कीर्त्या यशसा उद्भटः ख्यातः असौ भटः अस्य सम्मुखमागच्छन्नपि विमुखतामेव विगतमुखत्वं प्राप्नोति अधिगच्छति । अथ च सम्मुखमागच्छन्नपि पराङ्मुखो जात इति विरोधाभासः । यतः । द्राक् शीघ्रं एतस्य छुरिकायैव ठमिति यथा तथा खण्डितमस्तकपदंधः पतत् शिरो यस्य सः । ठमिति लोहकण्ठास्थिसङ्घट्टजशब्दानुकरणं । छिन्नशिरोऽपतदिति भावः ॥ ३० ॥

ततस्तदुर्व्वीन्द्रगुणाद्भुतादिव स्वसृक्कपद्मेऽङ्गुलिनालदायिनी । विधीयतामाननमुद्रणेति सा जगाद वैदग्ध्यमयेङ्गितैव तां ॥ ३१ ॥

तत इति । ततः सा भैमी तां वाणीं प्रतिवचनमन्तरेणैव इति जगाद । इति किं । आननमुद्रणा मौनं विधीयतामिति । किम्भूता । तस्य उर्व्वीन्द्रस्य गुणाकर्णनसमुत्पन्नादद्भुतादाश्चर्य्यादिव स्वसृक्कपद्मे अङ्गुलिरूपं नालं तस्य दायिनी अत एव वैदग्ध्यमयं एतच्चातुर्य्यबहुलं इङ्गितं चेष्टितं यस्याः सा । वचननिषेधार्थं आश्चर्य्याभिनयार्थञ्च सृक्वेऽङ्गुलिर्दीयते । वर्णननिषेधार्थे दत्ताङ्गुलिस्तद्गुणाद्भुतादिवेति लोकैरुत्प्रेक्षितमित्यर्थः । पद्मे च नालं भवति ॥ ३१ ॥

अनन्तरं तामवदन्नृपान्तरं तदध्वदृक्तारतरङ्गरिङ्गणा । तूष्णीभवत्पुष्पशरं सरस्वती स्वतीव्रतेजःपरिभूतभूतलं ॥ ३२ ॥

अनन्तरमिति । अनन्तरं तद्वर्णननिषेधानन्तरं सरस्वती नृपान्तरं तां भैमीं प्रत्यवदत् । किम्भूता तस्य वर्णनीयनृपान्तरस्याध्वनि तद्दिशि दृगस्ताराणामतिविशालानां तरङ्गाणां दृग्व्यापाराणां रिङ्गणं गतिर्यस्याः । दृग्व्यापारदर्शितवर्णनीयनृपान्तरा । किम्भूतं नृपान्तरं । तूष्णीभवत् हीनीभवत्पुष्पशरः कामो यस्मात् तं । तथा स्वतीव्रतेजसा परिभूतं वशीकृतं भूतलं भूमण्डलं येन तं । तरङ्गिवेत्यपि च पाठः ॥ ३२ ॥

तदेव किन्तु क्रियते न का क्षतिर्यदेष तद्भूतमु

खेन काङ्क्षति । प्रसीद काञ्चीमयमाच्छिनत्तु ते प्रसह्य काञ्चीपुरभूपुरन्दरः ॥ ३३ ॥

तदिति । नु भैमि एष काञ्चीपुरस्य सम्बन्धिन्या भुवः पुरन्दरः नस्य त्वां प्रति प्रहितस्य दूतस्य मुखेन सन्देशवचनेन कृत्वा यत्त्वदीयपरस्पादि काङ्क्षति तदेव किं न क्रियते अपि तु तदेव क्रियताम् । एतदुक्तं कुर्वन्त्यास्तव का क्षतिः का हानिरपि तु न कापि । अस्मिन् प्रसीद । अयं नवरतिलज्जया अमन्यमानाया अपि तं काञ्चीं मेखलाबन्धं प्रसह्य हठात् आच्छिनत्तु शिथिलयतु । अधीरतया यन्येतस्मो घनतत्कालमस्त्रोटयतु वा । एन वृणीष्वेति भावः ॥ ३३ ॥

मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्ध तया विलङ्घ्यते । इतीव चापं दधदाशुगं क्षिप क्षयं नयं सम्यगुपादिशद् द्विषाम् ॥ ३४ ॥

मयीति । चापं दधत् आशुगं वैरिषु क्षिपत्रयं राजा इति पूर्वोक्तं द्विषां नयं नीतिं सम्यक् उपादिशदिव । इति किं । हे द्विषः । मयि मत्समीपे नम्रतयैव विनीततयैव स्थितिर्निवासो ऽथ च स्वराज्ये स्थितिर्लभ्यते । स्तब्धतयाऽविनीततया तु पुनर्दिगेव विलङ्घ्यतेऽतिक्रम्यते । चेन्मयि नम्रा भविष्यथ तर्हि चापवत् स्थितिं प्राप्स्यथ । अन्यथा बाणवत् दिगन्तं यास्यथेति वचनं विनैवाख्यातमित्यर्थः । नम्रस्तब्धशब्दयोर्वक्रावक्रविनीताविनीतार्थपरतयोक्तिः ॥ ३४ ॥

अदःसमित्सम्मुखवीरयौवतत्रुटद्भुजाकम्बुमृणालहारिणी । द्विषद्गणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ ३५ ॥

अद इति । अस्य राज्ञः यशोरूपा मरालावलिर्हंसपङ्क्तिर्द्विषतां भटाना गणाः समूहास्तेषां स्त्रैणं स्त्रीवृन्दं तस्य दृगम्बुनिर्झरे नेत्राम्बुप्रवाहे खेलति । किम्भूता । अदः समिति अमुष्य रणे सम्मुखागता ये वीरास्तेषां यौवतं स्त्रीसमूहः तस्य वैधव्यवशात् त्रुटन्तो ये भुजाकम्बवः

टासीदन्मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तु भं । उज्झित्वा निजसद्म पद्ममपि तद्व्यक्तावनद्धीकृतं लूतातन्तुभिरन्तरद्य भुजयोः श्रीरस्य विश्राम्यति ॥ ३७ ॥

हित्वेति । श्रीर्लक्ष्मीरद्य अस्य भुजयोरन्तर्मध्ये विश्राम्यति शोभा च । किं कृत्वा । दैत्यरिपोर्विष्णोः स्वमवन स्वस्य गृहवरः हित्वा । तथा तन्निजसद्म सद्मनमपि उज्झित्वा । किम्भूतमुरः । लक्ष्म्या त्यक्तत्वात् शून्यत्वलक्षणेन दोषेण स्फुटं आसीदन्त स्थिरीभवन्त मर्कटकीटा ऊर्णनाभकीटास्तेषां कारणेन निर्वृत्त तैरचित कृत्रिमं सितछत्र इव सितछत्रं मण्डलाकारं श्वेत गर्भाण्डस्थापनस्थान तद्वत् तद्रूपीभवन कौस्तुभाख्यो मणिर्यत्र । किम्भूतं पद्म । तैर्लूनातन्तुभिः मर्कटीसूत्रैः मर्कटीसूत्रसदृशैः कमलसूत्रैरित्यर्थः । व्यक्तं प्रकटमवनद्धीकृतं यद्व वि सतन्तूनामेव लूतातन्तुत्वेनोक्तिः । परस्परमतिदूरे द्वेऽपि भवने प्रति गतागताभ्यां श्रान्ता सती गृहद्वय परित्यज्यातिसमीपयतिनोरस्य भुजयोरेव भवनयोः सुखेन निषीदत्यत्रैव स्थिरीभवतीत्यर्थः । कौस्तुभस्य धवलत्वाच्छत्रत्वेन कमलसूत्राणाञ्च सादृश्यात् लूतातन्तुत्वेनोत्प्रेक्षा । लूता स्त्री तन्तुवाये स्यादित्यमरः ॥ ३७ ॥

सिन्धोर्जैत्रमयं पवित्रमसृजत्तत्कीर्त्तिपूर्त्ताद्भुतं यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः । यद्बिन्दुश्रियमिन्दुरञ्चति जलं चाविश्य दृश्येतरा यस्यासौ जलदेवतास्फटिकभूर्जागर्त्ति यागेश्वरः ॥ ३८ ॥

सिन्धोरिति । अयं सिन्धोर्जैत्रं समुद्रस्य जेतृ पवित्रमुज्ज्वलं पावनञ्च तत्कीर्त्तिपूर्त्ताद्भुतं यशोरूपतडागाद्याश्चर्यं असृजत् निर्ममे । यत्र कीर्त्तितडागे जगन्ति स्नान्ति तज्जलजलीभवन्ति स्नानं च कुर्वन्ति । यद्वर्णनविषये के वा कवयः स्फुरन्नूतनार्था अपि वाचंयमा मौनिनो न

सन्ति अपि तु सर्वेऽपि मौनिन एव भवन्ति इत्यर्थः । अथ च के वयो जलपक्षिणः कवयः । यत्र के जलपक्षिणः के वा तापसा न सन्ति अपि तु महति तडागे वयः पक्षिणस्तापसाश्च विद्यन्ते । इन्दुर्यस्य कीर्तितडागस्य विन्दुश्रियं अञ्चति प्राप्नोति यदपेक्षया चन्द्रोऽल्पीयानित्यर्थः । अथ च महतस्तडागस्य जलविन्दुशोभामिन्दुरञ्चति यदीयो विन्दुरिवेन्दुरित्यर्थः । यस्य च जलं आविश्य प्रविश्येव दृश्येतरो ऽस्मदादिमेत्रयोरविषयभूतो ऽसौ जगति विद्यमानः स्फटिका एव भूर्यस्य स कैलास एव यागेश्वरः स्फाटिकश्रीशिवलिङ्गरूपी जलदेवता जागर्ति स्फुरति । स्वच्छत्वाज्जलं किम्, स्फटिको न दृश्यते इयमेव स्फटिकपरीक्षा । तज्ज्वलत्तरैतत्कीर्तिकल्लोलप्लावित इव कैलासो न दृश्यते । इन्दुर्जलं चाविश्य जले प्रतिबिम्बितः सन् यदिन्दुश्रियमञ्चतीति वा अथाविन्दुरेव यस्य जलमाविश्याऽदृश्यः स्फाटिकनिर्मितो यागेश्वरः सन् जलदेवता जागर्ति । कीर्तिमध्यपाती चन्द्रोऽपि स्वच्छत्वान्न दृश्यत इत्यर्थ इति वा । स्पृशेदपि पर्वनात्पर्वातिरिक्ते काले समुद्रस्यास्पृश्यत्वात् अस्य तु सर्वदा पवित्रत्वात् । समुद्रस्य च भूलोकस्यैव कतिपयस्यैव जनस्य स्नानार्हत्वादस्य तु लोकत्रयस्नानार्हत्वात्स्य वर्णयितुं शक्यत्वादस्य चागम्यत्वात्स्य च चन्द्रैकसंस्थत्वादस्य च विन्दुरूपचन्द्रत्वात् समुद्रे च श्रीविष्णुरूपाया जलदेवतायाः सुप्तत्वादत्र च यागेश्वरस्य जागरत्वात् । एवंविधो यशस्वी कोऽपि नास्तीति भावः । यागेश्वर इति असौ जलदेवता जागर्ति । असौ का वा स्फटिकभूः यागेश्वरः कैलासो जागर्तीति । वाचि यमो व्रत इति (पा ३ । २ । ८०) इति वाचंयमपुरन्दरौ चेति (पा० ६ । ३ । ६९) साधुः ॥ ३० ॥

अन्तःसन्तापभाज्वैः स्थगयति न दृशस्ताभिराकर्णयिष्यन्नहर्गेनानस्तिलोमाग्रचयति पुलकश्रेणिमानन्दकन्दो । न क्षोणीमहृगभीरुः कलयति च शिरःकम्पनं तन्न विद्मः शृण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥ ३१ ॥

अन्तरिति । यस्मात् उरगपतिः शेषः अन्तः सन्तोषवाष्पैरानन्दाश्रुभिः कृत्वा दृशो नेत्राणि न स्थगयति नाच्छादयति । यतस्ताभिर्दृग्भिः एतद्गुणानाकर्णयिष्यन् सन् चक्षु श्रवस्त्वादश्रुभिर्नेत्राच्छादने गुणानाकर्णनशङ्कया आनन्दाश्रुभिर्दृशौ नाच्छादयति । तथा आनन्द एव कन्दो मूलं यस्यास्तां पुलकश्रेणिं रोमाञ्चपङ्क्तिमपि आरचयति करोति । यतः धमस्तिरोमाऽविद्यमानरोमा । तथा सन्तःपात् शिरःकम्पनं न करोति । यतः क्षोणीभङ्गभीरुः । यद्यहं मूर्धानं कम्पयिष्यामि तर्हि भूमिः पतिष्यतीति भिया । तस्मात् कारणादेतस्य कीर्तौ. श्रुतवन् शेषोऽन्तःकरणे समुत्पन्नां प्रीतिं कथं केनान्येन प्रकारेणाविष्करोति प्रकटयति च य तत्र विदन्तः । आश्चर्यरूपकीर्तिरयमिति भावः । सहस्रमुखत्वाद् दृश इति बहुत्वं ॥ ३९ ॥

आचूडाग्रममज्जयज्जयपटुर्यत्कुल्यदण्डानयं संरम्भे रिपुराजकुञ्जरघटाकुम्भस्थलेषु स्थिरान् ।
सा सेवास्य पृथुः प्रसीदसि तया नास्मै कुतस्त्व तत्कुचस्पर्द्धागर्द्धिषु तेषु तान् धृतवते दण्डान् प्रचण्डानपि ॥ ४० ॥

आचूडेति । संरम्भे युद्धसम्भ्रमे सति जये पटुरयं राजा रिपवश्च ते राजानश्च तेषां कुञ्जरघटाकुम्भस्थलेषु दूरनिखाततया स्थिरान् शल्याग्रलोहस्य सम्बन्धिनो दण्डान् शरान् प्रासान् वा आचूडाग्र पुङ्खाग्र मर्यादीकृत्य यदमज्जयन्निचखान । सा एतत्कर्तृका त्वदीया पृथुर्महती सेवा तया सेवया त्वं अस्मै कुतो न प्रसादसि । किम्भूताय । तव कुचस्पर्द्धागर्द्धिषु कुचसाम्याभिलाषिषु तेषु कुम्भस्थलेषु तान् पूर्वोक्तान् प्रचण्डान्दण्डान् धृतवते कृतवतेऽपि । येन हि महती सेवा क्रियते तस्मै प्रसन्नीभूयते । अतिशूरोऽयं तस्माद् वृणीष्वेत्यर्थः ॥ ४० ॥

स्मितश्रिया सूक्ष्मणलीयमानया वितीर्णया तद्गुणशर्मणेव सा । उपाहसत् कीर्त्यमहत्त्वमेव तं

गिरां हि पारे निषधेन्द्रवैभवं ॥ ४१ ॥

स्मितेति । सा भैमी स्मितश्रिया राजानं उपाहसत् हसितवती यतः कीर्त्त्यं वर्णयितुं शक्यं महत्त्वं यस्य एवम्भूतमेव । हि यस्मात् निषधेन्द्रवैभवं नलसामर्थ्यं गिरां पारे वागगोचरं वर्णयितुमपि न शक्यत इत्यर्थः । मलादेतस्य न्यूनत्वादुपहास इत्यर्थः । किम्भूतया स्मितश्रिया । तद्गुणश्रवणेन तदीयगुणाकर्णनसमुत्पन्नं न मुखेन विलीर्णयेव दन्तयेव कृतयेव । तथा सृक्किणि ओष्ठप्रान्ते लीयमानया संसर्गिण्या । कीर्त्त्यमिति असद्गुणारोपणार्थसूचकं पदं ॥ ४१ ॥

निजाक्षिलक्ष्मीहसितैणशावकामसावभाणीदपरं
परन्तपं । पुरेव तद्दिग्वलनश्रियो भ्रुवा
विनिर्दिश्य सभासभाजितं ॥ ४२ ॥

निजेति । असौ वाणी अपरमन्यं परन्तपं राजानं भ्रुवा पुरेव पूर्वमेव विनिर्दिश्य दर्शयित्वा तां भैमीं अभाणीत् उवाच । किम्भूता । निजाक्षिलक्ष्म्या नेत्रकान्त्या हसित एणशावको मृगशिशुर्यया । किम्भूतया भ्रुवा । तस्य वर्ण्यमानस्य राज्ञः दिशा तत्सम्मुखं वलनेन दृक्पातेन कृत्वा याः श्रियस्ताभिः भुवा स्थानभूतया । किम्भूतं तं । सभया सभास्थैर्मनोज्ञतया सभाजितं दृष्टं पूजितं वा । रिपुतापकारत्वाद् न्वयं कृतनाम वा ॥ ४२ ॥

कृपा नृपाणामुपरि क्वचिन्न ते न तेन हाहा शिर
सा रसाद्दृशां । भवन्तु तावत्तव लोचनाञ्चला
निपेयनेपालनृपालपालयः ॥ ४३ ॥

कृपेति । हे भैमि ते तव नृपाणां मध्ये क्वचिदप्युपरि कस्याप्युपरि कृपा नास्ति हाहा कष्टं किमप्ययं लोकस्त्वयाऽपि नेति संयुक्तेत्यर्थः । किम्भूतानां । त्वद्दर्शनाभावजन्यया नतेन शिरसा रसाया भूमौ दृश्ये या दृशां पश्यन्तीति च । अन्यत्र कृपा मा भूदाम तावत् किन्तु तव लोचनाञ्चलाः अपाङ्गदृशः निपेय सादरावलोकनार्हाः यो नेपालनामा देशस्य नृपालो राजा तं पिबन्ति सादरं पश्यन्ति एवंभूता अलयो भ-

सरभूता भवन्तु । एवं तावत् कटाक्षैर्विलोकयेत्यर्थः ॥ ४३ ॥

**ऋजुत्वमौनश्रुतिपारगामिता यदीयमेतत्परमेव हिंसितुं । अतीव विश्वासविधायि चेष्टितं वहु महानस्य स दाम्भिकः शरः ॥ ४४ ॥**

ऋजुत्वेति । ऋजुत्वमवक्रता नम्रत्वं प्रियधादित्यादिरूपा विनीतता च तथा मौनं निःशब्दत्वं वाङ्नियमश्च श्रुतिपारगामिता आकर्णपूर्णता वेदपारगामिता च एवरूपमतीवातितरां विश्वासविधायि विश्वासकारि विगतश्वासकारि मनसि स्थितमत्ययकारकञ्च अलीकपवनाभ्यासवशाद्वा श्वासाभावकारि यदीयमेतच्चेष्टितं परं शत्रुं स्वव्यतिरिक्तञ्च सर्वं जनं हिंसितुमेव हन्तुमेव प्राणप्रियधनग्रहणार्थमेव च न तु तस्य व्यसनमात्रप्रयोजनं च धार्जवादिगुणार्जनप्रयोजनं । सोऽस्य बहुरसङ्ख्यः महान् अङ्कुरोऽतिदीर्घश्च शरः दाम्भिको दम्भेन चरति इति रूपकं । अतिशूरोऽयमिति भावः । दाम्भिके यावद्वृत्तं तत् सर्वं एतस्य शरे विद्यत इत्यर्थः । दाम्भिकेन यत्क्रियते तदेतच्छरेण क्रियत इत्यर्थ इति वा । दम्भो हिंसा माया च प्रयोजनमस्य प्रयोजनमिति (पा ५ । १ । १०९) ठञ् । तेन चरति वा चरतीति (पा ४ । ४ । ८) ठक् ॥ ४४ ॥

**रिपूनवाप्यापि गतोऽवकीर्णितामयं न यावज्जनरञ्जनव्रती । भृशं विरक्तानपि रक्तवत्तरान् निकृत्य यस्तानसृजासृजद्युधि ॥ ४५ ॥**

रिपूनिति । यावन्तो जनास्तावता रञ्जने तदेव व्रते तदस्यास्तीति एवंभूतोऽयं राजा रिपूनपि अवाप्य प्राप्यापि वा अवकीर्णितां क्षतव्रतत्वं न गतः प्राप्तः । यद्यस्मात् स्वशरीरादिविषये भृशं विरक्तानननुरागिणोऽपि अथ चैनं दृष्ट्वा विगतरुधिरानपि तान् रिपून् युधि निकृत्य वाणैश्छित्त्वाऽसृजा रुधिरेण कृत्वा रक्तवत्तरान् रक्तवन्तोऽनुरागिणोऽथच रक्तं विद्यते येषु ते रक्तवन्तः अतिशयेन रक्तवन्तो रक्तवत्तरा एवंभूतानसृजत् चकार । वैरिणामपि रञ्जनात् क्षतव्रतत्वं न जात-

सित्यर्थः । रत्नयत्तरान् स्मवतुर्मतुप् च ॥ ४५ ॥

**पतत्येतत्तेजोहुतभुजि कदाचिद्यदि तदा पतङ्गः स्यादङ्गीकृततमपतङ्गापदुदयः। यशोऽमुष्येवोपार्जयितुमसमर्थेन विधिना कथाञ्चित् क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधिः ॥ ४६ ॥**

पततीति । पतङ्गः सूर्य्यः एतस्य तेज एव हुतभुगग्निः तस्मिन् यदि कदाचित् कस्मिन्नपि समये पतति तदा तर्हि अङ्गीकृततमः भृशमङ्गीकृतः पतङ्गानां शलभानां देहदाहलक्षणा या आपदस्तासां उदयो येनैवम्भूत एव स्यात् तत्तेजसाऽतितरां सन्तापवशात् पीडितः स्यात् । एतत्तेजोऽपेक्षया सूर्य्यो हीनो वह्न्यपेक्षया शलभतुल्य इत्यर्थः । तथाऽमुष्य यशः कथञ्चित केनापि प्रकारेण उपार्जयितुमसमर्थेनेव विधिना ब्रह्मणाऽतिमहान् क्षीराम्भोनिधिरपि तस्यैतदीययशसः प्रतिनिधिस्तुल्यः कृतः कथञ्चित् कृत इति वा । यश इव यश सदृशमिति वा । मुख्याभावे हि प्रतिनिधिरपि क्रियते । क्षीरादप्युज्ज्वल अस्य यश इत्यर्थः । एवंविधः प्रतापवान् यशस्वी च कोऽपि नास्तीति भावः। मुख्यापेक्षया प्रतिनिधेर्न्यूनत्वादेकद्वीपव्यापिनः क्षीरोदादशेषद्वीपव्यापिन्याः कीर्त्तेराधिक्याच्च ॥ ४६ ॥

**यावत्पीठस्त्यवास्तूभवदुभयहरिल्लोमलेखोत्तरीये सेतुप्रालेयशैलौ चरति नरपतेस्तावदेतस्य कीर्त्तिः । यावत्प्राक्प्रत्यगाशापरिवृढनगरारम्भणस्तम्भमुद्रावद्री सन्ध्यापताकारुचिरचितशिखाशोणशोभावुभौ च ॥ ४७ ॥**

यावदिति । हे भैमि सेतुप्रालेयशैलौ श्रीरघुनाथकृतः सेतुः प्रालेयशैलश्च हिमाचलश्च तौ यावत् यावन्तं देशमभिव्याप्य तिष्ठत यावत्कालं वो वर्त्तेते वा एतस्य नरपतेः कीर्त्तिस्तावत्पर्य्यन्तं चरति भ्रमति ।

किम्भूतौ सेतुशैलौ । पुलस्त्यगोत्रापत्ययोरावणकुबेरयोरयास्तु अगृहभू मिभूते ऽपि वास्तूभवन्त्यौ गृहभूमित्वं प्राप्ते नभे द्वे ऽपि ये हरितौ दक्षिणोत्तरे दिशौ तयोः क्रमेण श्यामत्वाच्छुभ्रत्वाच्च रोमरेखा रोमाली उत्तरीयं पूर्वकायावरणवस्त्रं तद्रूपौ । समुद्रबन्धनशिलापरम्परा दक्षिण दिशो रोमस्थानीया । हिमाचलश्च उत्तरदिग्वस्त्रस्थानीयः । तथा प्राक् च प्रत्यक् च आशे प्राचीप्रतीच्यौ दिशौ तयोः परिवृढौ स्वामिनाविन्द्रवरुणौ तयोर्ये नगरे तयोर्यदारम्भणं आरम्भः तस्मिन् स्तम्भयोरिव सुन्दरी मुद्रा आकारो ययोस्तावुभावद्री उदयास्ताचलौ च यावन्तं देश मभिव्याप्य तिष्ठतः पूर्ववत् । किंभूतावद्री । प्रातःसायंसन्ध्ये एव रक्तस्वारपताकारूपी ताभ्यां रचिता निर्म्मिता शिखायां शिखरे शोभा रक्ता शोभा ययोस्तौ । पौलस्त्येति । गोत्रापत्ये गर्गादित्वाद्यञ् (पा० ४। १।१०५) वास्तूभवदिति । च्वौ चेति (पा०७।४।२६।) दीर्घः । उभा ववयवौ ययोस्ते उभय्यौ ते हरितौ चेति समासे पुंवद्भावः इति वा॥४७॥

युद्धा चाभिमुखं रणस्य चरणस्यैवात्मीयस्य वा
बुद्धान्तः स्वपरान्तरं निपततामुन्मुच्य बाणाव
लीः । छिन्नं वावनतीभवन्निजभियः खिन्नं भ
रेणाथवा राज्ञाऽनेन हठाद्विलोठितमभूद्भूमावरी
णां शिरः ॥ ४८ ॥

युद्धेति । अनेन राज्ञा अरीणां शिरः भूमौ हठात् बलात्कारेण विलोठितं झटिति छेदात् स्फुरद्भ्रमणमभूत् । किम्भूतानामरीणां । आत्मीयस्य अमुष्यायं आत्मीयस्तस्य रणस्याभिमुखं सम्मुखं प्रारम्भम भिलक्षीकृत्य वा बाणावलीः शरपङ्क्तीरुन्मुच्य मुक्त्वा युद्धा वा निपततां बाणपङ्क्तिवर्षणेन युद्धं कृत्वा रणभूमौ पतितानामिति यावत् । अथ च अन्तःकरणे स्वपरान्तरं स्वस्यात्मनः परस्य चान्तरं न्यूनाधिकत्वतार तम्यं बुद्ध्वा वा आत्मीयस्य चरणस्यैव अभिमुखं बाणावलीरुन्मुच्य नि रायुधीभूय निपततां एतच्चरणयोर्दण्डवन्नमस्कारं कुर्वतां । किम्भूत शिरः । रणस्य मुखपते छिन्नं वा बाणै खण्डितं सद्धाऽवनतीभवत् न

सग्रीवं भूमौ पतितं सत् । तथा चरणपक्षे । अथवा निजभियो भरेण स्वीयभयबाहुल्येन वा खिन्नं सत् अवनतीभवत् । द्वितीयपक्षे वराङ्गं विलोठितं पादमर्दनतभागस्पर्शकारीकृतं । वैरिणो यदि युध्यन्ते तर्हि म्रियन्त एव । ये च विचारका भीरवश्च ते शस्त्राणि परित्यज्य राजानमेव शरणं गच्छन्ति जीवन्तीति । एवकारेणान्यः शरण्यो न विद्यत इति सूचितं । अन्यदपि भाराक्रान्तं नम्रम्भवति । वा शब्दः प्रत्येकविकल्पे ॥४८॥

न तूणादुद्धारे न गुणघटने नाश्रुतिशिखं समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि ।
नृणां पश्यत्यस्य क्वच न विशिखान् किन्तु पतितद्विपद्वक्षःश्वभ्रैरनुमितिरमून् गोचरयति ॥४९॥

नेति । युद्धकौतुकदर्शिनां नृणां दृष्टिः अस्य विशिखान् क्वच न कस्मिन्नपि तूणादुद्धारे निष्काशने उपादानकाले न पश्यतीति सर्वत्र सम्बन्धः । तथा कस्मिन्नपि गुणघटने मौर्व्याः सन्धानकाले न । आश्रुतिशिखं कर्णाग्रं मर्यादीकृत्य समाकृष्टौ क्व न कस्मिन्नपि सम्यगाकर्षणकाले न । तथा मोचनानन्तरं वियति कस्मिन्नपि गगनदेशे न । तथा कस्मिन्नपि लक्ष्ये वेध्यवेधे न । तथा शत्रून्भित्वा ततो निर्गत्य भुवि कस्मिन्नपि भूप्रदेशे पतितान् पश्यन्ति । तर्हि किन्तु पतितानां बाणाघातकृतमरणं येषवशाद्भूतप्राणानां भूमिष्ठानां द्विपतां वक्षःश्वभ्रैः हृदं प्रहृत्य यद्विनिर्गतशरकृतच्छिद्रैः कृत्वा याऽनुमितिरनुमानज्ञानं अमून् बाणान् गोचरयति ज्ञापयति । चेदनेन बाणा न मुक्तास्तर्हि तेषां वक्षसि छिद्राणि कथं भवेयुरित्याद्यनुमितिः । वक्षः श्वभ्रैरिति पाठे वक्षःस्थेव विध्यतीति भावः ॥ ४९ ॥

दमस्वसुश्चित्तमवेत्य हासिका जगाद देवीं कियदस्य वक्ष्यसि । प्रण प्रभूते जगति स्थिते गुणैरिहाप्यते सद्गुणवासयातना ॥ ५० ॥

दमेति । हासयतीति हासिकाऽतिवेधा चेटी दमस्वसुश्चित्तं तद्गतं

नबाहुल्यनिरपेक्षं तस्मिन्नरक्तं याऽवेत्य ज्ञात्वा देवी सरस्वती जगाद । हे देवि त्वं अस्य कियत् एतदीयं कियच्चरितं वक्ष्यसि वर्णयिष्यसि अ-पि तु बहुत्वात् प्रत्येकं वर्णयितुं न शक्ष्यसि इत्यर्थः । गुणैः सौन्दर्य्यादि-भिः प्रभूते महति जगति स्थितेऽपि इह नृपे सङ्कटवासरूपा सम्मर्दश्व-सतिरूपा यातना सङ्कटावासेन या यातना तीव्रवेदना आप्यते प्राप्यते इति भण कथय । सर्वे गुणाः सर्वं जगत्परित्यज्यास्मिन्नेव सम्मर्देन नियसन्तीति एकैकप्रकारेण वर्णय । पृथग्वर्णनाऽसामर्थ्यादित्यर्थः । वा क्यार्थः कर्म्म । अथ च भूयसि । वर्त्तमाने जगति मध्ये गुणैरिहैव क-ष्टरूपश्वसतिपीडा प्राप्यते न त्वन्यत्र । एतस्मिन्निवासे गुणा वाङ्गन्त एवानर्हत्वादेकोऽपि गुणोऽत्र नास्तीति भणेत्युपहासः । अस्य कियद्व-क्ष्यसि कथय । अतः परं मा स्म वादीः । तस्मान्निर्गुणमेनं गुणित्वेन कि-यन्तं कालं वर्णयिष्यसीति कथयेति वा । स्थितैरिति पाठे गुणविशे-षणं । प्रभूतैरिति च ॥ ५० ॥

ब्रवीति दासीह किमप्यसङ्गतं ततोऽपि नीचेव
मतिप्रगल्भते । अहो सभा साधुरितीरिणः क्रु
धा न्यषेधदेतत्क्षितिपानुगान् जनः ॥ ५१ ॥

ब्रवीतीति । जनः प्रेक्षकः क्रुधा स्वस्वामिवर्णनविघातसमुत्पन्नेन क्रोधेन इतीरिणो भाषमाणानेतस्य क्षितिपस्यानुगाननुचरान्न्यषेधत् नि-वारयामास । इति किं । इह सभायां भैम्या दासी किमपि असङ्गतम-युक्तं ब्रवीति वदति का कस्येत्यादि भाषते । ततोऽपि दास्या अपि नक्षाद्यान्नीचा इव चेटी अति प्रगल्भते नितरां धृष्टतया भाषते । नि-यामकः कोऽपि नास्ति । अहो अयुक्तत्वादाश्चर्य्यं साधु सभा । विरु-द्धलक्षणया काक्वा वा अकारप्रश्लेषेण वा असाधुरेतादृशी सभा न कुत्रा-पीति । ब्रवीति वर्त्तमानसामीप्ये भूते लट् (पा ३ । ३ । १३१ ।) अ-शंसीति पाठः समीचीनः । गल्भङ् धृष्टत्वे ॥ ५१ ॥

अथान्यमुद्दिश्य नृपं कृपामयी मुखेन तद्दिङ्मु
खसम्मुखेन सा । दमस्वसारं वदति स्म देवता

**गिरामिलाभूवदतिस्मराश्रियं ॥ ५२ ॥**

अथेति । अथ कृपामयी बहुलकृपा सा गिरा देवता मुखेन अन्यं नृप उद्दिश्य दमस्वसार वदति स्म । किम्भूतेन । तस्योद्दे श्यस्य नृपस्य दिङ्मुख दिग्विभाग तस्य सम्मुखेन । किम्भूतं नृपं । इलाभूवत्पुरूरवस मिव । किम्भूतां । अतिस्मरा अतिक्रान्तस्मरा श्रीर्यस्यास्तां ॥ ५२ ॥

**विलोचनेन्दीवरवासवासितैः सितैरपाङ्गाध्वग चन्द्रिकाञ्चलैः । त्रपामपाकृत्य निभाल्निभालय क्षितिक्षितं मालयमालयं रुचः ॥ ५३ ॥**

विलोचनेति । हे भैमि त्व अपाङ्गाध्वगाया नेत्रप्रान्तरूपभागगामिन्याश्चन्द्रिकाया नेत्रमध्यगनीलगोलकस्याञ्चलैरिवाञ्चलैरतिदीर्घविलोकनव्यापारैः कटाक्षैरिति यावत् तैः कृत्वा निभात् वस्त्वन्तरविलोकनव्याजात् त्रपामपाकृत्य मालय मलयाद्रिस्वामिनं भाया. सम्पद्रूपाया लक्ष्म्या आलय वा क्षितिक्षित निभालय विलोकय । किंभूत । रुचः कान्तेः आलयं स्थानीभूतं । किंभूतैरञ्चलैः । विलोचने एव इन्दीवरे नीलोत्पले नीलोत्पलतुल्ये नेत्रे तयोर्मध्ये वासः स्थितिस्तया वासितैर्भावितैः नयननीलिम्ना नीलीकृतैरित्यर्थः । तथा सितैः शुभ्रैः । नील श्वेतकान्तिभि कटाक्षैर्विलोकयेत्यर्थः । अथ च विलोचनतुल्यानां नीलोत्पलानां वासेन परिमलेन सुगन्धीकृतैः सितैः तिर्य्यगायतशीलत्वाद पाङ्गतुल्यमार्गगामिन्या ज्योत्स्नाया अञ्चलैः करैरुपलक्षितं । तथा रुचः कान्तेः आलय स्थान । तथा म शिवः आलयो यस्य शिवमौलिनिवासिना चन्द्रमसैव रात्रौ त्रपामपाकृत्य पश्येत्यर्थः । स शिवे मा च पट्टापामिति विग्रहः । निभालय । चुरादावात्मनेपदिनः पाठात् परस्मैपदं चिन्त्य । निभालन निभालस्तदाक्षिभालयांस्तात्कृश कुर्व्विति । तत्करोतीति णिचि (पा० ३ । १ । २६ । सू० १ या०) ततुल्लोपे साधनीयं ५३॥

**इमं परित्यज्य परं रणादरिः स्वमेत्र भग्नः शरणं मुधाविशत् । न वेत्ति यत्तानुमितः कृतस्मयो न दुर्गया शौलभुवापि शक्यते ॥ ५४ ॥**

इममिति । हे भैमि रणाङ्गनः पलायितः कृतस्मयः कृतगर्वः घ्न-रिः एतस्य शत्रुः परं शत्रुभूतमथचातिमहान्तं इमं परित्यज्य स्वमेव स्वीयमेव शरणं गृहं मुधा वृथाऽऽविशत् । त्वद्दोर्षःऽइ मा रक्षेत्युक्त्वा एनमेव शरणं रक्षितारं कृतगर्वत्वादप्राप्य स्वगृहं वृथैव गत इत्यर्थः । यद्यस्मात् दुर्गया विषमया शैलस्य भूः तया गिरिदुर्गेणेत्यर्थः । तथापि इतोऽस्मान्नृपात् त्रातुं न शक्यते इति न वेत्ति । गिरिदुर्गं प्रविष्टोऽपि बलात् ततोऽप्याकृष्य हन्यते स्वगृहं प्रविष्टो हन्यत इति किं वाच्य । अतः स्वगृहप्रवेशो व्यर्थ इत्यर्थः । अय च पर्वतपुत्र्या दुर्गयापि त्रातुं न शक्यते । तद्रूपं इत्यैव शरणागतस्य रक्षत्ययमिति भाव । शरणं गृहरक्षित्रोरित्यमरः ॥ ५४ ॥

अनेन राज्ञाऽर्थिषु दुर्भगीकृतो भवन् घनध्वानजरत्नमेदुरः । तथा विदूराद्रिरदूरतां गमी यथा स गामी तव केलिशैलतां ॥ ५५ ॥

अनेनेति । घनद्रुमो मोऽतिप्रसिद्धो विदूरेषेव दूरोऽद्रिरयं च रोहणाचलस्तथा तेन प्रकारेण अदूरता सामीप्यं गमी गतो यथा येन प्रकारेण तव केलिशैलतां क्रीडापर्वतत्वं गामी गमिष्यति । किंभूतः । अतिवदान्यमानेन राज्ञाऽर्थिषु याचकेषु विषये दुर्भगीकृत उपेक्षाविषयता अयाचनीयतां प्रापितः । अत एव व्ययाभावात् नवा घना मेघास्तेषां ध्वानः शब्दस्तस्माज्जातैरत्नैर्मेदुरः परिपुष्टो भवन् । विदूराद्रौ हि नवमेघशब्दाद्रत्नशलाका उत्पद्यन्ते ताश्च याचकैर्नीयन्ते । अस्मिंस्तु वदान्ये सति तत्र कस्यापि याचकस्यागमनाद्यभावाद्रत्नैः कृत्वा स्वदुपचमान्तं यावन्मेदुरो भवति स एव रत्नमयत्वात्तव क्रीडापर्वतस्थाने भविष्यति । अति वदान्योऽयमिति भावः । भवद्घनध्वानेति पाठे भवद्भ्य उत्पन्नेभ्यो घनध्वानेभ्य इति व्याख्येयं । गमी गामीति पूर्ववत् ॥५५॥

नम्रप्रत्यर्थिपृथ्वीपतिमुखकमलम्लानताभृङ्गजा तच्छायान्तःपातचन्द्रायितचरणनखश्रेणिरेणेय नेत्रे । दृप्तारिप्राणवातामृतरसलहरीभूरिपानेन

पीनं भूलोकस्यैष भर्ता भुजभुजगयुगं सांयुगीनं बिभर्त्ति ॥ ५६ ॥

नम्रेति । हे एणेयनेत्रे ऐणेयो हरिणपोतस्तस्येव नेत्रे यस्यास्तत्सं बुद्धिः । एणयवयवभूते वा नेत्रे यस्याः । भूलोकस्य भर्ता एष राजा संयुगे साधु सांयुगीनं रणरसिकं भुजद्वयरूपं भुजगयुगं सर्पद्वयं बिभर्त्ति । किंभूतः । नम्राः प्रत्यर्थिपृथ्वीपतयः शत्रुनृपास्तेषां मुखान्येव कमलानि तेषां लज्जया म्लानता तद्रूपा मूर्छेभ्यो जाता छाया भ्रमरसम्बन्धिनी या शोभा कान्तता तस्या अन्तःपातेन नखमध्ये प्रतिबिम्बितेन चन्द्रायिता चन्द्रवदाचरिता चरणनखश्रेणिर्यस्य । किंभूतं । दूराणां सद्पाणामरीणां प्राणास्त एव अतिप्रियत्वादमृतरसस्तस्य लहरीणां तरङ्गाणां भूरि अतिशयेन पानेन पीन पीवरं । समस्तनृपप्राणवियोगकरणेनोर्जस्वि समानाकारत्वादतिक्रूरकर्मत्वाच्च भुजयोः सर्पत्वं । सर्पाणाञ्च पवनाशनत्वात् प्राणाख्यैः पवनैः पीनत्वं युक्तं । दर्परहितांश्चरणपातिनो वैरिणो रक्षति सदर्पान्नत्वान्मारयत्ययमिति भावः । ऐणेयं । एण्या अपत्यं स्त्रीभ्यो ढक् (पा० ४ । १ । १२०) । एण्या अवयवा इत्यर्थे एण्या ढञ् (पा० ४ । ३ । १५९) । सांयुगीनं । साध्वर्थे प्रतिजनादित्वात् खञ् (पा० ४ । ४ । ९९) ॥ ५६ ॥

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहेर्भूयः फणसमुचितः काययष्टीनिकायः । दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः कायव्यूहः क्व जगति न जागर्त्यदःकीर्त्तिपूरः ॥ ५७ ॥

अध्याहार इति । अमुष्य कीर्त्तिपूरः क्व कस्मिन् जगति न जागर्त्ति न प्रकाशते अपि तु स्वर्गपातालमर्त्यलोकेषु स्फुरति । लोकत्रयव्यापित्वं प्रमेयात् । किंभूतः । स्मरहरशिरसि यश्चन्द्रः तस्य यः शेष एकला तस्या अध्याहारो लक्षणया पञ्चदशकलाभिः पूरकः । स्वर्गगत्याः शिवशिरःस्थितचन्द्रो येन षोडशकलः क्रियत इत्यर्थः । अन्यत्राप्यपूर्णवाक्ये

किमपि योग्यं पदान्तरमध्याहृत्य वाक्यपूरणं क्रियते । तथा शेषस्याहेः सर्पराजस्य भूयांसः सहस्रसङ्ख्याकाः फणास्तेषां समुचितो योग्योऽतिदीर्घः कायगष्टीनिकायः शरीरदण्डिकासमूहः । फणसहस्रस्य शरीरं सहस्रेण भवितव्यं । पाताल गत्वा नदीयशिष्टशरीरपूरणं क्रियत इत्यर्थः । तथा मुनेरगस्त्यस्य चुलुकेन सङ्कुचितहस्तपानं तस्माद्यस्त्रासो भयं तस्य नाशे निरासे क्षमि सामर्थ्यमेनोपायः साधनं दुग्धाम्भोधेः । कायव्यूहः शरीरसङ्घः । पूर्वमेकाकित्वेन पानाद्भयमभूदिदानीमेतद्यशोरूपानेकशरीरधारणात् एकस्यानेकपाने सामर्थ्याभावाज्जलमात्रस्य च क्षीरतापादनाद्दुग्धयशसोश्च सरूपत्वाद्दुग्धे यशोभ्रमो यशसि दुग्धभ्रम इति दुग्धयशसोर्निर्णेतुमशक्यत्वात् पानाभावात् । भयाभावसाधनभूतः क्षीरोदधेः कायव्यूहरूप इत्यर्थः ॥ ५७ ॥

राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नीं कृतं लक्षैर्लक्ष्यभिदो दृशैव जयतः पद्मानि पद्मैरलं । कर्तुं सर्वपरच्छिदः किमपि नो शक्यं परार्धैर्न वा तत्सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्बतैतद्द्विषां ॥ ५८ ॥

राज्ञामिति । नाम्ना शतघ्नीं यत्तु शतीलोहकण्टकसञ्चितां हेतिं शस्त्रं कलयतो धारयतः अस्य राज्ञः शतेन किं कृतं । तेन शस्त्रेण धारणात् तैरनेकैरप्यस्य किमपि कर्तुं न शक्यत इत्यर्थः । अथ च यः शतमारणसमर्थः शस्त्रं गृह्णाति तस्य शतसङ्ख्यामितैराजभिः किमपि कर्तुं न शक्यते । तथा राज्ञां लक्षैः किं । कृतं पूर्यतां । यतः लक्ष्यं वेध्यं भिनत्तीति लक्ष्यभित्तस्य लक्ष्यभिदः । यो हि कुत्रचिदप्यप्रतिहतसायकस्तस्य लक्षसङ्ख्यैरपि किमपि कर्तुं न शक्यत इत्यर्थः । तथा राज्ञां पद्मैः पद्मसङ्ख्यैः राजभिरपि किं । तैरप्यस्य किमपि कर्तुं न शक्यते । यतो दृशैव पद्मानि कमलानि पद्मसङ्ख्यकान्वैरिणश्च जयतः । यो हि कमलतुल्यनेत्रस्तस्य शत्रुतः पराभवो न । अथ च यो भूक्षेपमात्रेण पद्मसङ्ख्यापरिमितान् रिपून् जयति तस्य पद्मसङ्ख्यैः राजभिः किञ्चित्

कर्त्तुं न शक्यते । तथा या समुच्चये राज्ञां परार्द्धेनापि परार्द्धसङ्ख्यै-र्राजभिः अस्य किमपि कर्त्तुं नो शक्य । यतः सर्वे च ते परे शत्रव-श्च तांश्छिनत्ति तस्य । यो हि वैरिमात्रहनने समर्थस्तस्य परार्द्धमप्यत्याः शत्रवः किं कुर्वन्ति । तत्तस्मादेतस्य द्विषा सङ्ख्याद्रणादपगतं पलाय-नं अथ च परार्द्धरूपाया सङ्ख्याया अप्यपगमं परित्यागमसङ्ख्यात्वं विना काचिद्गतिर्नास्ति यतः सेदं असङ्ख्येयार्थेदभविष्यत्तदाऽजीविष्यन् असङ्ख्येयस्य नास्ति तस्मात्पलायनमेव जीवनोपायः । पलायितास्त्र इ-त्तीत्यर्थः । लक्ष शरव्ये सङ्ख्यायां । शतघ्नी । असनुष्यकर्तृके चेति टक् (पा ३ । २ । ५३) ॥ ५८ ॥

वयस्ययाऽऽकूतविदा दमस्वसुः स्मितं वितत्याभिदधेऽथ भारती । इतः परेषामपि पश्य या-चतां भवन्मुखेन स्वनिवेदनत्वरां ॥ ५९ ॥

वयस्ययेति । अथ दमस्वसुराकूतविदाऽभिप्रायज्ञया वयस्यया सख्या स्मितं वितत्य हसितं कृत्वा भारतीति अभिदधे उक्ता । इति किं । हे भा-रति त्वं भवन्मुखेन त्वन्मुखेन स्ववर्णनं याचतां प्रार्थयमानानामितोऽस्मा-न्नृपात्परेषामन्येषां राज्ञां स्वनिवेदने स्ववर्णने एव त्वरां कालविलम्बा-सहनत्व पश्य एतद्वर्णनाद्विरमेति भावः । अन्यानपि वर्णयेत्यर्थः ॥५९॥

कृताऽत्र देवी वचनाधिकारिणी त्वमुत्तरं दासि ददासि का सती । इतीरिणस्तन्नृपपारिपार्श्वि-कान् स्वभर्त्तुरेव भ्रुकुटिर्न्यवर्त्तयत् ॥ ६० ॥

कृतेति । स्वभर्त्तुः स्वस्वामिन एव भ्रुकुटिः कोपवशाद्भ्रूभङ्ग इ-ति पूर्वोक्तं ईरिणो भाषमाणांस्तान्नृपपारिपार्श्विकान् राजसेवकान् न्य-वर्त्तयत् न्यषेधत् । भ्रूक्षेपमात्रेण तेनैव ते निवारिता इत्यर्थः । इति किं । हे दासि अत्र राजवर्णने वचनाधिकारिणी भाषणाधिकारिणी देवीकृता त्वं का सती का भवन्ती केन प्रयुक्ता सती अथ वाचसी कुलटा का त्वमुत्तरं ददासि । अत्र त्वं वक्तुमयोग्येति । पारिपार्श्विकान् । परि-पार्श्वं वर्त्तते परिमुखञ्चेति (पा० ४ । ४ । २९) चकाराट्ठक् ॥ ६० ॥

घराधिराजं निजगाद भारती तदुन्मुखेपद्वलिता ङ्गसूचितं*। दमस्वसारं प्रति सारवत्तरं कुलेन शीलेन च राजसू चितं ॥ ६१ ॥

धरेति । भारती दमस्वसार प्रति धराधिराज नृप निजगाद कथय ति स्मेत्यर्थ । किंभूत । तस्य वर्ण्यमानस्य नृपस्य उन्मुख सन्मुख इंप द्वलितेन किञ्चित्परिवर्तितेनाङ्गेन करादिना सूचित ज्ञापित । तथा सार वत्तरमतिबलिष्ठ । तथा कुलेन शीलेन स्वभावेनाचरणेन वा राजसु मध्ये सूचित योग्य श्रेष्ठ । कुलशीलाभ्या सारवत्तर श्रेष्ठतर वा ॥ ६१ ॥

कुतः कृतैव वरलोकमागत प्रति प्रतिज्ञाऽनवलो कनाय वा । अपीयमेनं मिथिलापुरन्दरं निपी य दृष्टिः शिथिलास्तु ते वरं ॥ ६२ ॥

कुत इति । हे भैमि ते त्वया आगत स्वयम्बरार्थ वरलोक परिणे-तृवृन्द प्रति लक्षीकृत्य अनवलोकनाय अदर्शनायैवमनुना दृश्यमानेन प्रकारेण प्रतिज्ञा कुत कस्मात् कारणात् कृता आपि त्वयुक्तमेतत् । वेति पाठे कुतो वेत्यन्वय । अनवलोकनायैवेति अवधारणार्थो वा । न केवल वरणायैव किन्तु अनवलोकनायापीति अप्यर्थो वा । कि-न्तर्हि कर्तव्यमित्यत आह । हे भैमि ते इय दृष्टि एन मिथिलाया नगर्या पुरन्दर स्वामिन निपीयैव शिथिलाऽस्तु एनद्वर । सम्यगाऽन वलोकनाद्विलोकन वरमिति राजान्तरयदनानुरागेऽप्येन विलोकयेत्यर्थ । अन्ये यद्यपि नावलोकितास्तथाप्येन विलोकय । विलोकनेनापि एन सभावयेत्यर्थ । पूर्वश्लोके सामान्यस्य उक्तत्वात । अन्वादेशे (पा २ । ४ । ३४) एनमिति समर्थनीय ॥ ६२ ॥

न पाहि पाहीति यदब्रवीरमु ममोष्ठ तन्नैवमभ दिति क्रुधा । रणाङ्कितावस्थ विरोधिमूर्द्धभिर्वि दश्य दन्तैर्निजमोष्ठमास्यते ॥ ६३ ॥

* वलितास्मसूचितमिति पाठान्तर । ह० मू० ।

न पाहीति । अस्य विरोधिमूर्द्धभिर्वैरिशिरोभिः इति क्रुधा रणाङ्गितौ निजमोष्ठं दन्तैर्विदश्य विशेषेण दष्ट्वा आस्यते स्थीयते । इति किं । हे ओष्ठ त्वं अमुं नृपं प्रति पाहि पाहि इति यत्र अब्रवीः तेन कारणेन समोष्ठविलुञ्चनपूर्वकं मरणमभूदिति । पाहि पाहीति यो वदति तमयं रक्षति । पाहीति पदोच्चारणे प्रथमं तवैव सामर्थ्यं पकारस्योष्ठ्यत्वात् त्वया च सदर्पत्वात्तदनुच्चारणान्मामयं मारितवानिति त्वमेवापराधीत्यर्थः । अवमुष्टिन्यायेन दष्ट्वैव न तु मुक्त्वेति आस्यत इत्यनेन सूचित ॥ ६३ ॥

भुजेऽपसर्पत्यपि दक्षिणे गुणं सहेषुणाऽऽदाय पुरः प्रसर्पिणे । धनुः परीरम्भमिवास्य सम्मदान् महाहवे दित्सति वामबाहवे ॥ ६४ ॥

भुज इति । महाहवे महति रणसम्मर्दे दक्षिणेऽपसव्ये अथ च सरले अनुकम्पेऽपि भुजे इषुणा सह गुणं मौर्वीमपि आदाय गृहीत्वाऽपसर्पति कर्णपश्चाद्देशं गच्छति सति पुरः प्रसर्पिणे रिपुसम्मुखयायिने दृढतरमुष्टयेऽस्य वामबाहवे सव्यभुजाय धनुः सम्मदादिव दृढतरत्वजातादर्पादिव परीरम्भमालिङ्गनं दित्सति दातुमिच्छति । दित्सतीयेति वा । अन्यस्मिन्नपि गुणिनि विश्वासपात्रे सङ्ग्रामात् स्वजनमादाय पलायिते सति सङ्ग्रामं कर्तुं सम्मुखाय वामाय दुष्टायापि अयमेव साधुरिति मत्वा मुखरागेन केनचित्सभ्यस्येनालिङ्गनं दीयते । दृढमुष्टिरलिशूरोऽयमिति । सङ्ग्रामे कर्णान्तपर्यन्तमाकर्षणाद्धनुश्चक्रीकृत्य शरान्मुञ्चतीत्यास इति भावः । वामबाहव इति । ददातियोगाच्चतुर्थी ॥ ६४ ॥

अस्योक्षीरमणस्य पार्वणविधुद्वैराज्यसज्जं यशः सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् । तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु ॥ ६५ ॥

घस्येति । अस्योर्व्वीरमणस्य राज्ञः यद् यशः एतादृशं । कीदृशं यशः । पर्व्वणि भवः पार्व्वणः पूर्णो विधुश्चन्द्रः तस्य द्वैराज्यं द्वयोरीशोः कर्म्म तत्र सज्जं तत्परं पार्व्वणचन्द्रसदृशमित्यर्थः । तथा सर्व्वेषु उज्ज्वलस्य धवलस्य शर्व्वपर्व्वतस्य हरनिवासभूतकैलासस्य सितश्रीः श्वेतकान्तिस्तद्विषये यो गर्व्वस्तस्य निर्व्वासि निराकारकं । कैलासादपि धवलतरं एवम्भूतं यत् यशः तत्कम्बुप्रतिबिम्बितं सामुद्रशङ्खप्रतिबिम्बं किमु । तथा शरदि पर्जन्यराजिर्मेघपङ्क्तिस्तस्याः श्रीर्धवलिमशोभा तस्याः पर्य्यायः किमु । शब्दस्य शब्दान्तरेणोच्चारः पर्य्यायः । तथा दुग्धसिन्धोः क्षीरोदस्य पयसां दुग्धानां सर्व्वेण प्रकारेणानुवादः पुनरभिधानं किमु । चन्द्रादितुल्यमेतद्यश इति भावः । "अन्तोऽपि स विधितद्दै..." प्रतिपक्षं निरस्यति ॥ ६५ ॥

निस्त्रिंशत्रुटितारिवारणघटाकुम्भास्थिकूटावटस्थानस्थायुकमौक्तिकोत्करकिरः कैरस्य नाथ द्रुकः । उन्नीतस्त्वतुरङ्गसैन्यसमरत्वङ्गत्तुरङ्गक्षुरक्षुण्णासु क्षितिषु क्षिपन्निव यशःक्षौणीजबीजव्रजं ॥ ६६ ॥

निस्त्रिंशेति । अस्य नृपस्यायं दृश्यमानः करः कैरेवम्भूत इव न उन्नीतः तर्कितः अपि तु सर्व्वैरप्येवमेव तर्कितः । कीदृशः करः । निस्त्रिंशेन खड्गेन कृत्वा त्रुटितायाः खण्डनं प्राप्तायाः अरिवारणघटायाः वैरिगजवरम्परायाः कुम्भानां गण्डस्थलानां अस्थिकूटा अस्थिसमूहास्तेषामवटस्थाने गर्त्तलक्षणस्थाने स्थायुकः स्थितिशीलो मौक्तिकोत्करो मुक्तासङ्घस्तस्य किरः विक्षेपकः तथा चत्वारि करिनररथतुरगलक्षणानि अङ्गानि येषामेवम्भूतानि सैन्यानि येषु ते समराः सङ्ग्रामास्तेषु त्वङ्गन्तश्चित्रं गच्छन्तस्तुरङ्गास्तेषां क्षुरैः खुरायनतीक्ष्णाघातैः क्षुण्णासु विदारितासु कृष्टासु क्षितिषु रणक्षेत्रभूमिषु यशोलक्षणस्य क्षोणीजस्य तदुत्पादकं बीजव्रजं बीजसङ्घं क्षिपन्निव वपन्निव । यशोवृक्षस्य शुभ्रत्वात्तत्कारणेन बीजेन शुभ्रेणैव भवितव्यं । अरिकरिकुम्भस्थमुक्ताफलानि

बीजस्थाने जातानीत्यर्थः । अन्योऽपि पात्रस्थं बीजमुष्टिं स्फारणाकृष्य हलकृष्टासु भूमिषु वपति । वैरिकरिणां हननादेतस्य बहु यशो जात-मिति । तैदस्यास्त्वरुराः खुरा इति तुल्यः शब्दः । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्ग इति । इमप्रकरणे सङ्ख्यायास्तत्पुरुषस्योपसङ्ख्यानं निस्त्रिंशाद्यर्थमिति डः । स्थायुकं । लषपतपदस्थेत्युकञ् (पा० ३ । २ ।१५४)। किरतीति किरः । इगुपधेति कः (पा० ३ । १ । १३५) ॥ ६६ ॥

अर्थिभ्रंशवहूभवत्फलभरव्याजेन कुब्जायितः
सत्यस्मिन्नतिदानभाजि कथमप्यास्तां स कल्प
द्रुमः । आस्ते निर्व्ययरत्नसम्पदुदयोदग्रः कथं
याचकश्रेणीवर्जनदुर्यशोनिबिडितव्रीडस्तु रत्ना
चलः ॥ ६७ ॥

अर्थीति । स कल्पद्रुमः प्रसिद्धः केवलं कल्पितप्रदः । अस्मिन् राजनि अतिदानं अतिशयितं दानं भजति अकल्पितमपि ददति सति अर्थिभ्रंशाद्याचकैर्वर्जनात् पूर्वमल्पान्यपि व्ययाभावाद्बहूभवन्ति बहूनि जायमानानि फलानि तेषां भरव्याजेन भारगौरवमिषेण कुब्जायितः सर्वथदायकरितोऽतिनम्रः सन् कथमप्यास्तां महता क्लेशेन । अयं च लज्जागोपनप्रकारेणापि तिष्ठतु कालं यातिवाहयतु । नम्रत्वेन लज्जागोपनं युक्तमिति भावः । तु पुनः रत्नाचलः याचकश्रेण्या वर्जनात् परित्यागात् जातेन दुर्यशसाऽपकीर्त्या निबिडिता घनीकृता व्रीडा लज्जा यस्य स तथाभूतोऽपि याचकाभावान्निर्व्ययमाऽव्यया रत्नसम्पदा कृत्वा च तद्याऽनुस्यूता वृद्धिस्तेनोदग्रः उच्चशिखरोऽथ वा नम्र एव कथमास्तेऽपि नु लज्जितस्यानम्रत्वमयुक्तमेवेत्यर्थः । कल्पवृक्षस्य स्वर्गस्थितस्यादृश्यतया फलभरव्याजेन नम्रतया च लज्जापरिहारः सम्भवः । रोहणाद्रेस्तु एकलोकनिवासादृश्यत्वाभावेऽपि याचकैर्वर्जनाल्लज्जानिगूहननिमग्नत्वं युक्तं तत्तु तस्य नास्तीत्याश्चर्यं । कल्पवृक्षमेरुभ्यामप्यधिको दानशूर इति भावः । कुब्जायितः । लोहितादेराकृतिगणत्वादाचारे क्यष् (पा० ३ । १ । १३) ॥ ६७ ॥

सृजामि किं विघ्नमिदं नृपस्तुताविती ङ्गितैः पृ
च्छति तां सखीजने । स्मिताय वक्त्रं यदवक्रय
द्वधूस्तदेव वैमुख्यमलक्षि तन्नृपे ॥ ६८ ॥

सृजामीति । वधूर्भैमी सखीजने इङ्गितैर्भ्रूभङ्गादिचेष्टितैः कृत्वा तां भैमीमिति पृच्छति सति स्वाभिप्रायज्ञापनार्थं स्मिताय वक्त्रं यत् अव क्रयत् वक्रं चक्रे तद्वदनवक्रणमेव तन्नृपे तस्मिन् राज्ञि वैमुख्यं पराङ्मुखत्वं अलक्षि अलक्षित । अन्यतो विलोकनादेवात्रानादरोऽस्या इतीति सखीभिर्लक्षितेन राज्ञा वा तर्कितमित्यर्थः । इति किं । हे भैमि अहं अपभ्राधी नृपस्य इदं नृपस्तस्य स्तुतौ विघ्नं सृजामि किं । वैलक्ष्यमिति पाठे अस्याप्रधानतया यस्मान्मुखमवक्रयत् तस्मादेव भूपगतमेव वैलक्ष्यं मालिन्यं लोकैर्लक्षितमित्यर्थः । स्मिताय । स्मितं कर्तुं क्रियार्थोपपदेति चतुर्थी (पा० २ । ३ । १४) ॥ ६८ ॥

दृशाथ निर्दिश्य नरेश्वरान्तरं मधुस्वरा वक्तुम
धीश्वरा गिरां । अनूपयामास विदर्भजाश्रुती नि
जास्यचन्द्रस्य सुधाभिरुक्तिभिः ॥ ६९ ॥

दृशेति । अथ मधुरस्वरा गिरामधीश्वरा वक्तुं वर्णयितुं दृशा नेत्रव्यापारेण नरेश्वरान्तरं नृपान्तरं निर्दिश्य दर्शयित्वा विदर्भजाश्रुती भैम्याः कर्णौ निजास्य स्वीयवदनमेव चन्द्रस्य सुधाभिरमृतरूपाभिरुक्तिभि कृत्वा अनूपयामास परिपूर्णे चकार तवाचेत्यर्थः । अनुगता आपो यत्रानूपो देश । ऋगादिना समासान्ते ऊदनोर्देश इत्यूकार (पा० ६ । ३ । ९८) । अनूपे जलप्लुते चकार । तत् करोतीति णिच् । लक्षणया मधुरस्वराकर्णनस्तिमिते चकारेत्यर्थः । अपूपुरद्बोमभुव श्रुती पुनरिति पाठे णौ चङ्युपधाया ह्रस्व इति कियाख्यमित्युपधाह्रस्व (पा०७।४।१) ॥ ६९ ॥

स कामरूपाधिप एष हा त्वया न कामरूपाधिक
ईक्ष्यतेऽपि यः । त्वमस्य सा योग्यतमाऽसि वल्ल
भा सुदुर्लभा यत्प्रतिमल्लभा परा ॥ ७० ॥

स इति । एष कामरूपस्य देशविशेषस्याधिप । अथ च मदनरूप स्यापि स्वामी तद्रूपधारणादित्यर्थः । स कः । यस्त्वया न ईक्ष्यतेऽपि न नाभिलष्यत इति तु किं वाच्यमित्यर्थः । हा कष्टमनुचितमेतत् । यतः कामाद्रूपेणाधिकः अतिसुन्दरः । अथवा कामाद्रूपेणाधिको नेति काकु-ध्वनिः । यतोऽयं कामादधिकस्तस्मादस्य योग्यतमा सा त्वं वल्लभाऽसि नितरामुचिता प्रेयसी भवसि । सा का । परा उत्कृष्टा यस्यास्तव प्रति मल्ला तुल्या आकान्तिः सुतरां दुर्लभा यस्याः । सदृशी कान्तिः कस्या-ञ्चिदपि न दृश्यते । त्वमपि सुन्दरत्वादित्यर्थः । अथ च पराऽन्या स्त्री यस्यास्तुल्यकान्तिर्दुर्लभा साऽतिसुन्दरी त्वमित्यर्थः । त्वमतिसुन्दरी अस्य सुतरामयोग्येत्यर्थं इति वा व्याख्यानान्तरं शिष्टत्वादुपेक्ष्य । सुदु-र्लभा । नञ्दुर्भ्यां केवलाभ्यामिति नुमनिषेधः (पा० ७।१।६८) ॥ ७०॥

**अकर्णधाराशुगसम्भृतां गतां गतैररित्रेण विना स्य वैरिभिः । विधाय यावत्तरणेर्भिदामहो नि मज्य तीर्णः समरे भवार्णवः ॥ ७१ ॥**

अकर्णेति । अस्य वैरिभिः समरे निमज्य निपत्य यावान् सकलस्त-रणिः सूर्यस्तन्मण्डलस्येत्यर्थः । भिदां भेदं विधाय कृत्वा भवः संसार एव दुस्तरत्वादर्णवस्तीर्णः मोक्षप्राप्तेरपुनरावृत्तेरित्यर्थः । अहो आ-श्चर्यं शूरतरोऽयमित्यर्थः । किम्भूतैः । अरिभ्यस्त्रायत इत्यरित्रं कवचं तेन विनाऽयमरिरस्मात् सकाशाद्भयकेनान्येन शूरतरेण विना न विद्यन्ते कर्णाः कर्णाकारा लोहकण्टका यासां एवंविधा धारा येषामेवंभूताः । कर्णान् घरन्ति कर्णधाराः न कर्णधारा अकर्णधारा एवम्भूता या आ शुगा बाणाः अशुगाः शरास्तैः सम्भृतानि प्रोतानि अङ्गानि अवयवा यै-षां तेषां भावस्तत्ता तां गतैः प्राप्तैः प्रत्यवयवविद्धैरित्यर्थः । यावत् सा कल्यं । अथ च कर्णधारो नाविकः आशुगो वायुस्ताभ्यां कृत्वा संभृ-तानि परिपुष्टानि अङ्गानि रज्जुफलकादीनि तरणोपायभूतानि च येषां कर्णधाराशुगायुता वा संभृताङ्गानि येषां एवम्भूता ये न भवन्ति तद्भावं गतैः । अरित्रेण जलक्षेपककाष्ठेन विना तत्साध्यभावे यावत्तरणे

सकलाया नौकाया भेदं विधाय सकलां नौकां स्फोटयित्वा निमज्य बु-डित्वा धर्णवस्तीर्णः । हे भव शिव इत्ति अत्याश्चर्यं कर्णधाराद्यभावे नौकायाश्च भेदे बुडित्वा तरणं तत्रापि समुद्रस्येति अत्याश्चर्यं अघट-मानघटने च आश्चर्यसूचकं शिवनामोच्चारणं क्रियते । कर्णधारस्तु ना-विकः । नौकादण्डः क्षेपणी स्यादरित्रं । स्त्रियां नौस्तरणिस्तरिः । द्यु-मणिस्तरणिर्मित्र इत्यमरः ॥ ७१ ॥

अमुष्य भूलोकभुजो भुजोष्मभिस्तपर्तुरेव क्रिय तेऽरिवेश्मनि । प्रपां न तत्रारिवधूस्तपस्विनी ददातु नेत्रोत्पलवासिभिर्जलैः ॥ ७२ ॥

अमुष्येति । भूलोकभुजो भूपालस्यामुष्य भुजोष्मभिर्बाहुप्रतापैः अ रिवेश्मनि अतिसन्तापकारित्वात्तपर्तुरेव ग्रीष्मर्तुरेव यद्यस्मात् क्रियते तस्मात् तत्र ग्रीष्मर्तौ तपस्विनी दीनारिवधूः नेत्राण्येवोत्पलानि तेषु वासिभिर्जलैः अश्रुभिः । अथ च नेत्रतुल्यकमलानां यो वासः परिम लः स विद्यते येषु तैर्जलैः कृत्वा प्रपां पानीयशालां न ददातु अपि तु ददात्येव ।-तपस्विनी ग्रीष्मर्तौ सुगन्धिभिरुदकैः प्रपां करोति । अनेन पतिमारणात् शोकव्याप्ता सर्वाप्यरिनारी रुरोदैवेति भावः । प्रपापानी यशालिकेत्यमरः ॥ ७२ ॥

एतद्दन्तावघातस्रवदसृगसुहृद्वंशसार्द्रेन्धनैस्तद्दो रुद्दामप्रतापज्वलदनलमिलद्धूमधूमाय । ए तद्दिग्जैत्रयात्रासमसमरभरं पश्यतः कस्य ना सीत् एतन्नासीरवाजिव्रजखुरजरजोराजिराजि जिस्थलीषु ॥ ७३ ॥

एतदिति । आजिस्थलीषु सङ्ग्रामभूमिषु एतन्नासीरस्य एतत्सेनाग्र स्य पुरो गच्छन्तो वाजिव्रजास्तेषां खुरेभ्यश्चरणाग्रेभ्यो जातैरुद्धूलितो रजोराजिः रेणुपङ्क्तिः एतस्य दिग्जैत्रयात्रा दिग्जयकारिण्यो या यात्राः तैरिसम्मुखं गतास्तासु असममतुल्यं समरस्य भरं सम्मर्दं पश्यतः कस्य

जनस्य एतेन राज्ञा दत्तेभ्योऽसिघातेभ्यः स्रवदसृग्रक्तं येषां एतेन द त्तोऽसिघातो येभ्य अत एव स्रवदसृजो वासुहृद्गणा घारिसङ्घा अथ च तद्रूपा येवग्वस्त एव साद्राणीन्धनानि दाह्यकाष्ठानि यस्यैवभूत एतस्य दोर्दण्डोद्भवोद्दामप्रतापस्तीक्ष्णप्रतापः स एव ज्वलन्देदीप्यमानोऽनलः तस्य मिलन् सम्भवन् भूमा बाहुल्यं यस्यैवभूतो बहुतरो धूमस्तस्य भूमाय सादृश्यादधूमेऽपि रजसि धूम इति बुद्धये नासीदपि तु सर्वस्यापि । आर्द्रवेणुरूपेन्धनं दहतो वह्नेर्भूयान् धूमो भवति । सर्वेऽप्यरय एतत्प्र तापवह्निना दग्धाः । अप्रतिमत्वमिति भावः । साद्रमित्यार्द्रं पर्या यः । मिलद्भूमभूमेति पाठे मिलतो धूमस्य बाहुल्यं तद्भ्रान्तये ॥ ७३ ॥

क्षीरोदन्वदपः प्रमथ्य मथितादेशोऽमरैर्निर्मिते स्वाक्रम्यं सृजतस्तदस्य यशसः क्षीरोदसिंहास नं । केषां नाजनि वा जनेन जगतामेतत्कवि त्वामृतस्रोतःप्रोतपिपासुकर्णकलशीभाजाभिषे कोत्सवः ॥ ७४ ॥

क्षीरेति । केषां जगतां भुवनानां सम्बन्धिना जनेनास्य राज्ञो यश सोऽभिषेक उत्सवो नाजनि नाकारि अपि तु स्वर्गादिस्थितेन सर्वे णापि लोकेनैतदीययशसोऽभिषेकः कृतः । विशेषणाधिष्ठानमाह । किंभूतस्य यशसः । क्षीरोदन्वदपः क्षीरोदन्वान् क्षीरसमुद्रस्तस्यापो ज लानि दुग्धरूपाणि प्रमथ्य मन्दराचलेन हत्वा प्रकर्षेण विलोड्यामरैः मथनक्रियायोगान्मथितमिति आदेशो संज्ञायां निर्मिते कृतायां यथा च निर्जलं सम्यमथितं दधि मथितमित्युच्यते । ततश्च क्षीरस्यापि मथ नक्रियायोगादमरैर्भृमथितरूपे आदेशे निर्मिते सति काले स्थित्य- भावक्षीरोदन्वदुदके दुग्धरूपे अविद्यमाने कृते सतीत्यर्थः । क्षीरोदरूपं सिंहासनं शुभ्रत्वगुणसाम्यापेक्षया तस्यातिशुभ्रत्वाद्भद्रं भद्रपीठं तास्येना गागाय च सुखेन आयासरहितं यथा तथा आक्रम्यमुपवेशनयोग्यं सृजतः कुर्वतः क्षीरोदपदमधितिष्ठत इत्यर्थः । किंभूतेन जनेन । एत द्दर्शनं कवित्व एवामृतप्रवाहस्तेनातिविभिन्निर्मितं कीर्तियशो नदप्यं कवित्वं

तदेव स्वादुतरत्वादमृतं तस्य स्रोतसि प्रवाहे प्रोतौ स्यूतौ भृतौ सा-दरमाकर्णनेच्छू अथ च जलभरणेच्छू कर्णावेव कलशौ महान्तौ कलशौ भाजा भजतः । लोके हि कस्मिंश्चिद्राजनि केनचिन्मथिते तदीय सिं-हासनमधिष्ठितोऽन्यस्य केनचिद्वारिपूर्णेन कलशेनाभिषेकः क्रियते । घनीरूपतया उपवेशनयोग्यतां सूचयितुं मथिताद्वेगे कृते सतीत्युक्तं । जलोपरि उपवेशनासम्भवात् । क्षीरोदादपि विमलतरं मद्दीयधैतद्यशो वैदेशिकैर्लोकत्रयसञ्चारि कृतमिति भावः । तक्रं त्वुदश्विन्मथितं पा-दाम्ब्वर्धाम्बु निर्जलमित्यमरः । क्षीरोदश्वदप० । उदन्वानुदधौ चेति (पा० ८ । २ । १३) साधु । ऋक्पूरित्यप्रत्ययः (पा० ५ । ४ । ७४) । स्वाकम्प्य । पोरदुपधादिति यत् (पा० । ३ । १ । ९८ । भजति । क-र्तरि ण्विः (पा० ३ । १ । ६६) ॥ ७४ ॥

समिति पतिनिपाताकर्णनद्रागदीर्णप्रतिनृपति मृगाक्षीलक्षवक्षःशिलासु । लिखितलिपिरिवोरस्ताडनव्यस्तहस्तप्रखरनखरटङ्कैरस्य कीर्तिप्रशस्तिः ॥ ७५ ॥

समितीति । अस्य राज्ञः कीर्तिप्रशस्तिर्वर्णनपङ्क्तिः समिति सङ्ग्रामे पतीनां निपातो मरणं तस्याकर्णनेन द्रुक् शीघ्रं अदीर्णानि प्रति-नृपतिमृगाक्षीणां लक्षस्य वक्षांसि तान्येव तवाणमेवाविदीर्णत्वाच्छिला-स्तासु शोकवशादुरस्ताडने व्यस्तयोर्द्वन्द्वनिवेशितयाहस्तयोः प्रखरा अ-तितीक्ष्णा नखरा नरवा एव टङ्काः पाषाणदारणलोहविकारास्तैरचित-लिपिरिव रचितलेखनेवास्तीति शेषः । अन्यस्यापि कीर्तिप्रशस्तिः शि-लासु टङ्किकाभिरुत्कीर्य लिख्यते । सर्वेऽप्यरयोऽनेन हतास्तत्राश्चर्यं-शोकवशादुरस्ताडनं कुर्वन्ति अतिशूरत्वादस्य कीर्तिर्भवतीत्यर्थः । दृ-ढशोकेऽप्यदार्णत्वाच्छिलात्वं । शोकातुरस्योरस्ताडनं जातिः । टङ्कः पा-षाणदारणः इत्यमरः । समिदाजौसमितृषु चेति ॥ ७५ ॥

विधाय ताम्बूलपुटीं कराङ्कगां बभाण ताम्बूल

करङ्कवाहिनी । दमस्वसुर्भावमवेत्य भारती नया
ऽनया वक्तुपरिश्रमं श्रमं ॥ ७६ ॥

विधायेति । ताम्बूलस्य करङ्कः सुवर्णादिरचितहंसाद्याकारं ताम्बूलधारणपात्र पटीति लोके तस्य वाहिनी धारिणी काचित् सखी दमस्वसुर्भावं तदुक्तनलनिषेधरूपं अवेत्य ज्ञात्वा भारती इति अभाषत । किं कृत्वा । ताम्बूलपुटीं पूगीफलचूर्णखदिरपर्णानि यत्रैकत्र क्रियन्ते । यां मध्यदेशभाषया गुलबिड़ेति व्यवहरन्ति । तां देव्यै दातुं कराङ्गुलीत्रयकरतलमध्यगतां या कृत्वा करङ्कं गृहीत्वेत्यर्थः । इति किं । हे देवि त्वं अनया वीटिकया एतदीयबहुवर्णनजनितं वक्तुस्य सफलं परिश्रमं श्रमं नय बहुवर्णनजनित शोषशान्तिं प्रापयेति । एतत्स्तुतेर्विरमेत्यर्थः । अन्योऽपि शुकमुखो वीटिकया श्रमं श्रमं नयति ॥ ७६ ॥

समुन्मुखीकृत्य बभार भारती रतीशकल्पेऽन्यनृपे
निजं भुजं । ततस्त्रसद्बालपयद्विलोचनां शशंस
संसज्जनरञ्जनीं जनीं ॥ ७७ ॥

समिति । भारती रतीशकल्पे कामतुल्येऽन्यनृपे निजं भुजं बाहुं सम्यग् उन्मुखीकृत्य बभार भैम्यै तं दर्शयितु तदभिमुखं चकार । ततः अनन्तरं त्रसद्बालपयद्विलोचना भीतबालहरिणनेत्रां सभज्जनानां सभ्यानां रञ्जनीं अनुरागजनिकां जनीं वरार्थिनीं तां भैमीं शशंस अभाषीत् । रतीशतुल्य इति च पाठः । रञ्जनीं । कृन्नरमयाभावान्नलोपाभावः (पा० ६ । ४ । २४ । सू० ३ वार्तिके ।) ॥ ७७ ॥

श्रयं गुणौघैरनुरज्यदुत्कलो भवन्मुखालोकरसो
त्कलोचनः । स्पृशन्तु रूपामृतवापि नन्वमुं त
यापि दृक्कारतरङ्गभङ्गयः ॥ ७८ ॥

अयमिति । हे भैमि गुणौघैः सौन्दर्यादिगुणसङ्घैः अनुरज्यन्तोऽनुरक्ता भवन्तः भावका उत्कला तद्देशनिवासिनो लोका यस्य । अयं च गुणौघैरनुरज्यत् अहरहोधनुःपष्टिःकलायत्र सेव्यमानोऽयं नृपः ।

यस्मात् भवन्मुखालोके रसेनानुरागेणोत्कलोचन उत्कण्ठितनेत्रोऽस्तीति शेषः । तस्मान्नु हे रूपामृतवापि सौन्दर्यामृतदीर्घिके सुन्दरि तयापि दृशोस्तारा उज्ज्वला विशाला वा चञ्चला वा तरङ्गाः पुनर्व्या पाररूपाः कल्लोलास्तैरा भङ्गयः प्रकारविशेषाः अमुं स्पृशन्तु । अय त्वां पश्यति त्वमप्येनं कटाक्षैः पश्य योग्यत्वादिति भावः । अनुरज्यदुत्कल इत्यनेन जनानुरञ्जनात् सम्पदाधिक्यं सूचितं । अन्यस्यामपि जलवाप्यां चञ्चलतरङ्गभङ्गयो भवन्ति । अनुरज्यदिति । श्यनो डित्वाल्लोपः (पा० १ । ४ । २४) ॥ ७८ ॥

अनेन सर्वार्थिकृतार्थताकृता ऽऽहृतार्थिनौ कामगवीसुरद्रुमौ । मिथःपयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः ॥ ७९ ॥

अनेनेति । कामगवीसुरद्रुमौ कामधेनुकल्पवृक्षौ मिथः अन्योन्यं क्रमेण पयःसेचनपल्लवाशने दुग्धसेचनपल्लवभोजनं प्रदाय प्रकर्षेण दत्वा दानस्य व्यसनं अतिशये मत्यहमवश्यकरणीयतया प्रसक्तमाग्रहं समाप्नुतः समाप्तिं नयतः । कस्मादित्यतआह । किम्भूतौ । सर्वार्थिनां सर्वेयाचकानां अभीष्टदानात् या कृतार्थता जन्मसाफल्यलक्षणं कृतार्थत्वं तां करोत्येवम्भूतः कृत् तेनानेनातिदानात् सम्प्रत्याहृता आनीता अर्थिनो याचकाययोस्तौ । अर्थ्यन्तराभावात् कामगव्या कल्पवृक्षस्य दुग्धसेकः कृतस्तेन च पल्लवा भक्षयितुं तस्यै दत्ता इत्यर्थः । दानशूरोऽयमिति भाव ॥ ७९ ॥

नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान् प्रणतः पदद्वये । तदीयचूडाकुरुविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥ ८० ॥

नृपेति । अयं नृपः निजे पदद्वये प्रणामवशात् पततः नम्रान् यान् नृपान् कराभ्यां कृपया शिरसि धृत्वा उदतोलयत् उत्थापयामास । तदीया राजकीया याश्चूडामुकुटास्तासां कुरुविन्दरश्मिभिः माणिक्यशोणशोभाभिः स्फुटेयमेतस्य करपादयोः रञ्जना रक्तिमा स्फुटा दृश्यत इति शेषः ॥ ८० ॥

यत् कस्यामपि भानुमान् ककुभि स्थेमानमाल
म्बते जातं यद्घनकाननैकशरणप्राप्तेन दावा
ग्निना । एषैतद्भुजतेजसा विजितयोस्तावन्नयो
रौचिती धिक्तं वाडवमम्भसि द्विषि भिया येन
प्रविष्टं पुनः ॥ ८१ ॥

यदिति । भानुमान् सूर्य्यं कस्यामपि ककुभि दिशि स्थेमान स्थिरत्व यत् नालम्बते अङ्गीकरोति किन्तु सर्व्वदा परिभ्रमत्येव । दावाग्निना वनवह्निना च घन अतिगहन काननं तदेव एक केवल शरण रक्षितार प्राप्तेन तदेकाश्रयेण यज्जात । एतस्य भुजतेजसा विशेषेण जितयोस्तयो सूर्यदावानलयोस्तावन्निश्चित एषा औचिती युक्तकारितता । भीतस्य व्याकुलता वनाश्रयणञ्च युक्तं इत्यर्थः । मानी हि जितः सन् लज्जया मुखमदर्शयन् पुनर्दर्शनभयेनैकस्मिन्देशे वास त्यक्त्वा सर्व्वत्र परिभ्रमति सर्व्वथाऽन्यस्य प्रवेष्टुमशक्यं घन गहन वाविशति । तावुभौ युक्तमेव कृतमित्यर्थः । त वाडव वडवानल पुनर्धिक् येनास्य भिया द्विषि शत्रुभूते अम्भसि समुद्रजले प्रविष्ट निमग्नं । मानी हि पराजितोऽपि वैरिणः शरण नैति अयन्तु गत इति अभिमानित्वाभावादिन्द्य एवेत्यर्थ । अप च वाडवो ब्राह्मणः । ततश्च ब्राह्मणस्याऽस्थानेऽपि भयेन प्रवेशो युक्त । शत्रुणा च तस्य रक्षण युक्तं इति च सूचितं। सूर्यादेरप्येतदीयं तेजोऽधिकतरमिति भावः । स्थेमानमिति । स्थिरशब्दाद्भावे पृथ्व्यादिभ्यइमनिचि (पा० ५ । १ । १२२) प्रियस्थिरेति । स्थादेश. (पा० ६ । ४ । १५७) । शरण प्राप्तेन । द्वितीयाश्रितेति समास. (पा० २ । १ । २४) ॥ ८१ ॥

अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवैरवैमि
प्रारब्धे यमपुभिरत्नयायसमये । न कम्पन्ता
मन्त्रः प्रतिनृपमठा म्लायतु न तद्वधूवक्त्रा
म्भोजं शयनु न च तेषां कुदिवसः ॥ ८२ ॥

अमुष्येति । अमुष्योर्वीभर्तुरणसंरम्भात् प्रसृमराः प्रसरणशीलाः भूमिस्थुराः सेनागजास्तेभ्यो भवैः समुत्पन्नैर्वमथुभिः करिकराग्रजातैर्मदजलबिन्दुभिर्जलबिन्दुभिर्वा अवश्यायसमये नीहारकाले हिमर्तौ प्रारब्धे निर्मिते सति प्रतिनृपभटाश्चौरा अपि रिपुनृपा अन्तस्तन्मध्ये स्वीयमनसि वा न कम्पन्तां अपि त्वस्माद्भयेन युक्त एव कम्पस्तेषां । तथा तेषां रिपूणां वध्वो रमण्यस्तासां वक्त्राम्भोज न म्लायतु अपि तु माविनः प्राणेशवधस्य निश्चितत्वात तासां मुखस्य म्लानिरुचितैव । तथा स प्रसिद्धो रणवासरस्तेषां वैरिणां तत्स्त्रीणा च कुदिनसो दिवसोऽशुभरूपो वासरो न भवत्वपि तु भवत्वेव । वधनिश्चयाद्वैरिणां तत्स्त्रीणाञ्च शोकवशादित्यहमवैमि । हिमर्तौ शरीरकम्पः कमलम्लानिर्दुर्दिनञ्च भवति । शूरतरोऽयं गजपतिरिति भाव. । सिन्धुरभवैरिति पाठे जगत्सद्भिः कर्तृभिः वमथुभि. कृत्वेति व्याख्येय । वमथुः करिसीकरः । अवश्यायस्तु नीहार इत्यमरः । प्रसृमरेति । सृघस्यद इति क्मरच् (पा० ३ । २ । १६०) अवश्यायेति । श्याद्व्यधेति ण· (पा० ३ । १ । १४१) । तेषा । पुमान् स्त्रियेत्येकशेषः (पा० १ । २ । ६७ ।) ॥ ८२ ॥

आत्मन्यस्य समुच्छ्रितीकृतगुणस्याहोतरामौचिती यद्गात्रान्तरवर्जनादजनयद्भूजानिरेप द्विपां । भूयोऽहं क्रियते स्म येन च हृदा स्कन्धो न यन्नानमत् तन्मर्माणि दलं दलं समिदलंकर्मीणमाणवृजः ॥ ८३ ॥

आत्मनीति । आत्मनि स्वीये स्वरूपे समुच्छ्रितीकृतगुणस्य मेलितसौन्दर्यादिसर्वगुणस्यास्य राज्ञ. अहोतरामतिशयेनौचितीयं । यत एष भूजानिर्भूपतिर्द्विषां गात्रान्तराणां हृत्स्कन्धेतराणां वर्जनात् अवयवान्तर परित्यज्येत्यर्थ· । येन च हृदा भूयः पुनः पुनरतितरा अहङ्क्रियते स्म अहङ्कारिणा जातमित्यर्थः । यश्च स्कन्धः नानमन् नम्रो न भूतः तस्यैव स्कन्धस्य मर्म्माणि अतिमृदूनि जीवस्थानानि दलं दलं खण्डं खण्ड अजनयत् चकार नान्येषां । किंभूतः । समिति सङ्ग्रामे अलङ्कर्मीणा

मलङ्कर्मीणोऽरिमारणसमर्थं बाणव्रजो यस्य । अपराधी हि राज्ञा दण्ड्यः । तत्र कन्यस्यैवापराधो नान्येषां तस्यैव दण्डं कृतवान्नान्येषामित्यतितरामस्यौचितीत्यर्थः । अयञ्च सगुणः सदर्पानमन्त्रांश्च मारयति शरणागतांस्तु रक्षतीति भावः । कर्मक्षमोऽलङ्कर्मीण इत्यमरः । अलङ्कर्मणो, पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्यन्तेति समासे (पा० २।२।१८ सू०वा०) अलङ्कर्मन्शब्दात्स्वार्थे, अषडक्षाशितङ्ग्वलङ्कर्मेति खः (पा० ५।४।७)॥८३॥

दूरं गौरगुणैरहङ्कृतिभृतां जैत्राङ्ककारे चरत्येतद्दोर्यशसि प्रयाति कुमुदं विभ्यन्न निद्रां निशि ।
धम्मिल्ले तव मल्लिकासुमनसां माल्यं भिया लीयते पीयूषस्तवकैतवाद्भृतदरः शीतद्युतिः[१] स्विद्यति ॥ ८४ ॥

दूरमिति । गौरगुणैः धवलवर्णैः कृत्वा दूरं भृशम् अहङ्कृतिभृताम् अहङ्कारवताम् वस्तूनां जैत्रञ्च तदङ्ककारि च तस्मिन् जयाङ्ककारिणि एतद्दोर्यशसि एतस्य बाहुयशसि सकलेषु जगत्सु चरति प्रसरति सति अयं च स्वप्रतिमल्लगवेषणाय भुवनं परिभ्रमति सति बिभ्यत् भीतं कुमुदं निशि निद्रां स्वप्नमथ च सङ्कोचं न प्रयाति । तथा मल्लिकासुमनसां माल्यं माला तस्मात् भिया तव धम्मिल्ले केशपाशे ग्रन्थनविशेषे लीयते आत्मानं गोपायति । अथवा अदृश्य तिष्ठति । तथा शीतद्युतिश्चन्द्रो धृतदरः प्राप्तभयः सन् पीयूषस्तवकैतवादमृतस्तबकव्याजात् स्विद्यति स्वेदं मुञ्चति । अयं च हिमकणान् मुञ्चति । एकयोक्त्या अपह्नुतिः इति वा । कुमुदादिभ्योऽप्यधिकं धवलमेतदीयं यश इति भावः । यद्विनं धारयन्त्स्वमिति केशान्तर्गतमाल्यधारणाद्भैम्याः सदाचारत्वं सूचितम् ॥८४॥

एतद्गन्धगजस्तृषाम्भसि भृशं कण्ठान्तमज्जत्तनुः फेनैः पाण्डुरितः स्वदिक्करिजयक्रीडायशःस्पर्द्धिभिः । दन्तद्वन्द्वजलानुबिम्बनचतुर्दन्तः करा

म्भोजमिथ्याजादभ्रमुवल्लभेन विरहं निर्वापयत्य
म्बुधेः ॥ ८५ ॥

एतदिति । एतस्य गन्धगजः यः सप्तसु स्थानेषु स्रवति स गन्धगजः । स्वदानमलमूत्रादिगन्धेन जितान्यकरी । विरोधिकरिगन्धमसहमान इति वा गन्धगजः । कराम्भोजमिथ्याजात् शुण्डादण्डव्याजेन मुक्तपृथग्बहूपजलवमननिपातात् अम्बुधेः समुद्रस्याभ्रमुनाम्न्याः करिण्या वल्लभस्यैरावणस्य विरहं पुत्रवियोगजनितं शोकं निर्वापयति शमयति । किंभूतः । भृशं नितरां तृषा पिपासया सफेनस्वात्क्षीराब्धेः पुरः प्रसर्पणेन कण्ठान्तं ग्रीवां मर्य्यादीकृत्य मज्जन्ती जले क्रीडन्ती जलप्रवेशाद्दृश्यमाना तनुर्देहो यस्य एवम्भूतः । तथा स्वकीया दिक् प्राची तस्याः करी ऐरावणोऽन्ये वा तत्रत्याः करिणस्तेषां जयक्रीडा तयोपार्जितैर्यशोभिः सह स्पर्द्धिभिस्तद्वदुज्ज्वलैः फेनैः जलावगाहनोद्भूतैर्निमग्नदेहो र्द्धदेशो पाण्डुरितः धवलीकृतः । तथा दन्तद्वन्द्वस्य दंतद्वयस्य जलेऽनुबिम्बनं प्रतिबिम्बस्तेन कृत्वा चत्वारो दन्ता यस्य सः । जलमध्ये विद्यमानत्वाद्धवलत्वाच्चतुर्दन्तत्वाच्चैरावण एवायमिति भ्रान्त्या समुद्रः सुखी भवतीत्यर्थः । आसमुद्रं दिग्विजयीत्यर्थः ॥ ८५ ॥

अथैतदुर्वीपतिवर्णनाद्भुतं न्यमीलदास्वादयितुं
हृदीव सा । मधुस्रजा नैषधनामजापिनी स्फु
टीभवद्ध्यानपुरःस्फुरन्नला ॥ ८६ ॥

अथेति । अथ सा भैमी न्यमीलत् अक्षिपक्ष्मसङ्कोचं चकार । किंभूता । अतिप्रीत्या मधुस्रजा वरणमधूकमालया नैषधस्य नाम जपति तच्छीलाऽत एव स्फुटीभवन् प्रत्यक्षायमाणः ध्यानेन चिन्तनातिशयेन पुरः स्फुरन् अग्रस्थिततयाऽवभासमानो नलो यस्याः सा । तत्रोत्प्रेक्षते । एतस्योर्वीपतेर्वर्णनया समुत्पन्नमद्भुतमाश्चर्य्यं हृदि विद्यमानं आस्वादयितुमिव । आश्चर्य्यस्य चेतसि वर्त्तमानत्वात्तदनुभवार्थं नेत्रे अप्यन्तः प्रविष्टे इवेत्यर्थः । नले एवानुरक्ता सती नेत्रनिमीलनेनैव तं नृपं निरादरं चकारेति भावः । अन्योऽपि जपमालयाभीष्टदेवतामन्त्रजपं कुर्वन् तां साक्षात्कर्त्तुं नेत्रे निमील्य ध्यानेन तां साक्षात्करोति ॥८६॥

प्रशंसितुं संसदुपान्तरञ्जिनं श्रिया जयन्तं जगतीश्वरं जिनं । गिरः प्रतस्तार पुरावदेव ता दिनान्तसन्ध्यासमयस्य देवता ॥ ८७ ॥

प्रशंसितुमिति । दिनान्तसन्ध्यासमयस्य देवता सरस्वती पुरावदेव पूर्ववदेव ता अतिगम्भीरमधुरा गिरः प्रतस्तार उवाच । किं कर्त्तुं । संसदः सभाया उपान्तौ उभयपार्श्वौ रञ्जयत्येवं शील श्रिया शरीरशोभया कृत्वाऽतिसुन्दरं जिनं बुद्धदेवं जयन्तं जगत्याः पृथिव्या ईश्वरं राजानं प्रशंसितुं वर्णयितुं । श्रिया संसदुपान्तरञ्जिनं जयन्तं जगति श्रीर्यादिना इन्द्रपुत्रतुल्यं कीकटदेशप्रभुत्वाज्जिनं बौद्धं राजानमिति वा जयन्तनामानं वा । जगतीश्वरमिति पाठे जिनविशेषणं ॥ ८७ ॥

तथाधिकुर्व्याः रुचिरे चिरेप्सिता यथोत्सुकः सम्प्रति सम्प्रतीच्छति । अपाङ्गरङ्गस्थललास्यलम्पटाः कटाक्षधारास्तव कीकटाधिपः ॥ ८८ ॥

तथेति । हे रुचिरे सुन्दरि त्वं तथा तेन प्रकारेणाधिकुर्व्याः अधिकारं कुर्याः । तथा कथ । यथा येन प्रकारेण कीकटाधिपः मगधदेशस्वामी त्वत्कटाक्षेषु उत्सुकः सन् चिरेप्सिता तव कटाक्षधारास्तिर्यगवलोकनपरम्परा सम्प्रतीदानीं सम्प्रतीच्छति अङ्गीकरोति । किंभूता धाराः । अपाङ्गौ नेत्रप्रान्तस्तल्लक्षणं रङ्गस्थलं नाट्यशाला तत्र लास्ये सविलाससमन्दगतौ लम्पटाः । चिरेप्सिता त्वमिति वा । चिरेत्यकारान्तमप्यव्ययं तेन समासः । एवमेवंजातीयेऽन्यत्रापि ज्ञातव्यं ॥ ८८ ॥

इदंयशांसि द्विषतः सुधारुचः किमङ्कमेतद्द्विषतः किमाननं । यशोभिरस्याखिललोकधाविभिर्विभीषिता धावति तामसी मषी ॥ ८९ ॥

इदमिति । अखिलेषु लोकेषु धाविभिः प्रसरणशीलैः लोकत्रयमुज्ज्वलयद्भिरस्य यशोभिः विभीषिता भीषिता लोकत्रयात्निर्वासिता तामसी श्यामवर्णाविरोध मषी इदंयशांसि अस्य कीर्त्तिं द्विषतः असह-

मानस्य सुधारुचश्चन्द्रस्याङ्कं कलङ्कमयच सन्निधिं धावति शीघ्रं गच्छति प्रविशति किं । किंवा एतद्द्विषत एतच्छत्रोराननं प्राप्नोतीति संशयः । एतद्यशोभिश्चन्द्राङ्कमनुसृत्यातिरिक्तस्य सकलस्यापि जगतः श्वेतीकरणा-त्तत्र निवस्तुमशक्ता सती मलिनं चन्द्रकलङ्कमेतच्छत्रुमुखञ्च प्रायेण गता । यो हि येन पराभूयते स तद्वैरिणमाश्रयतीत्यर्थः । धवलित-तरां यशस्वीति भावः । अन्योऽपि भीषितः स्वगोत्रं याति । श्यामस्य च श्यामः स्वस्तु सगोत्रमिति । तामसी तमः सम्बन्धिनी रात्रिः नवी श्यामयस्तुमात्रगता श्यामिका च यथ क्रमं चन्द्राङ्कं शत्रुमुखं धावति किमिति वा । निरन्तरोद्द्योतकरणाद्देतस्कीर्त्यां निष्काशितेव तामसी स्त्रीभावभीरुर्भर्तुश्चन्द्रस्योत्सङ्गं गता । अत एव रात्रिकालिमा चन्द्राङ्के दृश्यते । सर्वस्यापि श्वेतीकरणात् श्यामिकापि निर्वासिताऽन्यत्र स्थातु-मशक्तनयेर्द्वं रिपुमुखं गता । अत एव विवर्णीभूतेषु वैरिमुखेषु कालि-का दृश्यते । एतद्द्विषतः । द्विषःशत्रु वेति (पा० २ । ३ । ६९ सू० ६ वा०) षष्ठीसमासः ॥ ८९ ॥

इदं नृपप्रार्थिभिरुज्झितेऽर्थिभिर्मणिप्ररोहेण
विवृध्य रोहणः । कियद्दिनैरम्बरमावरिष्यते
मुधा मुनिर्विन्ध्यमरुद्ध भूधरं ॥ ९० ॥

इदमिति । अतिवदान्यतयास्य नृपस्य प्रार्थनशीलैरर्थिभिर्याचकैर-नेनैव समस्तकामानां पूरितत्वादुज्झित परित्यक्तः अत एव स्वच्छया भावान्मणिप्ररोहेण विवृध्य अङ्कुरोत्पत्त्या विस्तारेण वृद्धिं प्राप्य रोहणो मेरुः कियद्भिः कतिपयैरल्पैरेव दिनैः अम्बरमावरिष्यते आच्छादयि-ष्यति यतस्तस्मान्मुनिरगस्तिर्विन्ध्यनामानं भूधरं मुधैवारुद्ध मदागमन पर्यन्तं त्वया न वर्द्धितव्यमिति नियमेन वृथैव बाध्वद्धमकरोत् । तद्वृद्ध्यभावेऽपि रोहणेनैव सूर्य्यगतेः प्रतिबन्धकस्य करिष्यमाणत्वादग-स्त्यप्रयासस्य वैयर्थ्यमेव जातमित्यर्थः । अगस्त्येन विन्ध्यरोधस्तु पुरा-णप्रसिद्धः । अतिवदान्योऽयमिति भावः । आवरिष्यते । विकल्पत्वा-दिटो दीर्घतेति (पा० ७ । २ । ३८) । लङात्मनेपदं ॥ ९० ॥

भूशक्रस्य यशांसि विक्रमभरेणापार्जितानि क

मादेतस्य स्तुमहे महेभदशनस्पर्द्धीनि कैरक्षरैः । लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशः पारदैरस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्म्मितः ॥ ९१ ॥

भूशक्रस्येति । वय विक्रमस्य भरेण बाहुल्येन क्रमात्परिपाट्यात् उपार्जितानि एतस्य भूशक्रस्य पृथ्वीन्द्रस्य यशांसि कैरक्षरैर्वर्णैः स्तुमहे वर्णयामः । यशसां भूयस्त्वादक्षराणां पञ्चाशत्त्वात् स्तोतुं न शक्नुमः । सामान्याकारेण कथञ्चिद्वर्णयन्त इत्यर्थः । किम्भूतानि । महेभाः चतुर्दिशा यत्ता गजा ऐरावतो वा तेषां दशनैः सह स्पर्द्धन्त एवंशीलानि तद्वद्गौराणि । स्वर्णगिरिर्मेरुरन्येषां राज्ञां लिम्पद्भिर्यशोलक्षणैः पारदैः कृतकमवास्तवं रजतं कृतोऽपि प्रलेपनिर्म्मितपाण्डुद्युतिकः शीतोऽपि सन् अस्य प्रतापरूपैर्दहनैरग्निभिः पुनः स्वर्णं निर्म्मितः कृतः । प्रतापस्य पीतत्वात्सुवर्णरूपतां प्रापितः । पारदलेपनेन सुवर्णं श्वेतीभवति वह्नितापेन चोड्डीने पारदे पुनः काञ्चनमेव भवतीत्यर्थः । एतत्प्रतापात् परेषां यशांसि न प्रसरन्ति । यशस्वी प्रतापवांश्चान्यः कोऽपि नासीदित्यर्थः ॥ ९१ ॥

यद्वर्त्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं दिग्दाहैरिव भस्मभिर्म्मघवतासृष्टैः कृतोद्धूलना । शम्भोर्म्मा बत सान्ध्यवेलनटनं भाजि व्रतं द्रागिति क्षोणी नृत्यति मूर्त्तिरष्टवपुषोऽसृग्वृष्टिसन्ध्याधिया ॥ ९२ ॥

यदिति । अयं भुव शक्रो भूमीन्द्रः यस्या भूमेर्भर्तुः पत्युः अभिषेणनं सेनयाऽभिगमनं कुरुते सा क्षोणी भूमिः इति मनसि कृत्वा लोहितवर्णोत्पातिकी असृग्वृष्टिः रुधिरवृष्टिस्तद्रूपा या सायंसन्ध्या तस्या धिया ज्ञानबुद्ध्या द्राक् शीघ्रं नृत्यति गात्रविक्षेपं करोति कम्पत इत्यर्थः । यत खेदे । ध्रुवमुत्प्रेक्षे । किम्भूता सा । दाहादिग्धनउपलक्षण-

स्मयात् दिग्दाहैरिव दिग्दाहादिशामौत्पातिकनिर्हेतुकज्वलितदीप्तैः प्रभवैरिव मपवतेन्द्रेव स्पृष्टैर्म्योचितैः भस्मभिःकृत्वा कृत धृतमुद्धूलनं अङ्गलेपो यया सा । इति किं । शम्भोः दिनरात्रिसन्धिरूपायां वेलायां काले भवं सान्ध्यवेलं सायंसन्ध्याकालसमुचितं नटनं नृत्यरूपं व्रत नियमः माभाजि भग्नो माभूदिति स्वयं नृत्यतीत्यर्थः । यतः अष्टमूर्त्तेः जलाद्यष्टमूर्तेः शम्भोरेका मूर्त्तिः पृथ्वी । शिवो हि सन्ध्यासमये नृत्य करोति तन्मूर्त्तिः त्वासयापि नृत्यमारब्धमित्यर्थः । यमुद्दिश्य अय प्रयाणं करोति तस्मिन्देशे दिग्दाहभस्मवृष्टिभूकम्परक्तवृष्टिप्रभृतयास्तत्परा- जयसूचका उत्पाता भवन्ति । अयमेव विजयस्य इत्यर्थः । जलार्केन्द्वा- त्मखाग्निवायवः शिवमूर्त्तयः । यात्रसेनयाभिगमनं राज्ञस्तदभिषेणन- मित्यमरः । यद्गतुः । भर्तृशब्दस्य पत्यर्थत्वाद्याजकादित्वात् समासः । (पा०२ । २ । ९) सेनयाऽभिगमनमभिषेणनं । सत्यापपाशेति (पा०३ । १ । २५) णिचि लुट् । उपसर्गात् सुनोतीति (पा०८ । ३ । ६५) षत्व । दिग्दाहैरित्यत्र तस्येदमित्यण् (पा०४ । ३ । १२०) । सन्धिवेलायां भवं सान्धिवेलं । सन्धिवेलेत्यण् (पा०४ । ३ । १६) । चन्द्रः शिवस्य भस्माहर णेऽधिकारी अत एव दिशा दाहं कृत्वा भस्मार्पितवान् इति केचित् ॥१२॥

प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्वया
कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः ।
निःशेषद्युतिमण्डलव्ययवशाद्दीपत्रभैरेष वा
शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ १३ ॥

प्रागिति । प्राक् सर्गादौ अगाधजगतीशिल्पेऽपि अपर्याप्तत्रैलो- क्यनिर्माणविषयेऽपि यस्त्वया समस्तः सकलः कोशो भाण्डागारम् स्वपः नाल्पायितः अल्पवदाचरितः किन्तु तावानेवाक्षयः स्थितः । आमुखेन्दु मुखचन्द्रमभिव्याप्य एतस्य वपुः सृजतः स्रष्टुः ब्रह्मणः स- म्बन्धी स त्वियान् समस्तः कोशः शोषं समाप्तिं अगात् प्राप क्षपितः । यतश्चरणप्रभृतिमुखपर्यन्तावयवनिर्माणार्थमेव पूर्णो न तु केशनिर्मा

यात इति तस्य णत्व (पा० ८ । २ । ५०) । छायमायेति । विभाषा-सनेति षत्वद्वत्व (पा० २ । ४ । २६) ॥ ९४ ॥

आस्ते दामोदरीयामियमुदरदरीं यावलम्ब्य त्रिलोकी सम्मातुं शक्तिमन्ति प्रथिमभरवशादत्र नैतद्यशांसि । तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्मच्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ ९५ ॥

आस्त इति । या इयं त्रिलोकी लोकत्रयी दामोदरीयां उदरदरीं श्रीविष्णोर्जठरकन्दरामवलम्ब्याश्रित्यास्ते अत्रास्यां दामोदरोदरस्थितायां त्रिलोक्यां प्रथिमभरवशात् महत्त्वबाहुल्यादतिस्मात् सुखेन स्थातुं न शक्नुवन्ति असमर्थानि सन्ति तान्यतिप्रवृद्धानि द्विपदशनैः सनाभीनि सदृशानि अतिगौराणि एतस्य यशांसि तामेतां विष्णूदरदरीस्थितां तत्सहितां त्रिलोकीं पूरयित्वावशिष्टानि तामुदरदरीं तत्स्थां त्रिलोकीं च परिपूर्णावशिष्टानि वा पाण्डुपद्मच्छद्मापन्नानि नाभीसमुत्पन्नधवलकमलव्याजमापन्नानि तदाकाराणि सन्ति मधुध्वंसिनो विष्णोर्नाभीरूपेण पथा मार्गेण निरगुरिव निर्जग्मुरिव सङ्कटत्वासहनभिया बहिर्निर्गतानीव श्रीविष्णोर्नाभौ धवलकमलमन्यथोत्प्रेक्षितं पाण्डुपद्मं न किन्त्विदं यशांसि । अथवा करिदन्तधवलतुल्यान्यतिभूयांसि चास्य यशांसीति भावः । दामोदरीयां । वृद्धाच्छ (पा० ४ । २ । ११४) । प्रथिमा । पृथ्वादिभ्य इमनिच । (पा० ५ । १ । १२२) । नाभीपथेन । ऋगादिना समासान्त (पा० ५ । ४ । ७४) ॥ ९५ ॥

अस्यासिर्भुजगः स्वकोशसुषिरात्कृष्टः स्फुरत्कृत्तिमान् कम्पोन्मीलदरालनीलवलनस्तेषां भियेऽभूद्भुजां । सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधी वीरुधः पर्वास्यं विनिवेश्य जाङ्गुलिकता यैर्नाम नालम्भिता ॥ ९६ ॥

प्रसेति । प्रसरितैव भुजगस्तेषां भूभुजां राज्ञां भिये भवतीति शे
ष । किंभूतः । स्वकोश एव चर्ममयं पिधानं तदेव सुषिरं वल्मीकविव
रं तस्मादाकृष्टः बहिष्कृतः सद्यो धृतश्च तथा स्फुरन् प्रकाशमानः उ-
त्तमलोहजातिविशेषत्वात् कालिमा श्यामत्वं यस्य । सर्पोऽपि सद्यो धृ
तत्वात् स्फुरत्कालिमा । तथा कम्पेन तत्र हस्तान्दोलनेन कृत्वा उ-
न्मीलन्त्यः प्रकटीभूता कराला वक्रा लीला येषु तादृशानि वलनानि ग-
तिविशेषा यस्य । सर्पोऽपि वक्रगतिर्भवति । तेषां केषां । यैः सङ्गरे-
षु निजाङ्गुलीभव्याः स्वीयाङ्गुलीरूपाया महासिद्धौषध्या वीरुधः स्पर्श-
मात्रेण विपन्न्याः वल्ल्याः पत्रं अन्यिवाङ्गुल्यग्रपत्रं मन्दिद्वयश्च आस्ये मु
खे विनिवेश्य जाङ्गुलिकता विषवैद्यता गारुडिकता नालम्बिता नाम प्र
सिद्धौ । सर्पोऽपि येन स्वमुखे सिद्धौषधीपत्रं न निक्षिप्यते तमेव य-
था मारयति तथा एतदीयः खड्गोऽपि ये शस्त्राणि न त्यजन्ति दैन्याच्च
मुखे अङ्गुलीपत्रं न धारयन्ति तानेव हन्ति नान्यान् विनीताञ्छरणाग-
तांश्च । विषवैद्यो जाङ्गुलिक इत्यमरः ॥ ८६ ॥

यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रता
मस्मिन्नेव बिभर्त्ति यश्च किरति क्रूरध्वनिं नि
ष्ठुरः । दोषं तस्य तथाविधस्य भजतश्चापस्य
गृह्णन् गुणं विख्यातः स्फुटमेक एष नृपतिः
सीमा गुणग्राहिणां ॥ ८७ ॥

य इति । अरिभटश्रेणीषु शूरतरवैरिसङ्घेषु विषये युधि यः पृष्ठं द
र्शयति पराङ्मुखः पलायते अथ च य प्रत्याकृष्यते तस्य स्वभावात् पृ
ष्ठ दर्शयति । यः अस्मिन् स्वस्वामिन्येव नृपे वक्रतामनृजुत्वं स्वाश्रय
एव कृतघ्नत्व बिभर्ति । अथ चान्यस्यैतादृग्बलाभावात् अस्मिन्नेव व-
क्रतां बिभर्ति मान्येन न स्वीकर्त्तुं शक्यत इत्यर्थः । तथा यो निष्ठुरो
निर्दयो दाक्षिण्यरहितः सन् क्रूरध्वनिं अनेन सहाप्रियभाषणं किरति ।
अथ च परिवृतादरेणाजन्म क्रूर वैरिणां भयावह शब्दं किरति विप-
ति । दोषं दूषणं अथ च चापं भजतः तथाविधस्य तस्य चापस्य तथा

विपक्षान्यस्य वा कस्यचिदुर्वं श्रुतशौर्यादिकं गृह्णन् वर्णयन् । अथ च सौवीप्रादिशां धनुर्द्धरःया सीमा पर्य्यन्तावधिः स्फुट विख्यात प्रसिद्ध एक एव राजा । एवंविधो धनुर्द्धरः सज्जनश्च कोऽपि नास्तीत्यर्थः । धनुःपृष्ठदर्शनेनैतस्य पलायनाभावः सूचितः ॥ ८७ ॥

अस्यारिप्रकरः शरश्च नृपतेः सङ्ख्ये पतन्तावुभौ सीत्कारञ्च न सम्मुखौ रचयतः कम्पञ्च न प्राप्नुतः । सद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्त्ति यन्मुक्तयोरेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतं ॥ ९८ ॥

अस्येति । अस्य नृपतेरुभौ सङ्ख्ये सङ्ग्रामे क्रमेण सम्मुखौ एतत्सम्मुख वैरिसम्मुखञ्च पतन्तौ सन्तौ सीत्कारं दुःखाभिव्यञ्जकं दन्तमध्यनिर्गतं पक्षवातजनितञ्च ध्वनिविशेष यश्च रचयतः कुरुतः यश्च मरणभीतिजनितं दुर्निर्गतत्वजनितञ्च कम्पं न प्राप्नुतः । उभौ कौ । अरिप्रकरः वैरिसङ्घः शरश्च एतौ द्वौ । तथा मुक्तयोः प्राप्तमोक्षधनुश्च्युतयोरुभयोर्यत्पुनर्निवृत्तिः कम्म प्रत्यागमनञ्च न जागर्त्ति भवति तदसर्वं युक्तमुचितमेव । द्वयोरपि तुल्यधर्मत्वात् । तर्हि विलक्षणं किमित्याशङ्कायामाह । तत्र तयोर्द्वयोर्मध्ये एको वैरिसङ्घः मित्रं सुहृदमथ च सूर्य्यं भिनत्ति । अपरश्च शरः अमित्रं सूर्य्यव्यतिरिक्तमथ च वैरिणं भिनत्ति द्विधा करोतीत्यद्भुतं आश्चर्यं । तुल्यकर्म्मणोरतुल्यकर्म्मारम्भकत्वस्य विरुद्धत्वादित्यर्थः । चावन्योन्यसमुच्चये । दुःखभयराहित्येन रणे सम्मुखं पतति शत्रुसङ्घः । द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ इति वचनात् सूर्य्यमण्डलं भित्त्वा मुक्तिं प्राप्नुतः । अदृढमुष्टितया मुक्तबाणः कम्पसीत्कारौ रचयति । तदकरणाच्च दृढमुष्टितास्य सूचिता । दृढमुष्टित्वेन मुक्तो वैरिमध्ये न पुनरायाति वैरिणं हन्तीत्यर्थः । शूरतरोऽयं शत्रुमात्रं हतवानिति भावः । आपत्पक्षे सम्यक् मुखं पुङ्खमप वा यस्येति ॥ ८८ ॥

धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां र
वैर्वातं संयति खञ्जयन् जवजयैः स्तोतॄन् गु
णैर्मूकयन् । धर्माराधनसन्नियुक्तजगता राज्ञा
ऽमुनाधिष्ठितः सान्द्रोत्फालमिषाद्विगायति यदा
स्प्रष्टुं तुरङ्गोऽपि गां ॥ ९९ ॥

धूलीभिरिति । धर्माराधने सम्यङ्नियुक्तं प्रेरितं जगद् येनैवंभूतेनामुना राज्ञा अधिष्ठित आरूढस्तुरङ्गोऽपि धूलीभिः खुररजोभिः दिवं स्वर्गलोकं अन्धयन् अन्धं कुर्वन् चक्षुः प्रविष्टाद्रजस एव निमीलितनयनं कुर्वन्नित्यर्थः । तथा खुराणां रवैः समुच्छलनशब्दैः कृत्वा आशा दिशः प्रान्तनिवासिनो जनान् बधिरयन् बधिरतया शब्दान्तरग्रहणाशक्तान् कुर्वन् । तथा संयति सङ्ग्रामे जवस्य वासवेगस्य जयैः वायोः सकाशादतिवेगतया वातं खञ्जयन् पङ्गुं कुर्वन् । तथा गुणैर्हेतुभिः स्तोतॄन् अश्वजपकृपलक्षणादिवस्तुमत्कारिणो जनान् मूकयन् गुणाधिक्यत्वेन सामस्त्येन स्तोतुमसमर्थान्मूकानिव कुर्वन् । एवंभूतः सन्ननन्तरं सान्द्राणां निरन्तराणामुत्फालानां चतुर्भिश्चरणैरुत्पतनानां मिषात् पदैकेनापि चरणेन गां भुवमथच धेनुं स्प्रष्टुं तस्याः स्पर्शनं कर्तुं विगायति विशेषेण जुगुप्सते । धार्मिको राजा निषिद्धमाचरतः स्वाधीनान् पापिनो दण्डयति । अहं तु त्वदधिष्ठितः पदा गोस्पर्शलक्षणं पापं कुर्वन् दण्ड्यः स्यामिति बुद्ध्या पदा न स्पृशति चेत्यर्थः । धार्मिको जनमात्रमर्थमेवेत्यर्थः । अन्धयन्नित्यादौ तत्करोतीति णिजन्ताच्छतृ ॥९९॥

एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां
कष्टं द्रष्टैव नाभूद्भुवि समरसमालोकिलोका
स्पदेऽपि । श्वैरस्वैरवर्गैः कृतखुरखुरलीमक्षुवि
क्षुद्यमानक्ष्मापृष्ठोत्तिष्ठदन्धङ्करणरणधुरारेणुधा
रान्धकारात् ॥ १०० ॥

एतेनेति । समरसमालोकिनो ये लोकास्तेषामास्पदे स्थानभूतायामपि भुवि । अथवा समरसमालोकिलोकानां देवानामास्पदे गगने वियति । एतेन राज्ञा उत्कृत्तकण्ठाः छिन्नग्रीवाः कबन्धरूपाः प्रतिसुभटाः रिपुवीरास्त एव नटा नर्तकास्तैरारब्धानां नाट्याद्भुतानां नृत्ताश्चर्याणां दृष्टा नाभूदेव कष्टमेतत् दुःखमेतत् । तत्र हेतुः । अश्वैरवेगैः शीघ्रजवैरश्वैः कृता खुरैः कृत्वा खुरली अभ्यासभूमिः पुरः पुरः न्यासो वा तया नंतु मनोज्ञं शीघ्रं वा विशेषेण क्षुद्यमानं चूर्णीभवत् रमापृष्ठं भूतलं तस्मादुत्तिष्ठन् उत्पतन् अनल्पमनर्थं करोति अन्धङ्करण एवंभूतः रणधुरारेणुः रणप्रारम्भ एव समुत्पन्नो रेणुस्तस्य धाराः प्रवाहास्तज्जनितादन्धकारात् । रणविलोकनार्थमागतैरपि मानवैर्देवैरपि अश्वखुरोत्थितरजःपूरितनेत्रैः कबन्धनृत्यं नालोकीत्यर्थः । मन्दस्वच्छन्दयोः स्वैरं इति मेदिनी । एतत्कृत्तोत्तमाङ्गेति पाठः साधीयान् । दृष्टा । दृष् । रणधुरा । ऋगादिनाऽप् । (पा० ५ । ४ । ७४) ॥ १०० ॥

उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर
क्रोडक्रीडद्द्विजालीगरुदुदितमरुत्स्फालवाचाल
वीचिः । एतनाखानि शाखानिवहनवहरित्पर्ण
पूर्णद्रुमालीव्यालीढोपान्तशान्तव्यथपथिकदृशां
दत्तरागस्तडागः ॥ १०१ ॥

उन्मीलदिति । एतेन राज्ञा एतादृशस्तडागः अखानि । किंभूतः । उन्मीलन्ती विकसन्ती लीला विलासो येषां तानि नीलोत्पलानि तेषां दलानि पत्राणि तेषां दलनं विकासनं तदुद्भवेनामोदेन परिमलेन मेदस्वी पुष्टः बहुलपरिमलः पूरः प्रवाहस्तस्य क्रोडे उत्सङ्गे क्रीडन्ती द्विजाली हंसादिपङ्क्तिस्तस्या गरुद्भ्यः पक्षेभ्य उदित उत्पन्नो मरुद्वायुः तस्य स्फालः सवेगगमन सङ्घट्टो वा तेन वाचालाः शब्दायमानाः वीचयो यस्य । तथा शाखानिवहैः नवहरित्पर्णैर्नूतनश्यामपर्णैश्च पूर्णाद्रुमाल्यः वृक्षपङ्क्तयः ताभिर्व्यालीढः व्याप्तः उपान्तस्तीरप्रदेशस्तेन शान्ता व्यथा ग्रीष्मोष्मपीडा यासां तासां पथिकदृशां ग्रीष्मोष्मपीडा

येषां पथिकानां वा दृशः तासां दत्तः रागः सन्तोषो येन । अस्य तडाग स्यातिरमणीयत्वं सुखजनकत्वं धर्म्य च धार्म्मिकत्वं सूचितं ॥ १०१ ॥

वृद्धो वार्द्धिरसौ तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं
हंसालीपलितेन यष्टिकलितस्तावद्वयोवंहिमा ।
बिभ्रच्चन्द्रिकया च कं विकचया योऽग्रस्फुरत्स
द्गतं स्थाने स्नानविधायिधार्म्मिकशिरोनत्यापि
नित्यादृतः ॥ १०२ ॥

वृद्ध इति । असौ अनेन निर्मितस्तडागः वृद्धो महान् वार्द्धिः स-मुद्रः । समुद्रापेक्षयापि महानित्यर्थः । अथवा ऽसौ वारि धीयतेऽस्मिन् वार्द्धिर्वारिस्थानं तडाग एव वृद्धोऽतिप्रवयाः । किम्भूतः । तरङ्गैः कृत्वा वलिभं वलियुक्तं । तरङ्गा एव वार्द्धकसङ्कुचितस्थूलशरीरावयवत्रिवलिस्थाने जाता वलीत्यर्थः । तादृशतरङ्गरूपाभिर्वलिभिर्भाति इति वा । हंसाली पलितेन हंसपङ्क्तिरूपेण जराजनितश्वैत्येन पाण्डुरं धवलं प्रवाहरूपं वपुः बिभ्रत् तथा यष्ट्या मध्यनिक्षिप्तकीर्तिस्तम्भरूपया कलितो ज्ञात परिमाणोऽलङ्कृत इत्यर्थः । अथ च स्खलच्छरीरधारणार्थं दण्डेन युक्तो धृतशरीर इत्यर्थः । तथा तावतामतिबहूनां वयसां पक्षिणां बंहिमा बाहुल्यं यत्र । अथ च तावतः शतसमीपवर्त्तिनो वयसो वार्द्धकस्य बंहिमा यस्य । तथा विकचयाऽतिप्रकाशमानया चन्द्रिकया योग्यं समुचितं स्फुरत् प्रकाशमानं सद्गतं नैव यस्य । ज्योत्स्नावन्निर्म्मलं । अथ च स-मुद्रस्याऽदेतज्जातं ज्योत्स्नानिभमुचितं कं जलं बिभ्रत् । अथ च विगतके-शया चन्द्रिकया खालित्येन चान्द्रीति कान्यकुब्जभाषायां तया उचितं स्फुरन्नेव कं शिरो बिभ्रत् । यद्वा केशरहितेन खालित्येनोपलक्षितं । तथा योग्य वार्द्धकान्वितं स्फुरत् प्रकटं सद्गतं सम्यग्गतं कम्पनं यस्य शि-रस्तत् । तथा स्नानविधायिभिर्धार्म्मिकैः शिरोनत्यापि यत् नित्या-दृतः सत् स्थाने उचितं । धार्म्मिकैः स्नानादौ तीर्थं नमस्क्रियते वा-र्द्धरपि ।-समुद्रस्य पर्वण्येव स्पर्शयोग्यत्वादेतस्य सर्वदैन्याधिक्यं समु द्रात् । वलिभमिति मत्वर्थे तुन्दिवलीति भः । (पा० ५ । २ । १३९) ।

द्वितीयाव्याख्याने पचाद्यच् (पा० ३ । १ । १३४) । बंहिमेति । बहुलस्य भावः । पृथ्वादिभ्य इमनिचि (पा० ५ । १ । १२२ । प्रियस्थिरेति बंहिरादेशः (पा० ६ । ४ । १५७) । धार्मिकः । धर्मं चरतीति ठक् (पा० ४ । ४ । ४१) ॥ १०२ ॥

तस्मिन्नेतेन यूना सह विहर पयःकेलिवेलासु
बाले नालेनास्तु त्वदक्षिप्रतिफलनमिदा तत्र
नीलोत्पलानां । तत्पाथो देवतानां विशतु तव
तनुच्छायमेवाधिकारे तत्फुल्लाम्भोजराज्ये भवतु
च भवदीयाननस्याभिषेकः ॥ १०३ ॥

तस्मिन्निति । हे बाले तस्मिन् तडागे त्वं एतेन यूना सह विहर क्रीड । तथा तत्र तडागे पयःकेलिवेलासु जलक्रीडावसरेषु ग्रीष्मर्तौ वा तत्रैव नालस्य दृश्यत्वात् । प्रतिबिम्बाभिप्रायं बहुवचनं । नीलोत्पलानां त्वदक्षिप्रतिफलनात् नेत्रप्रतिबिम्बात् सकाशाद्भिदा भेदः नालेन कमलदण्डेनास्तु । अतिसादृश्यादिदं वा नीलोत्पलमिदं वेति सन्देहे सनालं यत् तन्नीलोत्पलमनालन्तु त्वन्नेत्रमिति नालमेव निर्णायकं भवत्वित्यर्थः । तथा तस्य पाथो जलं तस्य देवतानां अधिकारे आधिपत्ये वा तव तनुच्छायं त्वदीयशरीरप्रतिबिम्बमेव विशतु । तज्जलदेवतास्थाने त्वच्छरीरप्रतिबिम्बमेव भवत्वित्यर्थः । तथा तस्य फुल्लानां विकसितानां अम्भोजानां राज्ये खण्डे अथ वाधिपत्ये भवदीयाननस्य त्वदीयमुखकमलस्य च जलक्रीडावशात् अभिषेकोऽथ च पट्टाभिषेकः भवतु । नीलोत्पलजलदेवताफुल्लकमलापेक्षया भैमीनेत्रशरीराननमधिकमिति सूचितं । तनुच्छायं विभाषा सेनेति षण्डत्वं (पा० २ । ४ २५) ॥ १०३ ॥

एतत्कीर्त्तिविवर्त्तधौतनिखिलत्रैलोक्यनिर्वासितै
र्विश्रान्तिः कलिता कथासु जगतां श्यामैः सम
घैरपि । जज्ञे कीर्त्तिमयादहो भयभरैरस्मादकी

तैः पुनः सा यन्नास्य कथापथेऽपि मलिनच्छा
या बबन्ध स्थितिं ॥ १०४ ॥

एतदिति । जगतां स्थावरजङ्गमात्मकानां भुवनानां मध्यान्निधिभि समग्रैरपि श्यामैः कृष्णैः कज्जलादिपदार्थैः गुणैर्वा कथासु वार्तास्वेव विश्रान्तिः कलिता आश्रयोऽङ्गीकृतः । किम्भूतैः श्यामैः । एतस्य कीर्तियशसः विवर्त्तेन परिणामेन विशेषेण वर्त्तनं स्थितिर्वा तेन धौता-ज्ज्वलीकृतान्निखिलात् सकलात् चन्द्रादिसहितात् त्रैलोक्यात् सकाशा न्निर्वासितैर्निष्कासितैः । कीर्त्यां लोकत्रयस्य श्वेतीकरणात् तत्र श्यामगु-णानां साम्प्रतमदर्शनात् पूर्वं श्यामानि वस्तून्यभूवन्निति वार्त्तामात्र-शेषाणि श्यामानि जातानि सर्वथा न सन्तीत्यर्थः । तथा कीर्तिमया त् कीर्तिप्रचुरादस्माद्राज्ञः सकाशात् अकीर्त्तेः पुनर्भयभरैर्भीतिबाहुल्यै र्जज्ञे जात अहो आश्चर्यं । कीर्त्तेरकीर्त्तेश्च विरोधात् कीर्तिरूपादस्मा दकीर्त्तेः भयं युक्त इत्यर्थः । एतत् कुतः । यद्यस्मान्मलिनच्छायाऽति-कृष्णा साऽपकीर्तिः अस्य कथापथेऽपि स्थितिमाश्रयं न बबन्ध नाक-रोत् । एतत्कथाप्रारम्भे अपकीर्तिलेशस्याप्यभावात् कीर्तिरेव वर्ण्यत इ त्यर्थः । यत्र यस्माद्बिभेति स तदीयकथाप्रारम्भ एव मलिनो भूत्वाऽ न्यत्रैव गच्छति । अविद्यमानमपि शशविषाणादि वचनगोचरो भवति अकीर्तिस्तु वचनगोचरोऽपि नाभूदित्याश्चर्यं । अविद्यमानाया अप्य-कीर्त्तेर्भयोत्पादनादतिचित्रं । जगतामिति पाठे वृद्धानां कथास्विति व्याख्येयं । जज्ञे । भावे लकारः ॥ १०४ ॥

अथावदद्भीमसुतेङ्गितान् सखी जनैरकीर्त्तिर्यदि
वास्य नेष्यते । मयापि सा तत् खलु नेष्यते
परं सभाश्रवःपूरतमालवल्लितां ॥ १०५ ॥

अथेति । अथ सखी भीमसुतायाः इङ्गितात् अननुरागसूचकात् भ्रू-विलासादिचेष्टितात् सरस्वतीमवदत् । किं । हे यादि जनैरस्य अकीर्त्तिं यदि नेष्यते वा नाभिलष्यत एव तत् तर्हि मयापि साऽप्यकीर्त्तिः स

लु लिखितं नेष्यत इति यद्यपि तुल्यं तथापि परं कोऽपि परः कश्चिद्विशेषोऽस्ति । सभायाः सभालोकस्य अत्र पूरतमालवल्लितां कर्णाभरणतमालवल्लित्वं नेष्यते प्रापयिष्यते । जनानामसम्मता श्रवणविषयादिवदसतीमप्यस्याकीर्त्तिमेव सर्वां सभा श्रावयिष्यामि इत्यर्थः । यास्या स्तद्दर्शननिवारणं चकारेति भावः । अकीर्त्तेर्नीलत्वात्तमालवल्लित्वं । इष्यते । इषेः कर्मणि लट् । नेष्यते । णीञः प्रधानकर्मणि लृट् ॥१०५॥

अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्त्तयः । गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरान्मूकानां प्रकरेण कूर्म्मरमणीदुग्धोदधे रोधसि ॥ १०६ ॥

अकीर्त्तिमेव वर्णयति । अस्येति । हे वाणि मूकानां प्रकरेण समूहेन अस्य क्षोणिपतेरकीर्त्तय किल प्रसिद्ध निश्चित या कूर्म्मरमणी कच्छपिका तस्या दुग्धादुत्पन्नस्योदधेः रोधसि तीरे गीयन्ते । किंभूताः । परार्द्धात् गणनावधेः सकाशात् परया अधिकया सङ्ख्या लक्षीकृताः गणिताः परार्द्धादप्यधिकाः । तथा प्रज्ञाचक्षुर्भिर्जात्यन्धैः अवेक्ष्यमाणं दृश्यमानं तिमिरं तत्प्रख्यास्तत्तुल्याः अतिश्यामा । किंभूतेन प्रकरेण । अष्टमं स्वरं निषादादिसप्तस्वरातिरिक्तं कलयताऽङ्गीकुर्व्वता । तथा वन्ध्योदरात् जातेन । एवमस्याकीर्त्तयः स्थिताः सभायां श्राविताः । परार्द्धाधिका सङ्ख्याऽन्धस्य दर्शनशक्ति स्तिमिरस्य च चाक्षुषरूपस्य स्वरस्याष्टमत्व वन्ध्योदराज्जन्म कच्छपिकाया दुग्ध एतानि यथा सर्व्वथा न सन्ति तथैतद्विशेषणयुक्ता अस्याकीर्त्तयोऽपि न सन्तीति पर्य्यवसानवृत्त्या वर्णनैव कृता । उपहासार्थस्यसङ्कृतोक्तिः । एषा सामस्त्येन कीर्त्तयः पूर्व्वोक्तविशेषणविशिष्टा अस्य समस्ताः कीर्त्तयो गीयन्ते किल पर्य्यवसानवृत्त्याऽस्य कीर्त्तयो न सन्त्येवेति निन्दैवास्य कृतेति वा । कच्छपो च दर्शनेनैवापत्यानि पालयति न दुग्धेनेति प्रसिद्धिः । प्रज्ञाचक्षुषो

योगिनो ज्योतिर्विलोकननिष्ठास्तिमिरं न पश्यन्ति वा । तिमिरप्रख्याः तिमिरवत्प्रख्यायन्ते । मूलविभुजादित्वात् कः (पा०३।२।५ वा०२१) ॥१०६॥

तदङ्गरैः सस्मितविस्मिताननां निपीय तामीक्षणभङ्गिभिः सभाम् । इहास्य हास्यं किमभून्न वेति तं विदर्भजा भूपमपि न्यभालयत् ॥१०७॥

तदङ्गरैरिति । विदर्भजा इहास्यां सभायां एतदीयवचनविषये वाऽस्य वर्णितस्य नृपस्य हास्यं किमभूत् किंवा नाभूत् इति कारणात् स्वभावात् तमपि भूपं न्यभालयत् औदासीन्येन सम्मुखदृष्ट्या ददर्श न त्वनुरागादित्यर्थः । किंकृत्वा । अनुरागाभावेऽपि हास्यरसकलाभिरीक्षणभङ्गिभिः अवलोकनप्रकारविशेषैः तां सभां निपीय सादरमवलोक्य । किंभूतां सभां तस्याः सख्याः विष्णुपक्षमेभिर्पयोग्ये पर्यवसितैः पूर्वोक्तैरङ्गरैः कृत्वा सस्मितानि सविस्मितानि साश्चर्याणि आननानि यस्यास्तां । इह नृपेऽस्य हास्यं जातं न वेति वा । स्मितसहितां विगतस्मितां वस्यं विरुद्धं । विरोधाभासः ॥ १०७ ॥

नलान्यवीक्षां विदधे दमस्वसुः कनीनिकागः खलु नीलिमालयः । चकार सेवां शुचिरक्तताचितां मिलन्नपाङ्गः सविधे तु नैषधे ॥ १०८ ॥

नलेति । पतिव्रताया भैम्या नलान्यावलोकनमनुचितमित्याशङ्कां परिहरन्नुत्तरसर्गे वक्ष्यमाणस्य नलस्य प्रस्तावनां करोति । दमस्वसुः कनीनिका नेत्रतारा नलादन्यस्य नृपस्य वीक्षामवलोकनरूपामागः अपराधं विदधे चक्रे । किंभूता । खलु यस्मान्नीलिम्नः कालिम्नः आलयः स्थानं । मलिनो हि निषिद्धमाचरति । अपाङ्गस्तु कटाक्षः पुनः सविधे द्वितीयपङ्क्तौ विष्णुरेभ्योऽनन्तरमुपविष्टे नैषधे सत्यनले मिलन् सम्बद्धः सन् शुचिरक्ततोचितां धवलरक्तत्वयोग्यां सेवां चकार । धवलरक्तत्वगुणयुक्तोऽपाङ्गस्तु नल एव सलग्नोऽभूदित्यर्थः । स्वयं च शुचिः पापभीरुः अनुरक्तस्य च स्वभावेन उचितां स्वामिभक्तोचितां इति वा । स्वामिभक्तो हि स्वामिनमेव सेवते न त्वन्यमि

त्यर्थं । कटाक्षेणान्यावलोकने दोषः । ऋजुदृष्ट्या त्वन्यविलोकने दोषो नेति न पातिव्रत्यक्षतिः कापि । नलमेव कटाक्षैर्विलोकयति स्मेति भावः । इन्द्रादिषु चतुर्षु अलीकनलेषु सत्स्वपि सत्यनलत्वेऽज्ञातेऽपि तत्रैव सत्यनले एवानुरागबाहुल्याददृष्टवशात् कटाक्षनिरीक्षणं युक्तं ॥१०८॥

दृशा नलस्य श्रुतिचुम्बिनेपुणा करेऽपि चक्रच्छलनम्रकार्मुकः । स्मरः पराङ्गैरनुकल्प्य धन्विनतां जनीमनङ्गः स्वयमार्दयत्ततः ॥ १०९ ॥

इदानीं श्लोकचतुष्टयेन परस्परानुरागं वर्णयति । दृशेति । ततो भैमीकटाक्षविलोकनानन्तरं स्वयमनङ्गोऽङ्गरहितः परस्य नलस्यैव दृगादिभिरङ्गैरवयवैर्धन्वितां धनुर्धरत्वं अनुकल्प्य आकर्णगामिना बाणकल्पेन चक्षुषा जनीं भैमीमार्दयदपीडयत् । किंभूतः स्मरः । करे नलस्यैव हस्ते रेखामयराज्यादिलक्षणरूपचक्रच्छलेन नम्रं चक्राकार कार्मुकं यस्य सः । भैम्या कटाक्षैर्नले वीक्षिते सति नलेन कटाक्षैर्वीक्षिता सा सती कामातुरा जातेति भाव. । मुख्य कल्पाभावे चानुकल्पोऽप्यङ्गीक्रियते । आर्दयत् । अर्द हिंसायां ण्यन्ताल्लङ् । आर्दिददिति पाठे लुङ् ॥ १०९ ॥

उत्कण्टका विलसदुज्ज्वलपत्रराजिरामोदभागनपरागतराऽतिगौरी । रुद्रक्रुधस्तदरिकामधिया नले सा वासार्थितामधृत काञ्चनकेतकीव ११०॥

उत्कण्टकेति । सा भैमी रुद्रक्रुध. रुद्रकृतशापपरित्यागसमुद्भवात्कोपाद्धेतो. तस्य रुद्रस्यारिः कामः तस्य बुद्ध्याऽयं काम एवेति बुद्ध्या नले विषये वासस्य स्वयम्वरेण स्थितेरर्थितां अभिलाषुकत्वं अधृत दधार । नले साभिलाषा जातेति भाव । स्वशत्रुसमाश्रयदानं युक्तमेव । केव । काञ्चनकेतकीव । किम्भूता सा केतकी च । उत्कण्टका उदितरोमाञ्चा ऊर्ध्वीभूतसूचीतुल्यशूकाग्रा च । तथा विलसन्ती शोभमाना नीलपीतादिभिर्वर्णैरुज्ज्वला प्रकाशमाना उज्ज्वलेन शृङ्गारेण वा प्रकाशमाना विलोकनादिशृङ्गारोपाया एवभूता वा कस्तूर्यादिरचिता कपोलवक्षोजादौ पत्रराजिः पत्रवल्ली पत्रपङ्क्तिर्यस्याः । शोभमानोज्ज्वलवर्णप-

त्रपङ्क्तिश्च । तथा घ्यामोद विलेपज सुरभिगन्धं छवीं या स्वाभाविक परिमलञ्च भजतीति भाक् । तथा अपगतोऽनुरागो यस्या एवंभूता न भवति अतितरा अनपरागतरा । नले अतितरामनुरागिणी । न विद्यते पराग पुष्परजो यस्यामेवंविधा न भवति नितरां अनपरागा अनपरागतरा अतितरा परागसहिता । तथाऽतितरां गौरवर्णा उभय्यपि । गौरी पार्वती अतिक्रान्ता वा भैमी । सुवर्णकेतकी यथा रुद्रकोपस्य वास· यसति तस्यार्पितां अभिलापुकत्व दधार तस्य स्थान बभूवेत्यर्थः । तथा भैम्यपि नलविषये नलवैरिकामयुक्ता नलमनुः काम एवेति नल सम्बन्धित्वेन मा पीडयतीति धिया रुद्रकोपस्यात्मनि यो वासस्तदर्पितां दधार। रुद्रकोपस्य स्थान जाता नितरा सकोपाजातेत्यर्थ । कामवास्य नलरयोक्त । नलेन कटाक्षवीक्षणे कृते सातितरां कामपीडिताजातेति भाव इति वा । गौरीमतिक्रान्तेति तत्पुरुषे । गोस्त्रियोरुपसर्जनस्येति (पा० १ । २ । ४८) । ह्रस्वत्वमाप्तेः अतिगौरिरिति स्यात् । तथापि कृद्विकारादक्तिन इति (कौ० प० ३३ । प० ३। पा० ४ । १ । ४५ । पा०) । ह्रस्वान्तादपि पक्षे ङीपि अतिगौरीति सङ्गच्छते ॥ ११० ॥

तन्नालीकनले चलेतरमनाः साम्यान्मनागप्यभूदप्यग्रे चतुरः स्थितान्न चतुरा पातुं दृशा नैपधान् । आनन्दाम्बुनिधौ निमज्य नितरां दूरङ्गता तत्तलालङ्कारीभवनाज्जनाय ददती पातालकन्याभ्रमं ॥ १११ ॥

तदिति । न अलीको नालीक स चासौ नलश्च नालीकनलः सत्यनल । स चासौ नालीकनलश्च तस्मिन्नालीकनलस्तस्मिन्नदृष्टवशघटितदुर्घटदर्शने सत्यनले चलेतरम् निश्चल मनोयस्याः सा । तत्रैवानुरक्ता सती सा भैमी अग्रे स्थितानपि चतुरश्चतु·सङ्ख्यकानलीकान् साम्यात् सत्यनलसाम्येन नलान् दृशा नयनव्यापारेण पातु कटाक्षैर्विलोकयितुं मनागल्पमपि चतुरा कुशला नाभूत् । किंभूता । आनन्दाम्बुनिधौ आनन्दरूपे समुद्रे निमज्य क्रीडित्वा नरांयलोकमानिवयला

पो भुघमङो (पा० ६ । ४ । १५) इति भूआदेश ॥ ९० ॥

पुष्पैरभ्यर्च्य गन्धादिभिरपि सुभगैश्चारुहंसेन मां चेन्निर्यान्तीं मन्त्रमूर्त्तिं जपति मयि मतिं न्यस्य मय्येव भक्तः । सम्प्राप्ते वत्सरान्ते शिरसि करमसौ यस्य कस्यापि धत्ते सोऽपि श्लोकानकाण्डे रचयति रुचिरान्कौतुकं दृश्यमस्याः ॥ ९१ ॥

पुष्पैरिति । य साधक चारुणा सुन्दरेण हंसेन निर्यान्तीं गच्छन्तीं मूर्त्तमानां हंसवाहनामित्यर्थ । मन्त्रमूर्त्तिं यन्त्रमध्यस्थितमन्त्रवर्णरूपेण परिणमदाकारां मन्त्रस्यान्तरशरीरां वा मां देवीं सुभगैरतिमनोहरैः सुकुमारैः सुगन्धिभिश्च पुष्पैः गन्धधूपादिभिः षोडशोपचारैरपि अभ्यर्च्य तथा मयि मतिं न्यस्य विषयान्तरादाकृष्य ध्यानयत्नेन स्थिरीकृत्य देवतान्तरपरिहारेण मय्येव विषये भक्तः सदनुरक्ततया मामेव सेवमान सन् चेद्यदि जपति तर्हि असौ जापकः वत्सरान्ते संवत्सरावसाने प्राप्ते जाते सति यस्य कस्यापि स्त्रीबालमूकादेरपि शिरसि करं धत्ते स्थापयति सोऽपि स्त्रीबालादिरप्यकाण्डेऽसमये ऽकस्माद्वा रुचिरान् रसभावगुणालङ्कारयुतान् दोषरहितान् श्लोकान्रचयति । यस्तु सिद्धमन्त्र सन् विविधान् श्लोकान्रचयति, किं वाच्यमित्यर्थ । एतदस्या कौतुकं दृश्यं, अनुभवेनायमस्याश्चमत्कारो द्रष्टव्य इत्यर्थ । एवं सम्पूज्य हंसवाहनादिध्यानपूर्वमेकाग्रेण मनसा चेज्जपसि तर्हि वत्सरमात्रेण सिद्धमन्त्र सन्नेवंविधं सामर्थ्यं लभत इति भाव ॥ ९१ ॥

गुणानामास्थानीं नृपतिलक नारीतिविदितां रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः । अवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं परीरम्भक्रीडाचरणशरणामन्वहमहम् ॥ ९२ ॥

गुणानामिति । हे नृपतिलक राजश्रेष्ठ नल अहं वैदर्भीं भैमीमयं च

वैदर्भीमञ्जसा रीति अल्पपदसमासमसमासं वा रचनाविशेष क्रमेण त धे वृत्ते त्वत्सम्बन्धिनि वात्रे विषय कवितु काव्यकरणे युक्तस्य श्रीहर्षादेव अधिकण्ठ अन्वह सदा परीरम्भस्यालिङ्गनस्य चुम्बनादिविलासस्य यदाचरण करण तदेव शरण जीवनापाया यस्या एवम्भूता प रीरम्भक्रीडया वा हेतुभूतया त्वच्चरणशरणमालिङ्गनप्रार्थनार्थं त्वच्चरणयो पतन्ती अथ च परीरम्भस्य अप लङ्कारस्य क्रीडया वक्रात्यादिविलासस्य त्रा सामस्त्येन यच्चरण ध्यान तदेव शरण यस्यामेवविधामधिक यथा तथातितरा रचयितु कर्तुं भवित्री भविष्यामि । किम्भूता । गुणाना सौन्दर्यपातिव्रत्यादीना अथ च श्लेषप्रसादादीना आस्पार्थी समासरूपा अवस्थितिभूता । तथा नारीति ख्याति विदिता । नारी चेत्यहि भैम्येव जातेति प्रसिद्धा । अथच रीतिषु पाञ्चाल्यादिषु विदिता तथा नेत्यरीतिविदिता तथाविधापि नेति नारीति विदिता तादृशी पाञ्चाल्यादिरीतिषु मध्येऽतिप्रसिद्धामिति यावत । तथा तवात्तहृदये रसन स्वीयसौभाग्येन नलविषयानुरागेण स्वस्मिन नलानुरागेण वा स्फीतामतिपुष्टा, अथ वात्त शाकमध्ये रसै शृङ्गारादिभि प रिपुष्टा एवम्भूता भैमी त्वत्कण्ठालिङ्गनपरा । त्वच्चरणशरणा त्वदेकचरणा प्रत्यहमह करिष्यामीति भाव । एतदपि वरदान । नारिति स म्बुधन्त पृथक्कृत्य राजश्रेष्ठ न पुरुषेति सम्बोध्य पातिव्रत्यादि रीत्या विदिता पाञ्चाल्यादिरीतिषु च विदितामिति वा ।

श्लेष प्रसाद समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोज कान्तिसमाधय ।

इति वैदर्भमार्गस्य प्राणा दशगुणा स्मृता इति काव्यालङ्कारिका । आस्पार्थी क्रोयमास्थामित्यमर । आतिष्ठत्यस्यामधिकरणे लु ट । टिड्ढाणञ् । नारीत्यत्र पदे द्रलोप (पा० ६ । ३ । १११) इति दीर्घः । कवितु । कवृ वर्णने, कवृङ् स्तुतावित्यस्य वा । अधिकण्ठ । समस्यर्थे अव्ययीभाव ॥ ८८ ॥

भगद्वरस्तोतुमंदुपहितस्पाठस्य कविनुर्भुञ्यात्
पुण्यैः श्लोकैस्त्वयि घनमुदेय जनमुदे । ततः

पुण्यश्लोकः क्षितिभुवनलोकस्य, भविता भवा
नाख्यातः सन् कलिकलुषहारी हरिरिव ॥ १३ ॥

वरान्तरमाह । भवदिति । मदुपहितकण्ठस्य मयाधिष्ठितकण्ठस्य भवता स्तुतस्य चरित्रस्य स्तोतुः कवितुः कवयितुर्वा सकाशात् त्वमपि विप ये पुण्यैश्चाहुभिरमलैश्च श्लोकैः पद्यैर्यशोभिश्च यत्र निविष्ट यथा तथा जातो मुदे हर्षाय उदेय उदेतव्यं । ततोऽनन्तरं तस्माद्वा हेतोर्भवान् क्षितिभुवनलोकस्य भूविष्टपजनस्य कलियुगसम्बन्धिकलुषहारी पातकहरणशील सन् हरिः श्रीविष्णुरिव पुण्यश्लोक इति आख्यातो भविता भविष्यति । यद्वा पुण्यश्लोकः सन् क्षितिभुवनलोकस्य कलिकलुषहारी हरिरिव भविता । पुण्यौ चारू निर्मलौ श्लोकौ पद्ययशसी यस्येति विग्रहः । पुण्यश्लोको नलो राजेति पुण्यश्लोकत्वं । कर्कोटकस्येत्यनेन कलिनाशित्वमुक्तं । उदेय । अचोयदिति (पा० ३।१।९७) यत् ॥ १३॥

देवी च ते च जगदुर्जगदुत्तमाङ्गरत्नाय ते क
थय कं वितराम कामम् । किञ्चिद्वया न हि
पतिव्रतया दुरापं अस्मास्तु यस्तव वत व्रत
लोपमिच्छुः ॥ १४ ॥

देवीति । देवी च ते च इन्द्रादयः भैमीं जगदुरित्यूचुः । इति किं । हे भैमि त्वं जगतां लोकत्रयाणामुत्तमाङ्गं शिरस्तस्य रत्नाय भूषणमणिभूताये अतिसौन्दर्ययुक्तायै ते तुभ्यं कं कामं वितराम ददाम अपि तु न कमपि । अस्मद्दानयोग्यं नास्तीत्यर्थः । हि यस्मात् यद्यपि पतिव्रतया त्वया किञ्चिदपि वस्तु दुरापं नास्ति किन्तु पातिव्रत्यात् सर्वमपि त्वया सुप्रापमेव तथापि यस्तव व्रतलोपं पातिव्रत्यभङ्गं इच्छुः अभिलषति त्वया सह रन्तुमिच्छेत् स भस्मैवास्तु । वत कष्टं, अनुचितकर्मा स इत्यर्थः । काम । अकर्तरि च कारके संज्ञायां (पा० ३।३। १९) इति कर्मणि घञ् । त्वया । सहयोगे षष्ठीनिषेधात् तृतीया । व्रतलोप । न लोकाव्ययनिष्ठेत्यादिना (पा०२।३।६९) षष्ठीनिषेधात् द्वितीया ॥ १४ ॥

कूटकायमपहाय नो वपुर्बिभ्रतस्त्वमसि वीक्ष्य विस्मिता । आमुमाकृतिमतो मनीषितां विद्यया हृदि तवाप्युदीयताम् ॥ ९५ ॥

वरान्तरमाह । कूटेति । हे भैमि त्वं नोऽस्मान् वीक्ष्य यतो विस्मितासि अतो मनीषितामाकृतिं आकारं स्वेच्छाशरीरं प्राप्तुं तवापि हृदि मनसि विद्यया नाम्न्या देहस्वीकारहेतुभूतया मन्त्रादिशक्त्या उदीयतां उत्पद्यताम् । अस्माकं हृदि यथोदितं तथा तवापीत्यपिशब्दार्थः । अपिशब्दात्कलस्यापीति केचित् । किम्भूतान्नः । कूटकायं स्वेच्छामात्रेण धृतं मायानलशरीरं अपहाय त्यक्त्वा पुनर्देवं निजं वपुर्बिभ्रतो धारयतः । अद्यापि अभूतवस्तुदर्शनात् सेवकादिः साश्चर्यो भवति तद्वस्तु तस्मै प्रयच्छति । उदीयतामिति । भावे लः ॥ ९५ ॥

इत्थं वितीर्य्य वरमम्बरमाश्रयत्सु तेषु क्षणादुदलसद्विपुलः प्रणादः । उत्तिष्ठतां परिजनालपनैर्नृपाणां स्वर्वासिवृन्दहतदुन्दुभिनादसान्द्रः ॥ ९६

इत्थमिति । इत्थं पूर्वोक्तप्रकारेण नलाय भैम्यै च वरं वितीर्य दत्त्वा देवीसहितेषु तेष्विन्द्रादिषु अम्बरं आश्रयत्सु स्वर्गम्प्रति गन्तुं उद्यतेषु प्रारब्धगगनगमनोद्योगेषु सत्सु क्षणात् क्षणमात्रेण उत्तिष्ठतां स्वं स्वं शिबिरं प्रति गन्तुं चलितानां नृपाणां परिजनालपनैः सेवकालापनैः अयमर्थ इत्यादि राज्ञामेव वा अश्वाद्यानयनार्थं परिजनान् प्रति भाषणैः कृत्वा, विपुलो दशदिग्व्यापी प्रणादः शब्दसमूहः उदलसत् उदित इत्यर्थः । कीदृशः । भैमीनलविवाहोत्सवदर्शनादागच्छत्स्वर्गनायकपर्यन्तानां स्वर्वासिवृन्दैर्देवसङ्घैर्हतानां दुन्दुभीनां नादैः सान्द्रो निबिडीभूतः । देवेषु निर्गतेषु राजानोऽप्युत्थितास्तेषां तत्सेवकानाञ्च शब्दाः कलकलम् जाताः । इदं च दिव्यवाद्यान्याहतानीत्यर्थः । वर । जानाभिप्रायेणोक्तम् । ता च तेष तत्सु । पुमान् स्त्रिया (पा० १ । २ । ६७) इत्येकशेषः । उदलसत् । लसतेर्लङ् ॥ ९६ ॥

न दोषं विद्वेषादपि निरवकाशं गुणमये वरेण प्राप्राक्षे न समरसमारम्भसदृशं । जगुः पुण्यश्लोकं प्रति नृपतयः किन्तु विदधुः स्वनिश्वासैर्भैमीहृदयमुदयन्निर्भरदयम् ॥ १७ ॥

नेति । प्रतिकूला नृपतयः पुण्यश्लोके विद्वेषाद्भैमीप्राप्तिजनितविशिष्टमत्सरादपि हेतोरसुन्दरशीलतादिकं दोषं न जगुर्जगदुः । यतो नले निरवकाशं असन्तं । यतः गुणमये सौन्दर्य्यशौर्य्यादिगुणबहुले पुण्यश्लोके वा, वैरिणापि सन्नेव दोषः प्रकाश्यते नत्वसन् । सुहृदान्तु सन्नपि दोषो गोप्यते । तथा च विद्वेषे सत्यपि गुणमयत्वात् दोषले शस्याभावनाऽप्यभावाद्दोष नोचुरित्यर्थः । तथा बलाद्भैमीहरणार्थं समरसमारम्भस्तस्य सदृशं तद्योग्यमधिक्षेपपरुषभाषणादिकमपि च नोचुः । यतः यमवरेण प्राप्राक्षे लब्धदिव्यास्त्रे वा, यतः स्वतः शूरे वरेण च नितरां दुर्द्धर्षे । तस्मादसामर्थ्यात् किञ्चिन्नोचुरित्यर्थः । किन्तु गत्यन्तररहिता सन्तो निजासामर्थ्यकृतात्मदयदनस्तथके स्वनिश्वासैः कवोष्णैर्निजमुखनासितैः कृत्वा भैमीहृदयं उदयन्ती निर्भरा प्रचुरा दया यस्य एवम्भूतं अतिसकृपं विदधुश्चक्रुः । अतिदीनांस्तान् दृष्ट्वा भैमी नितरां सकृपाऽभूदिति भावः । भैम्या हृदयभूतं प्राणरूपं नलं स्वनिश्वासैः सकृपं चक्रुरिति वा ॥ १७ ॥

भ्रूभृद्भिर्लम्भितासौ करुणरसनदीमूर्त्तिमद्देवता-त्वं तातेनाभ्यर्थ्य योग्याः सपदि निजसखीर्दापयामास तेभ्यः । वैदर्भ्यास्तेऽप्यलाभात् कृतगमनमनःप्राणवाञ्छां विजघ्नुः सख्याः सशिक्ष्य विद्यां सततधृतवयस्यानुकाराभिरामैः ॥ १८ ॥

भ्रूभृद्भिरिति । भ्रूभृद्भिः राजभिः करुणरसस्य शोकस्थायिभावस्य रसस्याम्भसः च जलस्य नदी तस्याः मूर्त्तिमत्या देवताया भावं लम्भिता

प्रापिता जलदेवतास्थाने स्थापिता, सन्निधापितैः करुणारसार्द्रीकृतचित्ता सती असौ भैमी सपदि समाद्याप्रापरैर्नितरां दुःखितास्तस्मादति-सुन्दरीमस्मदर्थमेनेभ्यो देहीत्यञ्जलियोजनेनार्थोत्तातमेवाभ्यर्थ्य सम्प्रा-र्थ्य निजसखीः सहचरीस्तातेन पित्रा तेभ्यो राजभ्यो दापयामास । तेभ्यः सखीर्दापयामासेत्यर्थः । ते राजानोऽपि वैदर्भ्या अलाभात् कृत गमने देहत्यागे विषये मनो यै. तेषां प्राणानां वाञ्छा मतीः सखीभिर्विजघ्नुः । भैमीसखीलाभात् प्रारब्धगमनात्प्राक् पुनर्न्य-वर्तयन्नित्यर्थः । किम्भूताभिः सखीभिः । यतः भैम्याः सकाशात् इन्द्रा दिदेवेभ्यः वरप्राप्त्याद्युच्छ्रिकशरीरनिर्म्माणादिरूपां विद्यां संशिल्प सम्य गभ्यस्य सततं प्रयत्नं घृतो वयस्याया भैम्या अनुकारो याभिः तुल्यशरीर कलाकौशलादिभिरित्यर्थः । ततश्च सर्व्वेऽपि भैमीप्राप्तिबुद्ध्या स्वप्राणान् रक्षितवन्त इति भावः । लभिर्द्विकर्म्मा । सख्याः । आख्यातोपयोगे (पा० १।४।२९) इत्यपादानत्व ॥ ९८ ॥

अहह सह मघोना श्रीप्रतिष्ठासमाने निलयमभि नलेऽथ स्वप्रतिष्ठासमाने । अपतदमरभर्तुर्मूर्तिवद्धेव कीर्त्तिर्गलदलिमधुवाष्पा पुष्पवृष्टिर्नभस्तः ॥ ९९ ॥

अहहेति । अथ राजस्य सखीदानानन्तरं मघोना इन्द्रेण सह श्रीः सम्पत् प्रतिष्ठा माहात्म्यं तास्यां समाने, स्व निज निलयं स्थानं अभि लक्षीकृत्य प्रतिष्ठासमाने जिगमिषति नले नभस्तो गगनादस्मकाशात्पा रिजातादिदेववृक्षाणां पुष्पवृष्टिरपतत् । अहहेति हर्षे । भैम्या नले वृते दृष्टैर्देवैर्नलस्योपरि पुष्पवृष्टिः कृतेत्यर्थः । उत्प्रेक्षते । बद्धा धृता मूर्तिर्वपुः या सा मूर्तिबद्धा यद्वा मूर्त्यां बद्धा युता साकारा, गलन्तः पतन्तोऽलयो भ्रमरा यत्रैवंविध मध्वेव वाष्पो यस्याः । अधःपतनजनि-तदुःखसूचकस्त्रवदश्रुबिन्दवो यस्याः । एवम्भूतामरभर्तुः इन्द्रस्य कीर्त्तिरिति वा । पुष्पाणां शुभ्रत्वात् कीर्त्तित्व । भैम्या चाप्रतत्वादि-न्द्रस्य कीर्त्तिर्गलितेति युक्तं । स्वर्गादधःपाते दुःखाश्रु च युक्तं ।

चोत्थाम्बास्तु सकज्जल भवति । मकरन्दो बाष्पस्थाने । सद्गुणगतो भ्रमर कज्जलस्थाने । समानशब्दस्य समासान्तर्गतस्यासाक्षात् तुल्यार्थयोगाभावान्सधोनेति तृतीयार्थमनुप्रासार्थं च साक्षात् सहशब्द समयोजि । प्रतिज्ञासमान इति । समयप्रेति (पा० १ । ३ । २२) तङो विधानात्, पूर्ववत् सम (पा० १ । ३ । ६२) इति तङ् ॥ ९९ ॥

स्वस्यामरैर्नृपतिमंशममु त्यजाद्भिरशच्छिदा कद नमेव तदाध्यगामि । उत्का स्म पश्यति निवृत्य निवृत्य यान्ती वाग्देवतापि निजविभ्रम धाम भैमीम् ॥ १०० ॥

स्वस्येति । तदा स्वर्गगमनसमये अमु नृपति नलं त्यजद्भिरमरैः अंशस्य छिदा कर्त्तनेन यत्कदन दुःखं तदेवाध्यगामि प्रापि । यतः स्वस्येन्द्रादेरंश । लोकपालांशत्वाद्राज्ञ । स्वहस्तादिकर्त्तने यादृग् दुःख भवति तादृशमेव तेषां नलपरित्यागे जातमिति भावः । यान्ती स्वर्गं प्रतिगच्छन्ती वाग्देवतापि भैमी निवृत्य निवृत्य पुन पुन व्याघूर्ण्य वलितग्रीव यथा तथा पश्यति स्म । किम्भूतां निजविभ्रमाणां स्त्रीयवर्धनवागर्थादिविलासानां धाम स्थानभूताम् । किम्भूता । उत्का, प्रियस्मृत्यासमाप्तगुणगणप्रेमभरतया सोत्कण्ठा परित्यक्तुमशक्ते-त्यर्थः । अथवा निजसारस्वत विलासगृह यान्ती गच्छन्ती । छिदा षि-द्भिदादिभ्योऽङ् (पा० ३ । ३ । १०४) ॥ १०० ॥

सानन्द तनुजाविवाहनमहे भीमः स नैषधपति वैदर्भीनिषधाधिपौ नृपशतानिष्टोक्तिनिर्मृष्टये । स्थानि स्थानि धराधिपांश्च शिविराण्युद्दिश्य यान्तः क्रमादेको द्वौ बहवश्चकार सृजतः स्मातेनिरे मङ्गलम् ॥ १०१ ॥

सानन्दमिति । स भीम एको भूमीपतीराजा तनुजाया भैम्या विवाहन पाणिग्रहणलक्षणे महे महोत्सवे विषये माङ्गलिकतूर्यवादना-

## उत्तरनैषधचरिते ।

### पञ्चदशः सर्गः ।

ॐ गणेशाय नमः ।

श्रीर्जयति ।

अथोपकार्य्यां निषधावनीपतिर्निजामयासीद्व
रणस्रजाञ्चितः । वसूनि वर्षन् सुबहूनि बन्दि
नां विशिष्य भैमीगुणकीर्त्तनाकृतां ॥ १ ॥

श्रीलक्ष्मीनृसिंहो जयति । अथ भैम्याः स्वयम्वरे वरणस्रजा मधूकमालया अञ्चितः पूजितः स निषधावनीपतिर्नलोऽप्येव देवान् प्रसाद्य भैम्या नले वृते ताभ्यां वरान् दत्त्वा देवेषु प्रारब्धस्वर्गगमनेषु सत्सु अनन्तरं भीमेन स्वनिवासार्थं रचिता निजां स्वीयां नलेनैव सा कारितां पटमयद्रव्यादिरूपामुपकार्य्यामयासीत् ययौ । किं कुर्वन् । अन्यथा बन्दिना साधारण्येन सुबहूनि वसूनि वर्षन् भैमीगुणानां कीर्त्तनं तासामनरथेन कुर्वन्तीति कृतः तेषां तु बन्दिनां विशिष्य विशेषं कृत्वा वर्षन् अन्यापेक्षया तेभ्योऽधिकं प्रयच्छन् । बन्दिनां । सम्बन्धसामान्ये षष्ठी ॥ १ ॥

तथा पथि त्यागमयं वितीर्णवान् यथाऽतिमा
राधिगमेन मागधैः । तृणीकृतं रत्ननिकायमुञ्छ
कैश्चिकाय ढौकाश्चिरमुञ्छमुत्सुकः ॥ २ ॥

धनदानस्य सुबहुत्वमेव वर्णयति । तथेति । अथ नलः पथि त्यागकीर्त्तये साधारण्येन दीयमानं धनं तथा तेन प्रकारेण वितीर्णवान्

रपादन्यस्य तु स्यादेवेति । अथ निर्लज्जोऽतिसुरूपश्च । भवादृशो जनो मैत्रीप्राप्तिजनितसुखभाजनं कुतोऽपि न । रूपवान् हि रम्यां प्रियां न लभते । अतो रूपवन्तो भवन्तोऽपि प्रियां रम्यां नालभतेति स्व स्व प्रभु प्रति सेवकवचनमिति वा । अतिसुरूपा मैत्रीलग्नया जन । अत सुखभाजनमपि तु न एवम्भूतानां यशप्राप्तेरिति वा । धमदृशो । अद शब्दे उपपदे दृश "त्यदादिषु दृश (पा०३।२।६०) इति कञ्, दृग्दृशवस्तुषु आ सर्वनाम्न (पा०६।३।८९) इत्यात्वं "अदसोऽसेर्दादुरिति (पा० ८।२।८०) मत्वं च टिड्ढाणञिति (पा० ४।१।१५) ङीप् । अवाकृतेति पदद्वय ॥ ३ ॥

**अदोषतामेव सतां विवृण्वते द्विषां मृषादोषकणाधिरोपणा । न जातु सत्ये सति दूषणे भवेदलीकमाधातुमवद्यमुद्यमः ॥ ४ ॥**

राजकीयैश्च मैथिलेन्द्रायां कलायामपि तथानिर्दोषत्वमाह । अदोषतामिति । द्विषां मृषाऽविद्यमानस्य दोषकणस्य दोषलवस्याधिरोपणा, आरोपा सता अदोषतामेव निर्दोषत्वमेव विवृण्वते प्राकट्येन कथयन्ति । कथ । यत सत्ये दूषणे सति विद्यमाने ऽलीक असत्यमविद्यमान आधातु आरोपयितु खलानां जातु कदाचित् उद्यम प्रयत्नारम्भो न भवेत । सति दोष विद्यमानत्वादेव नारोप । अय तावदाशयते अतश्चासति दोषे तदारोपण निर्दोषतामेव वक्तीत्युभयथापि पर दोषाद्घाटनमनुचितमित्यर्थं । सर्वथा तौ निर्दोषाविति भाव । सत्ये दूषणे सति खलानामलीक दोषमाधातु उद्यम कदापि न भवेत्, अपि तु सत्यदोषाभावेऽलीकमपि दोष वदन्ति ततश्च निर्दोषत्वमेवागतमिति वा । अथ च सत्ये परब्रह्मस्वरूपे श्रीरघुनाथे विषये सति असाधौ दूषणाख्ये राक्षसे अवद्य अलीक दुष्टमप्रिय कर्तुं उद्यमः किं कदाचिन्न भवेत् अपि तु श्रीरामचन्द्रे विषयेऽपि दूषणाख्येन राक्षसेनाप्रियं कर्तुं उद्यम कृत एव । तथापि यथा स निर्दोषस्तथा तैर्मिन्द्राया कलायामपि निर्दोषावेव तावपीत्यर्थं । यद्वा वक्ती सीतायाः

पातिव्रत्यपरीक्षणादपरीक्ष्यपरिग्रहादिदोषे असत्यपि परप्रश्नाक्षरूपे अनृतभाषे कदाचित्समेवालीक दोषमाधासु प्रयतः—कि न स्यादपि तु लोक प्रयतत एव तथापि तस्वत स निर्दोष एव तथा लायपीति भाव । वैरिभि सत्यमप्युक्तमलीक भवति । मृषोद्यन्तु किमुतेति सूचित । द्विषा । कर्त्तरि षष्ठी ॥ ४ ॥

विदर्भराजोऽपि समं तनूजया प्रविश्य हृष्यन्न वरोधमात्मनः । शशंस देवीमनुजातसंशयां प्रतीच्छ जामातरमुत्सुके नलं ॥ ५ ॥

विदर्भेति । विदर्भराजोऽपि उत्तमजामातृप्राप्त्या हृष्यन् सन् तनूजया सम सह आत्मनोऽवरोधमन्त पर प्रविश्य भैमी नलं वरिष्यत्यन्य वेति अनुजात पुन पुनर्जात संशयो यस्या, ता देवीं भैमीमातर शशस इदमवादीत् । इति किं । हे उत्सुके जामातरि नले उत्कण्ठिते त्व नल जामातर भैमीपति प्रतीच्छ जानीहि ॥ ५ ॥

तनुत्विषा यस्य तृणं स मन्मथः कुलश्रिया यः पवितास्मदन्वय । जगत्त्रयीनायकमेलके वरं सुता परं वेद विवेक्तुमीदृश ॥ ६ ॥

नामग्रहमात्रेण सूचितस्य नलस्य गुणगण वर्णयति । तन्वितिं । यस्य तनुत्विषा कायकान्त्या हेतुना स सौन्दर्येण प्रसिद्धो मन्मथ तृणमिवाकिञ्चित्करः । तथा यः कुलश्रिया वंशपरिशुद्ध्या कृत्वा कौलीन्यात् प्रसिद्धतराणामस्माकमन्वय पविता पावन कर्त्ता । अस्मत्तोऽपि महान् कुलीन इत्यर्थ । जगत्त्रय्या नायकमेलके वरसमूहे ईदृशमीदृग्गुण नायकरत्न वर परिच्छेतार विवेक्तुं निर्णेतु पर केवलं तव सुता वेद जानाति नान्योऽस्मदादि । न विद्यते पर श्रेष्ठो यस्मादिति यच्छविशेषण वा । पविता । तृच् ॥ ६ ॥

सृजन्तु पाणिग्रहमङ्गलोचिता मृगीदृशः स्त्रीसमयप्रपञ्च क्रियाः । श्रुतिस्मृतीनान्तु वयं विदस्महे विधीनिति स्माह च निर्ययौ च सः ॥७॥

स्मरन्त्विति । स भीमः इति आह स्म च ब्रूते स्म निर्ययौ चान्तःपुरान्निरगाच्च । चकारो विवाहत्वरां द्योतयति । इति किं । हे मृगीदृशो हरिणेक्षणाः सुवासिन्यो भवत्यः पाणिग्रहो विवाहस्तद्रूपे मङ्गले उचिता तथा स्त्रीणां समयः आचारस्तं स्पृशन्ति योषिदाचारप्राप्ता दुर्गादिकुलदेवतापूजा तैलधारम्भादिक्रिया स्मरन्तु कुर्वन्तु । वयन्तु पुनः श्रुतीनां स्मृतीनां विधीन् गृह्योक्त् गुह्योक्तीत्यादीन् मधुपर्कादिकान् स्मार्तान् वैदिकांश्च विदध्महे कुर्महे इति । एवमादिश्य तदानीमेव निर्गत इत्यर्थः । पाणिग्रहमङ्गलोचिताः योषिदाचाराः यद्वा । सुवासिनीविशेषणं वा । समयस्पृशः । स्पृशोऽनुदके (पा० ३ । २ । ५८) इति क्विन् । अयं । अस्मदो द्वयोश्चेति (पा० १ । २ । ५९) बहुवचनं ७

निरीक्ष्य भूपेन निरीक्षितानना शशास मौहूर्त्तिकसंसदंशकम् । गुणैररीणैरुदयास्तनिस्तुषं तदा स दातुं तनयां प्रचक्रमे ॥ ८ ॥

निरीक्ष्येति । भूपेन भीमेन निरीक्ष्यान्तःपुरान्निर्गत्य वैवाहिकं मत्वा शशास । निरीक्षितानना मौहूर्त्तिकानां ज्यौतिषिकानां संसत्सभा अंशकं वैवाहिकं मुहूर्तं शशास । स च भीमस्तदा तस्मिन्नंशके नलाय भैमीं दातुं प्रचक्रमे मुहूर्तविलम्बानुरोधेन प्राथमिकान् औतस्मार्तान् विधीन् अचारदित्यर्थः । किम्भूतमंशकं । अरीणैः सम्पूर्णैर्जामित्रगुणैरुपलक्षितं । तथा शुक्रगुर्वोरुदयास्तमयप्रयुक्तदोषैर्निस्तुषं रहितं । एतेषां गुणदोषादिकं ज्योतिःशास्त्रादवगन्तव्यं । निरीक्ष्य । जगती । मौहूर्त्तिका मुहूर्तज्ञाः इत्यमरः । मुहूर्तं वदेत्यर्थे कतूक्थादी (पा० ४ । २ । ६०) इत्यादिना उक्थादित्वाट्ठक् । अंशमेवांशः, स्वार्थे कन् । अरीणं । ल्वादित्वात् ओदितश्चेति (पा० ८ । २ । ४५) निष्ठानत्वं । निस्तुषं । निर्गतं तुषात् । तुषो दोषलेशः ॥ ८ ॥

अथावदद्दूतमुखः स नैषधं कुलञ्च बाला च ममानुकम्प्यताम् । स पल्लवस्त्वद्य मनोरथाङ्कुरं चिरेण नस्त्वच्चरणोदकैरिति ॥ ९ ॥

अथेति । अथ राजनाशके सन्निहिते दूताः अथ मुखं यस्य स भीम नैषधमित्यवदत् । इति किं । भवता मम कुलं बाला च कृपयाऽनुकम्पता अङ्गीक्रियतां । बालायामनुगृहीतायां सर्वो ऽपि मम वंशोऽनुगृहीत स्यादित्यर्थः । तथा चिरेण चिरन्तनेन नोऽस्माकं मनसैवां स प्रसिद्धस्त्वत्सम्बन्धविषयो मनोरथरूपाङ्कुरः अद्यास्मिन् दिने त्वच्चरणाङ्के त्वदीयचरणतालमादके पल्लवतु पल्लववदाचरतु पल्लवितो भवत्वित्यर्थः । पल्लवसहितो भवत्वित्येक पद कल्पन सन्देशपदं प्रेष्य तं वचनमाकारयति स्मेति भाव । अन्यत्रापि चिरं सञ्चितोऽङ्कुरो जलैः पल्लवितो भवति । पल्लवतु । आचारे क्विप् ॥ ९ ॥

तथोदितं भीमवचःप्रतिध्वनिं निपीय दूतस्य
स वक्त्रगह्वरात् । व्रजामि वन्दे चरणौ गुरोरि
ति ब्रुवन् प्रदाय प्रजिघाय तं बहु ॥ १० ॥

तथेति । स नलः दूतस्य वक्त्रादेव गह्वरात् तथा पूर्वोक्तप्रकारेण यथा भीमेनोक्तं तथैवोदितं भीमवचसः प्रतिध्वनिं निपीय सादरमाकर्ण्य इति ब्रुवन् तस्मै दूताय बहु प्रचुरं वस्त्रालङ्कारादि प्रदाय तं दूतं प्रजिघाय प्राहिणोत् । इति किं । हे दूत अद्य व्रजामि गत्वा च मदीयगुरोः श्वशुरस्य चरणौ वन्दे नमस्करोमीति । प्रतिशब्दस्वरूपत्व न राजादेशानुवादस्य न्यूनाधिकताशङ्का परिहृता । व्रजामि । वन्दे । वर्तमानसामीप्ये इति (पा० ३ । ३ । १३१) भविष्यति लट् ॥ १० ॥

निपीतदूताऽऽलपितस्ततो नल विदर्भभर्त्राऽऽगम
वाग्वभूव सः । निशावसाने श्रुतताम्रचूडवाग्
यथा रथाङ्गस्तपनं धृतादरः ॥ ११ ॥

निपीतेति । ततो दूतप्रत्यागमनानन्तरं निपीतं सादरं श्रुतं दूतालपन एतद्वचनं येन स विदर्भभर्ता भीमो धृतादरः सादरः सन् नलमागमपायमनुप्रतीक्षितवान । पुनरपि दूतैरानाययति स्मेति वा । यथा निशावसाने ब्राह्मे मुहूर्ते श्रुता प्राभातिकी ताम्रचूडस्य कुक्कुटस्य वाक् येन स रथाङ्गश्चक्रवाको धृतादरः सन् तपनं सूर्यं प्रतीक्षते कदा

वा वदेष्यतीति । कुकयाकुलाश्चटू इत्यमरः ॥ ११ ॥

क्वचित्तदा लेपनदानपण्डिता कमप्यहङ्कारमगात्पुरस्कृता । क्वचित्तु सिम्भि तुङ्गासनसन्निवेशनादपूपनिर्म्माणविदग्धयादरः ॥ १२ ॥

क्वचिदिति । तदा नलागमनसमये क्वचित् स्थाने लेपनदाने सुधालेपचित्रादिकर्म्मणि पण्डिता कुशला काचिद्रमणी पुरस्कृता निर्म्माणार्थमेव सम्भाविता सती स्वप्रार्थनावशात् कमप्यहङ्कारमभिमानमगात् प्राप अनिर्वचनीयं गौरवं धृत्वा सुधालेपादि चकारेत्यर्थः । यद्वा अनिर्म्माणार्थे हरिद्राचूर्णमिश्रित तण्डुलपिष्ट तस्य दाने आलेपकरणे कुशला । काचिद्विजने रमणीये वा प्रदेशे तस्या भैम्याः अङ्गोद्वर्त्तने कुशलेति वा । तयाभैमीनलयोर्वा । तथा क्वचित् प्रदेशेऽपूपनिर्म्माणे नवघटनाया विदग्धया चतुरया कयाचित्तुङ्गासने उन्नतुङ्गाद्यासने सन्निवेशनादुपवेशनाद्धेतोरादरो गौरवमलम्भि प्राप्त । उच्चासनसन्निवेशादादरो वक्षिनापभयाभावः प्राप्त इति वा । आत्मनेकवचन । काचिच्चित्रादिकर्म्म काचित्तु अपूपादिनिर्म्माणं चक्रुरिति भावः ॥ १२ ॥

मुखानि मुक्तामणितोरणैस्तदा मरीचिभिः पान्थविलासमाश्रितैः । पुरस्य तस्याखिलवेश्मनामपि प्रमोदहासच्छुरितानि रेजिरे ॥ १३ ॥

मुखानीति । तस्य पुरस्य तथा तत्सम्बन्धिनामखिलवेश्मनामपि मुखानि द्वारोपान्तरूपाण्याननानि मुक्तायुक्तानां मणीनां रत्नानां मुक्तानाञ्च मणीनाञ्च वा तोरणेभ्यस्तेभ्यः उद्गतैर्निर्गतैः अत एव पान्थविलासं उत्थाय दूरं प्रसर्पणशालानां पान्थानां विलाससमाश्रितैर्मरीचिभिः किरणैः कृत्वा नलागमनसमये प्रमोदहासेन हर्षजहासेन छुरितानि मिश्रितानि च रेजिरे सर्व्वाण्यपि पुरद्वाराणि गृहद्वाराणि वा मुक्तामणितोरणैरलङ्कृतानि । सर्व्वं पुरञ्च सानन्दमभूदिति भावः । हास्य मुखे भवति । तस्य पुरस्य सम्बन्धिनां वेश्मनामिति व्याख्याने न केवलं पुरलोकानां मुखानि प्रमोदहासछुरितानि किन्तु गृहाणामपीत्यपेरर्थः ।

* मुक्तामयेति पाठोऽकिञ्चित्करः ॥

तोरणात्सदेति पाठे तोरणात् पान्थविलासमाश्रितैः उत्थाय द्वारप्रघण-कपोलैरिति व्याख्येयं ॥ १३ ॥

पथामनीयन्त तथाधिवासनान्मधुव्रतानामपि
दत्तविभ्रमाः । वितानतामातपनिर्भयास्तदा प
टच्छिदाकालिकपुष्पजा स्रजः ॥ १४ ॥

पथामिति । पटच्छिदाभिर्वस्त्रच्छेदैर्निर्मितानि अकालिकान्यसंभवजानि यस्मिन् काले यानि न भवन्ति तादृशानि पुष्पाणि तेभ्यो जातास्तन्निर्मिताः स्रजो मालाः तदा वरागमनसमये पथां पुरमार्गाणां वितानतां उल्लोचतां अनीयन्त प्रापिताः । किम्भूताः । यथा मालत्यादिपुष्पाणां वासस्तथाधिवासनात् सुगन्धिद्रव्यैः परिमलारोपणान्मधुव्रतानामपि दत्तो विशिष्टो भ्रमो याभिः । सर्वदा मधुन्येव ये निवसन्ति तेषामपि अकृत्रिमाण्येवैतानि पुष्पाणीति तेषामपि दत्तभ्रान्तयः किमुतान्येषामिति मधुव्रतपदेन सूचितम् । तथा वस्त्रमयत्वादातपनिर्भया उष्णत्वभावरहिताः । अस्त्री वितानमुल्लोच इत्यमरः । छिदाकालिकेति च पूर्ववत् ॥ १४ ॥

विभूषणैः कञ्चुकिता बभुः प्रजा विचित्रचित्रैः
स्नपितत्विषो गृहाः । बभूव तस्मिन्मणिकु
ट्टिमैः पुरे वपुः स्वमुर्व्याः परिवर्तितोपमं १५

विभूषणैरिति । तस्मिन् पुरे प्रजाः पौरा जानपदाश्च विभूषणैरलङ्कारैः कञ्चुकिता. नानारत्नकान्तिच्छादितसर्वावयवाः सत्य. बभुः शुशुभिरे । तथा यत्र माश्रकल्पितेषु निर्जीवेष्वपि रूपकेषु जीवद्भ्रमापादमादिचमत्कारकरणाद्विचित्रैः आश्चर्यकारिभिः कुड्यलिखितनानावर्णरूपकैः स्नपितत्विषः उज्ज्वलीकृतदीप्तयो गृहा बभुः । एवं अङ्गमस्यावरकुपान्वतया तथा मणिकुट्टिमैव मणिबद्धभूमिभिव कृत्वा उर्व्याः स्वं सहजं मृन्मयवपुः केनापि अल्लादिना परिवर्तिता उपमा यस्य तद्रूपान्तरं प्रापितमिव यत्र । पातालस्य रम्यत्वात् पातालमुपरि जातमिवेत्यर्थं इत्युत्प्रेक्षा । परिवर्तिता विनिमयिता उपमा उपमानं

स्वर्गादि येन उपमानत्वेन प्रसिद्धस्य स्वर्गस्य उपमेयत्वं कृतं, स्वयञ्च तस्योपमानं जातमित्यर्थः इति वा । स्वरुच्या इति पाठे स्वर्गात् सकाशात् परिवर्तितोपममिव बभूवेत्यर्थः । मणिकुट्टिमैः उपलक्षिते पुरे वा । सर्वमपि तदा सालङ्कारं जातमिति भावः । कञ्चुकस्तारकादि- ॥ १५॥

तदा निसस्वानतमां घनं घनं ननाद तस्मिन्नि
तरान्ततं ततं । सुवापुरुच्चैः सुषिराणि राजि
तामनमानद्धमियत्तयाऽध्वनीत् ॥ १६ ॥

तदेति । तदा नलागमनसमये तस्मिन् घनं कांस्यतालादिकं घनं निबिडं यथा निसस्वानतमां निरतिशयं शब्दं चकार तथा ततं वीणादिवाद्यं ततं विस्तृतं यथा तथा नितरां ननाद शब्दं चकार । तथा सुषिराणि सच्छिद्राणि वंशादिवाद्यानि उच्चैर्नितरां राजिता शब्दत्वं प्रवापुः । तथा आनद्धं मुरजादिवाद्यमियत्तया इदं परिमाणत्वेनामानम- परिच्छेद्यं यथा तथाऽध्वनीत् । घनं दृढावयवं बहुसङ्ख्यञ्चेति घन- विशेषणं वा । तथा ततं तारस्वरूपेण विस्तृतं बहुघङ्करपाकञ्चेति तत- विशेषणं वा । तथा इयत्तयाऽमानं बहुसङ्ख्यमित्यानद्धविशेषणं वा । चतुर्विधमपि वाद्यं तत्र वादितमित्यर्थः । ततं वीणादिकं वाद्यमानद्धं मुरजादिकं । वंशादिकं तु सुषिरं कांस्यतालादिकं घनमित्यमरः ॥ रा- जिता । अवश्यं रजतीति, आवश्यकाधमर्ण्ययोर्णिनिः (पा० ३ । ३ । १७०) इति णिनौ राजीति तेषां भावस्तत्ता ता । अध्वनीत् अतो ह- लादेरिति (पा० ७ । २ । ७) वृद्धिविकल्पः ॥ १६ ॥

विपञ्चिराच्छादि न वेणुभिर्न ते प्रणीतगीते
न च तेऽपि झर्झरैः । न ते हुडुक्केन न सोऽपि
ढक्कया न मर्द्दलैः सोऽपि न तेऽपि ढक्कया ॥ १७ ॥

विपञ्चिरिति । वेणुभिर्वंशध्वनिभिर्विपञ्चिर्वीणाध्वनिर्नाच्छादि । ते च वेणुध्वनयः प्रणीते प्रारब्धे गीते ये द्रुतमध्यादिमूर्च्छनादिपूर्वं तु वेगांशदिगायकैर्गायकगीतैर्नाच्छादिषतेति सर्वत्र विपरिणामेन व्याख्ये- यम् । झर्झरैर्झर्झराख्यैः कांस्यमयैर्वाद्यविशेषैर्ध्वनिभिः कृत्वा तेऽपि गा

यकध्वनयोऽपि न च नैवाच्छादिषत । हुडुक्केन लघीयसा कांस्यमयेन वाद्यविशेषेण ते झर्झरध्वनयो नाच्छादिता । ढक्कया वादित्रविशेषेण सोऽपि हुडुक्कध्वनिर्नाच्छादि । मर्द्दलैर्मृदङ्गध्वनिभिः सा ढक्काऽपि नाच्छादि । ढक्कया तेऽपि मर्द्दला अपि नाच्छादिताः । ध्वनपंक्तिगौरवलाघवं वाद्यमात्र तत्र मिलित । समस्तुतितालमाना अपि विपञ्च्यादिध्वनय वादककौशलात् अव्यक्त भेदेनोपलब्धा इति भावः । विपञ्च्यते स्वरोऽस्या विपञ्चि, औणादिक इप्रत्ययान्त. ॥ १७ ॥

विचित्रवादित्रनिनादमूर्च्छितः सुदूरचारी जनतामुखारवः । ममौ न कर्णेषु दिगन्तदन्तिनां पयोधिपूरप्रतिनादमेदुरः ॥ १८ ॥

विचित्रेति । विचित्राणि नानाविधानि वादित्राणि तेषां निनादैर्मूर्च्छित वर्द्धितः तथा सुतरां दूरचारी दूरसञ्चरणशील, जनता जनसङ्घातस्तस्यारवो मुखशब्द, पयोधिपूरे समुद्रप्रवाहे प्रतिनादेन प्रतिशब्देन पयोधिपूरस्य तटे प्रतिशब्दस्तेन वा मेदुर परिपुष्ट सन् दिगन्तदन्तिना दिक्प्रान्तवर्ति दिक्पालहस्तिनां कर्णेषु न ममौ तत्कर्णानपि परिपूर्य बहिर्निर्गत इत्यर्थः । नानाजातीयमिश्रणादेकीभूतो जनशब्दो दिगन्तपर्यन्तं समुल्लासति भाव. । स दूरेति पाठे स नहानित्यर्थः ॥ १८ ॥

उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विपि वेदिकोदरे । यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव तां ॥ १९ ॥

उदस्येति । अथ सर्ववाद्यवादनानन्तरं पुरन्ध्रिवर्गः स्त्रीसमयचक्कुलवृद्धसुवासिनीसमूह चतुष्कमध्ये नानावर्णकल्पितस्वस्तिकसर्वतोभद्रादिमण्डलैन चार्वी रमणीया त्विट कान्तिर्यस्य एवम्भूते कूर्मपृष्ठचतुरस्रहस्तमात्राच्छ्रितत्वादिसुकल्पिते वेदिकाया उदरे मध्ये शातकुम्भजाः सुवर्णघटिता. कुम्भीः उदस्योत्क्षिप्य यथाकुलाचार स्त्राणां निम्याव कुलाचारानतिक्रमेणाय मङ्गल मङ्गलगीतिपूर्वं यथा तथा

तामवनीन्द्रणां भैमीं स्नपयाम्बभूव । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येऽप्यथो अथेति वचनादेकोऽथशब्द आनन्तर्ये, द्वितीयस्तु मङ्गले इति ध्येय । यथा विधान नरनाथनन्दिनीमिति च पाठः । स्नपयाम्बभूव । मित्त्वा दुपधाह्रस्व ॥ १९ ॥

विजित्य दास्यादिव वारिहारितामवापितास्त
त्कुचयोर्द्वयेन ताः । शिखामवाप्तुः सहकारशा
खिनस्त्रपाभरम्लानिमिवानतैर्मुखैः ॥ २० ॥

विजित्येति । ता कुम्भ तस्या भैम्या. कुचयोर्द्वयेन गौरवत्वका-ठिन्यादिगुणातिशयेन विजित्य दास्यादिव वारिहारितां जलवाहित्व-मवापिताः प्रापिताः सत्य आनतैर्मुखैः सहकारशाखिन आम्रवृक्षस्य शिखा त्रपाभरेण जनिता म्लानि वैवर्ण्यं कालिमानमिव अवाप्नु व-हन्ति स्म । पराजितोऽपि ह्रीभरेण नम्रमुखो वारिवाहिता प्रापित सन् म्लानि धत्ते । कलशीमुखे माङ्गलिकाम्रपल्लवा निक्षिप्यन्ते इत्या चार. । अवाप्तुः । वह प्रापणे लङि ॥ २० ॥

असौ मुहुर्जातजलाभिषेचना क्रमाद्दुकूलेन
सितांशुनोज्ज्वला । द्वयस्य वर्षाशरदोस्तदात
नीं समाभितां साधु बबन्ध सन्ध्यया ॥ २१ ॥

असाविति । मुहुर्जात जलाभिषेचनं यस्या असौ भैमी, क्रमात्सि-तांशुना सिततन्तुदुकूलेन क्षौमाम्बरेणोज्ज्वला भूषिता सती, वर्षाश्च शरदश्च तासां द्वयस्य सन्ध्यया सन्धिना तदातनीं तदाभवां तात्कालि कीं समाभितां तुल्यतां साधु सम्यक् बबन्ध दधौ । वर्षाश्च कृतजलाभि षेका, शरच्च शीतांशुना चन्द्रेणोज्ज्वला द्वयोः सम्बन्धिन्युभयगुणोपेता, वस्त्रपरिधानात पूर्वं प्रावृट्सदृशी अनन्तर शरत्सदृशी जातेत्यर्थं २१

असौ प्रभिन्नाम्बुदुर्दिनीकृतां निनिन्द चन्द्रद्यु
तिसुन्दरीं दिवं । शिरोरुहौघेन घनेन संयुता
तथा दुकूलेन सितांशुनोज्ज्वला ॥ २२ ॥

अभायिमि । असौ दिव जिनिन्द तत्तुल्या आतेत्यर्थः। किम्भूता दिव । आदौ वर्षासु प्रमिनैरतिघनै मराङ्गियां ध्वन्युदे दुर्दिनीकृता अलम्प्रायिता, अनन्तर शरदारम्भे चन्द्रद्युतिसुन्दरी । किभूतामी । कचिद्धर्षंता शिरोरुहौघन केशपाशरूपेण घनेन मेघेनोपलक्षिता । तथा दुकूलेनैव सिताशुना चन्द्रेणोज्ज्वला । जलाभिषेकस्थानेषु वर्षोदकं धृत्वा चन्द्रिकास्थाने दुकूलमिति प्रोच्य ॥ २२ ॥

विरेजिरे ताश्चिकुरोत्करा: किरा: क्षणं गलन्ति
र्मलवारिविप्रुषा । तम:सुहृच्चामरनिर्जयार्जि
ता: सिता अमन्त: खलु कीर्त्तिमुक्तिका:२३॥

विरेजिर इति । तस्याश्चिकुरोत्करा केशसङ्घा विरेजिरे शोभन्तेस्म। किम्भूता । गलता निर्मलाना वारिविप्रुषामुदकबिन्दूनां क्षण किरन्तीति किरा विक्षेपका उदबिन्दून मुञ्चन्त इत्यर्थः । किम्भूता इव । तमस सुहृदोमि सदृशानि अतिश्यामानि चामराणि तेषा निर्जयेनार्जिता स्वीकृत्य सङ्गृहीता सिता शुभ्रा कीर्तिरूपा मुक्तिका वमन्त खलु । इवार्थे खलुशब्द । चामरादप्यतिसुन्दरस्तत्केशपाश इति भाव । विप्रुषा । कम्मणि षष्ठी ॥ २३ ॥

मृदीयसा सूनाजलस्य वाससा प्रमार्ज्जनेना
धिकमुज्ज्वलीकृता । अदन्नमभ्राजत साऽश्मशा
णनात् प्रकाशरोचि: प्रतिमेव हेमजा ॥ २४ ॥

म्रदीयसेति । सा भैमी अदभ्रमधिक अभ्राजत अशोभत । किभूता । म्रदीयसा स्नानजलस्य प्रमार्ज्जनेन प्रोञ्छनकारिणा वाससा म्रदीयसा वाससा कर्त्रा स्नानजलस्य प्रमार्जनेन करणेन पूर्वापेक्षया अधिक यथा तथा उज्ज्वलीकृता । केव । अश्मशाणनात् शिलात्तेजनाद्धेतो: प्रकाशा पूर्वापेक्षयाऽतिदीप्ता रोचिर्दीप्तिर्यस्या सा हेमजा सौवर्णी देवादीना प्रतिमेव । शिला घर्षणादोपितमिति सुवर्णकारपरिभाषा । प्रमार्जनेन । प्रथमपक्षे नन्द्यादित्वात् कर्त्तरि ल्यु । द्वितीयपक्षे भावे ल्युट् । शाण तेजने । भौवादिक । तस्माल्ल्युट ॥ २४ ॥

तदा तदङ्गस्य विभर्त्ति विभ्रमं विलेपनामोदमुचः स्फुरद्रुचः । दरस्फुटत्काञ्चनकेतकीदलात् सुवर्णमभ्यस्यति सौरभं यदि ॥ २५ ॥

तदेति । सुवर्णं दरमीषत् स्फुटद्विकसत्काञ्चनकेतकीदलात् सौरभं सौगन्ध्यं यद्यभ्यस्यति शिक्षते तदा तर्हि तदङ्गस्य भैमीशरीरस्य विभ्रमं विलासं विशिष्टां कान्तिं वा विभर्त्ति । किंभूतस्य विलेपनस्य । यक्षकर्द्दमादेरङ्गरागेण आमोदं मुञ्चति तस्य । तथा स्फुरन्ती रुक् दीप्तिर्यस्य । स्वाभाविकगौरकान्तिना अभ्यङ्गानन्तरमङ्गरागं कृत इति भावः । यदि तर्हीति सम्भावनायामभ्यस्यति बिभर्त्तीति न लिङ् लिङर्थे लट् । क्रियानिष्पत्तिस्तु न विवक्षणीया ॥ २५ ॥

अथार्पितायाः शुचिवेदिकान्तरं कलासु तस्याः सकलासु पण्डिताः । क्षणेन सख्यश्चिरशिक्षणस्फुटं प्रति प्रतीकं प्रतिकर्म्म निर्ममुः ॥ २६ ॥

अथार्पिताया इति । सकलासु गीतालङ्करणादिषु कलासु विद्यासु पण्डिताः कुशलाः सख्यः शुचिगोमयाद्यनुलिप्तं सर्व्वतोभद्रादिभूषितं वेदिकाया अन्तरं मध्यं शृङ्गारस्थानं अथार्पितायाः प्रापितायास्तस्याः भैम्याः प्रति प्रतीकं प्रत्यवयवं चिरशिक्षणाद्बहुकालाभ्यासात् स्फुटं निरतिशयं अत एव क्षणेन प्रतिकर्म्म अलङ्करणं निर्ममुश्चक्रुः ॥ २६ ॥

विनापि भूषामवधिः श्रियामियं व्यभूषि विज्ञाभिरदर्शि चाधिका । न भूषयैषाऽतिचकास्ति किन्तु साऽनयेति कस्यास्तु विचारचातुरी ॥ २७ ॥

विनेति । भूषां मण्डनं विनापि श्रियां कान्तीनामवधिः परमशोभा इयं भैमी विज्ञाभिः अलङ्कारचतुराभिः सखीभिः व्यभूषि विशेषेणालङ्कृता । अधिका अनलङ्कृताङ्गकान्तितोऽधिककान्तिरदर्शि च । परन्तु विचारचातुरी एकतरनिश्चयरूपे विचारे प्रावीण्यं कस्यास्तु न कस्यापि । इति किं एषा भूषया पूर्व्वापेक्षया अधिकं न चकास्ति किन्तु सा

भूषैवानया भैम्या कृत्वाऽधिकं शोभते । भैम्या भूषणानाञ्च परस्परसम्बन्धाच्छोभातिशयो यो दृश्यते तत्र भूषणैर्भैम्या शोभातिशयो न जनित किन्तु भैम्या भूषणानामिति विवेकः कस्यापि नाभूदित्यर्थः । पूर्वापेक्षयाधिकं वा शोभते सती भाव । भूषा विनापि श्रियाधिकेव विद्याभिर्विशेषेण बहुना प्रयासेनापि पूर्वापेक्षया इयमधिका किमिति तारतम्यज्ञानार्थं पुन पुन विलोकिता च । परमियं भूषया नाधिकास्ति किन्तु सा भूषाऽनयेति तात्त्विकविचारचातुरी कस्याञ्चित् पुन सख्या जातेत्यर्थोऽपि तु न कस्याश्चित् । प्रयासेनालङ्कृत्य पुन पुनर्विलोक्यापि विज्ञाजिरपि अनया मण्डनं नविहतं मण्डनेर्वा इयं मण्डिते इति तारतम्यं न ज्ञातमेव । परं भूषणाना वैयर्थ्यं साधारणस्य वाधिकशोभाकारित्वं वेति किमपि न निश्चितं किन्तु भ्रान्ता एव जाता इत्यर्थः इति वो । तस्या निरतिशया कान्तिर्जातेति भाव । पूर्वोक्ता चातुरी कस्यास्तु कस्याश्चिदेव विदुष्या न तु सर्वस्या इति वा । अलङ्कृतं तद्वपुरेव मण्डनमिति विचारचातुरी कस्यचिन्मण्डनपण्डितस्य नाप्यासीत् कस्य प्रसङ्गो वाऽस्तु । मया श्रीहर्षेण प्रसङ्गया वा एव निर्णीतु शक्यते नान्येनेत्यर्थ इति वा । कस्या पुनर्न जाता अपि तु सर्वस्या अपीति वा ॥ २७ ॥

विधाय बन्धूकपयोजपूजनं कृतां विधोर्गन्धफलीबलिश्रियम् । निनिन्द लब्धाधरलोचनार्चनं मनःशिलाचित्रकमेत्य तन्मुखम् ॥ २८ ॥

विधायेति । लब्धं प्राप्तं अधराभ्यां लोचनाभ्याञ्च कृत्वा अर्चनं पूजनं येन । ओष्ठनेत्रैः रमणीयमिति यावत् । तथाविधं तन्मुखं भैमीमुखं मङ्गलं माङ्गलिकं मनःशिलाख्यगौरधातुविशेषनिर्मितं चित्रतिलकं एत्य प्राप्य बन्धूकेन पयोजाभ्यां नीलोत्पलाभ्याञ्च पूजनं पूजाद्वयं कृत्वा, अनन्तरं कृतां विधोश्चन्द्रमस्यर्थिनीं गन्धफल्या चम्पककलिकया एत्य यत् पूजा तज्जनिता श्रियं कान्तिं निनिन्द । यदि बन्धूकोत्पलैः चन्द्रस्य पूजा कृत्वा चम्पककलिका चन्द्रस्य शिरसि न्यस्यति तदा सा चान्द्रमसी न्यक्करोतीत्यभूतोपमेत्यर्थः । बन्धूकस्य प्र-

धरस्य नीलोत्पलयोर्लोचनयोश्चम्पककलिकायाः मत्तःशिलातिलकस्य च-न्द्रस्य प्रदत्तस्य चोपमानोपमेयभावः । चम्पको हेमपुष्पकः । एतस्य कलिका गन्धफलीत्यमरः ॥ २८ ॥

महीमघोनां मदनान्धतातमी तमःपटारम्भण तन्तुसन्ततिः । बबन्ध तन्मूर्द्धजपाशमञ्जरी कयापि धूपग्रहधूमकोमला ॥ २९ ॥

श्लोकत्रयेण केशप्रसाधनं वर्णयति । महीति । कयापि केशप्रसाध-नचतुरया सख्या तस्या भैम्या मूर्द्धजपाशः केशपाशः तद्रूपा सौगन्ध्या-दिभ्योऽपि मञ्जरी प्रथमोद्भिन्नकलिकाङ्कुरद्वयः बबन्धे संयता । किम्भू-ता मञ्जरी । महीमघोनां भूमीन्द्राणां मदनेन कामविकारेण अन्धता विवेकशून्यता सैव तमी तामसी रात्रिस्तस्यास्तमोरूपस्य पटस्यावरक-त्वादविवेकरूपस्यारम्भणे निर्माणे विषये तन्तुसन्ततिः सूत्रपरम्परा तानकरूपा । तथा धूपग्रहणसाधनस्य सच्छिद्रस्य धातुमयस्य कटाह-कादेः सम्बन्धिना दह्यमानकर्पूरागरुचन्दनादिपरिमलबहुलेन धूमेन कोमलेषच्छ्यामा तद्वदतिसुन्दरी नितरां श्यामा । राजानो रात्रौ नीलं पट्टवस्त्रादिकं परिधाय विचरन्तीति वा । तत्परायाः अपि तस्याः केशपाशं दृष्ट्वा राज्ञां कामान्धकाद्विवेकशून्यता भवतीति भावः ॥ २९ ॥

पुनः पुनः काचन कुर्वती कचच्छटाधिया धूपजधूमसंयमं । सखीस्मितैस्तर्कितनिजभ्रमा बबन्ध तन्मूर्द्धजचामरं चिरात् ॥ ३० ॥

पुनः पुनरिति । काचन सखी तस्याः भैम्याः मूर्द्धजः केशपाशस्त-त्सदृशं सूक्ष्मघनप्रलम्बरूपत्वसाम्याच्चामरं चिराद्बहुना कालेन बबन्ध । चिरकालहेतुमाह । किम्भूता । कचच्छटाधिया भैमीकेशपाशभ्रान्त्या सादृश्यात् धूपजस्य धूमस्य मुहुर्मुहुः बन्धनं संयमनं कुर्वती । तथा तद्भ्रान्तिदर्शिनीनां स्मितैरन्योन्यमुखविलोकनपूर्वकविलम्बदीपहासैः कृत्वा तर्कितः केशपाशभ्रमेण धूपजधूमसंयमनरूपो निजः स्वीयः भ्रमो यया ॥ ३० ॥

बलस्य कृष्टेव हलेन भाति या कलिन्दकन्या घन भङ्गभङ्गुरा । तदार्पितैस्तां करुणस्य कुड्मलैर्जहास तस्याः कुटिला कचच्छटा ॥ ३१ ॥

बलस्येति । कुटिला अतिवक्रा या तस्याः कचच्छटा कुन्तलश्रेणि बलस्य बलभद्रस्य हलेनाकृष्टा सती घनैर्निबिडैर्भङ्गैस्तरङ्गैर्भङ्गुरा वक्रा यथा कलिन्दस्य पर्वतस्य कन्या यमुनेव भाति च । कचच्छटा तां यमुनां तदा तस्मिन् समये अर्पितैः शिरसि न्यस्तैः करुणाख्यस्य वृक्षस्य कुड्मलैः कलिकाभिर्जहास । यमुना पराकर्षणकृतेन मद्वीयशा भङ्गेन पराभवेन भग्ना पुष्परहिता च । स्वयं तु स्वभावकुटिला पुनरपि कुसुमैरञ्चिता चेति हासोयुक्त इत्यर्थः । श्यामः अतिवक्रा पुष्पालङ्कृता च तस्याः कुन्तलश्रेणिर्यतरा शोभते स्मेति भावः । पूर्वं तत्तुल्या अभूत् इदानीं तु अधिका जातेति भावः । जहारेवेति वा । यमुनाकर्षणं हरिवंशादौ ज्ञेयम् ॥ ३१ ॥

धृतैतया हाटकपट्टिकालिके बभूव केशाम्बुद विद्युदेव सा । मुखेन्दुसम्बन्धवशात् सुधाजुषः स्थिरत्वमूहे नियतं तदायुषः ॥ ३२ ॥

ललाटप्रसाधनं वर्णयति । धृतेति । एतया भालिके ललाटे या हाटकस्य सुवर्णस्य पट्टिका धृता सा केशाम्बुदानां कुन्तलरूपजलदानां तेषु या विद्युदेव बभूव । तत्प्रभावास्तस्या कथं स्थिरत्वमित्यत आह । मुखेन्दुसम्बन्धवशादिन्दोः सुधाजुषोऽमृतं सेवमानस्य तदायुषो विद्युद्रूपस्यायुषः स्थिरत्वं नियतं निश्चितं अहमूहे तर्कयामि । अमृतपानादमृतत्वं तस्या जातमित्यर्थः । सुवर्णपट्टिकया ललाटमलङ्कृतमिति भावः । यदायुष इति वा पाठः । ऊहे । ऊह वितर्के ॥ ३२ ॥

ललाटिकासीमनि चूर्णकुन्तलाः वभुः स्फुटं नौ मनरेन्द्रजन्मनः । मनःशिलाचित्रकदीपसम्भवा मसीभृतः कज्जलधूमवल्लयः ॥ ३३ ॥

कुन्तलान् वर्णयति । ललाटिकेति । ललाटे रचितायाः रेखाकाराया ललाटिकायाः पत्रपाश्याया अलङ्कारविशेषस्य सीमनि पर्यन्तप्रदेशे भीमनरेन्द्रजन्मनो भैम्याश्चूर्णकुन्तला वक्रकुण्डलीभूताः केशाः कज्जलरूपस्य धूमस्य वल्लयः श्रेयः स्फुटमिव बभुः । किंभूता वल्लयः । मनःशिलायाश्चित्रकं तिलकं तद्रूपो यो दीपः तस्मात्सम्भवो यासां ताः । तथा ज्वलतो. सङ्कुच्य वक्रीभावात् श्लिष्यन्ति मूलः धारयन्त्य । नलस्य गत शिलातिलकेनैव कामोद्दीपनात् तस्य दीपत्वं । धूपधूमसम्भवा कज्जलश्रेणिः किल वक्रियुक्ता भवति । पत्रपाश्या ललाटिकेत्यमरः । कर्णललाटात् कनलङ्कारे (पा० ४ । ३ । ६५) इति कन् ॥ ३३ ॥

अपाङ्गमालिङ्ग्य तदीयमुच्चकैरदीपि रेखा जनिताञ्जनेन या । अपाति सूत्रं तदिव द्वितीयया वयःश्रिया वर्द्धयितुं विलोचने ॥ ३४ ॥

श्लोकद्वयेन कज्जलालङ्कारं वर्णयति । अपाङ्गमिति ॥ अञ्जनेन जनिता या रेखा सा तदीयमपाङ्गमालिङ्ग्य स्पृष्ट्वा उच्चकैर्नितरामदीपि शुशुभे । द्वितीयया तारुण्यरूपया वयःश्रिया कर्त्र्या विलोचने भैम्या नेत्रे वर्द्धयितुं शैशवापेक्षया विशाले कर्तुं तद्रेखादीपन सूत्रमिव अपाति । प्राच्या हि सुन्दर्यो नेत्रे तत्प्रान्तनिर्गतया कपोलपर्यन्तस्पर्शिन्याञ्जनरेखया भूषयन्ति । शिल्पिनश्च किमपि लेखितुं वर्द्धयितुं वाञ्छ्यमानस्य वर्द्धमानस्य चाकारवक्रिमपरिहाराय मषीलटिकाद्युपलिप्तसूत्राभिघातेन रेखापातनं कुर्वन्ति । यद्यपि नेत्रयोर्वृद्धिर्नास्ति तथापि शैशवापेक्षया तारुण्येन कटाक्षविक्षेपादिविलासवशाद्दैर्घ्यप्रतीतेर्दैर्घ्यकरणार्थं सूत्रपातो युक्तः । नेत्रे कज्जलाञ्जिते इति भावः ॥३४॥

अनङ्गलीलाभिरपाङ्गधाविनः कनीनिका नीलमणेः पुनः पुनः । तमिस्रवंशप्रभवेन रश्मिना स्वपह्नुतिः सा किमरञ्जि नाञ्जनैः ॥ ३५ ॥

अनङ्गेति । अनङ्गलीलाभिः कटाक्षविक्षेपरूपैः कामविलासैः कृत्वा पुनः पुनरपाङ्गधाविनो नेत्रप्रान्तस्पर्शिनः कनीनिका नीलमणेर्नेत्रतार

विलोचनाभ्यामतिमात्रपीडिते ऽवतंसनीलाम्बुरुहद्वयी खलु । तयोः प्रतिद्वन्द्विधियाऽधिरोपयाम्बभूवतुर्भीमसुताश्रुती ततः ॥ ३८ ॥

श्लोकद्वयेनावतंसनीलोत्पले वर्णयति । विलोचनाभ्यामिति । खलु यत भीमसुतायाः श्रुती कर्णौ विलोचनाभ्यां आकर्णपूर्णत्वादतिमात्रमतितरां पीडिते पराक्रान्ते ततस्तस्मादात्मपराभवकारिणोस्तयोर्नेत्रयोः प्रतिद्वन्द्विनौ तुल्यबले इमे नीलोत्पले इति धिया बुद्ध्येव स्वशिरसि अवतंसरूपनीलाम्बुरुहद्वयीं अधिरोपयाम्बभूवतुः आरोपितवन्तौ दधतुरित्यर्थः । लुप्तोत्प्रेक्षा । खलु वोत्प्रेक्षायां । अन्योऽप्यधिकेन पराभूतस्तस्मादात्मानं तद्विरोधिनं सन्निधापयति । नीलोत्पलकर्णयोः कर्म नेत्राभ्यामेव कृतं न तु नीलोत्पलाभ्यामधिकं किञ्चित् कृतं, नीलोत्पले कर्णभूषणीकृते इति च भावः ॥ ३८ ॥

धृतं वतंसोत्पलयुग्ममेतया व्यराजदस्यां पतिते दृशाविव । मनोभुवान्ध्यङ्गमितस्य पश्यतः स्थिते लगित्वा रसिकस्य कस्यचित् ॥ ३९ ॥

धृतमिति । एतया कर्णयोरुपरि धृतं वतंसोत्पलयुग्मं, भैम्या तत्कर्णौ वा पश्यतः कस्यचिद्रसिकस्य विलासिनो दृशाविव व्यराजत् । किंभूतस्य । मनोभुवा कामेन अविवेकित्वमेवान्ध्यं तद्भूतनेत्रत्वं गमितस्य प्रापितस्य । किंभूते दृशौ । अस्यां भैम्यां पतिते निपतिते । ततो रसिकत्वादेवापरावृत्य लगित्वा सम्बध्य स्थिते स्थिरतरे इत्युत्प्रेक्षा । कश्चिद्विलासी भैम्याः कर्णौ प्रथममेव दृष्टवान् ततस्तस्य नेत्रे कर्णयोरेव लग्ने स्थिते नीलोत्पलद्वयमित्यर्थः । नेत्रगमनादेवान्ध्यम् । अन्यदपि पतितं वस्तु कुत्रापि लगित्वा तिष्ठति ॥ ३९ ॥

विदर्भपुत्रीश्रवणावतंसिकामणीमहःकिंशुककार्मुकोदरे । उदीतनेत्रोत्पलबाणसम्भृतिर्नलं परं लक्ष्यमवैक्षत स्मरः ॥ ४० ॥

रत्नायतस घर्षपति । विदर्भेति । स्मरः नलं परं केवलं प्रेषु, या सद्यमवेक्षन आगच्छन्त प्रतीतिसयानित्यर्थः । किन्तुसः । विदर्भपुरे अवयवयोरुपरि अवतसिकाया सप्यः भूषणभूता या माणिक्यादिरत्नख-चितसुवर्णकर्णिका तत्सम्बन्धीनि माणिक्यादिरत्नानि तासां मयूखैस्त-स्तदेव किंशुककार्मुकं पलाशकुसुमधनुः तस्योदरे विषये चदीना क्रम-रपत्रा नेत्रयोरवतंसोत्पलयोश्च तद्रूपायां चतुर्णां बाणानां सम्पूर्ति सामग्री नेत्ररूपाभ्यां च नीलोत्पलाभ्यां बाणसामग्री यस्य । धनुषि-धचापे समारोपितबाण इत्यर्थः । स्वलङ्कृतकर्णोत्पलाञ्चितनेत्रभी-न्दर्यं विलोकयमानेन नलः कामपरो भविष्यतीति भावः । अवतंस-कापदेनैव श्रवणलब्धावप्यतिसन्निधिसूचनार्थं श्रवणपदप्रयोगो गुणः । तत्पत्सरणात् स्मर ॥ ४० ॥

अनाचरत्तथ्यमृषाविचारणां तदाननं कर्णलता
युगेन किं । बबन्ध जित्वा मणिकुण्डले विधु
द्विचन्द्रबुद्ध्या कथितावसूयकौ ॥ ४१ ॥

श्लोकद्वयेन कुण्डलप्रसाधनमाह । अनाचरदिति ॥ सादृश्यात स्फु-रितया द्विचन्द्रबुद्ध्या द्वौ चन्द्राविति भ्रान्तिज्ञानेनैतौ द्वौ चन्द्रौ तदा-त्मकं न सहेते इति भैम्यास्तदाननस्य वा पुरस्तादसूयकौ स्पर्धाकारि णौ कथितौ प्रतिपादितौ मणिकुण्डले रत्नखचिते सुवर्णताटङ्के एव-विधौ द्वौ चन्द्रौ जित्वा तदाननकर्तृ, कर्णलतायुगेन कृत्वा बबन्ध किं । ननु द्विचन्द्रबुद्धेरेव स्वरूपेणासत्यत्वात् स्तोत्वाच्च तदुक्तेऽर्थे क-थं तस्य प्रवृत्तिरित्याशङ्क्याह । किम्भूत । तथ्यमृषा विचारणां सत्य-या कथित सत्यमसत्यं वेति विमर्शनमनाचरदकुर्वाणं । शोभातिश-यमदेन मत्तत्वादित्यर्थः । किं किमिति बबन्ध न ज्ञायतेऽनुचितमेतत्कृ-तं । यतः सत्यासत्यविचारणाभावादिति भाव इति वा । अन्योऽपि दुर्मदः सत्यासत्यविचारमकुर्वन् कस्यचिदसूयकस्य वचनादनपराधिन-मपि कञ्चित्पाशादिना बध्नाति । चन्द्राकारे मणिताटङ्के तया धृते इति भावः ॥ ४१ ॥

अथादि भैमी परिधाप्य कुण्डले वयस्ययाभ्या मभितः समन्वय. । त्वदाननेन्दोः प्रियकामज न्मनि प्रपत्स्यते दौरधरी धुरं ध्रुवं ॥ ४२ ॥

अथादीति । कयाचिद्वयस्यया सख्या कुण्डले परिधाप्य कर्णयो-र्निक्षिप्य भैमी अथादि इत्युक्ता । इति किं । हे भैमि तवाननेन्दो आभ्यां कुण्डलाभ्यां अभित उभयो पार्श्वयोरप समन्वय समीचीनसम्बन्ध । प्रियस्य नलस्य कामो रत्यभिलाष तस्य जन्मन्युत्पत्तौ विषये दौरधरी पूर्वोत्तरराशिस्थगुरुशुक्रयोर्मध्यराशिस्थचन्द्रस्य दुधराख्यस्य महायोगस्य सम्बन्धिनी धुरं भारं ध्रुवं निश्चितं आश्रयतीति । ध्रुवमुत्प्रेक्षायां वा । दुर्धराख्ये महायोगे जातपुत्रादिर्यथा वृद्धिं प्राप्नोति तथा कुण्डलालङ्कृतमुखचन्द्रदर्शनमात्रेण नलस्य रत्यभिलाषो वृद्धिं प्राप्स्यतीति भावः । गुरुभार्गवयोर्मध्यवर्तिचन्द्रो यदा भवेत् । तदा तु दुर्धरायोग इति ज्योतिर्विदां मतमिति शास्त्रादनुसन्धेयम् ॥४२॥

निवेशितं यावकरागदीप्तये उगदधीयाधरसी म्नि सिक्थकं । रराज तत्रैव निवस्तुमुत्सुक मधूनि निर्धूय सुधासधर्मिणि ॥ ४३ ॥

अधरप्रसाधनमाह । निवेशितमिति ॥ तदीयोऽधरोष्ठस्तस्य सीम्नि प्रान्तदेशे यावकस्यालक्तकस्य रागो लौहित्यं तस्य दीप्तये प्रकाशनाय निवेशितं न्यस्तं यत्नेन नगरमलजं सिक्थकं मधूच्छिष्टं स्वस्य जनकानि मधूनि हीनरसतया परित्यज्य माधुर्यातिशयात् सुधयाऽमृतस्य सधर्मिणि तुल्यायां तत्रैवाधरसीम्नि निवस्तुं नित्यं स्थातुं उत्सुकमुत्कण्ठितमिव रराज । सुधया सिक्थकस्य कदाचिदप्यसम्बन्धात् सम्भावना परित्यक्तमधुकमिव तत्रैव स्थितमित्यर्थः । प्रसाधिका अलक्तकस्य स्थित्यर्थं अधरे सिक्थकं निवेशयन्ति, अधरस्य मधुनोऽधिकत्वं सूचितं । अन्यदपि हीनमाश्रयं परित्यज्योत्तममाश्रयति । उत्प्रेक्षा । सधर्मिणि धर्मादनिच् केवलात् ( पा० ५ । ४ । १२४ ) इति धर्मशब्दादनिचि, समानस्य छन्दसीत्यत्र (पा० ६ । ३ । ८४) छन्दसीति योगवि-




भागात् समानस्य स आदेशः । समानधर्मो यस्या सा सधर्मा तस्या, सन इति ( पा० ४ । १ । ११ ) न ङीप् ॥ ४३ ॥

स्वरेण वीणेत्यविशेषणं पुरा ऽस्फुरत्तदीया खलु कण्ठकन्दली । अवाप्य तन्त्रीरथ सप्त मुक्तिका मराजत परिवादिनी स्फुटं ॥ ४४ ॥

कण्ठप्रसाधनमाह । स्वरेणेति । तदीया कण्ठ एव कन्दली अतिकौसुमाद्यादिगुणत्वादुद्भूतोद्गतप्रथमाङ्कुरदलः ऽतिमधुरेण स्वरेण कृत्वा पुरा पूर्वं अविशेषणं विशेषणरहितं यथा तथा सामान्येन वीणेयमित्येव खलु निश्चितं अस्फुरत् अभासत, न तु रुद्रवीणादिवल्लकीप्रभेदेषु विशिष्टतयेयमिति लक्षितेत्यर्थः । अथालङ्कारसमये सप्त मुक्तिकासरान् सूत्रप्रोतमौक्तिकहारानेव तन्त्रीर्मध्यमाञ्चितारपञ्चमानद्धनिव्यञ्जितपञ्चमादिरागा यहसूत्रादिरचिताः सप्त तन्त्रीरवाप्य, विपञ्ची या तु तन्त्रीभिः सप्तभिः परिवादिनीत्यमरवचनात् स्फुटं प्रकटं परिवादिनीति विशिष्टसंज्ञा सती अराजत् अशोभत । स्फुटमुत्प्रेक्षा वा । वीणाख्योऽपि मधुरतरस्वरा, कण्ठकन्दलीसप्तसरमुक्ताहारालङ्कृता चेति भावः ॥ ४४ ॥

उपास्यमानाविव शिञ्जितुं ततो मृदुत्वमप्रौढ मृणालनालया । विरेजतुर्माङ्गलिकेन सङ्गतौ भुजौ सुदत्या वलयेन कम्बुनः ॥ ४५ ॥

भुजप्रसाधनमाह । उपेति ॥ माङ्गलिकेन मङ्गलप्रयोजनमस्य मङ्गलार्थं रचितेन कम्बुनः शङ्खस्य वलयेन कङ्कणेन सङ्गतौ युक्तौ सुदत्या भैम्या भुजौ विरेजतुः । उत्प्रेक्षते । अप्रौढा बाला या मृणालनाला तया विमर्द्दभयेन ततः भुजाभ्यां सकाशात् मृदुत्वं शिक्षितुं उपास्यमानाविव सेव्यमानाविव । मृणालादपि कोमलतरौ भुजावित्यर्थः । गौडदेशे विवाहकाले शङ्खवलयधारणमाचारः । बालेन चाम्यास सुकर इत्यप्रौढपद । नालानालमथास्त्रियामित्यपि क्वचित्पाठात् महाकविप्रयोगान्नालाशब्द आयन्तोऽपि । ततः । आख्यातोपयोग ( पा०




१ । ४ । ३८ ) इत्यपादानत्वम् । आङ्गुलिकेन । प्रयोजनमिति ( पा० ५ । १ । १०९ ) ठञ् ॥ ४५ ॥

पदद्वयेऽस्या नवयावरञ्जना जनैस्तदानीमुदनो यतार्पिता । चिराय पद्मौ परिरभ्य जाग्रती निशीव विश्लिष्य नवा रविद्युतिः ॥ ४६ ॥

श्लोकद्वयेन पद्मप्रसाधनमाह । पदेति ॥ तदानीं तस्मिन् प्रसाधनसमये अस्याः पदद्वये अर्पिता रचिता नवा आर्द्रा यावकरञ्जना अलक्तकरञ्जना जनैर्नयोदयसमये जाता अतिरक्ता रविद्युतिरिव उदनीयत उदनर्यत । किम्भूता रविद्युतिः । निशि रात्रौ सूर्यस्यास्तसमयवशात् पद्माभ्यां [illegible] विश्लिष्य दिने पुनः पद्मौ चिराय परिरभ्य जाग्रती तिष्ठन्ती । रविद्युतिर्यथा पद्मेषु श्रियमधिकां करोति तथा यावकरञ्जना तत्पादयोरिति भैमीचरणौ पद्मतुल्याविति भावः । चिराय विश्लिष्येति वा । चिरवियुक्तावन्योन्यं प्राप्य गाढमालिङ्गय तिष्ठत इति उक्तिः । ४६

कृतापराधः सुतनोरनन्तरं विचिन्त्य कान्तेन समं समागमम् । स्फुटं सिषेवे कुसुमेषुपावकः स रागचिन्हश्चरणौ न यावकः ॥ ४७ ॥

कृतेति ॥ पूर्वं चिरवियोगक्लेशदानाद् दत्तानेकापराधत्वात् सुतनोर्भैम्याः कृतोऽपराधो येन स कुसुमेषुः काम एव पावकः अनन्तरं तु अधुना कान्तेन नलेन समं सह भैम्याः समागमं विचिन्त्य स्फुटं निश्चितं चरणौ सिषेवे अपराधमार्जनायेत्यर्थः । कामस्याग्नित्वे हेतुमाह । यतः सोऽग्निः रागचिह्नः रागो लौहित्यमेव चिह्नं यस्य रक्तिमा वह्निरयमिति ज्ञायते । अथवा अनुराग एव चिह्नं यस्य । अनुराग एव हि कामं समनुभावयति । तस्मात् कामाग्निरयम् । न स्वयं यावकोऽलक्तकः स पावको नेति वा । अन्योऽपि प्रोषितभर्तृकायाः कस्याश्चित् कृतापराधः सन् तत्प्रियागमनं विचिन्त्यापराधमार्जनाय तत्पादयोः पतति । वा तत्कृततत्पदद्वयसंमर्दनादेव नलस्य कामोद्दीपको भवितेति भावः ॥ ४७ ॥

स्वयं तदङ्गेषु गतेषु चारुतां परस्परेणैव विभूषितेषु च । किमूचिरेऽलङ्करणानि तानि तत् पृथैव तेषां करणं बभूव यत् ॥ ४८ ॥

सहजशोभामाहात्म्यं वर्णयति । स्वयमिति ॥ स्वयं भूषणं विनैव परस्परानपेक्षयैव तस्या भैम्या अङ्गेषु मुखाद्यवयवेषु प्रत्येकं स्वीयस्वीयसौष्ठवशालित्वमारोहवशाच्च चारुतां गतेषु सत्सु परस्परेणैवान्योन्येनैव च विशेषेण भूषितेषु प्रत्येकं सौन्दर्ये सत्यपि अन्योन्यसाहचर्यवशात् करानुगुणौ भुजौ भुजानुगुणौ करावित्येकस्याङ्गस्यापरेण तस्य च तेनैव सर्वाङ्गयोग्याङ्गसामग्रीसङ्घटनात् सुन्दरतरेषु सत्सु तानि मनःशिलातिलकादीनि अलङ्करणानि किमूचिरे अपि तु स्वाकरणप्रयोजनं न किञ्चिदूचुः । यद्यस्मात्तेषामलङ्करणानां तत्पूर्वोक्तप्रकारं करणं निर्माणं पृथैव बभूव दुःखयन्त्रात्किञ्चिदूचुः । किमप्यधिकं न चक्रुरित्यर्थः । आश्रितत्वादनिराकार्यत्वेन स्थितान्यंशेति भावः । तेषां करणं पृथैवाभूत् । एतत्र कारणमलं इत्यनन्वयनाम साम्यम् जातमिति भावः । अतं पृथाकरणं येषामिति च बहुव्रीहिणापि साम्यम् जातमित्यर्थः । पूर्वमलंशब्दस्य भूषणार्थत्वं पश्चादप्रयोजकत्वात् क्षिपिद्वार्थत्वमिति चेत्यर्थः । किमूचिरे इति पाठे किमर्थं धृतानि न जाने इति शेष इति वा ॥ ४८ ॥

क्रमाधिकामुत्तरमुत्तरं श्रियं पुपोष यां भूषणचुम्बनैरियं । पुरः पुरस्तस्थुषि रामणीयके तया बबाधेऽवधिबुद्धिधोरणिः ॥ ४९ ॥

भूषणकृतमुत्कर्षं वर्णयति । क्रमेति । इयं भैमी भूषणचुम्बनैर्भूषणसम्पर्कैः कृत्वा उत्तरमुत्तरं यथा तथाऽग्रे क्रमेण पूर्वपूर्वभूषणापेक्षया नूतनहारभूषणेनाधिकामतिशयितां यां श्रियं पुपोष तयालङ्कारशोभया रामणीयके सौन्दर्ये पुरः पुरस्तस्थुषि स्थिरतरे सति अवधिः बुद्धेरियत्ता बुद्धिधोरणिः परम्परा बबाधे बाधिता । इतोऽन्यद्रामणीयकं नास्तीति यदि बुद्धिर्भवेत्तदा अवधिर्भवेत् पूर्वरामणीयकस्यातयाबाधेन

रामणीयकान्तरेण पुनर्न स्फुरणे सति अवधिर्बाधित इत्यर्थः । तस्या भूषणे शोभा निरवधिरभूदिति भावः । धीरधीरिति दंश्यशादः ॥ ४९ ॥

मणीसनाभौ मुकुरस्य मण्डले वधूर्निजास्यप्रतिबिम्बदर्शिनी । विधोरदूरं स्वमुखं विधाय सा निरूपयन्तीव विशेषमेतयोः ॥ ५० ॥

मणीति । मणीसनाभौ मौक्तिकादिरत्नतुल्ये निर्मले मुकुरस्य मण्डले दर्पणतले पुनर्निजास्यस्य स्वमुखस्य दर्पणमण्डलान्तःप्रतिबिम्बं पश्यतीत्येवंशीला दर्शिनी सा भैमी मुखं विधोः दर्पणरूपस्य प्रतिबिम्बरूपस्य वा चन्द्रस्य अदूरं निकटवर्त्ति विधाय कृत्वा एतयोर्मुखचन्द्रयोर्विशेषं तारतम्यं निरूपयन्तीव विचारयन्तीव बभौ । सन्निधौ हि विशेषः स्फुरति । बिम्बापेक्षया प्रतिबिम्बस्य न्यूनत्वात्तस्यैव चन्द्रत्वमिति विशेषो निरूपित इति भावः । भूषणानन्तरमादर्शविलोकनमिति स्त्रीजातिस्वभावः । प्रतिबिम्बदर्शिनी । आभीक्ष्ण्ये णिनिः ॥ ५० ॥

जितस्त्वयास्येन कलानिधिर्दधे द्विचन्द्रधीसाक्षिककायमायताम् । तथापि जिग्ये युगपत् सखीयुगप्रदर्शितादर्शबहूभविष्णुना ॥ ५१ ॥

जित इति । तया आस्येन जितः कलानिधिश्चन्द्रो नेत्रावष्टम्भकरणादिनिमित्ता हस्तस्थितादर्शनिमित्ता वा द्वौ चन्द्राविति धीर्यस्य पुरुषस्य स एव साक्षी साक्षाद्द्रष्टा यस्याः सा माया यस्यैवम्भूतः कायो यस्य चन्द्रस्य तस्य भावस्तत्ता तां दधे चकार । एकस्मादहं भैमीमुखेन जित इति मायामयानेककायत्वं चन्द्रेण धृत इत्यर्थः । अत्र च पूर्वोक्तप्रकारद्वयेन भासितौ द्वौ चन्द्राविति बुद्धिरेव प्रमाणम् । कलानिधिपदेनानेकशिल्पज्ञत्वान्मायिककायव्यूहनिर्माणकलामपि वेत्तीति सूचितम् । द्वाभ्यामेकजयस्य सुकरत्वात् करस्थितादर्शच्छलेनानेककायत्वं यद्यप्यङ्गीकृतं तथापि युगपत् समकालं सखीयुगेन प्रकर्षेण दर्शिताभ्यामादर्शाभ्यां कृत्वा तयोर्बाहुना अनेकेनापि बहूभविष्णुना बहूभवनशीलेन सता तन्मुखेन चन्द्रो जिग्ये जित एव । हस्तस्थदर्पण

सहितसखीदर्पणद्वयं प्रतिफलितमुखप्रतिबिम्बैः सह बिम्बभूतस्य मु-
खस्यानेकत्वान्मुखतुल्यदर्पणद्वयेन सह बिम्बभूतस्य मुखस्य स्वमद्गैरा
दर्शैः स्वप्रतिबिम्बैः सह वा अनेकत्वात् पञ्चसु द्वयोर्विजयस्य सुक-
रत्वादित्यर्थः । पूर्वं शोभया जितोऽपि सङ्ख्याधिक्येन मुखं जेतुमारब्ध
वांस्तथापि मुखस्याधिकतरसङ्ख्यत्वान्न शशाकेति भावः । वर्तूलजयिष्णु
नेति चित्रः ॥ ५१ ॥

किमालियुग्मार्पितदर्पणद्वये तदास्यमेकं बहु
चान्यदम्बुजम् । हिमेषु निर्वाप्य निशासमाधि
भिस्तदीयसालोक्यमितं व्यलोक्यत ॥ ५२ ॥

किमिति । आलियुग्मेनार्पिते दर्शिते दर्पणद्वये बहुषु प्रतिबिम्बेषु
मध्ये एकमेकं सख्यापोऽन्यमथ च मुख्यं तदास्यं भैमीमुखं अन्यच्च हि-
मेषु शिशिरर्तुषु अथ च काम्येषु केदारादिहिमेषु निर्वाप्य निवार्य नि
र्वाण विनाशमथ च मोक्षं कृत्वा प्राप्येति यावत्, निशासमाधिभिः रा
त्रिसम्बन्धिभिः सङ्कोचैरथ च परमात्मध्यानोपायैः कृत्वा तदीयं भैमी
मुखसम्बन्धि सालोक्यं सादृश्यमथ च सालोक्यलक्षणां मुक्तिं इतं प्राप्तं
बहु अनेकमम्बुजं किं लोकैर्व्यलोक्यत । किमुत्प्रेक्षायाम् । भैमीमुखप्र-
तिबिम्बतो हीनत्वात् पद्मानि केदारादिहिमपूर्णानि भूत्वा तन्मु-
खप्रतिबिम्बस्य समीपे स्थितानि किमित्यर्थः । पद्मेभ्यो मुखमधिक-
मिति भावः । अम्बुजमिति जात्येकवचनम् । निर्वापयति निर्वापयतं करो
ति णयन्तात् ल्यपि निर्वाप्येति हिमेष्वात्मानं विनाश्येत्यर्थः । सालोक्यं ।
समानस्येति योगविभागात् स आदेशः ॥ ५२ ॥

पलाशदामेति शिलीमुखैर्वृता विभाम
गिरीशमकार्मुकैः । स्मराङ्गलक्ष्यैर्धनुषामसौ त
दा रतीशबन्धुस्तनयाभिरक्षिणा ॥ ५३ ॥

पलाशेति । असौ भैमी पलाशानां किंशुकानां दाम मालेयमिति
भ्रान्त्यां मिलन्त आगच्छन्तः शिलीमुखा भ्रमरा यत्रैवम्भूतेरथ च कि
शुकानां धनुराकारत्वात् मिलद्वाणैर्विंशूपामणीनां विशिष्टालङ्कारसम्ब

म्भिमाणिक्यादिरत्नाना रश्मिरूपै कार्मुकैरिन्द्रधनुर्भिर्वृता वेष्टिता स-ती तदा भूषणानन्तरकाले रतीशस्य कामस्य मनुं स्वतया परमधनस्येन वेसुना धनुषा लक्ष्यैर्लक्ष्यसहस्रधनुर्भिः सज्जि सामन्त्यै। रक्षितेव लोकैर-लक्षि तर्किता । कुत्ता प्रविशन्तीतियदुनुपा धनुर्दुरासामित्यर्थः । का न्तिभाभ्यान्निश्चलया गराहरवस्त्वनेभों कामा रक्षतात्यर्थः ॥ ५३ ॥

विशेषतीर्थैरिव जह्नुनन्दिनी गुणैरिवाजानिक
रागभूमिता । जगाम भाग्यैरिव नीतिरुज्ज्वलै
र्विभूषणैस्तत्सुषमा महार्घतां ॥ ५४ ॥

विशेषेति । तस्या भैम्या सुषमा स्वाभाविकी परमा शोभा विशि-ष्टैर्नूपुरै कृत्वा महार्घतामतिश्रैष्ठ्य जगाम । का केरिव । जह्नुनन्दि नी खल एव श्रेष्ठापि गङ्गा विशेषतीर्थैः प्रयागादिभिरिव । तथा आ-जानिकरागभूमिता जनन जन न जनो ऽजन अजनेन निर्वृत्त । ते म निर्वृत्त (पा० ५ । १ । ७९) इति ठक इकादेश अनुशतिकादित्वा-दुभयपदवृद्धि । आजानिक सहजो रागस्तस्य भूमि स्थान पुत्रादि-स्तस्य भावस्तता सहजा स्नेहपात्रता गुणै शीलसावण्यादिभिरिव । तथा नीतिरुज्ज्वलैर्नीतिसाधितफलप्रतिबन्धनाभावात् प्रकाशैर्भाग्यै पूर्वकृतशुभकर्मभिरिव । भागीरथी सर्वत्र श्रेष्ठैव पर प्रयागादौ मा-हात्म्यातिशय । यत्रानुरागस्तत्र श्रैष्ठ्य परन्तु शीलादिना सम्रागस्य निरतिशयत्व । तथा नीतिमार्गानुसरण श्रेष्ठमेव परन्तूज्ज्वलैर्भाग्यैर-नुगृहीत श्रेष्ठतर भवतीत्यर्थ । सवहनैस्तस्यानिरतिशया शोभाऽभूदि-ति भाव । उज्ज्वलैरिति उपमानोपमेयै सम्बन्धनीय । अशुभकर्म-णाऽपि भाग्यस्याभिधायकत्वात् तन्निवृत्त्यर्थं भाग्यविशेषणमेव वा । उ पमानत्रयेण क्रमेण पावित्र्य गुणवत्त्व भाग्यवत्त्वञ्च सूचित । विशि-ष्यन्ते इति विशेषा पचाद्यच् ॥ ५४ ॥

नलात् स्वश्वश्रस्त्यमनाप्तमानता नृपप्रिया भी
ममहोत्सवागताः । तदङ्घ्रिलाक्षामदधन्त मङ्ग
ल शिर.सु सिन्दूरमिव प्रियायुषे ॥ ५५ ॥

नलादिति । नलात् सकाशात् स्वस्यात्मनो वैश्वरस्य वैधव्यमनाप्तुं अप्राप्तुमानता भैमीचरणप्रणामप्रणताः भीमस्य कन्यास्वयम्वररूपे महोत्सवे आकारिताः सत्य आगता नृपप्रिया अन्यराजमहिष्यः प्रियायुषे स्वभर्तुश्चिरजीवनाय मङ्गलरूपसिन्दूरमिव स्वशिरःसु तस्या भैम्याश्चरणयोर्लोहितं अलक्तकं द्रवद्धन्तं अधारयन् । पत्युरायुर्विवृद्धये अन्याः स्त्रियः ता एव याः यथा शिरःसु सिन्दूरं धारयन्ति । तथा प्रणामप्रसन्नया भैम्या यत्पत्युः प्राणेशा रक्षणीया इति प्रार्थितो, नलः स्वप्राणेशान् रक्षिष्यतीति बुद्ध्या स्वभर्तृचिरजीवनाय भैमीचरणयोः प्रणामं कृतवत्य इति भावः । प्रणामादेव या आर्द्रा लाक्षा लग्ना । विश्रम्भाविषये समे इत्यमरः । वैश्वरस्य । ब्राह्मणादित्वात् ष्यञ् (पा० ५ । १ । १२४) । दृध धारणे, लङि ।

> हरिद्रां कुङ्कुमञ्चैव सिन्दूरं कज्जलं तथा ।
> कूर्पासकञ्च ताम्बूलं माङ्गल्याभरणं शुभम् ॥
> केशसंस्कारकबरीकरकर्णविभूषणम् ।
> भर्तुरायुष्यमिच्छन्ती दूषयेन्न पतिव्रता ॥

इति स्कान्दवचनम् ॥ ५५ ॥

अमोघतां तेन समागताङ्गनाः प्रसन्नगीर्वाण
वराक्षरस्रजाम् । ततः प्रणम्याधिजगाम सा ह्रि
या गुरुर्गुरूणां पतिव्रताशिषः ॥ ५६ ॥

अमोघेति । ततो मण्डमानन्तर प्रणम्य कृतगुर्वादिचरणप्रणामा सती ह्रिया गुरुः अधिकलज्जेत्यर्थः, सा भैमी गुर्वोः पूज्यतमयोः पितृमात्रोः ब्राह्मणानां वाङ्मनःकायकर्मभिः पतिमनभिचरन्तीनां पतिव्रतानां वृद्धाङ्गनानामनुयायिनीनाञ्च अविधवा सुभगा बहुपुत्रा भवेति आशिषः अधिजगाम अलभत । किम्भूता आशिषः । अमोघभावेन सफलत्वेन प्रसन्नाना गीर्वाणानां देवानां पूर्वोक्ता वराक्षरसम्बन्धिन्योऽक्षरस्रजो वर्णमालास्ताभिः समानितां तत्तुल्यं गताः प्राप्ताः, सत्यत्वेन तत्तुल्याः ॥ ५६ ॥

तथैव तत्कालमथानुजीविभि प्रसाधनासज्जन शिल्पपारगैः । निजस्य पाणिग्रहणक्षणोचिता कृता नलस्यापि विभोर्विभूषणा ॥ ५७ ॥

तथैवेति । तथैव भैम्या वेदिकोद्दे यथा मङ्गलस्नानादिकृत तेनैव प्रकारेण क्रमेण च तत्कालं तस्मिन्नेव कालेऽथ मङ्गलस्नानानन्तर प्रसाधनासज्जन भूषणकरण तत्सम्बन्धि शिल्प विज्ञान कौशल तस्य पारगै विशेषविशेषज्ञै शृङ्गारादिभि अनुजीविभि सेवकैर्निजस्य विभा स्व-स्वामिनो नलस्यापि पाणिग्रहणक्षणोचिता विवाहकाले योग्या विवा-हरूपोत्सवयोग्या या विभूषणा कृता रचिता । निजस्येति स्वयप्रवृत्ति सूचिता । विभोरित्यविलम्ब सूचित । भूषयतिशुरादि तस्माद्युच् ५७

नृपस्य तत्राधिकृता पुनः पुनर्विचार्य तान् व न्धमवापयन् कचान् । कलापलीलोपनिधिर्ग रुत्यज स यैरपालापि कलापिससदः ॥ ५८ ॥

श्लोकद्वयेन केशप्रसाधनमाह । नृपस्येति । तत्र केशप्रसाधनेऽधिकृ ता नापितादय पुन पुन यथायथ धूपजधूमसशोषण कङ्कतिकादिना प्रसाधन कृत्वा अथ च धूपजधूमस्यापि विद्यमानत्वात् पुन पुनस्त दुन्नानत्वशादते केशा अद्य न धूम इति विचारितस्य कानि पुष्पा-णि कुत्र स्थाप्यानीति योग्यायोग्यत्वाय विचार्य या नृपस्य तान् या धान् धम्मिल्लादिरचनाविशेषप्रन्थिरूप बन्ध धन्धायवन प्रापयामासु । तान् कान् । यै कचै शरदि गरुत त्यजति गरुत्यक् तस्य क लापिससदो मयूरसङ्घस्य मध्यगो कलापलीलोपनिधि कलापलीलाया उपनिधि सम्यगपालापि आच्छादित, तदपनयाधिकेशीतमित्यर्थः । कलापलीलारूपो य उपनिधि कविसमयसिद्ध प्रतिनिधि स यैरा-च्छादि जित इत्येतय इति वा । नलकेशैर्विलासस्य गृहीतत्वात नि-विलासतया निरर्थक बर्हिभार त्यजति इति सूचनाद्गरुत्यज इति पद साभिप्राय । यै कचैः पक्षत्यागिन्या मयूरसहते कलापशोभानिक्षेप एवालापि गृहीत्वा नास्तीत्यपलापित । य परस्य निक्षेप गृहीत्वा

न दृश्या परं प्रतारयन्ति न राज्ञोऽधिकृते पुरुषे यथाहृष्टा शिखिनो या भवति । मयूरा शरदि पक्षान्मुञ्चन्ति । पृमानुपनिधिन्याँस इत्यमर । अयापयन् । अमोतेर्यन्ताल् लुङि द्वितीयस्यैकाचो द्वित्वं गत्वं धंत्वादणौ कर्तुर्यौ कर्मत्वम् । अलम्भयन्निति वा पाठ ॥ ५८ ॥

पतत्त्रिणां द्राघिमशालिना धनुर्गुणेन सयोगजुषां मनोभुवः । कचेन तस्यार्जितमार्जनश्रिया समेत्य सौभाग्यमलम्भि कुड्मलैः ॥ ५९ ॥

पतत्त्रिणामिति । अर्जिता लब्धा मार्जनश्रीरभ्यङ्गजनिता स्निग्धशोभा येन । तथा द्राघिम्णा शालते श्लाघ्यशीलेन तस्य नलस्य कचेन केशपाशेन सह समेत्य सम्बन्धं प्राप्य कुड्मलैर्मञ्जिकादिकोरकैः कर्तृभिः, द्राघिमशालिना तथा ऽर्जितमार्जनश्रिया पुनः पुनः अङ्गुल्यादिना प्रयत्नाञ्छ्यनात्मनसम्बन्धिस्निग्धशोभेनेव भ्रमरमालारूपेण धनुर्गुणेन संयोगजुषां सङ्गतानां मनोभुवः कामस्य पतत्त्रिणां सौभाग्यं सादृश्यमलम्भि केशपाशस्य भ्रमरमालारूपस्य कामधनुर्गुणेन साम्य । कोरकाणाञ्च पुष्परूपैर्बाणैर्नलस्य च कामेनेत्यर्थ । अतिविशालनीलतलकरालिकाङ्कुलकेशपाशदर्शनमात्रेण भैमी कामवशा भविष्यतीति भाव । कचेन । जात्येकवचनम् ॥ ५९ ॥

अनर्घ्यरत्नौघमयेन मण्डितो रराज राजा मुकुटेन मूर्द्धनि । वनीपकानां स हि कल्पभूरुहस्ततो विमुञ्चन्निव मञ्जुमञ्जरीम् ॥ ६० ॥

मुकुटमधमनाह । अनर्घ्येति ॥ अनर्घ्यरत्नौघमयेन अमूल्यदिव्यमाणिक्यादिरत्नघटितेन मुकुटेन मूर्द्धनि मण्डितो राजा स नल हि यस्माद्वनीपकानां याचकानां अतिधनदानात् कल्पभूरुहः कल्पवृक्षस्ततो हेतोः मञ्जुमञ्जरीं कल्पवृक्षोचितां रम्यां रत्नाङ्कुरपरम्परां विमुञ्चन्निव रराज । वृक्षो हि यावत्पल्लवपुष्पफलयुक्ता मञ्जरीर्मुञ्चति । कल्पवृक्षस्य मञ्जरी रत्नमय्याद्युचिता । मञ्जरीस्थाने मुकुटहारिकरत्न च । मञ्जर्याकारा मुकुटमणिकिरणा ऊर्ध्वं निर्गच्छन्तीत्यर्थ । अ-

पंनइंसीत्यर्थे दण्डादित्वाद्यः । मञ्जुरीरिति च पाठः ॥ ६० ॥

नलस्य भाले मणिवीरपट्टिकानिभेन लग्नः प
रिधिर्विधोर्बभौ । तदा ग्रथाङ्काधिकरूपतां गते
तदानने मातुमशक्नुवन्निव ॥ ६१ ॥

भालप्रसाधनमाह । नलस्येति । रत्नरचितायां वीरसम्बन्धिन्या वीरपुरुषधार्यया वीरपट्टिकाभिख्यायां वेऽऽव्यालायाः सुवर्णपट्टिकायाः श्रवणयुगपर्यन्तानमात्रव्यापिन्या निभेन व्याजेन नलस्य भाले ललाटे लग्न सन् विधोश्चन्द्रस्य परिवेषो बभौ । मुखचन्द्रेऽपि चेत् परिवेषः सम्पूर्णमण्डले किमिति न दृश्यत इत्यत आह । किं कुर्वन्निव । तदा प्रियासङ्गमकाले भूषणकाले च हर्षवशाद् यथावशाच्च ग्रथाङ्काधिकरूपता चन्द्रापेक्षयाधिकपरिमाणत्वं गते प्राप्ते तदानने मातुं तुल्यप्रमाणत्वाद्व मातुमशक्नुवन्निव । अल्पपरिमाणस्य यदलङ्करणं तदधिकपरिमाणस्यैकदेश एव तिष्ठति न तु सर्वं मण्डयितुं शक्नोति तस्मात् मुखैकदेशे भाल एव परिधिः स्थित इति युक्तमिति भावः । मणिकिरणानां मण्डलाकारत्वेन पट्टिकायाः परिवेषाकारत्वं युक्तम् । ध्याप्तिनुद्वन्निति च पाठः ॥ ६१ ॥

बभूव भैम्याः खलु मानसौकसं जिघांसतो धै
र्य्यभरं मनोभुवः । उपभ्रुनद्भ्रुलचित्ररूपिणी
धनुःसमीपे गुलिकेव सम्भृता ॥ ६२ ॥

श्लोकद्वयेन तिलकं वर्णयति । बभूवेति । मनोभुवो धनुःसमीपे सम्भृता सज्जीकृता उपभ्रु भ्रुवो समीपे तस्य नलस्य भ्रुवोः चित्रतिलकरूपिणी गुलिकेव मृन्मयगोलक इव बभूव । किम्भूतस्य । भैम्या मानसौकसं मनसि वर्तमानं धैर्यभरं धैर्यबाहुल्यमथ च धैर्यभरमेव मानससरोनिवासिनं हंस पक्षित्वात्सविद्यते धैर्यभरो यस्यैवंविध वा हंस जिघांसतो हन्तुमिच्छतः । भ्रुवो. कामधनुरत्वं तिलकस्य च गुलिकात्वं । भ्रूसमीपस्थितवर्तुलतिलकदर्शनमात्रेण भैमी कामवशा भविष्यतीति भावः । अन्योऽपि हंस हन्तुमिच्छन् क्षत्रियो

धनुषि गुलिका सन्यते । राघश्च तिलको वृत्तो वर्त्तुलो नृपवैश्ययोरिति वचनात् । नानसीकारत्वोत्प्रेक्षाया खलु । चित्र स्यादङ्गनालेख्यतिलकेष्विति विश्वः । चित्रञ्च तद्रूपञ्चेति कर्म्मधारयादिनियां । चित्रकूपतेति वा पाठे तिलकस्वरूपतेत्यर्थः ॥ ६२ ॥

अचुम्बि या चन्दनबिन्दुमण्डली नलीयवक्त्रेण
सरोजतर्जिना । श्रियं श्रिता का च न तारका
सखीकृता शशाङ्कस्य तयाङ्कवर्त्तिनी ॥ ६३ ॥

अचुम्बीति । वृत्तत्वादिना गुणेन सरोजतर्जिना कमलजैत्रेण तदधिकेनापि च कमलतर्जनवशादेव चन्द्ररूपेण नलीयेन वक्त्रेण या चन्दनबिन्दुमण्डली मण्डलाकारचन्दनतिलकं अचुम्बि चिह्निता, तया चन्दनबिन्दुमण्डल्या चन्द्रस्येव सखी श्रियं श्रिता सलक्ष्मीका का च न रोहिण्यादिमध्ये तारका शशाङ्कवर्त्तिनी मध्यवर्त्तिनीकृता । तथा चन्द्रमध्यवर्त्तिनी का च न सश्रीका तारका स्वस्य सखी सहचरी कृता सा तत्तुल्या जातेत्यर्थ इति वा । का च न कापि तारका सखी न कृता किन्तु या का च न चन्द्राङ्कवर्त्तिनी भवन् सा सर्व्वापि सख्येव कृतेति वा । सरोजतर्जिनचन्द्रस्य मध्यवर्त्तिना रोहिण्यादिभर्वेष्टितं चन्दनवृत्ततिलकसरोजतर्जी नलमुखचन्द्रस्तत्तुल्यो भवेन्न चैवमित्यर्थः । तदा तन्मुखपद्मचन्द्राभ्यामधिकतरं जातमिति भावः । कान्त्येति पाठे अतिशयिता श्रियं श्रिता ॥ ६३ ॥

न यावदग्निन्नममेत्युदूढतां नलस्य भैमीति ह
रेर्दुराशया । स बिन्दुरिन्दुः प्रहितः किमस्य सा
न वेत्ति भाले पठितुं लिपीमिव ॥ ६४ ॥

नेति । हरेरिन्द्रस्य इति एवम्पया दुराशया अनुपपद्यमानाशयाविसम्बिन्धयाम्स नलस्य भाले ललाटे सा भैमी किमस्मि न वेत्ति मद्विज्ञानरूपां लिपीं अक्षरलिपीं भालपट्टिकां सन्देशनिराशाय स्पष्टम्पठितुं वाचयितुं स चन्दनबिन्दुरिन्दुश्चन्द्रः प्रहितः प्रेषित इव इत्यु-

त्प्रेक्षा । इति किं । भैमी यावदग्निभ्रम अग्निप्रदक्षिणीकरणपर्यन्त नलस्य पदूढता परिणीतता भार्यात्व नैति गच्छतीति । यद्यपि स्वय म्बरो जातस्तथापि यावत्सप्तपदी गमन भैमी नलभार्या न भवती-त्यन्द्रस्य दुराशया स बिन्दुचन्द्र एव प्रहित किं । पतित्वं सप्तमे पदे इति स्मृतिप्रामाण्यादाह यावदग्निभ्रमणा भैमी नलभक्ता नैति । प्रशस्तलिपेर्निश्चय चन्द्रद्वारा कुर्याः त्वमप्यस्यैव प्रयतामह इति दुरा-शया लिपिवाचनार्थं प्रेपितो ललाटे स्थितचन्द्र इव तिलको रराज इति भाव । यावदग्निभ्रमणमव्ययीभाव । लिपौं । कृदिकारादिती-कार (पा० ४ । १ । ४५ । सि० कौ) ॥ ६४ ॥

कपोलपालीजनितानुबिम्बयोः समागमात् कु
ण्डलमण्डलद्वयी । नलस्य तत्कालमवाप चित्त
भूरथस्फुरच्चक्रचतुष्कचारुतां ॥ ६५ ॥

कर्णभूषण वर्णयति । कपोलेति । तत्काल तस्मिन्नुपयमसमये नल स्य कुण्डलमण्डलद्वयी कर्णभूषणीभूतमण्डलाकारकुण्डलद्वयी कपोल-पाल्या प्रशस्तातिस्वच्छनलकपोलयुग्म जातौ निजौ स्वीयौ अनुबिम्बौ प्रतिबिम्बौ तयो समागमात् सम्बन्धाद्धेतोश्चित्तभूरथे कामरथे स्फुर-द्विलसत् चक्रचतुष्क तस्य चारुता सौन्दर्यमवाप । रथश्चतुश्चक्रो भव-ति । पाली फलक, चतुष्क परिमाणोपाधिके सङ्ख्यायै । सङ्ख्याया सञ्ज्ञा सङ्घेति (पा० ५ । १ । ५८) कन । तत्र प्राणिसङ्घे यद्यपि प्रत्य-यस्तथाप्यत्रौपचारिक प्रयोग ६५ ॥

श्रितास्य कण्ठ गुरुविप्रवन्दनाद्विनम्रमौलेश्चिबु
काग्रचुम्बिनी । स्रवाप मुक्तावलिरास्यचन्द्रमः
स्रवत्सुधातुन्दिलबिन्दुवृन्दतां ॥ ६६ ॥

श्रितेति । अस्य कण्ठ श्रिता मुक्तावलि मौक्तिकहारलता आस्यमेव चन्द्रमास्तस्मात स्रवन्ती या सुधा तस्यास्तुन्दिल स्थूल बिन्दुवृन्द तस्य भावस्तत्ता तामवाप । किम्भूतस्य । गुरूणा पित्रादीना विप्राणाञ्च वन्दनया विनम्रो मौलिर्यस्य अत एव किम्भूता हारावली चिबुका-

प्रचुम्बिनी स्वन्वयस्पर्शिनी । मुक्तानां स्थूलत्वं वर्तुलत्वं च सूचितं । पूर्व चन्द्रदर्शनयमलदर्शनाद्गुर्वादीनां प्रीतिर्जातेति भावः ॥ ६६ ॥

यतो ऽजनि श्रीर्बलवान् बलं द्विषन् घनूत्र य
स्याजिषु वारणेन सः । अपूपुरत्तान् कमला
र्थिनो घनान् समुद्रभावं स बभार तद्भुजः ६७॥

श्लोकत्रयेण नलभुजं वर्णयति । यदिति । स तद्भुजो नलभुजो मुद्राभिरङ्गुलीयकैः सहितः समुद्रस्तस्य भावं अथ च दण्डयद्दण्डनादि राजधर्मपरिपालनान्मुद्रा नियमस्तत्साहित्यं बभार भेजे । ऊर्मिका दधारेति भाव. । स कः । यतः यस्माद्भुजाद्धेतोः श्रीः शोभा राज्यलक्ष्मीर्वा अजनि तत्पन्ना । तथा आजिषु यस्य भुजस्य वारणेन यत्कर्त्रा शत्रुविमर्दनेन कृत्वा बलं शत्रुसैन्यं द्विषन् पराभावुकः सन् स न. लो बलवानुत्साहयुक्तः शक्तियुक्तो वा बभूव । यत्कृतनिवारणेन बलवान् शत्रुसैन्यं पराभावुकोऽभूदिति वा । वाशब्दश्चार्थे । ततश्चाजिषु बलं द्विषन् न नलो यस्य यत्कर्तृकेण सङ्ग्रामेण बलवानभूदिति भाव. । शत्रुसैन्यं द्विषन् न प्रसिद्धोऽतिबलोऽपि शत्रुः सङ्ग्रामेषु यस्य कर्मभूतस्य वारणे निराकरणे बलवान् न बभूवेति वा । आजिषु बलं द्विषन् न च प्रसिद्धः शत्रुर्यस्य सङ्ग्रामे विषये बलवानभूदिति वा । वारणानामिन. स्वामी वारणेनवासौ स च अतिप्रसिद्ध ऐरावतः स वारणेनः सः यस्य नलभुजस्य द्विषन् बलेन सह स्पर्धमानः सङ्ग्रामेषु बलवानभून् । ऐरावतोऽप्यमुमेतद्भुजजयनस्पर्धया बलवत्त्वप्रतिष्ठा लेभे । व रं विरोधोऽपि सर्व महात्मभिरितिन्यायादिति भाव इति वा । सङ्ग्रामेषु बलं दैत्यं पराभावुकः स इन्द्रोऽपि यस्याजिषु येन सङ्गेन सह स ङ्गमे बलवानभूत् इन्द्रादप्ययं बली इति भाव इति वा । अनयोर्भेदा द्वनन बलः बलाबलं तद्वा, सङ्ग्रामेषु यत्कृतेन निवारणेन स बलारातिरपि बलवान् बलायनपरोऽभूत् न तु स्थातुं शक्त इति वा । यत्कर्मातिप्रसिद्धान् घनान् बहून् कमला लक्ष्मीमर्थयन्ते तथ शीलान् या चकान् अपूपुरत् परिपूर्णीचकार अतिवदान्य इत्यर्थः । बहून् सुन्दरव

धुकाद्विजो वरान् यः पपार, बहवो ब्राह्मणा येन विवाहिता इत्यर्थः इति वा। अथ च सागरस्य तेजो यस्मात्सागराल्लक्ष्मीरजनि यदुत्पन्नेन वारुणैरावणाद्येन सकलाराति: आजिषु सबलानभून्। पक्ष वृष्ट्यर्थं जलाभिलाषिणो मेघान् पूरयति। नामनामाङ्किता मुद्रिका मुद्रा। यदुद्गता, पपार यस्तानिति च पाठः। सलिलं कमलं जलमित्यमरः। कमला श्रीधरप्रियोरिति विश्वः। बलन बलः। घञर्थे कविधानात्कः। अपपूरदिति पूरयते लुङि ह्रस्वे, दीर्घो लघोरिति (पा० ७।४।९४) अभ्यासस्य दीर्घः। पपार, पृधातोः पूरणार्थाल्लिट्, इट बाधित्वा परत्वाद् वृद्धि ॥ ६७ ॥

कृतार्थयन्नर्थिजनाननारतं यदत्र तस्यामरभूरुहः करः। तदीयमूले निहितं द्वितीयवद् ध्रुवं दधे कङ्कणमालवालताम् ॥ ६८ ॥

कृतेति। तस्य करः अमरभूरुहः कल्पवृक्षो यतः अत्रैव। किं कुर्वन् अर्थिजनान् याचकलोकान् बहुधनदानादनारतं सदा कृतार्थयन् प्राप्तप्रयोजनान् कुर्वन्। तस्मात्मणिबन्धरूपे तदीयकरमूले निहितं स्थापितं द्वितीयवद्द्वितीयेन वैवाहिकेन सूत्रमयेन माङ्गलिकेन कङ्कणेन युक्तं मौक्तिकं कङ्कणमालवालता दधे तदीयकरकल्पतरोः कङ्कणमालवालस्थाने जातमित्यर्थः। वृक्षमूले बालवालद्वयं भवति। निशितमुद्रिकाद्वयवत् द्वयोर्मिलितयोर्घटनात् द्वितीयवदिति वा। ध्रुवमुत्प्रेक्षायां। विनिवेशितं तदेति पाठः साधु ॥ ६८ ॥

रराज दोर्मण्डनमण्डलीजुषोः स वज्रमाणिक्यसितारुणत्विषोः। मिषेण बिभ्रन् दशदिङ्मुखोन्मुखौ यशःप्रतापाववनीजयार्जितौ ॥ ६९ ॥

रराजेति। स नलः रराज। किं कुर्वन्निव। दोर्मण्डनं बाहुभूषणं तस्य मण्डलीं श्रेणीं जुषेते इति जुषौ तयोरङ्गदादिवत् बाहुभूषणयोर्वज्रमाणिक्ययोः क्रमेण सितारुणत्विषोः श्वेतरक्तदीप्त्योर्मिषेणाध्वोर्ध्वोदिक्सहितप्राच्यादिदशदिक्षु सम्मुखौ तत्र प्रसरन्तौ अवनी-

जयेन। जित्वा क्रमेण यश्च प्रतापी वर्षन् प्रसारयन्निव। क्षीरक्षमाणिक्यानां मण्डनाश्रितत्वात् तद्द्वयोरपि मण्डनाश्रितत्वं युक्तं। यत्र प्रतापौ सितरक्तशोभाविति कविसङ्केतः। इवाध्याहार ॥ ६९ ॥

घने समस्तापघनावलम्बिनां विभूषणानां मणि
मण्डले नलः । स्वरूपरेखामवलोक्य निष्फलीच
कार सेवाचणदर्पणार्पणं ॥ ७० ॥

घन इति। नलः समस्ता ये अपघनाः हस्तमस्तकाद्यङ्गानि तान-वलम्बन्ते एव शीलानि तत्र स्थितानि तेषां विभूषणानां घने सान्द्रे मणिमण्डले रत्नसङ्घे स्वरूपस्य स्वाकारस्य रेखां परमां शोभां स्वलावण्यपरमां मर्य्यादां वावलोक्य सेवायां चणाः प्रसिद्धाः सेवाचतुरा नापितादयस्तेषां दर्पणार्पणं प्रतिबिम्बदर्शनार्थं मुकुरार्पणं निष्फलीचकार। आदर्शकृत्यस्य रत्नैरेव कृतत्वादिति भावः। मङ्गलमादर्शं इति बुद्ध्या तैर्दर्पणमानीतं तेन च विलोकितं इति तेषां सेवाचातुर्यं। सेवाचणेति तेनवित्त (पा० ५।२।२६) इति चणप् ॥ ७० ॥

व्यलोकि लोकेन न केवलं चलन्मुदा तदीयाभ
रणार्पणद्युतिः । अदर्शि विस्फारितरत्नलोचनैः
परस्परेणैव विभूषणैरपि ॥ ७१ ॥

व्यलोकीति। चलन्ती व्याघुट्य व्याघुट्योत्पद्यमाना मुत् यस्य तेन निरन्तरहर्षेण लोकेन तदीयानां नलीयानां आभरणानां अर्पणद्युतिः संस्थानविशेषे स्थापनेन कृता शोभा केवलं न व्यलोकि किन्तु विस्फारितानि प्रसारितकिरणानि रत्नान्येव लोचनानि येषां तैर्विस्फारितैरत्नलोचनैः एतस्य वा अचेतनैर्विभूषणैरपि परस्परेणान्योन्यस्यादर्शीव विलोकितेव अन्योन्यशोभाविलोकनार्थं अचेतनैरपि तैर्नेत्राणि प्रसारितानीत्यर्थं। आभरणशोभा सर्वैर्विलोकिता मण्डनमात्रं एव वितरतीति भावः ॥ ७१ ॥

ततो नु वार्ष्णेयनियन्तृकं रथं युधि क्षतारिक्षि

तिरूजयद्रथः । नृपः पृथासूनुरिवाधिरूढवान्
स जन्यपात्रामुदितः किरीटवान् ॥ ७२ ।

तत इति । ततो भूपलधारणादनु पश्चात् स नलो नृप पार्थेऽधमा नियन्ता सारथिरस्य, अथ च कृष्ण सारथिर्यस्य त रथ किरीटवान् सत्नकिरीटयोगात् किरीटिनामा पृथासूनुरर्जुन इवारूढवान् । किम्भूतो नलो मर्जुनश्च । युधि हता भङ्ग प्रापिता अरिक्षितिभृता वैरिनृपाणा जयन्ता जयदातारो ऽपि रथा येन । हतवैरिनृपश्चासौ जय द्रिपुरथो यस्येति वा । हता वैरिनृपाणा जयन्तो रथा तान्यया मार्गा दित्याद्वा महारथातिरथार्द्धरथप्रमुखा याधा येनेति वा । अर्जुनपक्षे युद्धे हतो ऽभिमन्युवधादरि शत्रुभूत क्षितिभृद्राजा जयद्रथो यन । हतोऽरीणा कौरवाणा सम्बन्धी राजा जयद्रथो येनेति वा । तथा ग मी वधूर्महती जन्यो वरस्तत्सम्बन्धिन्या यात्रया मुदितो हृष्ट । तन्त्या वरपक्षीयास्ते सह यात्रया वा हृष्ट । अथ च युद्धसम्बन्धिन्या विज ययात्रया हृष्ट । तथा मुकुटेन सहित वरयात्रार्थं निर्गत इत्यर्थ । पार्थोऽयम् । पृथोरपत्य इतश्चानिञ (पा० ४ । १ । १२२) इति ढक् । नि यन्तृक । नद्यृतश्चेति (पा० ५ । ४ । १५३) कप् ॥ ७२ ॥

विदर्भनाम्नस्त्रिदिवस्य वीक्षितु रसोदयादप्सरस
स्तमुज्ज्वल । गृहाद्गृहादेत्य धृतप्रसाधना व्य
राजयन् राजपथानथाधिक ॥ ७३ ॥

इदानीं वरसन्दर्शनार्थं पुरनारीसम्भ्रममाह । विदर्भेति । अथ र- थारोहणानन्तर विदर्भेति नाम त्रिदिवस्य कुण्डिनरूपस्य स्वर्गस्याप्सर स सुन्दरनार्य एव स्वर्वेश्या उज्ज्वल प्रकाशमान मूर्त शृङ्गाररूप वा त नल रसादनुदर्शनानुरागाभिवृद्धिहेतोर्वीक्षितु विशेषेण द्रष्टु धृतप्र साधना सालङ्काराः सत्य गृहात् गृहादेत्यागत्य निजगरम्यान् राजप- थान् अधिक नितरा व्यराजयन् तद्योगात्तेऽप्यधिक शुशुभिरे इत्यर्थ । तासामतिसौन्दर्यमुक्तम् । सर्वाऽपि तद्दर्शनार्थमागता इति भाव ७३

अजानती कापि विलोकनोत्सुका समीरधूतार्द्ध.

मपि स्तनांशुकं । कुचेन तस्मै चलतेऽकरोत् पुरः पुराङ्गना मङ्गलकुम्भसम्भृतिं ॥ ७४ ॥

अजानतीति । अन्यस्य दर्शनोन्मुखी अत एव समीरेण धूतार्द्धं कम्पितार्द्धमपि स्तनांशुकं चोलकाख्यं कुचावरणवस्त्रम् अजानती अनावृणवती कापि पुराङ्गना चलते वरयात्रोन्मुखाय तस्मै नलाय पुरोऽग्रभागे कुचेन कृत्वा मङ्गलकुम्भस्य शुभसूचककलशपूर्णकुम्भस्य सम्भृतिं सम्भारमुपदामकरोत् । समीरधूतत्वमनेनाचेतनस्याप्यनुरागोत्पादनात् कुचस्यातिसौन्दर्यमिति च व्यज्यते । वरस्य च पुरः पूर्णकलशदर्शनेन शुभाय भवति । तस्मै । क्रियया यमभिप्रैति स सम्प्रदानम् ॥ ७४ ॥

सखीं नलं दर्शयमानयाहृतो जवादुदस्तस्य करस्य कङ्कणे । विपद्य हारैस्त्रुटितैरतर्कितैः कृतं कयापि क्षणलाजमोक्षणं ॥ ७५ ॥

सखीमिति । सोऽयं नलः समागच्छतीत्येवं करेण सखीं नलं दर्शयमानया दर्शयन्त्या कयापि प्रदर्शनार्थमेवाहृत करकङ्कणात् सकाशाज्जवाद्वेगादुदस्तस्य करस्य सुवर्णहीरकधारातीक्ष्णाग्रभागे कङ्कणाख्ये भूषणे विपद्य वेगाभिघातवशाद्भग्नत्वा त्रुटितैश्छिन्नैर्हारैर्नलविलोकनरसादतर्कितैरज्ञातविच्छेदाश्च पतनैर्हारैस्तदीयमुक्ताफलैः कृत्वा क्षणमात्रमेव क्षणमसम्बन्धि वा लाजमोक्षणं कृतम् । अन्यरमणीभिरन्तः क्रियमाणलाजमोक्षणमध्ये मौक्तिकमोक्षणमपि तद्वत्कार्यमभूदित्यर्थः । दर्शयमानया । णिचश्चेति (पा० १ । ३ । ७४) कर्त्रभिप्राये क्रियाफले आणिचि हृक्रोरित्यत्र अभिवादिदृशोरात्मनेपदे वेति वक्तव्यात् (पा० १ । ४ । ५३ । वा०) द्विकर्मकत्वात् सखीमिति कर्मत्वं । सखीरिति वा पाठः ॥ ७५ ॥

उसन्तसादर्शमुखाम्बुजास्मितप्रसूनवाणीमधुपाणिपद्मयम् । वियासतस्तस्य नृपस्य जज्ञिरे प्रशस्तवस्तूनि तदेव वीक्षतं ॥ ७६ ॥

लसदिति । तत् युवतीनां समूहो यौवतमेव यियासतोः यरयात्रो न्मुखस्य तस्य नृपस्य प्रशस्तवस्तूनि शुभसूचकमङ्गलद्रव्याणि जज्ञिरे । किम्भूतं । नखा एवादर्शो मुखान्येवाम्बुजानि स्मितान्येव प्रसूनानि पुष्पाणि वाच एव मधूनि पाणय एव पल्लवानि इतरेतरयोगद्वन्द्वः समाहारो वा लसन्तः स्फुरत्कान्तयो नखादर्शादयो यस्य तत् । एवंविधपुरनारीदर्शनाद्भैमीपाणिग्रहो नितरां मम शुभायैव भविष्यतीति तस्य बुद्धिरुदभूदिति भावः । अतिसौन्दर्य्यं तासां सूचितं । दध्यक्षतादर्शादिदर्शनं शुभावहमिति वसन्तराजग्रन्थे द्रष्टव्यम् । आरोप्यमाणस्य प्राधान्याज्जज्ञिरे इति बहुवचनम् ॥ ७६ ॥

करस्थताम्बूलजिघत्सुरेकिका विलोकनैकाग्रविलोचनोत्पला । मुखे निचिक्षेप मुखद्विराजता रुषेव लीलाकमलं विलासिनी ॥ ७७ ॥

करेति । एकिका कापि विलासिनी पुरनारी करस्थं ताम्बूलं जिघत्सुर्भक्षयितुमिच्छुः सती करस्थलीलाकमलं मुखे निचिक्षेप । यतो नलविलोकनं विषये एकाग्रे तत्परे विलोचनोत्पले यस्याः सा । ताम्बूलभ्रान्त्या कमलं मुखे निक्षिप्तमित्यर्थः । कथेव मुखलक्षणे राजनि विद्यमाने कमलस्य द्वितीया राजता तया जातया रुट् क्रोधस्तयेव एतमेन मम मुखेन सहैतत् स्पर्द्धत इति क्रोधादिव मुखे कमलं निक्षिप्तमित्यर्थः । नलसौन्दर्य्यातिशयदर्शनेन विमनस्कतोक्ता । जिघत्सुः । लुङ्सनोरित्यादिना (पा० २ । ४ । ३७) घस्लादेशो, घस्लृ अदन इत्येतस्माद्वा सनन्तादु । न लोकेति (पा० २ । ३ । ६९) षष्ठीनिषेधात्ताम्बूलं जिघत्सुरिति द्वितीयेति योगविभागात् समासः ॥ ७७ ॥

कयापि वीक्षाविमनस्कलोचने समाज एवोपपतेः समीयुषः । घनं सविघ्नं परिरम्भसाहसैस्तदा तदालोकनमन्वनूयत ॥ ७८ ॥

कयेति । कयापि स्वैरिण्या वीक्षया नलदर्शनेन विमनस्के त्यक्तविषयान्तरे लोचने यतस्तस्मिन् समाजे जनसङ्घे एव समीयुषः समा-

विभूषणेति । अपरा अन्तःकरणे शरीरमध्ये अमान्ती सम्मद् शरीरमानाधिकमानं बहिरवस्थितं नलदर्शनजं प्रमोद विभूषणानां स्त्रमनस्य शंसने तव मयैतद् गलितं तव मयैतद् गलितमिति प्रत्येकं कथने विषयेऽपि तैर्दत्तैः करप्रहारैरपि धूननैरपि तच्छरीरकम्पनैश्च कृत्वा प्रसभं बलात्कारेण स्वसखीः पुरा सम्मापयतीव प्रावीविशदिव, विचित्तत्वेन शब्दमशृण्वन् करेण ताड्यते पतितविस्मृतभूषणादिसंवेदनाय कम्प्यते चेति । तथान्यदपि कुसूलनामनध्याद्व्रीहिधूमादि बहिरवसंस्थितं सत् बलात्कारेण करताडनैः करकृतैर्धूननैश्चान्तर्माप्यत इति च लौकिकी रीतिः । नलदर्शनानुरागादतिविमनस्का जाता इति भावः । पुरा सम्मापयतीति । पुरि लुङ् चास्मे (पा० ३ । २ । १२२) इति भूते लट् ॥ ८० ॥

वतंसनीलाम्बुरुहेण किं दृशा विलोकमाने वि
मनीबभूवतुः । अपि श्रुती दर्शनसक्तचेतसां
न तेन ते शुश्रुवतुर्मृगीदृशाम् ॥ ८१ ॥

विभूषणश्रवणशब्देन किमिति ज्ञापित इत्यत आह । वतंसेति । नलदर्शने सक्तं चेतो यासां मृगीदृशां श्रुती कर्णावपि वतंसनीलोत्पलेन कर्णभूषणनीलाम्बुरुहेणैव दृशा नेत्रेण नलं विलोकमाने सत्यौ यस्माद्विमनीबभूवतुर्व्याकुले जाते तेन हेतुना ते श्रुती किं भूषणशब्दं न शुश्रुवतुः । चक्षुषी किल श्रवणानर्हत्वान्न शृणुतां, कर्णौ तु श्रोतुं योग्यावित्यपेरर्थः । ताः सुदृश्यो यथा नलविलोकनेन विमनस्का जातास्तथा तत्कर्णावपि विमनस्कौ जाताविति वा अपेरर्थः । विमनीबभूवतुः । अरुर्मनश्चक्षु (पा० ५ । ४ । ५१) इति च्विः । सलोपश्च ॥ ८१ ॥

काश्चिन्निर्माय चक्षुःप्रसृतिचुलुकितं तास्वशङ्कं नृकान्तं
कान्ता मौग्ध्यादाचूहमोघैर्निचुलितमिव तं भू
षणानां मणीनां । साहस्रीभिर्निमेषाकृतमतिभिरयं दृग्भिरालिङ्गितः किं ज्योतिष्टोमादिय
ज्ञस्तु नफलजगतीसार्वभौमभ्रमेण ॥ ८२ ॥

रघवैः स्वं वक्षः स्वयमस्फुटन्न किमदःशस्त्राद् अपि स्फोटितं । व्यावृत्योपनतेन हा शतमखेनाद्य प्रसाद्या कथं भैम्या व्यर्थमनोरथेन च शची साची कृताक्षाम्बुजा ॥ ८५ ॥

स्मरयेति । स्मरय नलस्य चिरकालं वरणमालाक्षेपार्थमुत्कण्ठिते कण्ठे लोठिन्याश्चलन्त्या हृदयावलम्बिन्या वरणस्रजः साक्षिभिः प्रत्यक्षदर्शिभिर्निर्घृणैश्चतुर्भिरिन्द्रादिभिर्दिक्पालैस्त्रपाभावात् स्वयमस्फुटदवदीर्यमाणमपि स्वं वक्षः अमुष्य नलस्य शस्त्रादपि हेतो किमिति न स्फोटितं विदारितं नलेन सार्द्धं भैम्यर्थं युद्धमपि कृत्वा किमिति न मृतं । शूराणां रणे मरणमपि यशसे भवति न तु लज्जापरित्याग इति भावः । छुरिकादिप्रक्षेपेण स्वयमेव वा किमिति न स्फोटितमिति वा । अग्न्यादयस्तावत्तिष्ठन्तु हासोपहास कष्ट अद्य भैम्या विषये व्यर्थमनोरथेन सता व्यावृत्य परावृत्य उपनीतेन शचीसमीपे प्रणामवशाग्रेण शतमखेन शतयज्ञकरणाल्लब्धस्वर्गाधिपत्येन देवेन्द्रेणापि शचीन्द्राण्यपि च कथं प्रसाद्यानुनेतुं शक्या । यत कोपवशाद्वक्रायवशाद्वा साचीकृत वक्रीकृतमाक्षमेवाम्बुजं यया । मन्मुखमवलोकनात् प्रसादनार्थमनेन कृतमपि प्रणामाञ्जल्यादिकं न द्रक्ष्यति तत कथं प्रसाद्या । भैमी न लब्धा शची च कुपित्यपयशोऽपि जातमितीन्द्रस्य महत् कष्टं जातमिति भावः । किं तु भटे शूरैरपि स्वं वक्षः किमिति न स्फाटितं । नृपा गणुष्यान्तिष्ठन्तु देवेन्द्रस्यापीदृशी दशा जातेति वा । उपनतेति पाठे शचीसमीपे गतेनेत्यर्थः ॥ ८५ ॥

मा जानीत विदर्भजामविदुषीं कीर्त्तिं मुदः प्रेयसीं सेयं भद्रमचीकरन्मघवता न स्व द्वितीयां शचीं । कः शच्या रचयाञ्चकार चरितं काव्यं स नः कथ्यतामेतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः ॥ ८६ ॥

. मा जानीतेति । भो सख्यो यूयं विदर्भजा मुदो हर्षात् सकाशात् कीर्तिं श्रेयसीं श्रेष्ठतरामवितुर्मोमजानतीं मा जानीत किन्तु हर्षापेक्षया कीर्त्तिः प्रशस्यतरेति भैमी वेत्त्येवेति जानीत । यस्मात् सेयं भैमी मघवता प्रयोच्येत स्वमात्मानं द्वितीया शची भद्रं साधु नाधीकारत् न कारयामास । इन्द्रे वृते तत्पत्नीत्वाच्छचीसादृश्यमेव स्यात् न त्वशी वृतस्तस्माद्द्वितीया शची नाभवदिति युक्तमेव अनया कृतमित्यर्थः । इन्द्रे वृतेऽपि कीर्तिर्भविष्यतीत्याशङ्क्य नेत्याह । शच्याश्चरितं कः कविः सर्गबन्धनादिरूपेण वर्णनात्मकं काव्यं प्रबन्धं रचयाञ्चकार न शचीवर्णनकारी कोऽस्माकमग्रेऽस्मभ्यं च कथ्यतां यद्यस्ति, अपि त्वस्मि रूपणान्नास्त्येव । एतस्यास्तु भैम्याः पुनारसानां शृङ्गारादीनामेव रसा-मांसलानां पुनी नदी तस्याः पात्रे स्थानभूतेऽपि च रसनदीप्रवाहरूपे श्रीलादिचरित्रे विषये कैः पराशरव्यासशुकादिभिः काव्यं न करिष्यते-ऽपि तु तैरपि भारतादौ तद्वर्णनकाव्यं करिष्यते किं पुनः श्रीहर्षादि-कविभिरित्यर्थः । इन्द्रवरणेन यद्यपि स्वर्गसुखप्राप्तिस्तथापि तत्पत्नीत्वा च्छचीत्वेऽपि तस्याः कुत्रचित् केनाप्यवर्णितत्वादिन्द्रापेक्षयाधिककीर्तनस्य चरते पुण्यश्लोकत्वात् सर्वैरपि वर्णनीयत्वात्तत्प्रसङ्गात् स्व-स्यापि वर्णनीयत्वान्महती कीर्तिर्भविष्यति सा च स्वर्गमुदः सकाशा च्छ्रेयसीति विचार्येन्द्रपरित्यागद्वारा स्वर्गसुखमपि परित्यज्य भैम्या नलो वृत इति युक्तकारित्वादेतादृशी कापि विदुषी नास्तीति भावः । दिव इति पाठे स्वर्गसुखादित्यर्थः । करिष्यते कर्मकर्तरि लृट् ॥ ८६ ॥

वैदर्भीबहुजन्मनिर्मिततपःशिल्पेन देहश्रिया
नेत्राभ्यां स्वदते युवायमवनीवासः प्रसूनायुधः।
गीर्वाणालयसार्वभौमसुकृतप्राग्भारदुःप्रापया
येशं त्रीमजयानुभूय भजतामद्वैतमद्य त्विषां॥८७॥

वैदर्भीति । हे सख्य अवन्यां वासः स्थितिर्यस्य स प्रसूनायुध इव कामरूपोऽयं नलनामा युवा तरुणो देहश्रिया कायकान्त्या कृत्वा च-

यन्तीनामस्माकं नेत्रान्या स्वदते रोचते । किंभूतया । वैदर्भ्यो बहुजन्मनिरनेकजन्मसु वा निर्मितस्य कृच्छ्रचान्द्रायणादिजन्यस्य तपसः शुक्लस्य शिल्पेन फलभूतया । अतिसुन्दरमनु प्रीत्यास्माभिः पश्यत इत्यर्थः । विशिष्टया देहश्रियोपलक्षितो वा । अशरीराऽपि भैमीपुण्यबाहुल्यवशात् सशरीरकामश्रयेति भाव इति वा । सोऽयं नल भीमजया सह योगमद्य दाम्पत्यमस्यन्ननुभूय त्विषां कान्तिभराणामन्यत्यन्तावृत्त्वेनाद्वैत सामस्त्य भजतां आश्रयतु । उभयोरेकत्र मेलनादयमेव कान्तीनामाश्रयः कान्तिस्वरूपो वा भवतु नान्य इत्यर्थः । किंभूतया । गीर्वाणालये स्वर्गलोके सार्वभौम इन्द्रस्तस्य शुभप्राग्भार. पुण्यराशिस्तेनापि दुष्प्रापया सुलभया । शतमखजन्येन पुण्येन स्वर्गचक्रवर्तित्वं यन लब्धं तेनापि दुष्प्रापत्वाद्भैम्या सौभाग्यातिशयो नलस्य चन्द्रापेक्षया सौभाग्यातिशयः पुण्यातिशयश्च गीर्वाणालयेत्यादिना सूचित । अन्योऽप्यष्टाङ्गयोगमनुभूय बहुपुण्यदुष्प्रापयापि भीमात् हराज्जातया ईश्वरप्रसादलब्धया विद्ययाऽद्वैत परमात्मस्वरूपं भजति । नेत्रान्या । रुच्यर्थानामिति (पा० १ । ४ । ३३) सम्प्रदानत्व । प्राग्भारशु मापया । तृतीयेति योगविभागात् समास ॥ ८९ ॥

स्त्रीपुंसव्यतिषञ्जनं जनयतः पत्युः प्रजानामभूदभ्यासः परिपाकिमः किमनयोर्दाम्पत्यसम्पत्तये । आसंसारपुरन्ध्रिपूरुषमिथःप्रेमार्पणक्रीडया
प्येतज्जम्पतिगाढरागरचनात् प्राकर्षि चेतो भुवः ॥ ८० ॥

स्त्रीति । स्त्रीपुंसयो सर्वयो व्यतिषञ्जनं विशेषेणातितरां सम्मेलन जनयतः कुर्वत. प्रजानां पत्युर्ब्रह्मणः पुनरनयोर्जन्मशिक्षणलक्षणोऽभ्यासोऽनयोर्नलभैम्योर्दाम्पत्यसम्पत्तये जायापतिभावस्योत्कर्षाय परिपाकिमः परिपाकेन निर्वृत्त स्वारस्येन परिणमनया कोऽप्युत्कि, सर्वस्त्रीपुंसयोर्जन्माभ्यास अन्युत्तमगुणरूपतदुभयसङ्घट्टेन फलित किमित्यर्थः । तथा चेतोभुवः कामस्यापि आसंसार संसार मर्यादीकृत्य

सर्गादिमारभ्य प्रलयपर्य्यन्तं पुरन्ध्रिपूरुषयोः स्त्रीपुंसयोर्मिथः प्रेमा-न्योन्यमनुरागस्तस्याऽपञ्चमासञ्जन तदेव सदा मनोविनोदनरूपा क्रीडा लीला तथापि एतज्जन्मप्यत्यारमयोर्नलमैमीरूपयोर्नाटसेन्द्रेणाप्यनेन यस्य मिथोऽनुरागस्य रचनाज्जननाद्धेतोः प्राक्तर्षिं प्रकृष्टकाष्ठापन्नया जात । अनुरागजननक्रीडाया प्रकर्षोऽत्रैव विश्रान्त । तदुत्तरमप्यर्थ-मनुरागस्याजायादित्यर्थः । एतादृशौ स्वरूपौ समानानुरागी चान्यौ स्त्रीपुंसौ कालत्रये न स्त इति भावः । व्यतिषञ्जन । उपसर्गात् सुनो-तीति (पा० ८ । ३ । ६५) षत्व । पारिवाज्ञिम· । भावप्रत्ययान्तात्, पृथ्वादिभ्य (पा० ५ । १ । १२२) इति इमनिच् । जम्पती । जायापती च भार्या. ॥ ८८ ॥

ताभिर्दृश्यत एष यान् पथि महाज्यैष्ठीमहे म न्महे यद्दृग्भिः पुरुषोत्तमः परिचितः प्रागभ्यच्च मच्चत् कृतः । सा क्षीराट् पतयालुभिः शितिसितैः स्यादस्य दृक्चामरैः सस्ने माघमघाभिघातियमुनागङ्गाव्ययोगे यथा ॥ ८९ ॥

ताभिरिति । महत्या अतिप्रसिद्धाया ज्येष्ठानक्षत्रयुक्ताया ज्येष्ठपूर्णिमाया. सम्बन्धिनि महे उत्सवे, महत्यतिप्रसिद्धे वा ज्यैष्ठीमहे यद्दृग्भिर्याभिः मैत्री प्राग् जन्मान्तरेऽप्यवान्यापेक्षया प्रथम मह्य पर्यङ्कं गच्छन् प्राह गच्छन्त्यो मार्गे गच्छन् श्रीपुरुषोत्तम परिचितो बहुवार दृष्टः जनस्ताभिरेव स्त्रीभि पथि गच्छन्त्याया यान् रथस्थ आगच्छन्नेष नलः दृश्यते । जनादृक्पूरय याभिरन्याभिरित्याभिरिति ताभिरेवाथ दृष्टु शक्यो न त्वन्याभिरित्यर्थ । अथ च याभि पुरुषोत्तमो दृष्टस्ताभिरेव नल-पाऽयनपीति द्रष्टु शक्यते न त्वन्याभिरित्यर्थः । ताभिरेव याभि लाप कटाक्षैर्दृश्यते याभिरेव सुकृत कृत । अन्याभिस्तु कौतुकेनापि वीक्षितु न शक्यते किं पुन सानुराग कटाक्षैरिति ।

ऐन्द्रे गुरुः शशी चैव प्राजापत्यं रविस्तथा ।

पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठीति कीर्तितेति ॥

पुरुषोत्तमतुल्योऽयं मन्महे जानीमह इति भावः । वाक्यार्थः कर्म । उत्कलदेशे ज्यैष्ठपूर्णिमायां इन्द्रनीलगिरिनिवासिनः श्रीपुरुषोत्तमस्य महोत्सवः क्रियते । तत्र च श्रीकृष्णबलभद्रप्रमुखप्रतिमाधिष्ठिता विरचितसप्तभूमिका मञ्चाः पृथक् निर्गच्छन्तीति तस्य दर्शनं भूयसे श्रेयसे भवतीति पौराणिकाः । यदाहुः ।

दोलारूढं तु गोविन्दं मञ्चस्थं मधुसूदनं ।
रथस्थं केशवं दृष्ट्वा पुनर्जन्म न विद्यते इति ॥

यथा । यया स्त्रिया अघाभिघातिनी पातकविनाशिनी यमुना गङ्गा च तयोरेतयोर्योगे सङ्गमे प्रयागाख्ये माघ मासे मकरस्थे रवौ माघे मास्यविच्छेदेन स्नानं कृतं सास्य नलस्य पत्यालुभिरलिपङ्क्ती. शितिसितैः कृष्णधवलैर्द्वन्द्वचामरैर्नेत्रैरेव चामरैर्नेत्रव्यापाररूपैश्चामरैस्त्रीराट् स्त्रीराजैव स्यात् भवेत् इति मन्महे । राजा हि कृष्णधवलैश्चामरैर्वीज्यते । प्रयागे माघस्नानजन्यसुकृतात् स्त्री राजत्वं प्राप्नोति तत्र स्नानेन ।

सितासिते तु यै स्नानं माघमासे युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपीति ॥

वचनात् स्त्रीषु श्रेष्ठा सैव भवेदिति वचनादित्यर्थः । अयञ्च कटाक्षैर्यां पश्यति सा सर्वाभ्योऽप्यधिका सा च नैम्यैवनान्या । भैम्या च प्रयागे मकरमाघस्नानफलं लब्धं यतो भैमीसदृशी कापि कुत्रापि नास्तीति भावः । ज्यैष्ठीति । ज्यैष्ठानक्षत्रयुक्ता पौर्णमासीति । नक्षत्रेण युक्तः कालः (पा० ४ । २ । ३) इत्यणि वृद्धि । तद्युक्तमासाभिधायित्वेऽपि सास्मिन् पौर्णमासीत्यादिना (पा० ४ । २ । २१) ज्यैष्ठी इत्येव भवति । ज्यैष्ठीत्येव पाठे वृद्ध्यभावश्चिन्त्य । शब्दापूर्वस्य विपरिणितत्वाद्वृद्ध्यभाव कथञ्चित् समर्थनीय । स्त्रीराडिति सम्यत्स्य-पदत्वा निर्धारणपरत्वा वा समास । स्त्री इति पृथग्वा पद । अत एव सा स्त्रीं इत्यर्थः । अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वेत्यादि ( पा० १ । ४ । ५१ । सि० कौ० कारकप्रकरणे माघस्य कालवाचित्वात् कर्मत्वे धातोः अकर्मकत्वात् कर्मणि विहितेन

तष्ठा तस्याभिहितत्वान्माघः सन्न इति प्राप्ते माघमिति द्वितीया चि न्त्या। अत्रार्थे हरदत्तमिश्रैर्गतिबुद्ध्यादिसूत्रे (पा० १ । ४ । ५२) अक र्मकाणामिति कालभावाध्वदेशव्यतिरिक्तकर्मरहितानामित्यर्थो ग्राह्य इति सिद्धान्तितं। एवं कर्मणि च (पा० ३ । ४ । ६९) इत्यादावपि यत्राकर्मकग्रहणं तत्र सर्वत्र द्रष्टव्यं। तेनात्र माघस्य कर्मत्वेऽपि सन्ने इति भावे लिट् सिद्धो भवति। यद्वा माघ्यं यस्यां क्रियायां यथा तथा स्नाताया मम सर्वपापक्षयपूर्वकसर्वमनोरथसिद्धिर्भवतु इति सङ्कल्प्येत्यर्थः। कलुषं वृजिनैनोघेत्यमरः। यमुनागङ्गे इति पूर्व-निपातोऽनियमः पूर्ववत् परिहरणीयः॥ ८९॥

वैदर्भी विपुलानुरागकलनात् सौभाग्यमत्राखिल
क्षौणीचक्रशतक्रतौ निजगदे तद्वृत्तवृत्तक्रमैः।
किञ्चास्माकनरेन्द्रभूसुभगतासम्भूतये लम्भकं दे
वेन्द्रावरणप्रसादितशचीविश्राणिताशीस्तुतिः९०

वैदर्भीति। हे सख्यः तस्य नलस्य सम्बन्धीनि वृत्तान्यधीतानि यानि वृत्तानि पद्यानि तेषां क्रमैः नलविषये कविभिः कृतैः अस्मदा-दिभिश्च पठितैः काव्यैर्वृत्तैरथवा इतैः सकलद्वीपाधिपादिराजेन्द्रदेवेन्द्रादि-दिक्पालपरित्यागरूपस्य चरित्रक्रमैः परिपाटीभिर्वा कृत्वा वैदर्भ्या जै म्या विपुलस्य नलविषयानुरागस्य कलनात् ज्ञानात् अखिलक्षौणीचक्र शतक्रतावस्मिन्नत्रास्मिन्नले क्षौणीमण्डलसकलवरश्रेष्ठास्पदत्वादिलक्षणं सौभाग्यं निजगदे स्पष्टं कथितं। निखिलमस्माभिरिति यावत्। अति-सुन्दरीयमिन्द्रादीन् परित्यज्य यस्मादेनमवृत तस्मादयमेव सुभगतमो मान्य इति सर्वैर्निश्चितमित्यर्थः। जैमीकृतास्मद्विषयविपुलानुराग-स्याङ्गीकरणहेतोस्तस्या एव वृत्तस्य भूतस्य चतुःश्रोत्यादिकामदशाः स्फुट विरहव्यथानुरूपस्य वृत्तस्य चरित्रस्य क्रमैस्तेऽतिप्रसिद्धा ये वृत्ता वृत्तकमास्तैर्वा निगदितं। भैम्या अप्येतद्विषयमहानुरागजनितपूर्वं वि रहव्यथानिवेदनं सकलसौभाग्यनिधानमिति सर्वेषां पुरस्तात् कथि-

तमिति भाव इति मुख्योऽर्थः । वैदर्भ्या विपुलानुरागेण नलस्य यशो नादिति वा ।।किञ्चान्यच्च अस्माकमयमास्माक स चासौ नरेन्द्रश्च भी मस्तस्माद् भवतीमि मूर्भैमी तस्या सुभगता सौभाग्यं तस्याः सम्भूतये उत्पत्तये महासत्वार्थं वा देवस्य इन्द्रस्यावरणेन त्यागेन सापत्न्याभावेन प्रसादितया सन्तोषितया शच्या विश्राणित दत्त सुभगा पुत्रवत्यविधवा भवेत्यादिकमाशीर्वचनं लग्नक प्रतिभूरभूत् । शचीदत्ताशी स्त्वत्प्रणताङ्घ्र्यपि सुभगति निश्चितमित्यर्थः । आशीःश्रुतिरिति पाठे आशिषां श्रवण । अथवा आशिष एव सत्यत्वाच्छ्रुतिर्वेदश्रवर्थः । अयन्तु पाठ साधीयान् । अनयोरन्योन्यमनुरागाचितं सौभाग्यमपि भविष्यतीत्यनुमानम् । वृतं । वरणे स्वरसिति (पा० ३ । २ । ९-) सिद्ध । आस्माकेति सम्बन्धेऽथि, तस्मिन्नणि चेति (पा० ४ । ३ । २) आस्माकादेशः । लग्नकशब्दो नपुंसकोऽपि । तस्या भैम्या वृत्ताना जातानां वृत्तान्ता इत्येवमादिचरिताणा क्रमाः परिपाट्यस्तैर्निजगदे इति वा । ९० ॥

आसुत्राममपास्तनान्मखभुजां भैम्यैव राजव्रजे
तादर्थ्यागमनानुरोधपरया युक्तार्जि लज्जामृजा ।
आरमानं त्रिदशप्रसादफलतां पत्ये विधायानया
ह्रीपापयशःकथानवसरः सृष्टः सुराणामपि ९१

आसुत्राममिति । भैम्येव आसुत्राममिन्द्रमभिव्याप्य मखभुजां देवानामपासनात्त्यागात्तैः राजव्रजे विषये लज्जाया मृजा परिमार्जनं युक्ता अर्जि इता । युक्त मद्युक्तमित्यर्थः । यतः तस्मै इदं तदर्थं तस्य भावस्तादर्थ्यं तेन चैतानिमित्तेन तत्रागमन यन्निमित्तोऽनुरोधा दाक्षिण्य तत्र परया । यो हि यदर्थमागच्छति स तस्य दाक्षिण्य कुर्वन् लज्जां मार्ष्टीन्युचितमेवेत्यर्थः । यदर्थमागतानामेषां भरमासितं मा भूत् लज्जा च मास्त्वित्यङ्गीकरणदिति राजसु समरूपत्वेनेन्द्रादीनपि भैमी मार्ष्टीत् । तत्र यथेन्द्रादयोऽपि त्याजास्तन नाभूयामास्माक मा करोति तेषां लज्जामार्जनं भैम्येव युक्त कृतमिति भाव । न नलो

ऽर्थं प्रयोजनं यस्य तस्य भावस्तादर्थ्यं तेन नलप्रयोजनत्वेन नलवर-णार्थं यदागमनं तत्र च पश्चात्तस्मिन्प्रिया नलानुरक्तया कृत एव इन्द्रादीनां त्यागः कृत इति वा । तर्हि इन्द्रादीनां लज्जा रोषोऽक्री डितं च कृतेति देवद्रोहादशुभाशङ्कां परिहरति । अनया भैम्या पत्ये नलायास्मात् त्रिदशप्रसादस्य फलतां वरस्वरूपत्वं विधाय सुराणामिन्द्रा दीनामपि व्रीडोपायप्रशमनं कथायाः कथाप्रसङ्गस्यापि अनवसरः अव-काशाभावः सृष्टः कृतः । अस्माभिः आवृतादिति सजातीयान् कृत्रिमस्य प्रति लज्जा अस्माकं पश्यतां नलमवृणोदिति शेषः । नलं स्वीकृत्य देवाननपमानितवतीत्यपप्रथः । देवैश्च प्रसन्नीभूय वरत्वेन नलाय भैमी दत्ता । एतदर्थमेव ते पृथिव्यामागता न भैम्यभिलाषेणेति लोकप्रती-तिरेवं देवानामपि लज्जादिमार्गेण कृतमिति सर्वानुरागादनयोः शु-भपरम्परैव भविता नाशुभशङ्कालेशोऽपीति भावः । पत्ये नयत्येति पाठः समीचीनः । आत्मानं त्रिदशप्रसादफलतां नयन्त्या प्रापयन्त्ये-त्यर्थः । आसुराम । आङ्मर्यादाभिविध्योः । अव्ययीभावे, अनश्चेति पा० ५।४।१०८) टच् । मृजा । भिदादित्वादङ् (पा० ३।३।१०४) ॥११॥

इत्यालेपुरनुप्रतीकनिलयालङ्कारसाराश्रिया ऽहंकु
र्वन्नु रामणीयकममूरालोक्य पौरस्त्रियः । सान
न्दं कुरुविन्दसुन्दरकरस्यानन्दनं स्यन्दनं त
स्याध्यास्य यतः शतक्रतुहरित्क्रीडाद्रिमिन्दो
रिव ॥ १२ ॥

इतीति । अमूः पौराणां स्त्रिय इति पूर्वोक्तप्रकारेण यथास्फूर्ति यथाभिप्रायमन्योन्यमालेपुः संवादं चक्रुः । किम्भूताः । कुरुविन्दवत् पद्मरागवत् सुन्दरौ रक्तौ करौ यस्य तस्य आनन्दनं वेगवत्त्वादिगुण-योगादानन्दकारिणं स्यन्दनं रथमध्यास्य यतो गच्छतस्तस्य नलस्य अ-नुप्रतीकं प्रत्यवयवं निलयं स्थानं येषां तेषामलङ्काराणां साराश्रिया श्रे-ष्ठशोभया कृत्वा करसौन्दर्यादिकमधिकमिति हस्तसौन्दर्यं वदति,

हस्तसौन्दर्य्यादप्यधिकमिति करसौन्दर्य्यमित्येवं प्रत्येकमपि कुर्वद्-अङ्कारं कुर्वत् तनुरामणीयकं शरीरसौन्दर्य्यमालोक्य सानन्दा दृष्टपराः । कस्येव । पद्मरागवद्रक्तकिरणस्य नन्दनवनमभिव्याप्य मध्यादीकृत्य चास्थित नन्दनसमीपे स्थितं । शतक्रतोरैन्द्रीदिक् प्राची दिक् तस्याः क्रीडाद्रिमुदयाचलमधिष्ठाय गच्छत उदितवरस्येन्दोरिव । ताका यकाति विलोक्य यथा सानन्दा भवन्ति तथेत्यर्थः । चन्द्रोदये स्त्रीणा हर्षं । स्यन्दनमध्यास्य । अधिशीङ् ( पा० १ । ४ । ४६ ) स्याधारस कर्म्मत्व । यत । इण् गतरि रूपं ॥ ९२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री
हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं ।
यातः पञ्चदशः कृशेतररसस्वादाविहायं महाका
व्ये तस्य हि वैरिसेनिचरिते सर्गो निसर्गोज्ज्वलः१५

श्रीहर्षमिति । अर्थः पूर्ववत । कृशेतरेणातिभूयसा रसेन स्वादावमृतरूपे नलीयचरिते पञ्चाधिकानां दशानां पूरणः पञ्चदश । स्वादायिति भाषितपुंस्कं ॥ ९३ ॥

इति श्रीवैद्यकरोपनामक श्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे पञ्चदशः सर्गः ॥ १५ ॥

⁂

## उत्तरनैषधचरिते ।

### षोडशः सर्गः ।

श्रीलक्ष्मीनृसिंहौ जयतः ।

वृतः प्रतस्थे स रथैरथो रथी गृहान् विदर्भाधिपतेर्धराधिपः । पुरोधसङ्गौतममात्मवित्तमं द्विधा पुरस्कृत्य गृहीतमङ्गलः ॥ १ ॥

वृत इति । अथो रथारोहणानन्तरं रथैः कुन्ताः प्रविशन्तीतिवद्रथिभिर्वृतस्तथा रथी प्रशस्तरथोपेतः स धराधिपो नलः विदर्भाधिपतेर्गृहान् प्रति प्रतस्थे ययौ । किम्भूतः । आत्मवित्तमं ब्रह्मज्ञानिश्रेष्ठं गौतमं गौतमसगोत्रं शतानन्दनामानं वा पुरोधसं द्विधा द्वाभ्यां प्रकाराभ्यां पुरस्कृत्याग्रे कृत्वा सम्पूज्य च विवाहे कार्यकारं तस्मिन्नारोप्य वा गृहीतानि स्वीकृतानि दध्यक्षतपूर्णकलशादीनि मङ्गलानि येन । रथैः सह वर्तमानैः पुरुषैर्वा प्रतस्थे । समवप्रविभ्यःस्थः (पा० १ । ३ । २२) इति तङ् ॥ १ ॥

विभूषणांशुप्रतिबिम्बितैः स्फुटं भृशावदातैः स्वनिवासिभिर्गुणैः । मृगेक्षणानां समुपासि चामरैर्विधूयमानैः स विधुप्रभैः प्रभुः ॥ २ ॥

विभूषणेति । मृगेक्षणानां चामरधारिणीनां विधुप्रभैश्चन्द्रधवलैः तथा विधूयमानैश्चाल्यमानैश्चामरैः स प्रभुर्नलः समुपासि वीज्यते स्म स्फुटमुत्प्रेक्षे । विभूषणानां रत्नखचितनिजमण्डनानामंशुषु किरणेषु प्रतिबिम्बितैः, तथा भृशावदातैरत्युज्ज्वलैः, स्वस्मिन्निवसत्स्वेषशीलैः, श्रुतशीलसौन्दर्यादिभिर्गुणैरिव प्रत्यक्षीभूतैर्नलगुणैरिव चामरैरुपासी

त्यर्थः । चामराण्यपि विभूषणांशुप्रतिबिम्बितानि । स्फुट निश्चितं । द्वं द्वृशैश्चामरैरेव गुरुैरिति वा ॥ २ ॥

**पराध्यवेशाभरणैः पुरःसरैः समं जिहाने निषधावनीभुजि । दधे सुनासीरपदाभिधेयतां स रूढिमात्राद्यदि वृत्रशात्रवः ॥ ३ ॥**

पराध्यति । निषधावनीभुजि नले पराध्यानि श्रेष्ठानि वेशाभरणानि रूपालङ्कारा येषां तैः पुरःसरैः समं सह जिहाने चलति सति वृत्रशात्रव इन्द्रः सुनासीर इति पदस्याभिधेयता वाच्यत्वं यदि दधार तर्हि रूढिमात्रं दधार न तु शोभन नासीर सेनामुखं यस्येति यौगिकतया । शुद्धवृत्त्या मुख्यया वृत्त्या नले एव दृश्यते न त्विन्द्रे । त्रिविधा शब्दाः केवलयौगिकाः केवलरूढाः योगरूढिकाश्च । तत्र पाचकादयो यौगिकाः । तैलपायिकादयो रौढिकाः । आतपत्रादयो यौगरौढिकाः । तदेवं तादृशाग्रेसराभावादिन्द्रस्य सुनासीरपदवाच्यत्वं यद्यस्ति तर्हि रूढ्यैवास्तु व्युत्पत्त्या तु नल एवोचितमित्यर्थः । इन्द्रादप्यधिको नल । तत्पुरःसराश्चेन्द्रपुरःसरदेवेभ्योऽप्यधिका इति भावः । परार्द्धे भवानि परार्ध्यानि परावराधमोत्तमपूर्वाच्चेति (पा० ४।३।५) यत् । शत्रुरेव शात्रवः प्रज्ञादित्वात् स्वार्थे ऽण् । वृद्ध श्रवाः सुनासीर इत्यमरः३

**नलस्य नासीरसृजां महीभुजां किरीटरत्नैः पुनरुक्तदीपया । अदीपि रात्री वरयात्रया तया च भूरजोमिश्रतमिस्रसम्पदा ॥ ४ ॥**

नलस्येति । तदा भैमीवरस्य नलस्य यात्रया रात्री अदीपि शुशुभे । किम्भूतया । नलस्य नासीरसृजां सेनायामग्रेसरीभूतानां महीभुजां राज्ञां किरीटरत्नैः स्वैरेवान्धकारनिराकरणात् पुनरुक्ता व्यर्थीकृता दीपा यस्यां तया । तथा च भूरजोभिर्मिश्रा बहुकृता तमिस्रसम्पत्तिरन्धकारो यया । महान्धकारेऽपि रत्नदीपप्रकाशैर्भूयिष्ठप्रकाशत्वाददीपीत्यर्थः । महान्धकारे एव हि दीप्यः शोभन्त इत्यर्थः । राज्ञां सेनानुगामित्वेन नलस्य चक्रवर्तित्वं सूचितं । अदीपि । भावे लः ॥ ४ ॥

विदर्भराजः क्षितिपाननुक्षणं शुभक्षणासन्नतरत्वसत्वरः । दिदेश दूतान् पथि यान् यथोत्तरं चमूममुष्योपचिकाय तद्व्रजः ॥ ५ ॥

विदर्भेति । विदर्भराजो यान् क्षितिपानेव दूतान् अनुक्षणं वारंवारं नलाकारणार्थं दिदेश प्राहिणोत् । तेषां व्रजः पूर्वमेकः प्रेषितस्तदनन्तरमन्यः । एवमुत्तरोत्तरमतिक्रम्य पथि अमुष्य नलस्य चमूमुपचिकाय भूयसीमकृत । किम्भूतः । शुभस्य क्षणस्य लग्नस्य अतयस्यासन्नतरत्वेन निकटत्वेन सत्वरो वेगवान् । भूयांसो नृपाः प्रेषिताः । दूता इत्यनेनादरातिशयः सूचितः ॥ ५ ॥

हरिद्विपद्वीपिभिरंशुकैर्नभो नभस्वदाध्मापनपीनितैरभूत् । तरस्वदश्वध्वजिनीध्वजैर्वनं विचित्रचीनाम्बरवल्लिवेल्लितम् ॥ ६ ॥

हरीति । तरस्वता वेगवता अश्वाना ध्वजिनी सेना, तरस्वन्तोऽश्वा यस्याः सा वा, तस्या ध्वजभूतैरंशुकैर्वस्त्रनिर्मितैस्तथा नभस्वता वायुना कृतं यदाध्मापनं परिपूरणं तेन पीनितैः पुष्टीकृतैः सजीवसिंहादितुल्यैर्हरिभिः सिंहैर्द्विपैर्हस्तिभिर्द्वीपिभिर्व्याघ्रैः कृत्वा नरसेनाया उपरितनं नभआकाशं वनं विपिनतुल्यमभूत् अजनि । किम्भूतं वनं । विचित्राणि नानावर्णानि चीनदेशोत्पन्नानि सूक्ष्माणि ध्वजसम्बन्धीनि चाम्बराणि वस्त्राणि तान्येव वल्लयो लतास्ताभिर्वेल्लितं वेष्टितं । वने सिंहादयो वृक्षा लताश्च सन्ति । ध्वजपदेन वृक्षा अपि लक्ष्यन्ते । तरस्विनोऽश्वा यस्य गगनस्य तरस्वदश्वा वा या ध्वजिनी प्रकृतत्वात्तस्यैव सा ध्वजिनी नभसि नभस्वदाध्मापनपीनितैरंशुकैर्ध्वजैः पताकाभिः कृत्वा वनमभूत । किम्भूता । ध्वजिनी हरिभिरश्वैर्हस्तिभिर्द्वीपिभिर्वा द्वीपान्तरवासिभिः सेनाचरीभूतैराजभिरुपलक्षिता । वनमपि सिंहादिभिरुपलक्षितं । विचित्रेति पटवटिति वा । वनपक्षे वनो मृगविशेषः । ऊर्द्धं विस्तृतत्वादम्बरगामिन्या वल्लयः ॥ ६ ॥

त्यानिष्टा न तारकादि ॥ ८ ॥

विनेतृभर्तृद्वयभीतिदान्तयोः परस्परस्मादनवाप्तविग्रहः। अजायत द्वारि नरेन्द्रसेनयोः समागमः स्फारमुखारवोद्गमः ॥ ९ ॥

विनेत्रिति। नरेन्द्रौ भीमनलौ तयोः सेनयोः समागमो राजगृहद्वारि एवम्भूतोऽजायत जातः। किम्भूतयोः। विनेतृशासकं नलभीमलक्षणं भर्तृद्वयं तस्माद्भीतिस्तया दान्तया शान्तयोः। ताभ्यां नियमितत्वात्कलहादिरहितयोः। अत एव परस्परस्मादन्योन्यस्मादनवाप्तमलब्धं युद्धनिमित्तं वैरं कारणं यत्र। सैन्यद्वयमेलने हि कलहो भवति परं सौहार्दान्नियमितत्वाद्नयोर्नाभूदित्यर्थः। तथा स्फारोऽतिमहान् मुखारवस्यास्फुटवर्णविशेषस्य मुखध्वनेरुद्गम उदयो यत्र ॥ ९ ॥

निर्द्दिश्य बन्धूनित इत्युदीरितं दमेन गत्वार्द्धपथे कृतार्हणं। विनीतमाद्वारत एव पद्गतां गतं तमैक्षिष्ट मुदा विदर्भराट् ॥ १० ॥

निर्द्दिश्येति। विदर्भराड् भीमः मुदा उचितो जामातेति हर्षेण तमैक्षिष्ट नलमद्राक्षीत्। किम्भूतम्। भीमेनैव सम्मुखं गत्वा बन्धून् सुहृदो ज्ञातीन् वा स्वमातापितृसम्बन्धिनो निर्द्दिश्याज्ञाप्य प्रस्थाप्य इत्यनेन यथा आगम्यतामित्यादिप्रकारैरुदीरितमुक्तम्। बन्धुमुखेन ज्ञापितमार्गं तथा दमाख्येन भैमीभ्रात्रा अर्द्धपथे कृताऽर्हणा अर्घ्यादिपूजा यस्मै। तथाऽनुद्धतवेशत्वाद्विनीतम्। अत एव द्वारत आद्वारसीमामेवावधीकृत्य रथादुत्तीर्य पद्भ्यां पादचारित्वं गतं प्राप्तम्। दमनेन बन्धून् पुरः प्रस्थाप्य इत इत्युदीरितमिति वा। आद्वारतः पद्द्वयं पद्गतं इति, पादस्य पदाऽऽज्यातिगोपहतेष्विति ( पा० ६। ३। ५२) पादस्य पत् ॥ १० ॥

अथायमुत्थाय विसार्य दोर्युगं मुदा प्रतीयेप तमात्मजन्मनः। सुरस्रवन्त्या इव पात्रमागतं

धृताभितो वीचिगतिः सरित्पतिः ॥ ११ ॥

अथेति । अथ नलदर्शनानन्तरं अथ भीम उत्थाय प्रत्युत्थानं कृत्वा आत्मजन्मनो भैम्याः पात्रं योग्यं आगतं तं नलं दोर्युगं विस्तार्य प्रसार्य मुदा प्रीत्यैव आलिलिङ्ग । क कमिव । सरित्पतिः सुरस्रवन्त्या भागीरथ्याः आगतं पात्रं प्रवाहमिव नौकादिकं वा । किम्भूतः । धृतेऽभितः पार्श्वद्वये वीचीनां तरङ्गपरम्परैर्येन । वीचिततिरित्यपि पाठः ॥११॥

यथावदस्मै पुरुषोत्तमाय तां स साधुलक्ष्मीं बहुवाहिनीश्वरः । शिवामथ स्वस्य शिवाय नन्दिनीं ददे पतिः सर्वविदे महीभृताम् ॥ १२ ॥

यथावदिति । अथालिङ्गनानन्तरं महीभृतां राज्ञां पतिः बहुवाहिन्या ईश्वरः स्वामी स भीमः सर्वविदे सर्वविद्याविज्ञाय शिवाय शुभश्रवणकीर्तनायात एव पुरुषोत्तमाय पुरुषश्रेष्ठायास्मै नलाय साधुलक्ष्मीं समीचीनकायकान्तिं अत एव शिवां शुभरूपां तां भैमीं स्वस्य नन्दिनीं कन्यां यथावद्दोक्तविधिना ददे । मधुपर्कात् पूर्वं कन्यादानमित्याचारः । मधुपर्कादिविधिपूर्वं ददे । दातुमारब्धवानिति वा । अथ बहुनदीश्वरः समुद्रः पुरुषोत्तमाय तां कन्यां लक्ष्मीं यथावद्ददौ तत् साधु तथा पर्वतराजो हिमालयः महादेवाय श्रीमहादेवाय स्वपुत्रीं पार्वतीं ददे तदपि साधु । यद्वा मैनाकादिप्रसूतानां पालयिता समुद्रः शिवरूपाय विष्णवे शुभरूपां लक्ष्मीं ददे तत्साधु । अथ वा बहुनदीयुक्तो हिमालयः पुरुषोत्तमरूपाय श्रीहराय पार्वतीरूपां लक्ष्मीं लक्ष्मीरूपां पार्वतीमिति वा । नलाय पुरुषोत्तमायेव शिवायेव भैमीं लक्ष्मीमिव शिवामिव भीमः समुद्र इव हिमवानिवेत्युपमालङ्कारो व्यज्यते । साधुलक्ष्मीमित्यत्र समासान्तविधिरनित्यत्वात् कपभावः ॥ १२ ॥

असिस्वदद्यन्मधुपर्कमर्पितं स तद्व्यधात्तर्कमुदर्कदर्शिना । यदेष पास्यन्मधु भीमजाधरं मिषेण पुण्याहविधिं तदा कृतं ॥ १३ ॥

इदानीं विवाहविधिमाह नाभिस्वददिति । स नल आप्तेन जीमेन दत्तं सहमिश्रितं कांस्यपात्रस्थं दधिमधुघनरूपं मधुपर्कं यदसिस्वदत् आस्वादितवान् तद् स्वादानुवदकदर्शिना विवाहानन्तरफलपरिपाकसूनाधरचुम्बनादिविचारिणा लोकाना इति तर्कं ऊहं व्यधायि चक्रे । इति किं । यद्यस्मादेव नलो भीमजं वरतूपं मधु पास्यन् पास्यति तस्मात् तदा मधुपर्कग्रहणावसरे मधुपर्कास्वादनमिषेण पुण्याहविधिं शुभलग्नादियुक्तपुण्यदिनकृत्यं मङ्गलपुरस्सरमुपक्रममकृत । अन्योऽपि-शुभकार्यं करिष्यन् शुभविवाहदिनादौ तदारम्भं करोति । तथा तेनापि भैम्यधरपाने मुहूर्तश्चक्रे इति जनेन तर्कितमित्यर्थः । अधरस्यापि स्वादुत्वमुक्तम । अभिस्वददिति । चौरादिकत्वात् स्वदेर्लङ् । ये तु मपि पोपहृश मन्यन्ते ते पत्वाभावश्चिन्त्य । असिस्वददिति पाठाभावाद्यंस्य दुर्वाच्यत्वाच्च चौरादिक एव । पास्यन् । लृट शत्रिति (पा० ३।२।१२४) शतृ । पुण्यञ्च तदहश्चेति राजाहः इति (पा०५।४।९१) टचि पुण्यसुदिनाभ्यामह्नः क्लीबतेति पुण्याहं तत्र विधिरिति विग्रहः ॥ १३ ॥

वरस्य पाणिः परघातकौतुकी वधूकरः पङ्कज
कान्तितस्करः । सुराज्ञि तौ तत्र विदर्भमण्डले
ततो निबद्धौ किमु कर्कशैः कुशैः ॥ १५ ॥

वरस्येति । वरस्य पाणिः परघातकौतुकी शत्रुमारणकुतूहली, वधूकरः पङ्कजकान्तितस्करः कमलश्रीचौरो यस्मात्तस्मात् कारणात् किमु सुराज्ञि राजन्वति तत्र तस्मिन्विदर्भमण्डले विदर्भराज्ये तौ वरवधूकरौ कर्कशैः कुशैः निबद्धौ बद्धौ उभयहस्तयोः कुशबन्धनपूर्वकं पाणिग्रहणमभूत् । तत्र कुशबन्धने कारणोत्प्रेक्षा क्रियते । एको हिंस्रोऽपरश्चौर इति सापराधत्वात् किमु बद्धावित्यर्थः । अन्यत्रापि सौराज्ये ऽन्यघातकतस्करौ कठिनतरदारकैर्बध्येते । पाणिग्रहणं जातमिति भावः । कुशैः पाणिबन्धनमाचारदशाचार यथाक्रमं करयोः शौर्यं मार्दवञ्च सूचितं । सुराज्ञि । राजाहस्सखिभ्यष्टच् (पा ५।४।९१) इत्यस्य नियततत्पुरुषविषयत्वादत्र बहुव्रीहिविषयत्वाट्टच प्रत्यभावः ॥ १४ ॥

विदर्भजायाः करवारिजेन यन्नलस्य पाणेरुप
रि स्थितं किल । विशङ्क्य सूत्रं पुरुषायितस्य
तद् भविष्यतोऽस्मायि तदा तदालिभिः ॥१५॥

विदर्भेति । विदर्भजाया करवारिजेन यत् तदा पाणिग्रहणसमये नलस्य पाणेरुपरि स्थित तदुपरिस्थानं किल निश्चितं विपरीतरतं भवि-ष्यत. पुरुषायितस्य पुरुषवदाचरितस्य विपरीतरतस्य इति यावत् सूत्र सूचनाकारि विशङ्क्य विज्ञायेण सम्भाव्य कौतुकविलोकनार्थं निकट-स्थिताभिस्तदालिभिरस्मायि ईषद्धसित । विपरीतरते हि स्त्रीपाणिरुप-रि भवति विवाहे वधूकरा वरकरस्योपरि भवति । सूत्रञ्च सूचनाग्रन्थ इति विद्या. ॥ १५ ॥

सखा यदस्मै किल भीमसंज्ञया स यक्षसख्या
धिगतं ददौ भवः । ददे तदेव श्वशुरः सुरोचि
तं नलाय चिन्तामणिदाम कामदं ॥ १६ ॥

इदानीमित आरभ्य न तन याहृद्यिति यावद्भिश्याहोचितं यौतक प्रतिपादयति । सखेति । भीमसञ्ज्ञया भीम इति नाममात्रेण सखा स्व-स्यापि भीमनामत्वात् किलारम्भश्रयां स भवो महेश्वर. अस्मै भीमाय यक्षेण कुबेरेण सह यत्सख्य मैत्री तेनाधिगतं प्राप्त यच्चिन्तामणीना दाम मालां ददौ, एव श्वशुरो भीम· तत्कामदं सकलाभिलषितदायि सुराणामुचित चिन्तामणिदाम नलाय ददे । तत्प्रेतायामेव तात्पर्य्यं । सुरोचितमिति पाठे नैम्युचितम् ॥ १६ ॥

यहोदुरापस्य वराय वस्तुनश्चितस्य दातुं प्रति
विम्बफेतवान् । वधौतरामन्तरवस्थितं दधद्य
दर्पमभ्यर्थितदेयमर्थिने ॥ १७ ॥

तदेव वर्णयति । यहोरिति । यच्चिन्तामणिदाम अभीतरां । कि-भूतं । यहोरपरिमितस्य सम्य तथा दुरापस्य दुर्लभस्य दिव्यस्य वराय जामात्रे दातु चितस्य पुरः पुञ्जीकृतस्य रत्नहेमवस्त्रादेर्वस्तुनः पदार्थ-

समुद्रस्य स्वस्मिन् प्रतिबिम्बस्य कैतवाद्व्याजात् अन्तरवस्थितं स्वस्य मध्ये स्थितमर्थिने याचकायाभ्यर्थित प्रार्थितं सत् तदानीमेव दातुमर्हं अर्थं वस्तुजातं दधत् धारयदिव । ददाविति पूर्वेण सम्बन्धः । यदा यदो याचकोऽभिमतं तदा तद्वस्तु तस्मै दातव्यमिति बुध्यास्य नाम सार्थकीकर्तुं वस्तुजातं पुरःस्थापितमेवेत्यर्थः । वध्योरिति भाषितपुंस्कं ॥ १७ ॥

**असिं भवान्याः खलकासरासुरं वराय भीमः स्म ददाति भासुरम् । ददे हि तस्मै धवनामधारिणे स शम्भुसम्भोगनिमग्नयाऽनया ॥ १८ ॥**

असिमिति । भीम यत कासराख्यो महिषाख्यो ऽसुरो येन तं भासुरं देदीप्यमानं भवान्या दुर्गाया असिं खड्गं वराय ददाति स्म । तस्याः खड्गस्तेन कथ प्राप्त इत्यत आह । हि यस्मात् स्फुट वा शम्भुना सह सम्भोगस्तत्र निमग्नया सुरतरसासक्तया अनया दुर्गया वैरिदलनमानन्तरं स्वस्य प्रयोजनाभावात् सुरतासक्तत्वे खड्गधारणस्य रसभञ्जकत्वाच्च धवनामधारिणे भीम इति शिवनामधारकाय शम्भुसेवकाय तस्मै भीमाय ददे । शम्भौ सम्यगविच्छेदेन निरन्तरं भोगाय निमग्नया दक्षिणार्द्धेन प्रविष्टया वा तद्वस्तु तया प्रमादो दत्त । लुलायो महिषो वाहद्विषत्कासरसैरिभा इत्यमरः । भासुरं । भञ्जभासेति ( पा० ३ । २ । १६१ ) घुरच् ॥ १८ ॥

**अधारि यः प्राङ्महिषासुरद्विषा कृपाणमस्मै तमदत्त कुकुदः । अहायि तस्या हि धवार्द्धभजिना स दक्षिणार्द्धेन पराद्धदारणः ॥ १९ ॥**

अधारीति । महिषासुरद्विषा दुर्गया प्राक् यः खड्गो ऽधारि, कुकुद कन्यादाता भीमः । कृपाणं खड्गं सत्कारपूर्वं सालङ्कारमस्मा अदत्त । कथं तेन लब्ध इत्याशङ्क्याह । हि यस्मादर्धनारीश्वरत्वाद् धवस्य भर्तुः शिवस्य अर्द्धभाजिना अर्द्धप्रविष्टेन तस्याः पार्वत्या दक्षिणार्द्धेन दक्षिणशरीरभागेन पराद्धदारणः स खड्गः अहायि त्यक्तः ।

ससङ्गेन धवयाभार्द्धं विभक्ता यदीयदक्षिणार्द्धेन तद्विदारयिष्यते इति भिया त्यक्तः । अदायीति पाठे ऽनर्थो न । तस्य दक्षिणार्द्धेन तस्मै यस्माददायीत्यर्थः । अयं पाठः सधीयान् । सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुद इत्यमरः ॥ १९ ॥

उवाह यः सान्द्रतराङ्ककाननः स्वशौर्य्यसूर्य्योदयपर्वतव्रतम् । सनिर्झरः शाणनधौतधारया स मूढसन्ध्यः क्षतशत्रुजासृजा ॥ २० ॥

उवाहेति । यः खस्य भीमस्य खड्गस्यैव वा शौर्यं प्रतापरूपो यः सूर्यस्तस्योदयस्तत्सम्बन्धी पर्वत उदयाचलस्तस्य व्रतं नियम सदा सूर्योदयकारित्वलक्षणं उवाह धारितवान् । किम्भूतः । सान्द्रतराणि अल्पानि सूक्ष्माणि अङ्ककानि अङ्कानि क्षुद्राक्षुद्रपत्रीवल्लीरूपाणि तेषां काननं जीवनं यत्र दधार इति यावत् । सान्द्रतराणां वा पूर्वोक्तानामेवाङ्कानां काननं समूहो यत्र । उदयाचलपक्षे सान्द्रतराणि अङ्केषु ऊर्ध्वाधोभागेषु वनानि यस्य । तथा शाणनेन लोहकारचक्रघर्षणेन धौतया उज्ज्वलीकरणेन दत्तपानीयधारया कृत्वा सनिर्झरः सप्रवाहः । धारैव निर्झरीभूतेत्यर्थः । उदयाचलोऽपि सनिर्झरो भवति । तथा क्षतेभ्यः खण्डितेभ्यः शत्रुभ्यो जातेनासृजा रक्तेन कृत्वा सम्यक् ऊढा धृता प्रातःसन्ध्या येन । प्रातःसन्ध्यास्थाने रक्तमेव येन धृतमित्यर्थः । सम्यग् धृता सन्ध्यान् मरुकपः फलकसन्धिर्येन धारिदृढमांसिरित्यर्थ इति वा । यद्वा क्षतशत्रुजासृजा समूढः प्राप्तः सन्धियंस्य स्मरुफलकसन्धिपर्यन्तं शत्रुशरीरे निमग्न इत्यर्थः । उदयाचलोऽप्युद्यातःसन्ध्य उदयाचलतुल्यो ऽभूदित्यर्थः । तमधत्तेति पूर्वेण सम्बन्धः । अङ्ककेतिपक्षे, अल्पे (पा०५ । ३ । ८५) इति कः ॥ २० ॥

यमेन जिह्वा प्रहितेव या निजा तमात्मजां या पितुमर्थिना भृशम् । स तां ददे ऽस्मै परिधारणोज्झितां करग्रहार्हामसिपुत्रिकामपि ॥ २१ ॥

यमेति । स भीमः तामसिपुत्रिकां छुरिकामपि अस्मै ददे स के-

यत खड्ग इत्यपेरर्थः । न केवलं पुत्रीमपि तु छुरिकामपि । ता का । भृशमर्पिता भैम्यनुरागिणा यमेन तां भीमं भैमीं सह दहीति आत्मजां याचितुं दूतीप्रेषणावसरे निजा स्वीया प्रहिता प्रेषिता या जिह्वेव । नियतं प्राणहारित्वाद्यमजिह्वातुल्या अतितीक्ष्णा शौर्येण तुष्टो यमो यां भीमाय दत्तवान् । किम्भूता । परिवारशालिनीं चर्मकोशेन शोभमाना । अथ सखीलक्षणपरिजनशोभिनी । करग्रहार्हा हस्तग्रहणयोग्या साधुमुष्टिदेशा । पूर्वं यद्यपि भैमी दत्ता तथापि परिवारसहितत्वेनेदानीं दत्तेत्यर्थः । छुरिका सखीव यौतकत्वेन ददाविति भावः । छुरिका चासिपुत्रिकेत्यमरः । याचिर्द्विकर्मा ॥ २१ ॥

यदङ्कभूमौ बभतुः स्वयोपितामुरोजपत्रावलिनेत्रकज्जले । रणस्थलस्थण्डिलशायिताव्रते गृहीतदीक्षैरिव दक्षिणीकृते ॥ २२ ॥

यदिति । यस्याः शस्त्र्या अङ्कभूमौ पट्टिकाया ऊर्ध्वाधोदेशौ स्वयोपिता स्वस्य स्त्रीणां उरोजपत्रावलि कस्तूरिकालिखितस्तनपत्रवल्ली नेत्रकज्जलञ्च गते इव बभतुः शुशुभाते । किम्भूते । रणस्थले यः स्थण्डिलशायिता व्रतवशात् वेदिकायां शेते स स्थण्डिलशायी तद्भाव एव व्रतं तत्र विषये गृहीता दीक्षा यैः स्वीकृतनियमविशेषैः भूपतिशत्रुभिः दक्षिणीकृते व्रताङ्गदक्षिणात्वेन शस्त्र्यै दत्ते । दीक्षापदेशिन हि स्त्रीणां स्वस्य वस्त्रालङ्कारादि दक्षिणात्वेन दीयते । छुरिकयैव स्वकृतमारणद्वारा शत्रूणां रणस्थलस्थण्डिलशायिताव्रतमुपदिष्टं तस्मादस्यैते दाक्षिणात्वेन दत्ते पत्रावलीनेत्रकज्जले इव । तादृग्द्वयमयसैं स्तनपत्रावलीनेत्रकज्जलत्वेनारोपिते इव छुरिका निखिलपरविदारणा वैरिनारीणां वैधव्यात्पत्रकज्जलपत्रावल्य इति । स्थण्डिलशायीति । स्थण्डिलाच्छयितरि व्रते ( पा० ४ । २ । १५ ) इत्यण् ॥ २२ ॥

पुरैव तस्मिन् समदायि तत्सुताभिकेन यः सौहृदनाटिनाग्निना । नलाय विश्राणयति स्म तं रथं नृपः सुलङ्घ्याद्रिसमुद्रकापथ ॥ २३ ॥

पुरेति । तस्य भीमस्य सुताया अभिकेनानुरागिणा यथा मैत्री दातव्येति बुद्ध्याय न प्रेषितः किन्तु शत्रुभराक्रान्तभूभारनिराकरणद्वारा त्वमस्माकं सुहृदिति प्रेषित इति सौहार्दस्नेह नाटयति, एवंशीलेनाग्निना पुरैव दूतीप्रेषणावसर एव यो रथ तस्मिन् भीमे समदेशि प्रेषितो दत्त, नृपो नलाय त रथ विश्राणयति स्म ददौ । किम्भूत । सुलंघ्या अनायासेनातिक्रमणीया अद्रय अत्युन्नपर्वताः समुद्रा कापथा विषमनिम्नगर्त्तरूपा मार्गाश्च यस्य । सर्वत्र सञ्चरणसमर्थे । कदध्वा कापथः समा इत्यमर । कापथ इति । कापथ्यक्षयोरिति ( पा० ६ । ३ । १०४ ) कादेश । ऋगादिना ( पा० ५ । ४ । ७४ ) समासान्तो ऽप् ॥ २३ ॥

**प्रसूतवत्सा नलकूबरान्वयप्रकाशितास्यापि म**
**हारथस्य यत् । कुबेरदृष्टान्तबलेन पुष्पकप्रकृ**
**ष्टतैतस्य ततोऽनुमीयते ॥ २४ ॥**

तमेव वर्णयति । प्रसूतेति । अस्यापि भीमेन नलाय दत्तस्यापि महतो जयादिगुणयुक्तस्य रथस्य प्रकृष्टा सूतवत्ता सूतोऽविद्यते यस्य स सूतवान् तद्भाव सूतवत्ता सारथिमत्ता, प्रकृष्टश्चासौ सूतश्च तद्वत्ता वा, यस्मान्नलस्य कूबरेण युगन्धरेण सहयोऽन्वय. सम्बन्ध, नलेन सह या च कूबरस्यान्वय, तेन प्रकाशिता प्रकटीकृता शोभिता च, ततस्तस्मादेतस्य रथस्य पुष्पकवत्कामगामि धनदविमानवत् प्रकृष्टता उत्कृष्टगुणयुक्तता पुष्पकात् सकाशाद्वा जयादिगुणैरधिकत्वात कुबेरस्य दृष्टान्त उदाहरण तस्य बलेन तत्सामर्थ्येनानुमीयते अनुमानजन्यज्ञानस्य विषयीक्रियते । न केवलं कुबेरस्य महारथस्य किन्त्वस्यापीति समुच्चयेन व्याप्तिदर्शनपुर सर उपनयन्निगमे सूचयत्यपिशब्द. । कुबेरस्यापि महारथस्यातुलसत्त्वायुधसयुक्तपुष्पकविमानेन कृत्या प्रकृष्टता प्रकृष्टयन्तृमत्ता प्रकृष्टेन कृता तेनोद्यमानता वा भवति । एव कुबेरदृष्टान्तबलाद्ये एतस्य पुष्पकप्रकृष्टता भविष्यतीत्यनुमीयते । यतोऽस्यापि कुबेरस्य नलकूबराख्येनान्वयेन नामाभेन पुत्रेण प्रकाशिता प्रकटिता शोभिता प्रसूतवत्ता जनयितृता इति साधर्म्यदृष्टान्तः । संयय-

लनानुमानस्त्वेवं । विमतो महारथः पुष्पकः प्रकृष्टो भवितुमर्हति नलकूबरान्वयप्रकाशिनप्रसूनयत्वात् । यो यो नलकूबरान्वयप्रकाशितप्रसूनवान् स पुष्पकः प्रकृष्टः । तथा कुबेर इत्यनुमानवशादेतत् सर्वमुच्यत इति यथा कथञ्चित् श्लोको व्याख्येयः । किन्तु प्रकृष्टः सुतः पुत्र इति वा ।पुष्पकस्य नलः सारथिर्नास्ति तेन तत्तुल्यता नास्ति । किन्तु तस्यसिता कुबेरेणेति, अस्य तु नलः सारथिरित्ययं रथो रमणीय इति भावः । कूबरस्तु युगन्धर इत्यमरः ॥ २४ ॥

महेन्द्रमुच्चैःश्रवसा प्रतार्य्य यन्निजेन पत्या कृतसिन्धुरन्वितम् । स तद्ददौस्मै हयरत्नमर्पितं पुरानुबद्धुं वरुणेन बन्धुताम् ॥ २५ ॥

महेन्द्रमिति । सिन्धुः समुद्रो नाम्ना उच्चैःश्रवसा श्वेतघोटकेन सलक्षणेनाथ च दीर्घकर्णेन दुर्लक्षणेनाश्वेन महेन्द्रं प्रतार्य्य यद्धयरत्नं निजेन पत्या स्वस्वामिना वरुणेन अन्वितं युक्तमकृत वरुणायादत्तेत्यर्थः । स भीमस्तद्धयरत्नं अस्मै नलाय ददौ । अनेन कथं तल्लब्धमित्यत आह । किंभूतं । वरुणेन बन्धुतामलीकमैत्रीं अनुबद्धुं वर्द्धयितुं पुरा दूती-प्रेषणावसरे ऽर्पितं भीमाय दत्तं । उच्चैःश्रवसोऽप्यधिकमश्वं तस्मै ददाविति भावः ॥ २५ ॥

जवादवारीकृतदूरदृक्पथस्तथाक्षियुग्माय ददे मुदं नयः । ददद्दिदृक्षादरदासतां यथा तथैव तत्पांशुलकण्ठनालताम् ॥ २६ ॥

जवादिति । योऽश्वो लोकानामक्षियुग्माय नेत्रयुग्माय दिदृक्षायाः स्वीयरूपदर्शनेच्छाया आदरस्तस्य दासतां दासत्वं ददानः पारवश्यं कुर्वन् जवाद्धेतोः अवारीकृतः अर्वाक्तिरीकृतो दूरो बहुयोजनो दृक्पथो नेत्रपथो येन दूरं गतत्वान्नेत्रयोरविषयः सन् यथा नेत्रयुग्माय मुदं प्रीतिं न ददे, दर्शनाभावात्प्रीतिं नोत्पादितवानित्यर्थः, तथा पुनरागमनसमयेऽपि तथैव दिदृक्षादरदासतया तस्य नेत्रयुगस्य पांशुलं रेणुपूर्णं कण्ठनालं यस्य तस्य भावस्तत्ता तां सघृणोत्कण्ठितत्व दद

न्मुद न ददे । तमश्च दद इति पर्वैण सम्बन्ध । यथातथाशङ्की व्यस्तौ योत्यौ । रूपादिविलोकनकौतुकिभिर्यावदृश्यौ द्रष्टुमारब्धस्तावद्वेगवशाद् दूरं गतत्वान्न दृष्ट । इदानीं यद्यपि न दृष्टस्तथापि व्याघुत्यागमनेऽवश्य द्रक्ष्याम इति बुद्ध्या व्यापारान्तरपरित्यागपुर सर तद्रूपादिविशेषदर्शनादरान्नेत्रे प्रसार्य तत्रैव यावत् स्थितास्तावत पुनरागमनसमयेऽपि खुरपुटकृतक्षोदरेणुसम्बन्धान्न दृष्ट । तथा चोभयथापि दर्शनाभावादुत्कण्ठ या अपरिपूर्णत्वान्नेत्रयुगस्य हर्षो नाभूदित्यर्थं । अतिजवनोऽश्व इति भाव । जवादप्रतिविद्धौ दूरौ दृक्पथावेनातिदूर नेत्राभ्यामनुगतमार्गं इति यावदेवभूतौ याऽङ्घ्रियुगाय दयनहर्षं तथाऽनादृत्य यथा दिदृक्षादरदासता ददान सत्तयैव तस्य नेत्रयुगस्य द्रष्टुर्वा शुष्ककण्ठत्व ददे । निरन्तरदर्शनाभावात्तादृशी प्रीतिर्न जाता किन्तु पूर्वोक्तप्रकारेण नेत्रपादपांसुर्वा भूरेणुसम्बन्धात् शुष्ककण्ठत्वमेव जातमित्यर्थ । द्रष्टव्यदर्शनाद्धि द्रष्टुर्मार्गस्य प्रतिषेधो भवति अत्र तु वेगातिशयाद्दर्शनाभावात प्रतिषेधस्तस्येति वा । अथ च जलरहित कृतो दूरा दृष्टिगोचरो यो मार्गं स पिपासोर्नेत्रयुगाय हर्षं ददाति किन्तु जलावलोकने पारवश्य तथापि पिपासा शुष्ककण्ठत्व चेत्युक्तिरिति वा । दासतामिति पाठ दिदृक्षादरस्य दानपात्र ददावित्यर्थः । दाण् दाने दाशगोघ्नौ सम्प्रदाने इति (पा० ३ । ४ । ७४) निपातनाद्ददत्यस्मै इति दानपात्र । पारावारे परार्वाचीतीरे पात्रमित्यमर । यस्ति नास्तिवारि यस्मिन्नभाववारि । यस्मै वारण वार यत्तात् यस् स नास्त्यस्यामी । अथवारशब्दाद्वारिशब्दाच्च विष इ

युगमम्

दिवस्पतेरादरदर्शिनादराद्ढौकि यस्तम्प्रति वि
श्वकर्म्मणा । तमेकमाणिक्यमयं महोन्नतं पत
द्ग्रहं ग्राहितवान्नलेन सः ॥ २७ ॥

दिवस्पतेरिति । दिवस्पतेरिन्द्रस्य भैम्यनुरागवशाद्भीम आदरदर्शिना विश्वकर्मणा च त भीम प्रत्युद्दिश्य आदरादढौकि उपदारूपेण प्रवितः यु भागमनेक महापरिणाह माणिक्य तन्मय तद्रूप तन्निर्मित वा म

ष्ठीव्यतमत्युच्च पतत् ग्राह पतत गण्डूषजलताम्बूलोद्गारादि गृह्णातीति ग्रहः स नलेन प्रयोज्येन ग्राहितवान छर्द्दीकारितवान् नलाय ददावित्यर्थं । प्रभोर्यस्मिन्नादरः स तदनुजीविन स्वस्वशिल्पेन सेवन्त इति लोकरीतिः । पतद्ग्राह पतद्ग्रह इत्यमरः । दिवस्पते । तत्पुरुषे कृतीति (पा०६।३।१४) बाहुलकात् षष्ठ्या अलुकि कस्कादित्वाद्विसर्जनीयस्य (पा०८।३।४३) स । षष्ठ्याः पतिपुत्रेति (पा०८।३।५३) छन्दोविषयत्वात् लोके गत्यर्थकर्म्मकत्वात् कर्मणि चिण् । पतत् गृह्णातीति पतद्ग्रह । पचाद्यचि (पा०३।१।१३४) पतत्ता ग्रह इति (पा०३।३।५८) अप् ॥ २७ ॥

नलेन ताम्बूलविलासिनोज्झितैर्मुखस्य यः पूगकणैर्भृशा न वा । इति व्यत्रेचि स्वमयूखमण्डलादुदञ्चदुच्चारुणचारुणश्चिरात् ॥ २८ ॥

नलेनेति । उदञ्चदुच्चारुणचारुणा उदित्वराम्लानसूर्य्यवद्वा सुन्दरादतिरक्तात् कर्द्दमप्रादिकिरणोऽतिशयितारुणः स्वीया रूपगुणस्तेन चारावी र क्तत्तरात् स्वमयूखस्य मण्डलात् मद्धा हेतो ताम्बूलविलासिना ताम्बूलरसमात्रग्राहिणा पूगनागवल्लीदलचर्व्वणत्यागिना नलेन गृहीतरसत्यात् उज्झितैस्त्यक्तैर्माणिक्यवर्णसदृशैरुद्गारकणै पूगकणै क्रमुकाख्यफलैः अय भृश पूरिता न वा पूरित इति य पतद्ग्रहः चिराद्भूयसा कालेन सूक्ष्मेक्षिकया क्रमेण मुक्तसंशयैर्लोकैर्यद्यपि निश्चितस्त ग्राहितवानिति पूर्व्वेण सम्बन्ध । समीप गत्वा सूक्ष्मेक्षिकयाऽयमिदानी पूगकणै भृत इति निश्चित कदाचित् कदाचिच्च इदानी न भृत इत्यपि निश्चित इत्यर्थं । भृताभृतत्वसन्देहे रक्तमयूखमण्डल हेतु । माणिक्यमयत्वादतिरक्त इत्यर्थ । इदानीं ताम्बूलस्यानवसराद्भोक्तुमित्युपचारे भृतवदित्युपचार । यद्वा तस्यैवारक्तत्वाज्ज्ञानस्योद्गारत्यागत्वम । अस्मो पूगकणा किया किरणसमूहा इति सन्देहश्चिरान्निर्णीत इति वा ॥२८

भयेन भीमं भगवन्तमर्चता नृपेऽपि पूजा प्रभुनाम्नि या कृता । अदत्त भीमोऽपि स नैप

धाय तां हरिन्मणेर्भोजनभाजनं महत् ॥ २९ ॥

भर्यंतेति । भगवन्तं षड्गुणैश्वर्यसम्पन्नं भीमं शिवमर्घादिभिरुपचारिरचेना पूजयता शैवेन मयनाम्ना ऽसुरेण प्रभुनाम्नि शिवनामधारके नृपेऽपि भीमेऽपि या पूजा कृता तयदा धकारि सभीमोऽपि तां पूजां पूजारूपहरिन्मणेर्गारुडमणिमयन्त्रिं विषापहारसमर्थं अतिविस्तृत भोजनार्थं भाजनं नैषधायादत्त नयेन तस्मै दत्तं सोऽपि नलायादत्तेति । अपिशब्दः समुच्चयार्थे । अर्चयतिर्भौवादिकः ॥ २९ ॥

छदे सदैव छविमस्य बिभ्रतीं न केकिना सर्पविषं प्रसर्पति। न नीलकण्ठत्वमधास्यदत्र चेत् स कालकूटं भगवानभोक्ष्यत ॥ ३० ॥

छद इति । अस्य भोजनपात्रस्य छविं नीलां द्युतिं सदैव छदेऽपि बिभ्रतीं केकिना मयूराद्या सर्पविषं न प्रसर्पति तच्छरीरं नाक्रामतीत्यर्थः । स भगवान् शिवोऽत्र पात्रे एतदाधारत्वेन कालकूटमभोक्ष्यत तर्हि नीलकण्ठत्वं नाधास्यत् । अत्र पात्रे विषभक्षणे कृते सति तद्भोजनतया नीलकण्ठत्वं न स्यादित्यर्थः । लिङ् निमित्ते लृङ् क्रियातिपत्तौ (पा० ३ । ३। १३९) इति लृङ् । भुजोऽनवने इति (पा० १ । ३ । ६६) तङ् ॥ ३० ॥

विरोध्य दुर्वाससमस्खलद्दिवः स्रजं त्यजन्नस्य किमिन्द्रसिन्धुरः । अदत्त तस्मै स मदच्छलात् सदा यमभ्रमातङ्गतयैव वर्पुकं ॥ ३१ ॥

विरोध्येति । स भीमस्तस्मै नलाय मदच्छलात् दानजलव्याजात् सदा वर्षुकं वर्षणशीलं च हस्तिनं अदत्त स दुर्वाससं विरोध्य रोषयित्वा मन्दारादिस्रग्मिश्रुर ऐरावतो दिवः सकाशादस्खलत् पतितः किं । भुवमागत ऐरावत किमित्यर्थः । विरोधे हेतुः । अस्य दुर्वाससः सजं मालां त्यजन् भुवि क्षिपन् । अत्र पौराणिकी कथा । कदाचिदैरावतमारूढ्य गच्छते इन्द्राय दुर्वाससा प्रसादेन मन्दारपुष्पमाला दत्ता । चेन्द्रेण करीन्द्रकुम्भे स्थापिता स तां शुण्डादण्डेनाधक्षिपेत ततः

कुपितेन मुनिना स्वमपि मालावद्ध पतेति शप्त सन्मूलमनुत्प्रेक्षा। वर्पुकत्वे पुनरुत्प्रेक्षते। अज्ञनात्मकतया ऐरावतत्वेनैव। ऐरावतो हि सदा मदजलं स्रवति अयमपि तावत् स्वर्गाद्भ्रष्टः स एवेति सदा दानजल मुञ्चतीत्यर्थः। अञ्जनमात्मकत्तया वा श्यामत्वात् सजलघनतुल्य इत्यर्थः। अत्र भीमस्य सम्यग्विलोनारसलतिकामिति वा। वर्पुक लषपते (पा० ३। २। १५४) स्युकञ्॥ ३१॥

**मदान्मदग्रे भवताथवा भिया परं दिगन्तादपि यात जीवत। इति स्म यो दिक्करिणः स्वकर्णयोर्विनाह वर्णं स्त्रजमागतैर्गतैः॥ ३२॥**

मदादिति। यो गजः स्वकर्णयोरागतैर्गतैरागमनैर्गमनैश्च कृत्वा वर्णं स्रजं वर्णमालां विनैव दिक्करिणो दिग्गजान् प्रति इत्याह स्मेव। इति किं। भो दिग्गजा भवता यद्यभिमानमदोऽस्ति तर्हि मदाद् युद्धं कर्तुं यूयं मदग्रे भवत मम पुरस्तात्तिष्ठत। अथवा चेन्मदो नास्ति तर्हि भिया दिगन्तस्था यूयं दिगन्तादपि परं यात गच्छत। पलायिताश्च सन्तः तत्रैव सुखेन जीवत स्वप्राणान् रक्षत। इति लुप्तोत्प्रेक्षा॥ ३२॥

**बभार बीजं निजकीर्तये रदौ द्विपामकीर्त्यै खलु दानविप्रुषः। श्रवःश्रमैः कुम्भकुचां श्रियं मुदे मदस्वेदवतीमुपास्त यः॥ ३३॥**

बभारेति। यो गजो निजकीर्तये रदौ दन्तौ बीजं कारणं बभार, द्विपामकीर्त्यै दानविप्रुषो दानोदबिन्दूनेव कारणं बभार। खलूत्प्रेक्षायाः। दन्ताभ्यां परविदारणात् स्वस्य यश समुत्पन्नं तयो कीर्तिकारणत्वम्। अथ च कीर्तिलक्षणस्य शुक्लत्वात् कारणेनापि तादृशेनैव भवितुं युक्तमिति। दन्तौ कीर्तिबीजभूतकन्दाविव मदजलगन्धाघ्राणमात्रेण परगजानां भङ्गात् दानबिन्दूना रदकीर्तिलक्षणत्वं। कार्यस्य श्यामत्वात् कारणेनापि तादृशेनैव भवितुं युक्तमिति श्यामदानबिन्दव एव कीर्तिबीजमिवेत्युत्प्रेक्षा। तथा मुहुर्मुहुर्गतागतैः श्रवःश्रमैः कर्णप्रयासैरेव व्यजनचालनैः कृत्वा कुम्भाविव कुचौ यस्यास्ता मदस्वेदवतीं दा-

नरूपधर्मोदकयुक्ता श्रिय श्रिय घर्मजलापहरणद्वारा तस्या एव मुदे प्र-पीय तप स्त सिषवे । एवम्भूत श्रिया दधान प्रीतिमुदपादयदित्यर्थ । श्रमकेलिरिम्नाङ्कुम्भकुचा कामिनी स्वेदमपनयन् कामी तालवृन्तचालनेन वीजयतीति मदस्य स्वेदरूपेण श्रिय श्रिय स्त्रीत्वरूपणम् । अ-भवत्त्यपि पाठ ॥ ३३ ॥

न तेन वाहेषु विवाहदक्षिणीकृतेषु सङ्ख्यानुभूर्व्यभवत् क्षमः । न शातकुम्भेषु न मत्तकुम्भिषु प्रयत्नवान् कोऽपि न रत्नराशिषु ॥ ३४ ॥

नेति । तेन भीमेन नलाय विवाहे दक्षिणीकृतेषु कन्यादानदक्षिणात्वेन दत्तेषु वाहेषु रथादिषु तुरङ्गेषु वा सङ्ख्यानुभवे गणनाज्ञाने प्रयत्नवानपि कोऽपि कश्चिदपि न क्षम समर्थो वा दत्ता इत्येव स-ङ्ख्यापरिच्छेदे समर्थो नाभवत तथा शातकुम्भेषु नवरूपभूतघटिताघटितकाञ्चनेषु न तथा मत्तकुम्भिषु गजान्मदमातङ्गेषु न, तथा रत्न-राशिषु न क्षमोऽभवदिति । सर्वत्र विवाहदक्षिणीकृतेष्विति च । बहुतरं यौतक दत्तवानिति भाव ॥ ३४ ॥

करग्रहे वाम्यमधत्त यस्तयोः प्रसादय भैम्या नु स दक्षिणीकृतः । कृतः पुरस्कृत्य ततो नलेन स प्रदक्षिणस्तत्क्षणमाशुशुक्षणिः ॥ ३५ ॥

करेति । य आशुशुक्षणिरग्निस्तयो करग्रहे विवाहे विषये वाम्य वक्रत्व अधत्त भेजे । भैम्यभिलाषाक्षलाकारधारणादिद्वारा पूर्वं विरुद्धोऽभूदनु च पश्चाज्जनवरणावसरे भैम्या स्तुतिध्यानादिना प्रसाद्य स-न्तोष्य दक्षिणीकृत आनुकूल्य नीत सोऽग्नि । तत पाणिग्रहणा-नन्तर नलेन पुरस्कृत्याग्नेर्नमनादिसत्कारपूर्वं नये प्रतिष्ठाप्य तत्क्षण तस्मिन् विवाहक्षणे प्रदक्षिण प्रकर्षेणावसव्य कृत प्रदक्षिणभागेन भ्रमणाकारेण विहित । अथ च स पूर्वं यौतकदानकाले वामभागेऽभूत प-श्चाद्भैम्या पुरस्कारादिना प्रबोध्य सुकूल कृत । अथ च दक्षिणभागे कृत कोऽर्थं नाद्रिय सम्पूज्य नलेन सुतरामनुकूल कृत । अथ च प्रकर्षेण

दक्षिणभागे कृत । अन्योऽपि महान् पूज्य विरोध्यते स विवाहादौ प्रसाद्यानुकूल क्रियते इत्युक्ति । अत्र क्वचित् क्वचिद्विधिक्रमभङ्गो देशाचाराच्छाखाभेदात् कुलाचारविशेषाद्वाहृद्य । न पुन आह्नयकवेरत्र लेशोऽपि । अत एव पूर्व यथाविधानि प्रायुङ्क्त । आशुशुक्षणि । आशाद्भुक्षिच्छति आङि शुषे सञ्जताच्छन्दसि साधु । शिष्टप्रयुक्तत्वाद्भाषायामपि साधुत्व ज्ञेयम् ॥ ३५ ॥

स्थिरा त्वमश्मेव भवेति मन्त्रवागनेनशादासि किमाशु ता ह्रिया । शिला चलेत् प्रेरणया नृणामपि स्थितेस्तु नाचालि विडौजसापि सा ॥३६॥

स्थिरेति । हे भैमि इममश्मानमारोहेत्युक्त्वा त्व अश्मेव स्थिरा भवेति नलेनोक्ता शिला मन्त्ररूपा वाक् सा भैमीमाशास्य शिलावन्निश्चला भवेति तस्यै आशिष दत्वा आशु अनेनशत् अनश्यत् । अश्मशिला यस्मात् मध्यस्था भवन्ति । तत्रोपमितेति ह्रिया कि । किमिति तस्याः लज्जेत्यत आह । शिला अल्पतेजसा नृणामपि प्रेरणया करचरणव्यापारमात्रेण चलेत् स्वस्थानादन्यत्र गच्छेत् सा तु भैमी पुन अतिप्रभ विडा विडौजसा इन्द्रेणापि स्थिते मनोव्यापारमात्रस्वीकृतनलपतित्वरूपाया मर्यादाया सकाशान्न चालि । पतिव्रतासीमा न त्याजितेति स्थिरतरत्वेनाधिकाया भैम्या अह हीनेति स्वदोष विचार्य लज्जयैव नष्टेत्यर्थः । वैधम्यारादृष्ट्या तेन कारितमिति भाव । नश अदर्शने अस्मात् लुङि पुष दित्वादङि नशिमन्योरलिट्येत्वमिति (पा० ६ । ४ । १२० । वा०२) एत्वं रूप ॥ ३६ ॥

प्रियांशुकग्रन्थिनिबद्धवाससं तदा पुरोधा विदधे विदर्भजा । जगाद च्छित्त्वा पट प्रयास्य तो नलादविस्रासमिवैष विश्ववित् ॥ ३७ ॥

प्रियेति । तदा वह्निसाक्षिविधिकाले पुरोधा गौतमो विदर्भजा प्रियस्य नलस्यांशुकेन सह ग्रन्थिना निबद्धः वासो यस्यास्तामेवविधा विदधे चकार । तत्प्रेसर्वे । पट विच्छिद्य कर्तित्वाऽरण्ये भैमीं विहाय प्रया-

स्ततो गमिष्यतो नलात् सकाशादेव पुनरेषा अविश्वास विश्वासाभाव वशादेव । यस्त्रं छित्वा त्वां हित्वाऽयं गमिष्यतीत्येतस्य विश्वासो न कार्यं इत्यस्य वस्त्रेण सह स्ववस्त्रस्य ग्रन्थिं दृश्यैवानेन सह विचरणी यमित्युवाचेत्यर्थः । कथमेतज्ज्ञातमत आह । यतो विश्वं सर्वं वेत्तीति कालत्रयज्ञ इत्यर्थः । तस्माद्भविष्यदपि तेन ज्ञातमित्यर्थः । कलिना पराभूतो नलोद्यूतद्वारा हारितसर्वस्व स्त्रीमैस्त्यक्तो वामरेण कलिना पक्षिरूपेण तद्धारणार्थं विक्षिप्तस्य वस्त्रस्यापहाराद्वस्त्रान्तराभावाद्भैमी-वस्त्रार्द्धधारी सन् निद्रायायास्तस्या वस्त्रार्द्धं विच्छिद्य ता महारण्ये तत्याजेति भारते कथा ।।वैधमुभयवस्त्रग्रन्थिबन्धन तेन छलमिति भाव । विदधादिति पाठे कुर्वन् सन्निति योजना ॥ ३७ ॥

ध्रुवावलोकाय तदुन्मुखभ्रु वा निर्दिश्य पत्याभि दधे विदर्भजा । किमस्य न स्यादणिमाक्षिसाक्षिकस्तथापि तथ्यो महिमाऽऽगमोदितः ॥ ३८ ॥

ध्रु वेति । तस्य ध्रु वस्य दर्शनार्थमुन्मुखो ऊर्ध्वस्य तेन पत्या नलेन विदर्भजा निर्दिश्याज्ञाप्य ध्रुवस्यावलोकनार्थं अभिदधे उक्ता । तदुन्मुख्या ऊर्ध्वा कृत्वा संज्ञाप्येति वा । न तु स्थूलस्य ध्रु वस्य स्वयदर्शनयोग्यत्वात् सा स्वयमेव स पश्येत् । तेन किमिति दर्शनं कारितमित्यत आह । अस्य ध्रु वस्य अणिमा सूक्ष्मप्रमाणत्व चाक्षिसाक्षिको नेत्रगोचरः किं न स्यादपि तु स्यादेव यद्यपि तथापि स्वयदर्शनयोग्यत्वेऽपि आगमोदितो महिमा वेदोक्तं गौरव सत्योऽस्त्विति शेषः । श्रुत्युक्तं हि प्रमाणमित्यर्थः । श्रुतिर्हि ततो वधूं ध्रु वमीक्षयीतेति ध्रुवे दर्शिते ध्रु वं पश्यामि प्रजां विन्द इति सा ब्रूयात् तस्मात् स्वय दृष्टुमशक्यत्वेऽपि नल एवादर्शयदिति युक्तमित्यर्थः । वैध ध्रु व दर्शनं कारितमिति भाव । एतत् सर्वं कथयद्य । अप च यद्यस्याणुत्वं प्रत्यक्षं तथापि ज्योतिःशास्त्रोक्त ध्रु वमण्डलस्य महापरिमाणत्वं सत्यमेव ॥ ३८ ॥

धयेन सादर्शि वधूरुन्धती सतीमिमां पश्य

गतामिवाणुताम् । कृतस्य पूर्वं हृदि भूपतेः
कृते तृणीकृतस्वर्गपतेर्जनादिति ॥ ३९ ॥

धवेनेति । सा वधूर्धवेन नलेन अणुतामतिसूक्ष्मत्वं गतामिमां सतीं पतिव्रतामरुन्धतीं त्वं पश्येत्युक्त्वा अदर्शि दर्शिता । तत्राणुत्वं उत्प्रेक्षते । यस्याः पूर्वमेव हृदि कृतस्य मनोरथमात्रेण हृदये कृतस्य भूपतेः कृते तृणीकृतस्वर्गपतेः तृणवल्लाघवेन त्यक्त इन्द्रो येनैवंभूताज्जनादिव लज्जयेति शेषः । अहं हि परिणीता सतीन्द्रं तृणप्रायमकरवं भैमी तु हृदि धारणमात्रादेवेति । अतोऽपीयमेवाधिका सतीति भैम्याः सकाशाल्लज्जयेव कृशामित्यर्थः । स्वतः कृशत्वमेव उत्प्रेक्षितं । भूपतेर्जनादिति शब्दद्वयसामान्यवाच्यपि नलभैमीलक्षणविशेषे पर्यवस्यति । वैधर्म्यस्य तौ दर्शनं कारितमिति भावः । अदर्शि । पश्यतेर्णिच् । अभिवादिदृशोरिति (पा० १ । ४ । ५३ वा० १) अणौ कर्तुर्णौ कर्मत्वं । तस्य चाभिहितत्वाद् द्वितीयाभावः ॥ ३९ ॥

प्रसूनता तत्करपल्लवस्थितैरुडुच्छविर्व्योम्नि वि
हारिभिः पथि । मुखेऽमराणामनले रदावलेरभा
जि लाजैरनयोज्झितैर्द्युतिः ॥ ४० ॥

प्रसूनतेति । तस्या भैम्याः करयोरेव पल्लवयोः स्थितैरेवंभूतैर्लाजैः प्रसूनता पुष्पत्वं अभाजि प्राप्ता । पल्लवेषु च पुष्पाणि युक्तानि तथा अनया भैम्या उज्झितैः कराङ्गुलिभ्योऽपि विहरणशीलैः सद्भिः पथि कन्याप्रान्तरालरूपे मार्गे उडुच्छविर्नक्षत्रशोभा भेजे । व्योम्नि नक्षत्राणि युक्तानि । तथाऽमराणां मुखेऽनलेऽनया हुतै रदावलेः दन्तपङ्क्तेर्द्युतिः शोभा भेजे । मुखे दन्तपङ्क्तिर्युक्ता । येषां लाजहोमस्तया कृत इति भावः ॥ ४० ॥

तया प्रतिप्राहुतिधूमपद्धतिः ता कपोले मृगना
भिशोभिताम् । ययौ दृशोरञ्जनतां श्रुतौ श्रि
ता तमाललीलामलिकेऽलकायिता ॥ ४१ ॥

नयति । तया भैम्या प्रतिष्ठा करद्युमलाभ्यां स्वीकृता आहुतिधूमपद्धतिः हूयमानलाजादिद्रव्यसम्बन्धिनी धूमपरम्परा कपोले मृगनाभिशोभिता कस्तूरीशोभा जाता प्राप्ता । तत ऊर्द्ध्वं गच्छन्ती दृशोर्चक्षुषोरञ्जनतां ययौ प्राप । ततोऽप्यूर्द्ध्वं गच्छन्ती श्रुती कर्णयोस्तमालीलावतंसभूते तमालदलसादृश्ये श्रिता । ततोऽप्यूर्द्ध्वं तर गच्छन्ती अलिके ललाटेऽलकायिता चूर्णकुन्तलवदाचरिता तत्तुल्या जातेत्यर्थः । कपोले कस्तूरी दृशोरञ्जनं श्रुतौ तमालं ललाटे चालका इति युक्तम् । वैधधूमगर्जेण कृतमिति भावः । मृगनाभिशोभीति । कर्तर्युपमान इति ( पा० ३ । २ । ७९ ) णिनौ मृगनाभिशोभिनी तस्या भावस्तत्ता, त्वतलोरिति (पा० ६ । ३ । ३५ वा०२) पुंवत् ॥ ४१ ॥

अपन्हुतः स्वेदभरः करे तयोस्त्रपाजुषोर्दानजले मिलन्मुहुः । दृशोरपि प्रस्तुतमश्रु सात्त्विकं घने समाधीयत धूमलङ्घनैः ॥ ४२ ॥

अपन्हुत इति । त्रपाजुषोर्लज्जायमानयोस्तयोः करे वर्तमानः स्वेदभरः सात्त्विकघर्मजलसमूहो दानजलैर्ब्राह्मणेभ्यो दक्षिणादानार्थं जातैः सङ्कल्पजलैः सह मुहुर्वारं वारं मिलन् सम्बन्धं प्राप्नुवन् सन् अपन्हुतः दानजलयोगात् सात्त्विकः स्वेदोऽयमिति लोकेन न ज्ञात इत्यर्थः । करे मुहुर्मिलन् पुनः पुनरुद्भवन् दानजलैरपन्हुत इति वा । तत्रापि कामविकारवशात् स्वेद लोको ज्ञास्यतीति भिया वा । दृशोरपि सम्बन्धि प्रस्तुतं गलितं सात्त्विकं कामविकारजमश्रु घनैः सान्द्रैर्धूमलङ्घनैर्धूमाक्रमणैः कृत्वा समाधीयत परिहृतं ताभ्यामित्यर्थात् तैरेव कर्तृभिरपन्यस्तं वा । परस्परस्पर्शात्तयोः स्वेदादयः सात्त्विका प्रवृत्ता इति भावः ॥ ४२ ॥

बहूनि भीमस्य वसूनि दक्षिणां प्रयच्छतः स्वयमविदन्य तत्क्षणं । जनेषु रोमाञ्चमितेषु विस्मितां ययुस्तयोः कण्टककोरकश्रियः ॥ ४३ ॥

बहूनीति । बहूनि वसूनि दक्षिणां प्रयच्छतो हेतिज्वालस्य । ददतो

भीमस्य सत्त्वं दार्नर्शौण्डत्वमवेत्य तत्क्षण तस्मिन्नेव क्षणे आश्चर्यातिशयेन् रोमाञ्चमितषु प्राप्तेषु जनेषु मध्ये तयोर्भैमीनलयारपि कण्टककोरकश्रिय कण्टककलिकाशोभा मिश्रिताम ऐक्य प्रापु । सात्त्विकोऽपि रोमाञ्चो ऽन्यजनवदाश्चर्यादय जात इत्युपलक्षित इति भाव ४३

बभूव न स्तम्भविजित्वरी तयोः श्रुतिक्रियारम्भ
परम्परात्वरा । न कम्पसम्पत्तिमलुम्पदग्रतः
स्थितोऽपि वह्निः समिधा समेधितः ॥ ४४ ॥

बभूवेति । श्रुतिक्रियाया वेदविहितलाजाहोमाग्निपरिक्रमणादिकाया आरम्भस्य परम्परा एकस्मादनन्तरमन्यस्यारम्भस्तस्मादनन्तरमन्यस्यैवमव्यवहिता य उत्तरोत्तरभावस्तद्विषयत्वरा वेगता, तयोरवश्यापतितायामपि कर्मवेगितायां सात्त्विकजनितस्याङ्गवलनात्मकस्य स्तम्भस्य विजित्वरी जयनशीला न बभूव तत्कालपतितापि । स्तम्भवशात्तौ किमपि कर्म्म शीघ्रं कर्तुं समर्थौ नाभूतामिति भाव । तथा समिधा यज्ञकाष्ठेन समेधित सवर्द्धितो वह्निरपि अग्रत स्थित सन् तयो कम्पसम्पत्ति सात्त्विककम्पबाहुल्यं नालुम्पत् न शमयति स्म । शीतजं हि कम्पमग्नि शमयति न तु सात्त्विक तस्य तत्रासमर्थत्वादित्यर्थ । तयोरन्य सात्त्विकापलापेऽपि स्तम्भकम्पौ लोकैर्ज्ञातावेवेति भाव । अविजितास्तम्भेति पाठे न स्तम्भविजित्वरीति नञ्समास । अलुम्पत् शे मुचादीनामिति ( पा० ७ । १ । ५९ ) नुम ॥ ४४ ॥

दमस्वसुः पाणिममुष्य गृह्णतः पुरोधसा संविद
धेतरां विधिः । महर्षिणेवाङ्गिरसेन साङ्गता पु
लोमजामुद्वहतः शतक्रतोः ॥ ४५ ॥

दमेति । दमस्वसु पाणि गृह्णतो ऽमुष्य नलस्य सम्बन्धिनो वैवाहिकस्य श्रौतस्य विधे साङ्गता ऽङ्गसाहित्य पुरोधसा संविदधेतरां नितरा साकल्येन चक्रे । प्रधानमात्र नलेन कृत अङ्गानि तु पुरोधसा करोतीति भाव । कस्य केनेव पुलोमजामुद्वहत शतक्रतो सम्बन्धिनो विधे साङ्गता आङ्गिरसेन महर्षिणा बृहस्पतिनेव ॥ ४५ ॥

स कौतुकागारमगात् पुरन्ध्रिभिः सहस्ररन्ध्रीकृत
मीक्षितुं ततः । अधात् सहस्राक्षतनुत्रमित्रता
मधिष्ठितं यत् खलु जिष्णुनाऽमुना ॥ ४६ ॥

स इति । तत वैवाहिकविधेरनन्तरं स नलः पुरन्ध्रिभिः पुरनारीभिरीक्षितुं वधूवरचेष्टादिदर्शनार्थं सहस्ररन्ध्रीकृतं तृणकाष्ठादिरचितं बहुच्छिद्रगवाक्षं वधूवरसवेशार्थं रचितशृङ्गारवेदिकं कौतुकागारं कुतूहलावहं दूर्वायवाङ्कुरादिनवमङ्गलद्रव्यसंहितं गृहमगात् ययौ । यद्गृहं जिष्णुना जयशीलेनामुना नलेनाधिष्ठितं सत् विलोकितुं नेत्रसहस्रात्मका यदापि रन्ध्रसहस्रधारिणा सहस्राक्षस्य कवचेन सह मित्रतां साम्यमधात् चकार तदपि जिष्णुनेन्द्रेणाधिष्ठीयते खलु उत्प्रेक्षायां निश्चये वा ॥४६॥

तथाशनाया निरशोपि नो ह्रिया न सम्यगालो
कि परस्परक्रिया । विमुक्तसम्भोगमशायि स
स्पृहं वरेण वध्वा च यथाविधि त्र्यहम् ॥ ४७ ॥

तथेति । वरेण वध्वा चाशनाया बुभुक्षा ह्रिया कृत्वा तथा पूर्ववत् नो निरशोपि निःशेषिता आतृप्ति न भुक्तमित्यर्थः । तथा परस्परक्रियाऽन्योन्यं चेष्टादिव्यापारोऽपि ह्रियैव सम्यक् सम्मुखदर्शनेन नालोकि न विलोकिता किन्तु इङ्गितमात्रेणेत्यर्थः । तथा त्र्यहं दिनत्रयं यथाविधि मुक्तसम्भोगं त्यक्तसुरतं सस्पृहं सुरतेच्छासहितं यथा तथाऽशायि शयितं । त्र्यहमिति सर्वत्र योज्यम् । विध्यतिक्रमभयात् दिनत्रयं ताभ्यां सह भुक्तं अन्योन्यं विलोकितं सहनिद्रितं च । परं लज्जयाऽशनायां च नातृप्ति भुक्तम् नाशेषाङ्गं दृष्टं न च चुम्बनालिङ्गनादिपूर्वं शयितमित्यर्थः । एकत्र शयनं त्रिरात्रं ब्रह्मचर्यं चेति विधिः । अशनाया । अशनायोदन्यधनाया (पा०७।४।३४) इति साधुः । त्र्यह इत्यत्र तद्धिते द्विगौ राजाहःसखिभ्यः (पा०५।४।९१) इति टच्, न सङ्ख्यादेः समाहारे इति (पा०५।४।८९) अह्नादेशाभावः । रात्राह्नाहाः (पा०२।४।२९) इति पुंस्त्वं । अत्यन्तसंयोगे द्वितीया (पा०२।१।२९। त्र्यहं विमुक्तसम्भोगमिति पा०ज०मा ॥ ४७ ॥

कटाक्षणाज्जन्यजनैर्निजप्रजाः क्वचित् परीहास
मचीकरत्तरां । धराप्सरोभिर्वरयात्रयागतानभो
जयद्भोजकुलाङ्कुरः क्वचित् ॥ ४८ ॥

कटाक्षेति । भोजकुलस्य भीमपूर्वजात्यक्षत्रियवंशस्याङ्कुरो बालो द
मः क्वचिद्भीमद्रूक्पथगोचरे कस्मिंश्चिद्देशे जन्यजनैर्वरयात्रिकैर्वरपक्षी-
यैः सह निजप्रजाः परिहासपात्रभूतपौरवारस्त्रीमुख्याः ताभिः प्रयो-
ज्याभिरित्यर्थः, कटाक्षणाक्रमभङ्गया परिहासं सेवक्रोक्त्यादिना अ-
र्थान्तरोपदर्शनरूप उपहासमचीकरत्तरां अतितरां कारयामास । तथा
क्वचिच्च वरयात्रया निमित्तेनागताम्नलपक्षीयानन्यान् राजलोकान् धरा-
प्सरोभिः दासीधैरिणीसैरन्ध्रीप्रभृतिभिः पुरसुन्दरीभिर्वाराङ्गनाभिर-
भोजयत् भोजनमकारयत् । परिवेषणार्थं काश्चित् सहभोजनार्थं काश्चि-
दादिष्टवानित्यर्थः । विवाहे कनीयमानेवोपहासकरणयोग्यस्यादङ्कुरप-
दप्रयोगो युक्तः । कटाक्षशब्दात् तत्करोतीति ( पा० ३ । १ । २६ वा०
१ ) ण्यन्तात् ल्युट । निजप्रजाः । हृक्रोरिति ( पा० १ । ४ । ५३ ) क-
र्मत्वं । आगतान् । भुजे प्रत्यवसानार्थत्वात्, गतिबुद्धीति (पा० १ ।
४ । ५२) कर्मत्वं । अभोजयत । निगरणचलनार्थेभ्यश्चेति ( पा० १ ।
३ । ८७ ) परस्मैपदं ॥ ४८ ॥

स कश्चिदूचे रचयन्तु तेमनोपहारमत्राङ्ग
रुचेर्यथोचितं । पिपासतः काश्च न सर्वतो मु
खं तवार्पयन्तामपि काममोदनं ॥ ४९ ॥

तमेव प्रकारमाह । स इति । स दम नलपक्षीय एवमूचे
स्वजनमुखेनेति शेषः । अङ्ग हे वरयात्रिक अत्र पात्रे आसु परिवेषि-
कासु मध्ये याः काश्चन स्त्रियः ताः रुचेरभिलाषस्य यथोचितं उचित-
मनतिक्रम्य तेमनाख्यस्य व्यञ्जनस्य उपहारं आनयनं रचयन्तु कुर्वन्तु
यावदभिलाषं तेमनमानयन्तु किमिति प्रश्नः काकुः । एता एवकुर्व-
न्तु त्वं भुङ्क्ष्वेति भोजनोपदेशो वा । एवमुत्तरत्रापि । तथा पिपा-
सतः तृषालोस्तव पानार्थं सर्वतोमुखं जलमपि अर्पयन्ताः ददतु । स-

या ओदनमपि कामं यथेच्छमर्पयन्तां ॥ परिहासस्तु अत्र आसु मध्ये विविक्ते स्थाने वा अङ्करूपे स्तनजघनाद्यङ्गानां रुचेर्दर्शनाद्यभिलाषस्योचितं यथा भवति तथा तव मनसः अपहारं अपहरणं रचयन्तु स्तनादिदर्शनादिनान्तः करणहरणं कुर्वन्तु इत्यर्थः । कायकान्तिहेतोः सौन्दर्य्यातिशयान्मनोहरणं कुर्वन्त्वित्यर्थः । तथा पिपासतश्चुम्बनेच्छोस्तव मर्त्यतो नेत्रादिचुम्बनस्थाने दर्शनमात्रेण कामस्य हर्षकरं नु खमर्पयन्तां । बहूनां चुम्बनस्थानानामेकत्र मुखे वर्तमानत्वान्मुखमेव तव ददत्वित्यर्थः । अथ च कामस्य मोदनं हर्षकरं वराङ्गमपि चुम्बनार्थमर्पयन्तां । अथ च मुखं पिपासतस्तव सर्वदा वराङ्गमेव ददतु । स्याद्भेमन तु निष्ठानमित्यमरः । पूर्वव्याख्याने तवेत्युभयत्र योज्यं । मुखं सर्पेन इति, उभमन्वंतयोरिति द्वितीया ( सि० कौ० ३६ । १ । प० ) । तव ते इति च सम्बन्धसामान्ये षष्ठी ॥ ४९ ॥

**मुखेन तेऽत्रोपविशत्वसाविति प्रयाच्य सृष्टानुमतिं खलाहसत् । वराङ्गभागः स्वमुखं मताऽमुना स हि स्फुटं येन किलोपविश्यते ॥ ५० ॥**

मुखेनेति । काचित् खला वक्रोक्त्यादिभाषिणी हे वरयात्रिक असौ मामकी पुरुषो याऽत्र स्थाने ते तव मुखेनोपलक्षिता, सम्मुखमिति यावत् त्वदुपार्यने वा त्वदाज्ञयेति यावत् त्वया सह भोजनार्थं तव पुरस्ताद्वा भोजनार्थं उपविशतु इति प्रयाच्य सम्प्रार्थ्य मुखेनोपविशत्विति सृष्टा दत्ताऽनुमतिरनुज्ञा यत्र तं वरयात्रिकं पश्चादहसत् । हासे कारणमाह । हि यस्माद्येन साधनेन किलोपविश्यते स हि वराङ्गभागो गुह्यदेशः अमुना अनेन स्वस्यात्मनो मुखं स्फुटं निश्चितं मतो मुखेन करणेनोपविशत्वित्येवमर्थपरं तद्वचनमज्ञात्वा तेनानुज्ञायां दत्तायां कटिदेशाधःप्रदेशेन किलोपविश्यत इत्येवं वदता अनेन स्वमुखं वराङ्गत्वेन मतं यस्मात्तस्माद्धास्य युक्तमित्यर्थः । मर्यमकलधाधपुरःसर जहासेति वा । अथ च सं मुखेनोपविशतु अपि तु पुरोपाश्रमगोपमुपविशत्विति प्रयाच्य तदीयं गुणविशेषं गृहीत्वा सृष्टानुमतिं तमहसत् । मुखं निःसरणे वपुषि प्रारम्भोपायचारयोरिति विश्वः ॥ ५० ॥

युवामिमे मे स्थितमे इतीरिणो गले तयोरेका
निजगुच्छमेकिका । न भास्यदस्तु च्छगलो वद-
न्निति न्यधत्त जन्यस्य ततः पराकृपत् ॥ ५१ ॥

युवामिति । इमे पुरवर्तिन्यौ युवां मे मम स्थितमे उत्तमस्त्रियौ भवादृशौ स्त्रीरत्ने न दृष्टे इतीरिणो वदतः स्तुवतः, अथ च मत्सम्बन्धिन्यौ प्रियतमे भवेतम् इति परिहासाद्वदतः कस्यचिज्जनस्य वरपक्षीयस्य गले यथा त्वयोच्यते तथैवेत्युक्त्वा तयोर्द्वयोर्मध्ये एकिका एकैव निजगुच्छं रज्जुस्थाने हारविशेषमेव इत्युक्त्वा न्यधत्त । इमीति किं । हे जन्य त्वं अदः पूर्वोक्तं इमे मे इति शब्दं वदन् तु पुनः छगलः छागो न भासि अपि रम्यशब्दं कुर्वन् छाग एव स्फुरसि । अथ च तुच्छस्तनशून्यो गलः कण्ठो यस्य तथाभूतो न भासि । अजस्य गले स्तनौ तिष्ठतः त्वन्तु छागोऽपि स्तनशून्य इति कारणाच्च भासे । अथ च रज्जुरहितकण्ठो न भासीति रज्जुस्थाने हारं धत्ते स्मेति । उभयतो लम्बमानो हार एव गलस्तनस्थाने भवत्वित्यर्थः । ततः अनन्तरं परा द्वितीया रज्जुवद्धारमेव धृत्वा अजमिव समाकृष्य कण्ठे बद्ध्वा दूरं निनाय । अजो हि मेमे शब्दं करोति रज्ज्वा कण्ठे बद्ध्वा आकृष्यत इति परिहासः । अथ च रिक्तकण्ठो भूषारहितो न भासीति निजगुच्छं स्वहस्तस्थितपुष्पपल्लवस्तबकं गले बध्नन्ती न्यधत्त नितरां बलाद्विक्षेप, द्वितीया च हस्तपल्लवपुष्पस्रजं हारमिव चकर्षेति परिहासः । अथवा अस्मान् स्तुतिं कुर्वन् तुच्छगलो हाररहितकण्ठो न भासीति यदुक्त्वा गले हारं परितोषकं चिक्षेपेति वा । यद्वा अस्मत्सम्बन्धिन्यौ भवत्यौ मे प्रियतमे इति वदंस्त्वं शून्यकण्ठो न भासि तथापि त्वं वरणीय इति माल्यास्थाने हारमेव चिक्षेप । परा च तत्रैव धृत्वा परिहासमिषेण भोगार्थं चकर्षेति ज्ञेयम् । मि मे मे इति परिहासपक्षे युवामिति बिन्दुच्युतकेन एव वदन् युवा तरुणः छाग इति वा योज्यम् । अकृपत् लुङ् ॥ ५१ ॥

नलाय वालव्यजनं विधुन्वती दमस्य दास्या

निभृतं पदेऽर्पितात् । अहासि लोकैः सरटात् पटोज्झिनी भयेन जङ्घायतिलङ्घिरंहसः ॥५२॥

नलायेति । नलाय नलार्थं बालव्यजनं मयूरपिच्छतालवृन्तं चामरं वा विधुन्वती कम्पयन्ती नलसेवापरा काचित् सुन्दरी दमस्य दास्या निभृतं गुप्तं यथा तथा पश्चादागत्य पदे चरणसमीपे अर्पितात्मुक्तात् सरटात् कृकलासात् भयेन पटमुत्पाट्येवंशीला त्यक्तवस्त्रा दिगम्बरी भूता सती लोकैरहासि हसिता जनहासे हेतुरभूदित्यर्थः । किम्भूतात् सरटात् । जङ्घाया आयतिर्दैर्घ्यं तल्लङ्घयत्येवंशीलं रंहो वेगो यस्य तस्मात् । अत एव भयहेतोः सरटस्योर्ध्वारोहणं जातिस्वभावः ॥ ५२ ॥

पुरःस्थलाङ्गूलमदात् खला वृसीमुपाविशत् तत्र ऋजुर्वरद्विजः । पुनस्तमुत्थाप्य निजामतेर्वदाऽहसच्च पश्चात्कृतपुच्छतत्प्रदा ॥ ५३ ॥

पुर इति । काचित् खला धूर्ता समागताय कस्मैचिद्द्विजाय पुरःस्थं अग्रे स्थितं लाङ्गूलं पुच्छं यस्याः क्रियाया सद्यथा तथा कूर्माकारां वृसीं ऋषीणामासनं अदात् दत्तवती । वर श्रेष्ठः वरस्य नलस्य वा द्विजः तत्र तस्यां पुरःस्थलाङ्गूलायामेव वृस्यामुपाविशदुपविष्टः । यतो ऋजुः तस्याः कौटिल्यमजानानः । सा च खला निजामतेः स्त्रीयाज्ञानस्य आसनं मया व्यत्यस्य अन्यथा स्थापितमिति वदा वदती स्वाज्ञानं ज्ञापयन्तीत्यर्थः । तं पुनरुत्थाप्य पश्चात्कृतं पुच्छं यस्याः सा एवम्भूता चासौ सा च वृसी तत्प्रदा तां प्रददाति प्रददती सत्यमाना सती अहसत् । उपविष्टस्योरुद्वयमूलान्तरे स्थितमासनपुच्छं शिश्नमिव भविष्यतीति बुद्ध्या मया पुरोलाङ्गूलमासनं दत्तं । मदभिप्रायमजानानोऽयमुपवेशनं कृतवान् पश्चादेव पुच्छेन भवितव्यमिति ज्ञापयितुं परिहासबुद्ध्यैव सा वृसीं पश्चात्पुच्छां ददाना अहसदिति भावः । अथवा मया अपशकुनस्योपशमाय प्रवृत्तमिति निजामन्दां कुर्वन्तीति केचित् । आसनस्थापनाभिज्ञायाः निजायाः स्वस्याः अमतेर्वदेति वा । 'व्रतिनामासनं वृसी' इत्यमरः ॥ ५३ ॥

स्वयं कथाभिर्वरपक्षसुभ्रुवः स्थिरीकृतायाः पद-
युग्ममन्तरा । परेण पश्चान्निभृतं न्यधापयत् द-
दर्श चादर्शतले हसन् खलः ॥ ५४ ॥

स्वयमिति । कश्चित् खलः परिहासचतुरः स्वयं स्वेनैव कथाभिर्ह-
सदीत्यादिवाक्यैर्निजि स्थिरीकृताया कथाश्रवणप्रवणीकृताया वरपक्ष-
सुभ्रुवो नलपक्षीयाया सुन्दर्या वरस्य पक्षे पार्श्वे स्थिताया पादयुग्म
मन्तरा चरणद्वयमध्ये परेण स्वसखेन पश्चाज्जघन निभृतं गुप्तं यथा तथा
मध्याङ्गेनादर्शतलं दर्पणं न्यधापयत् अस्थापयत । हसन् प्रतिबिम्बि
तानुजघनकामसदनदर्पणं ददर्श च । भगादिदर्शनाद्धहास । पश्चा-
द्दमन्तद् ददृशेति वा । पदयुग्मं । अन्तरान्तरेण युक्तेति (पा० २ । ३ ।
४) द्वितीया ॥ ५४ ॥

सुधोपचारोद्धुरचारुलोचना विलासनिर्वासित
धैर्यसम्पदः । स्मरस्य शिल्पं वरवर्गविक्रिया
विलोकक लोकमहासयन्मुहुः ॥ ५५ ॥

सुधेति । अथ कामरहितकेवलपरिहासानन्तरं वरवर्गीया नलप-
क्षीयराजसद्मना विक्रिया मनोविकारो याभ्यस्तथा यासां सन्दर्शनेन
नलपक्षीयानां कामविकारो भवति ता वराङ्गना विलोकक द्रष्टारं लोकं
मुहुरहासयन् । तद्रूपादिदर्शनसमुत्पन्नकामविकारं वरलोकं दृष्ट्वा लो-
कोऽहसदिति भाव । कीदृश्य । उपचारेण कटाक्षविक्षेपादिना स्वानु-
रागज्ञापिके प्रीतिविलोकने विषये उद्धुराण्युत्सुकानि चारूण्यतिविशा-
लानि चतुराणि विलोचनानि यासां ता । तथा विलासै कटाक्षविक्षे-
पादिभि कृत्वा निर्वासिता त्याजिता धीराणां विलासिनां धैर्यसम्पद्
याभिस्ता । तथा स्मरस्य शिल्पं कृतिरतिसुन्दर । उपचारे परिवेष-
णादावुद्धुराः ताश्चारुनेत्राश्चेति वा । उपचारोद्धुरचारुलोचनानां
विलासै त्याजिता धैर्यसम्पद्येन तस्य स्मरस्य शिल्पं विस्मितं कर्तृ
वरवर्गविकारदर्शिनं लोकं मुहुरहासयदिति वा । स्वाश्रयज्ञापनोत्सु-
कानि चारूणि नेत्राणि यासु । तथा विलासै पूर्वोक्तैरेव त्याजिता

धैर्यसम्पद्याभियोमु वा । तया कामजनिता वरवर्गस्य विक्रिया विकारा कर्त्रीं विलोकक लोक मुहुरहासयन्निति वा । इदानीं कामचेष्टापुर मर परिणामः प्रकृत इति भाव ॥ ५५ ॥

तिरोवलद्वक्त्रसरोजनालया स्मिते स्मितं यत्खलु
यूनि बालया । तया तदीये हृदये निखाय तद्
व्यधीयतासम्मुखलक्ष्यवेधिता ॥ ५६ ॥

तदेवाह । तिर इति । कस्मिंश्चिद्यूनि तरुणे स्मिते सानुरागं हसिते सति कयाचिद्बालया तिरो वक्र वलद्वक्त्र सरोजनालया वलतो मुखकमलस्य दण्डो ग्रीवा यया एवम्भूतया सत्या यत स्मितं ईषद्धासि तया बालया तदीये हृदये हासितुर्यूनसि तत स्मितमेव निखाय खनित्वा आरोप्य असम्मुखस्य लक्ष्यस्य वेध्यस्य वेधिता वेधकता व्यधायत कृता खलूत्प्रेक्षाया । पराङ्मुखलक्ष्यवेधकत्व धनुर्विद्याया निपुणत्व भवति । य पराङ्मुख सन लक्ष्य विध्यति । पराङ्मुख्यापि तस्मितात्सानुरागा विद्धोसि इत्यर्थ । स्मित लज्जा चानुरागसूचिका । यथा स्वानुरागद्योतनार्थं हास्ये दत्ते अनया हास्यपूर्वं लज्जित चेतहि इयमप्यनुरक्तेति निश्चिन्वन्त तम स्मितमेव कामबाणीभूय प्राविशदिति भाव । बालत्वादेव वलितग्रीवत्व । प्रौढा तु सम्मुखमेव हसति । स्मिते स्मितमिति कर्तरि भावे क्त । वेधिता विधेस्तौदादिकात्ताच्छील्ये णिनि ॥ ५६ ॥

कृतं यदन्यत्करणापितत्यजा दिदृक्षु चक्षुर्यदवा
रि बालया । हृदस्तदीयस्य तदेव कामुके जगा
द याम्रींमखिलं खल खलु ॥ ५७ ॥

कृतमिति । करणस्य कर्तव्यस्य अर्पित परिवेषणादि तत्यजति तया बालया यदन्यदप्रस्तुत व्यापारान्तर कृत । तथा पुन पुनर्दिदृक्षुः दर्शनेच्छु किञ्चिद्दृष्टमात्रमेव द्रष्टु प्रवृत्तमपि चक्षुर्यदवारि अदर्शनात् परावर्तित तदेवान्याकरण चक्षुर्वारणरूप द्वयमेव कामुके विषये तदीयस्य हृद बालाहृदयन्निमो गतम याथार्थ्य यथार्थत्व जगाद । य-

न खल सूचक खल-प्रेषित निधित वा । दुर्जनो ह्यन्यदीयमनोगत मन्यस्मै निवेदयति । लज्जानुभयवशादिमवप्यनुरक्तेति सोऽस्थासीदिति भावः । खले इति पाठे स्वाशयद्योतनपरेङ्गितज्ञानचतुरे इति कामुक विशेषणम् ॥ ५७ ॥

जलं ददत्याः कलितानतेर्मुखं व्यवस्यता साहसिकेन चुम्बितुम् । पदे पतद्वारिणि मन्दपाणिना प्रतीक्षितोऽन्ये क्षणवञ्चनक्षणः ॥ ५८ ॥

जलमिति । कस्यचित् पिपासु जलं पायय्यमानायाः पादप्रक्षालनार्थं वा कस्मै चिज्जलं ददत्याः अत एव कलितानते नम्रीभूताया कस्याश्चित् सुन्दर्याः समीपवर्त्ति तत्र जनमध्ये चुम्बितु व्यवस्यता कृतोद्यमेनात एव साहसिकेनाविचार्यकारिणा केनचित् कामुकेन पतद्वारिणि पदे मन्दपाणिना विलम्बाय विरलाङ्गुलिमङ्गुलवज्जलपाणिना सता पादप्रक्षालनसलिलपाणिना वा सता अन्यस्याः चुम्बनसामग्र्यास्त्याः एकपङ्क्तिनिविष्टानामन्येषां तत्र विपरता वा ईक्षणस्य दर्शनस्य ईक्षणानां नेत्राणां वा वञ्चनार्थं प्रतारणार्थमनीक्षणार्थं क्षणोऽवसरः प्रतीक्षितः विलम्बेन गवेषित । पानपक्षे पानक्षणे पदे चरणे विरलाङ्गुलिभ्य पतद्वारि यस्मिन्नेवम्भूते । पादप्रक्षालनपक्षे पतद्वारि ण पदे मन्दपाणिनेति योज्य । अन्यनिरीक्षणावसरं सम्प्रतीक्ष्य तन्मुखं चुचुम्बेति भाव ॥ ५८ ॥

युवानमालोक्य विदग्धशीलया स्वपाणिपाथोरुहनालनिर्मितः । श्लथोऽपि सख्यां परिधिः कलानिधौ दधावहो तं प्रति गाढबन्धताम् ॥ ५९ ॥

युवानमिति । विदग्धशीलया चतुरया कयाचित् सुन्दर्या युवानं कञ्चित्तरुणमालोक्य कलानां सकलविद्याचातुर्याणां निधौ स्थानभूताया स्वाशयज्ञाया प्रियसख्या अथ च सखारूपे चन्द्रे स्वपाणिभ्यामेव पाथोरुहनालाभ्यां कमलाभ्यां निर्मितः रचितः कण्ठाश्लेषरूपः परिधिः श्लथोऽपि शिथिलसम्बन्धोऽपि तं नेत्रलक्ष्य युवानं प्रति लक्षीकृ-

स्य गाढवन्धना दृढबन्धनस्य दशां बभार । अहो आश्चर्यं । कान्ति- धौ च परिवधो युक्तः क्षयस्य गाढत्वविरोधात । सख्या चन्द्रे वा कृ तस्यालिङ्गनस्य परिवेषश्चन्द्रबन्धनरूपत्वादाश्चर्यं । मदालिङ्गनेच्छुरिव स्वाशयज्ञापनाय सखीं स्वालिङ्गितवती मामेव लिलिङ्गेति तदाशयम ज्ञासीदिति भावः ॥ ५९ ॥

नतभ्रुवः स्वच्छनखानुबिम्बनच्छलेन कोऽपि स्फुटकम्पकण्टकः । पयो ददत्याश्चरणे भृशं ह्रतः स्मरस्य बाणैः शरणेऽन्वविक्षत ॥ ६० ॥

नतेति । स्मरस्य बाणैर्भृशं ह्रतः नितरां पीडितोऽत एव स्फुटो जातः सात्त्विकः कम्पः कण्टका रोमाञ्चश्च यस्य स कोऽपि कामी स्वच्छनखेषु तदीयेषु अनुबिम्बनच्छलेन प्रतिबिम्बनच्छलेन प्रतिबिम्बव्याजेन पयो दुग्धं जलं वा परिवेषयन्त्याः पाययमानायाः कस्याश्चिन्नतभ्रुवः चरणे एव शरणे रक्षित्रौ न्यविक्षत प्राविशत् । कामपीडाशान्त्यर्थं चिरं चरणावलोकनव्याजेन प्रार्थनाप्रणतिसज्ञामकार्षीदिति भावः । भीतः सकम्पो बाणैः शल्यः सन् कश्चिच्छरणं विशति स इवेति शुद्धोत्प्रेक्षा । चरणौ ऽस्त्रियामित्यमरोक्तेः चरणे इति द्वितीया द्विवचनान्तं । चरणाविति च पाठः । शरणमिति पाठे चरणरूपद्वयं रक्षितारमिति व्याख्येयं । न्यविक्षत । नेर्विश इति (पा०१।३।१७)तङ् ॥६०॥

मुखं यदस्यापि विभज्य सुभ्रुवा ह्रिया यदालम्ब्य नतास्यमासितम् । यवादि वा यन्मृदु गद्गदं युवा तदेव जग्राह तदाप्तिलग्नकम् ॥ ६१ ॥

मुखमिति । सुभ्रुवा या मुखं मुखं विभज्य वक्रीकृत्य यदस्यापि इयदस्मि तथापि ह्रियं त्रपामवलम्ब्य लज्जामाश्रित्य नतास्यं नम्रमुखं यथा तथा यत् आसितं स्थितं मृदु मञ्जुलं गद्गदमस्पष्टवर्णं यथा तथा च यावदाप । अवादि युवा तदेव तस्यास्तस्या आलिङ्गनादिप्राप्तिनिश्चायकमिति जग्राह ज्ञातवानित्यर्थं । स्मिताद्यनुभावैराहिव मया लब्धैवेति निश्चिकायेति भावः । वा समुच्चये ॥ ६१ ॥

विलोक्य यूना व्यजनं विधुन्वतीमवाप्तसत्त्वेन
भृशं प्रसिष्विदे । उदस्तकण्ठेन मृषोष्मनाटिना
विजित्य लज्जां ददृशे तदाननम् ॥ ६२ ॥

विलोक्येति । यूना व्यजनं विधुन्वतीं चालयन्तीं सुन्दरीं अकस्माद्विलोक्य तद्दर्शनादेवाप्तसत्त्वेन आप्तसात्त्विकभावेन सता भृशं प्रसिष्विदे सात्त्विकः स्वेदः प्राप्त इत्यर्थः । आनन्दोद्रिक्तो मनोविकारः सत्त्वं तमेव प्रस्वेदं निह्नोतुं नाशितुं मृषा अलीकमूष्माणं प्रस्वेदनिमित्तं सन्तापं नाटयत्येवंशीलेनाभिनयता स्वेदापाकरणव्याजेनोदस्तकण्ठेनोर्ध्वीकृतमुखेन सता लज्जां विजित्य तदाननं तस्या आननं ददृशे, स्वकामपीडाद्यापनार्थं तया अपश्यदिति भावः । प्रसिष्विदे । षोपदेशत्वात् षत्वं । प्रसिस्विद इति पाठश्चिन्त्यः ॥ ६२ ॥

स तत्कुचस्पृष्टकचेष्टिदोर्लताचलद्दलाभव्यजना
निलाकुलः । अवाप नानानलनालशृङ्खलानिब
द्धनीडोद्भवविभ्रमं युवा ॥ ६३ ॥

स इति । स पूर्वोक्तो युवा व्यजनं चालयन्त्यास्तस्याः पूर्वोक्तायाः स्त्रियः कुचयोः स्पृष्टकाख्यमालिङ्गनं चेष्टते करोत्येवंशीला दोर्लता वा भुजवल्ली तस्याः सम्बन्धि चलद्दलाभं चपलपत्रतुल्यं व्यजनं तालवृन्तं तस्यानिलेन कम्पनसञ्जातवायुना आकुलो विवशीकृतः । स्तनस्पर्शिभुजचालितव्यजनविलोकनमात्रसञ्जातानुरागतरलः सन् नानानलानां अनेकशरकाण्डानां नालस्य मध्यस्य नलनालानां नलदण्डानां या या शृङ्खला निबन्धनहेतुत्वाच्छृङ्खला परस्परग्रथननिर्मितः पञ्जरस्तया नितरां बद्धः सङ्कुचितप्रचारीकृतः नीडोद्भवः पक्षी तस्य विभ्रमं पञ्जरमध्यस्य यद्विशिष्टं भ्रमणं अथ च तस्य विलाससाम्यं अवाप जनसम्मर्देऽप्यनुरागातिशयाद् व्यजनचालनचलद्भुजान्तर्वर्ति तत्कुचयोः परम्परयापि सस्पर्शं सांसर्गिकप्रीत्या साक्षादिव तत्कुचस्पृष्टकालिङ्गनमनुभवत् जनशङ्कया यथेष्टं चेष्टितुमशक्तः कामातुरः पञ्जरबद्धपक्षिनिर्विशेषमिवानुभवदिति भावः । लतायाश्च चलद्दलत्वं युक्तं । व्यजनचालनव्याजाच्चल

तो भुजस्यापि स्तनस्पर्शो स्पृष्टकालिङ्गनत्वं युक्तम् । नलआलेति पाठः समीचीनः । नलनालेति पाठे नानाविधाः कण्टकानां नलसम्बन्धिन्यः कण्ठबन्धनकारिण्यः शृङ्खला इत्यर्थः ॥ ६३ ॥

आवच्छटा कापि कटाक्षणस्य सा तथैव भङ्गी वचनस्य काचन । यया युवभ्यामनुनाथने मिथः कृशोऽपि दूतस्य न शोषितः श्रमः ॥ ६४ ॥

आवेति । सा कापि वर्णयितुमशक्या भावोल्लसनचतुरा कटाक्षणस्य नेत्रप्रान्तवक्रीक्षणस्यावच्छटा भङ्गिः परम्परा वा तथैव तद्वदेव सा काचन कापि वक्रोक्त्यादिरूपा वचनभङ्गी रचनापि अभूदिति शेषः । सा का । यया कटाक्षावच्छटया वचनभङ्ग्या च कर्त्र्या युवभ्यां मिथः परस्परं अनुनाथने अन्योन्यप्रार्थने विषये कृशोऽप्यल्पोऽपि दूतस्य श्रमः प्रयासो न शोषितोऽविफलीकृतः । यया कृत्वा युवभ्यां न शोषित इति वा । आत्मनैव चेष्टाविशेषरचनाद्वारा त्वं किमेष्यसि अहं वा गमिष्यामीत्यादिप्रश्ननिश्चयाद्दूतस्यानवसर इति भावः । यूनोर्वैदग्ध्यं सूचितं । युवतीच युवा चेत्यत्र, पुमान् स्त्रियेत्येकशेषः (पा० १।२।६७) कर्तरि तृतीया चतुर्थी वा । शोषितः । तत्करोतीति ण्यन्तात्क्तः ॥ ६४ ॥

पपौ न कश्चित् क्षणमास्यमेलितं जलस्य गण्डूषमुदीतमन्मथः । चुचुम्ब तत्र प्रतिबिम्बितं मुखं पुरः स्फुरन्त्याः स्मरकार्मुकभ्रुवः ॥ ६५ ॥

पपाविति । कश्चित्कोऽपि युवा आस्येन मुखेन मेलितं योजितं करपुटे पानार्थं धृतं जलस्य गण्डूषं पेयं जलं क्षणमात्रं न पपौ । यत उदीतमन्मथः उत्पन्नानुरागः । तथापि किमिति न पपावित्यत आह । तत्राधरसम्पृक्ते करपुटधृते जले प्रतिबिम्बितं पुरः स्फुरन्त्या विलसन्त्याः स्मरकार्मुकवद्भ्रुवौ यस्यास्तस्या मुखं चुचुम्ब । उदीतमन्मथः स न् वा चुम्बितवान् । जले पीते प्रतिबिम्बाभावात् पानार्थं गृहीते जले तस्या मुखप्रतिबिम्बे प्रतिबिम्बजनितमुखचुम्बनदत्ताङ्गकौतूहलवशात्तथा यावदवस्थानं तावन्न पपौ । गताया तु प्रतिबिम्बाजावात् प

पायिति भावः । पुरः स्फुरन्त्या जल दद्त्या एव मुसमिति वा ॥ ६५ ॥

हरिन्मणेर्भोजनभाजनेऽर्पिते गताः प्रकोपं किल वारयात्रिकाः । मृतं न शाकैः प्रथितास्थमस्ति वस्त्विपदमेवं हरितेति बोधिताः ॥ ६६ ॥

हरिदिति । हरिन्मणेर्भोजनार्थं भाजने पात्रेऽर्पिते पुरः स्थापिते स ति पत्रावलीभ्रान्त्या शाकपूर्णत्वभ्रान्त्या वा किल स्फुट प्रकोप नितरां रोषं प्राप्ता वारयात्रिका वरपक्षीया राजानः भोजनस्थानस्थितैर्लोकैरि ति बोधिता. । इति किं । इद वो युष्मभ्यं प्रथितास्थं पात्र शाकैः पलाशादिपत्रपत्रावलीभ्रान्तुकादिशाकानच्छन्नेरत एव न मृत तद्गुचितं पूर्णं वा किन्त्विदं हरिदिदुक्तमपि हरिन्मणिमयं त्विषा मृतं न पत्रावली नापि शाका इत्येवं ज्ञापितास्तेनस्पृहा इत्यर्थः । वारयात्रिकाः । वरयात्रा प्रयोजनमेषां इत्यर्थे, प्रयोजनमिति (५।१।१०९) ठक ॥ ६६ ॥

ध्रुवं विनीतः स्मितपुष्पवाग् युवा किमप्यपृच्छन्न विलोकयन्मुखं । स्थितां पुरस्फाटिककुट्टिमे वधूं तदङ्घ्रियुग्मावनिमध्यवन्धदृक् ॥ ६७ ॥

ध्रुवमिति । विनीत ध्रुवमाचारवानिव स्मितपुष्पवाक् मुख न विलोकयन् अपश्यन् युवा तस्याः अङ्घ्रियुग्मस्यावनिमध्ये भूमिभागे बद्धदृग्योजितनेत्रःसन् पुरः स्फटिकनिबद्धभूमौ स्थिता वधू किमप्यपृच्छत् । अये स्फटिककुट्टिमप्रतिबिम्बितनतद्गुगदर्शनार्थमेव योषिमिषेण तां स्थितीषकारेति भाव । अभावदर्शनार्थमेव मुख न विलोकितं । अय साक्षः कश्चित् ॥ ६७ ॥

अमी लसद्बाष्पमखण्डिताखिलं त्रियुक्तमन्योन्यममुक्तमार्दवं । रसोत्तरं गौरसपीवरं रसाद् बुभुजुरतामोदनमोदन जनाः ॥ ६८ ॥

अमी इति । अमी जना रसात् स्वादुविशेषानुरागादोदनं अभुञ्जत । किम्भूत । लसद्बाष्पं विद्यमानोष्माणं दृष्टकदुष्णं । तथा अखण्डि

तथाचाथखिलः सम्पूर्णश्च पाकेऽपि अविच्छिन्नं तण्डुलमिति यावत्। अभग्नमखिलं स्वरूपं यस्येति वा। तथा पाकसमये नवनीतक्षेपात् अन्योन्यं वियुक्तमसंलग्नसिक्थकं। तथा अमुक्तं अत्यक्तं मार्दवं येन सुजातिशालिबीजत्वादतिकोमलं। तथा रसोत्तरं स्वादुबहुलं। तथा गौरं चन्द्रधवलं। तथा अपीवरं जीरकादिसुजातिशालिबीजत्वात् सूक्ष्मं दीर्घतण्डुलं अत एवामोदनं हर्षहेतुं। परिमलबाहुल्याद्वा चामोदनं। अखण्डत्वे गलद्वाष्पत्वं। मार्दवात्यागे अन्योन्यवियुक्तत्वं। अत कारणागुणाद्यैः परस्परविरोधाभासः ॥ ६८ ॥

वयोवशास्तोकविकस्वरस्तनीं तिरस्तिरश्चुम्बति सुन्दरे दृशा। स्वयं किल स्रस्तमुरस्यमम्बरं गुरुस्तनी ह्रीणतरापराऽऽददे ॥ ६९ ॥

वय इति। सुन्दरे अन्यजने दृशा वयोवशेन निर्गच्छदागच्छद्वैशवतारुण्यपारतन्त्र्येण स्तोकमीषद्विकस्वरौ उच्छसितमण्डलौ स्तनौ यस्यास्तां वयःसन्धौ वर्त्तमानां मुग्धां तिरस्तिरो वक्रं वक्रं यथा चुम्बति पश्यति सति सानुरागकटाक्षमात्रेणापि चुम्बनजन्यं सुखमनुभवति गुरुस्तनी तारुण्यभरपीवरदृढतरकुचाऽपराऽन्या स्त्री तदनुरागाद्वीडिततरा अतिघनलज्जा सती यथास्थानस्थितमपि स्वयमात्मनैव स्रस्तं किल स्थानच्युतं जातमिवोरस्यम्बरं हृदयावरणं बलाद्विगलितं कृत्वा पुनस्तदाच्छादनाय आददे अङ्गीचकार। मुग्धां प्रत्यनादरं हृदयावरणच्छादनं चकार। विदग्धस्त्रीरीतिरीदृशी। अथ च स्वमिनामल्पस्तनीं मुग्धां स्वसम्भोगमसहनासमां किं पश्यसि पक्कमालूरसमानस्तनीं स्वसम्भोगसमां मां पश्येति स्वाशयज्ञापनायादृश्यमपि पीनघनस्तनयुगमदर्शयदिति भावः। ह्रीणतरा। नसत्तनिषण्णेति (पा०८।२।६१) पूर्वस्त्रावः ६९

यदादिहेतुः सुरभिः समुद्रजे भवेत्तदाज्यं सुरभि ध्रुवं ततः। घृताम्बरेभ्यः प्रवितीर्य पायसं तदा घकुल्यातटसंकतं कृतम् ॥ ७० ॥

यदिति । सुरभिः कामधेनुर्गौर्वा । अथ च सौरभ्ययुक्त पदार्थ-समूहे सत्यतिविषये यस्मादिहेतुः दुग्धादिद्वारा परम्परया मूलकारणं ततो ऽथ तस्मादिव सौरभ्यधर्मयुक्तकारणादिव यदाज्य सुरभि भवत् तस्मात् कारणगुणा हि कार्य्ये समवयन्तोऽतिसुरभीजयितुमर्हन्ति । तदाज्यमेभ्यो जनेभ्यो यथूभि प्रवितीर्य्य परिवेष्य पायस सारपकृत-बहुलमन्नं तदोघकुल्यानां घृतप्रवाहरूपाणां कृत्रिमाल्पसरितां तटयो सैकतं कृतम् । पूर्वं पायस परिवेष्य तस्योपरि धाराप्रवाहरूपे घृते क्षिप्ते द्विधा जूय घृतमभित स्थित पायसं शुभ्रत्वात् घृतकुल्यासैकतमिव आ भते स्मेति भावः । प्राज्यसौरभ्यबाहुल्यमुक्तम् । यदाज्यमित्येव पाठ ७०॥

यदप्यपीता वसुधालयैः सुधा तदप्यदः स्वादु
ततोऽनुमीयते । अपि क्रतूपर्बुधदुग्धगन्धिने
स्पृहां यदस्मै दधते सुधान्धसः ॥ ७१ ॥

यदपीति । यदपि वसुधालयैर्मनुष्यै सुधा अमृत न पीता तदपि तथापि सुधारमाज्ञानेऽपि अदः आज्य ततोऽमृतादपि सकाशात स्वादु मिष्टमित्यनुमीयते । यस्मात् सुधान्धसः अमृताशा देवा अपि क्रतौ नपर्बुधेन अग्निना दग्धगन्धिने विनाशितसौरजाय यस्मै घृताय स्पृहां इच्छां दधते । यागे हि हुत घृत देवा भुञ्जते । यद्यमृतादधिकरस मा भविष्यत्तस्मादमृतादा अपि देवा यागानलविकृतगन्धमप्येतरसानुराग कपमभ्यवहरिष्यन् अभ्यवहरन्ति तावत्तस्मादमृतादपि विकृतगन्धमपि घृतमधिकरसं । किमुत स्पष्टसौरजमिति भाव । मनुष्यैरपि सुधा य-स्मान्न पीता सुधान्धसोऽपि विशिष्टायास्मै यस्मात् स्पृहयन्ति तस्मा-दपि च हेतोरदो घृत सुधायाः स्वादुतरमनुमीयते । एकोऽलपरसत्वा दुबुद्धिपूर्वं ममृतं मास्वादयत्येव । अन्ये च नित्य प्राप्तामृता अपि य-स्माद्घृताय स्पृहयन्ति तस्माद्धेतुद्वयादमृतादप्यधिकमेतदनुमीयते इ ति वा । क्रतूपर्बुधेन दग्धयाणी गन्धश्च सो ऽस्त्यस्येति कर्मधारया-दिनिः । स्पृहेरीप्सित (पा० १ । ४ । ३६) इति सम्प्रदानत्वम् ॥ ७१ ॥

अयोधि नो ह्रीनिभृतं मदाङ्कितं प्रतीत्य या ना ·

द्रुतवत्यसाविति । लुनाति यूनः स्म धियं कियद्
द्रुता निवृत्य वालादरदर्शनैपुणा ॥ ७२ ॥

प्रबाधीति । असौ बाला स्त्रीनिवृत बालत्वाल्लज्जावशाद्विस्पष्ट इति च हेतोर्भावसूचकं मदिङ्गितं भ्रूविक्षेपादि मम चेष्टितं नो प्रबोधि अज्ञासीत् किंवा । अथवा प्रतीत्य ज्ञात्वा ननु रागाज्ज्ञातवती अज्ञातवतीत्येयरूपा पुनः पुनर्जायमाना यूनो धियं संशयबुद्धिं कियन्तं मार्गं गतापि बाला निवृत्य परावृत्य आदरदर्शनं सादरकटाक्षविलोकनं तद्रूपेणैपुणा लुनाति स्म चिच्छेद । मदिङ्गितज्ञानपूर्वमस्यानुरागं प्रकटीचकारेत्यर्थः । साद्भुतविलोकनात् मदिङ्गितं ज्ञात्वा इयमप्यनुरक्तेति युवा निश्चिकायेति भाव । कियद्द्रुता । द्वितीयाश्रितेति ( पा० २ । १ । २४ ) समास । कियद्यथातथागतेति क्रियाविशेषणं वा ॥ ७२ ॥

न राजिकाराद्भुमनाजि तत्र कैर्मुखेन सीत्कारकृता दधद्धि । धुतोत्तमाङ्गैः कटुभावपाटवात्
कायद्भकण्डूयितमूर्द्धतालुभिः ॥ ७३ ॥

नेति । युग्म । तत्र भीमगेहे भोजनावसरे वा राजिकामोदात् साधितं दधि दधत् दधिमिश्रितं व्यञ्जनं तैदत्यातिशयात् सीत्कारकृता मुखेन कैर्जन्यजनैर्नाभाजि अपि तु सर्वैरपि भुक्तं । किम्भूतैः । कटुभावपाटवात् कटुत्वातिशयात् धुतोत्तमाङ्गैः कम्पितशिरोभिः । तथा भोजनकाले शिरः कण्डूयनस्य स्मार्त्तयवनैर्निषिद्धत्वादकाण्डे अकाले कण्डूयिते मूर्द्धतालुनी यैस्तैः । मुखस्यैव भोजनसाधनत्वे सिद्धेऽपि सीत्कारादिविशिष्टत्वद्योतनार्थं मुखेनेत्युक्तं । राजिकाराद्भुभाजिनामिव जातिः ॥ ७३ ॥

धियोगिदाहाय कटूभयत्विषस्तुषारभानोरिव रा
द्भमाह्तनम् । मितं मृदु मागध दाहदायि तन्
सतः सुहृत्पूर्वमिथाहितस्ततः ॥ ७४ ॥

वियोगीति। वियोगिना स्त्रीपुंसां दाहाय मोहार्थं कटुभवन्त्य-
रित्यपो दोषयो यस्मात्तद्यदीप्तिस्तुपारभानोश्चन्द्रस्याहृत खण्डमिव सित
ग्रेत तथा प्राक् प्रथमं मृदु प्रथमस्पर्शसमये कोमल अथ पश्चात्तुरग्र-
संपानन्तर तालुजिह्वादेस्तैक्ष्ण्यातिशयाद्दाहदायि दाहकारि आहृतं
आनीत तद्राजिकाराद्वभोजीति पूर्वेणान्वयः। तुषारभानोः सका-
शादाहृतमिति वा। क इव। खल इव। किम्भूतः। पूर्वं सुहृदा-
पातरमणीयस्ततोऽनन्तरमहितो वैरी। रायी इति कान्यकुब्जभाषाया।
मोहरपा इति दाक्षिणात्यभाषया राजिकाना नाम ॥ ७४ ॥

नवौ युवानौ निजभावगोपिनावभूमिषु प्राग्वि
हितभ्रमिक्रमम्। दृशोर्विधत्तः स्म यदृच्छया
किल त्रिभागमन्योन्यमुखे पुनः पुनः ॥ ७५ ॥

नवाविति। यव नवौ वर्तमानौ नवावप्रगल्भौ अत एव निज-
भावगोपिनौ स्वानुरागापह्नवपरौ कौचिद् युवानौ अभूमिषु लोकव्य-
वहारायोग्येषु स्वयोग्येषु वा अनुद्दृश्येषु वा वस्तुषु प्राक् पूर्वं विहितः
कृतः भ्रमैर्निरर्थकभ्रमणस्य क्रमः परम्परा यत्र येन वा एवम्भूतं दृ-
शोर्नेत्रयोस्त्रिभागं तृतीयांशरूप कटाक्ष अन्योन्यमुखे पुनः पुनः वि-
धत्त स्म चक्रतुः यदृच्छया किल। अन्यविलोकनवत स्वेच्छामात्रेण
क्रमसम्प्राप्तमन्योन्यमुखविलोकनं कुरुत न त्वनुरागेणेति लोकप्रतीति-
र्यथा स्यादेवं वस्त्वन्तरविलोकनव्याजेनान्योन्यमुखे कटाक्षैर्धाचक्राते
इति भाव। त्रिभागमिति पूर्ववत् समर्थनीयम् ॥ ७५ ॥

व्यधुस्तमां ते मृगमाससाधितं रसादशित्वा मृ
दु तेमनं मनः। निशाधवोरसङ्गकुरङ्गजैरदः
पलैः सपीयूषजलैः किमश्रपि ॥ ७६ ॥

व्यधुरिति। ते जन्यजना मृगमांसे साधितं राद्धं संस्कृतं मृदु तेम-
नाख्य व्यञ्जनविशेषं रसात् प्रीत्याऽशित्वा भुक्त्वा इति मनो व्यधुस्तमा
नितरां चक्रुः। इति किं। अदः तेमनं निशाधवश्चन्द्रः तस्योरसङ्गे
वर्तमान कुरङ्गो हरिणस्तस्माज्जातैः सपीयूषजलैः अमृतरूपैः जलैः

मद्य वर्त्तमानैः पलैर्मासैरपि कि द्यपाधि कि । रसातिशयान्मनमाय तार्कितवन्तस्ते इत्यर्थः । तेमनस्यातितरां स्वादुत्वमुक्तम् । श्रपि । श्रा पाके इत्यस्मात् कर्मणि चिणि घटादित्वान्मित्वाद्ध्रस्वः ॥ ७६ ॥

परस्पराकूतजदूतकृत्ययोरनङ्गमाराद्धुमपि क्षण प्रति । निमेषणेनैव कियच्चिरायुषा जनेषु यूनोरुदपादि निर्णयः ॥ ७७ ॥

परस्परेति । परस्परस्याकूतात् चेष्टाविशेषादेव जातं दूतकृत्यं सम्भागमस्मातिर्ययोः कयोश्चिद्यूनोः स्त्रीपुंसयोरनङ्गमाराद्धुं सुरतं कर्त्तुं यत्क्षणं समयस्तं प्रति उद्दिश्य सदा क्रियमाणनियमापेक्षया कियच्चिरायुषा कियच्चिरं किञ्चिदधिककालमायुर्वर्त्तमानता यस्येयम्, तेन कियच्चिरकालस्थायिना निमेषणेनाक्षिपक्ष्मसङ्कोचेनैव कर्त्रा करणेन वा जनेषु मध्ये बहुजनेषु वर्त्तमानेषु सत्सु अपि निर्णयः निश्चय उदपादि कृतो जातो वा । कदा सम्भोग इति इङ्गितेन पृष्टे सति नेत्रे निमील्य किञ्चित्कालं स्थित्वा जने निद्राणे सति आगन्तव्यमिति रात्रिः सङ्केतसमय इति निरणायीति भावः । उदपादि । चिण्ते पदः इति (पा० ३ । १ । ६०) कर्त्तरि कर्मणि वा चिण् ॥ ६७ ॥

अहर्निशा वेति रताय पृच्छति क्रमोष्णशीतांशुकरार्पणाद्विटे । ह्रिया विदग्धा किल तन्निषेधिनी न्यधत्त सन्ध्यामधुरेऽधरेऽङ्गुलीम् ॥७८॥

अहरिति । विटे कामुके रताय आवयोः सम्भोगं कर्त्तुं अहर्निशा वेति उष्णकरधर्मोपलक्षितं दिनं वा शीतांशुकरशैत्योपलक्षिता रात्रिर्वा समय इति क्रमेणोष्णशीतयोरक्ष्णोरुपरि करार्पणादेव चेष्टितात् कामपि पृच्छति सति विदग्धा चतुरा तत्प्रश्नाशयज्ञा ह्रियोपलक्षिता अक्षरानिङ्गितेनैव तन्निषेधिनी तयोर्दिननिशयोर्निषेधं कुर्वाणा सन्ध्यावन्मधुरे रमणीयेऽधरे स्वोयोष्ठे अङ्गुलीं न्यधत्त न्यापयत् । अनभिमतमर्थं निषेधन्त्यः स्त्रियो नासं किमर्थं ज्ञातमित्याद्यभिधायाधरेऽङ्गुलीं स्थापयन्तीति जातिः । किन्न प्रसिद्धं । लोकस्य चैवमेव प्रतीति-

जाता । सा नु तन्निषेधव्याजेन दिने रात्रौ वा अनवसरः सन्ध्यैव र-
तमनय इत्यकथयदिति भाव । यद्वा दिनं सूर्यालोकात् रात्रौ चन्द्रा
लोकात् द्वयमप्यनुचित । किन्तु सह न्धकारमलिना सन्ध्यैव रन्तु यो-
ग्येति भाव. ॥ ७८ ॥

क्रमेण कूरं स्फुरद्गतोष्मणः पद सिताब्ज शीतां
चतुरेण वीक्षिता । दधौ विदग्धासणितध्वरे
ङ्गलीमनौचितीचिन्तनाविस्मितं किल ॥ ७९ ॥

क्रमेणेति । अयं श्लोक क्षेपक । कूर भक्त सिता शर्करा । किमि
दमनेनानुचित क्रियत इत्यनौचित्यचिन्तनेन विस्मित किल विस्मितेव ।
अहृष्यैते यावदेवेत्यर्थः । भावः स एव ॥ ७९ ॥

कियत् त्यजन्नोदनमानयन् कियत् करस्य प
प्रच्छ गतागतेन यां । अह किमेष्यामि किमे
ष्यसीति सा व्यधत्त नम्र किल लज्जयानन ८०

किमदिति । कृतसुरतकालनिश्चय स एव युवा कियदल्प ओदन
पुर स्थितां वीक्ष्य त्यजन् पात्रे स्थापयन् कियदोदन च स्वम्प्रति पुन-
रानयन् सन् करस्य भक्तपुरस्त्यागवशात् पुरोगमनेन स्वम्प्रति भक्ता-
नयनवशादागमनेन च क्रमेण त्वा प्रत्यह किमेष्यामि त्व वा मा प्रति
किमेष्यसीति यां पप्रच्छ सा आनन नम्र व्यधत्त लज्जया किल । कि-
लत्यलीके । लोकप्रतीतौ अनया लज्जया मुख नम्रीकृत इति । तत्व-
तस्तु सुरतम्मीकरणेनाहमागमिष्यामीति सन्दर्शितवतीति भाव ।॥
वीक्ष्य मुख नम्रीकृत्य स्वचरणौ पश्यन्ती त्वमेवागत्य मच्चरणयोर्निप-
तेति वा भावः । भाजनसमये भाक्ता कियन्त ओदन विभज्य स्थाप-
यति कियन्तं दध्यादिना सह भोक्तु गृह्णातीति जाति. । कियन्त त्य
जन् बहुत्वात् पुनर्ददान. कियन्तच्च पुन पात्र प्रत्यानयन्निति वा ८०

यथामिषे जग्मुरनामिषभ्रमं निरामिषे चामिष-

मोहमूहिरे । तथा विदग्धैः परिकर्म्मनिर्म्मित विचित्रमेते परिहस्य भोजिता ॥ ८१ ॥

यथेति । वारयात्रिका यथा येन प्रकारेणामिषे मांसे अनामिषस्य निरामिषस्य भ्रमं जग्मुः, यथा येन प्रकारेण निरामिषे मांसलेशवर्जितेऽपि तेमनादौ रूपस्वादादिभिः आमिषमोहं मांसभ्रमं ऊहिरे तर्कितवन्तः तथा तेन प्रकारेण विदग्धैर्नितरां कुशलैः सूपकारैः कर्तृभिः एते वारयात्रिकाः परिकर्म्मभिः साधनद्रव्यैर्निर्म्मितं विचित्रमन्नं परिहस्य पूर्वोक्तं भ्रमनिमित्तं परिहासं भोजिताः ॥ ८१ ॥

नखेन कृत्वाधरसन्निभां निभाद् युवा मृदुव्यञ्जनमांसफालिकाम् । ददंश दन्तैः प्रशशंस तद्रसं विहस्य पश्यन् परिवेषिकाधरम् ॥ ८२ ॥

नखेनेति । कश्चिद् युवा मृद्वीं व्यञ्जनमांसस्य फालिकां खण्डं नखेन कृत्वा निभात् व्याजात् अधरसन्निभां ओष्ठाकारां द्विधा कृत्वा पूर्वमधरसदृशीमपि नखेन द्विधा कृत्वा, मध्ये नखेन रेखाकरणात्सितरां मध्यस्थितरेखाधरसदृशीं वा कृत्वा दन्तैर्ददंश परिवेषिकाधरं मांसव्यञ्जनदायिन्याः अधरं पश्यन् विहस्यैतादृशी स्वादुतरा मांसफालिका कदापि नोपभुक्तेत्यादिप्रकारैस्तस्याः फालिकायाः सुस्वादुतां प्रशशंसतायोग्य । स्वादुतरं त्वदीयाधरमेव दशामीति सूचयन्स्मिन्मांसखण्डे तदधरतामारोपयन् स्वाशयं तामज्ञापयदिति भावः ॥ ८२ ॥

अनेकसंयोजनया तथा कृतैर्निकृत्य निष्पिष्य च तादृगर्जनात् । अमी कृताकालिकवस्तुविस्मयं जना बहु व्यञ्जनमभ्यवाहरन् ॥ ८३ ॥

अनेकेति । अमी जनाः वारयात्रिकाः बहु मूलकन्दपुष्पपत्रफलादिरूपं शाकादिव्यञ्जनमभ्यवाहरन् बुभुजिरे । किं विधं । अनेकेषां मा-

नाविधमरीच्यादिद्रव्याणां संयोजनया सम्बन्धेन तथा कृते वस्त्वन्तर-
स्यैव गन्धरसादिकरणात् सादृश्यादिनिर्म्माणात् मद्यपा निश्चित्य नितरा
कर्तिस्था निपिपय चूर्णीकृत्य चाकारसाम्यादिना सादृश्यनात् यस्य
न्तरमादृश्यस्य सम्पादनात् रूपान्तरेण गन्धादिकारणाद्धेतोः कृत आ-
कालिकेऽसमयप्रभवे वस्तुनि विस्मय आश्चर्यं येन इति क्रियाविशेष-
ण वा । तथा आकृते आकारादिति वा । फलादि कर्तिस्थ राजि-
काद्यादिसंयोगाद्रूपान्तरोत्पत्तिस्तया रूपान्तरापत्तिश्च । गोधूमादि-
पिष्टा शर्करासम्बन्धाद्रसान्तरोत्पत्तिरित्यादिवैदग्ध्याद् भोक्तॄणां विस्मयो
ऽभिवासनविशेषाद्याकालिकत्वमो युक्त ॥ ८३ ॥

पिपासुरस्मीति धियोधिता मुखं निरीक्ष्य बाला
सुहितेन वारिणा । पुनः करे कर्त्तुमना गलन्ति-
कां हसात् सखीनां सहसा न्यवर्त्तत ॥ ८४ ॥

पिपासुरिति । वारिणा अम्बुना सुहितेन तृप्तेन पिटेन मुखं नि-
रीक्ष्याह पिपासुः पातुमिच्छुरस्मि इति धियोऽधिता विचारयिता बाला
ऽभूद्युवकान्त्याद्यभिप्रायविशेषा छप्रौढा पुनरपि करे गलन्तिकां पात्र
सुवर्णभाजनं कर्त्तुमना सती तदाशयज्ञानातिचतुराणां सखीनां ह-
साद्धास्याद्धेतोः सहसा झटिति सुप्रबुद्ध इव जलपानारम्भसम्भ्रमा-
न्न्यवर्तत परावृत्ता । सहसा सस्मिता सतीति वा । कम्पोत्तरपरित्या-
गेन सामान्येन पिपासुरस्मीति वद्वयमेतदीयाधरं पिपासुरस्तीत्यनेन-
ह्याशयमिव न जानातीति सखीभिः कृताशास्यादियमपि तदाशय ज्ञा-
त्वा गलन्तिका पमर्नोत्पापयदिति भाव । पूरणगुणेत्यादिना ( पा०
२।२।११) सुहितार्थयोगे षष्ठीसमासनिषेधादेव वारिणेति तृतीया ॥ ८४

युवा समादित्सुरमत्रगं घनं विलोक्य तत्रैणदृ-
शोऽनुबिम्बनम् । चकार तन्नीविनिवेशितं कर
बभूव तच्च स्फुटकण्टकोत्करम् ॥ ८५ ॥

युवेति । अमत्र पात्रस्य घृतं ममादित्सुर्ग्रहीतुकामः कश्चित् युवा तत्र घृते एणदृशः परस्याया मृगाक्ष्याः परिवेशिकाया अनु विम्बन प्रतिविम्ब विलोक्य कर स्वहस्त तस्य विम्बस्य नीविषु भङ्गीनिग्रहुनाभिचुम्बितवस्त्रविच्छित्तिषु निवेशनशीला चकार तत्रास्यापयदित्यर्थ । तथ तस्या प्रतिविम्ब स्फुटाः कण्टकोत्करा यस्मिन सरोमाञ्चमभूदित्यर्थः । स्वप्रतिविम्बनीविग्रन्थिमोचनार्थं नाभिनीविमविधे स्पर्शकारिणस्तत्करस्य चेष्टा दृष्ट्वा तस्य स्वसम्भोगवासनां ज्ञात्वा तदानीमेतस्मिन्ननुरागाद्रोमाञ्चिताभूत् तादृश्याथ प्रतिविम्बितत्वात् प्रतिविम्बमपि रोमाञ्चितमभूदिति भाव । द्वयारप्यनुरागस्तुल्यो जात इति भावः ॥८५॥

प्रलेहजस्नेहकृतानुबिम्बनां चुचुम्ब कोऽपि श्रितभोजनस्थलः । मुहुः परिस्पृश्य कराङ्गुलीमुखैस्ततोऽनुरक्तैः स्वमवापितैर्मुखं ॥ ८६ ॥

प्रलेहेति । कोऽपि विट लिह्यत इति लेहः प्रकृष्टो लेह. प्रलेहः सूपणादिद्रव्ययुक्त आर्द्रकादिसंस्कृततक्रादिनिर्मितो द्रवद्रव्यविशेष तस्माज्जाते स्नेहे तैलादौ कृतमनुबिम्बन यया कृत स्थिममनुबिम्बन यस्या था एवंविधां परस्या सुन्दरीं, श्रित भोजनस्थलं येन एवंविध सन् प्रतिबिम्बितां तामेव कराङ्गुलीमुखैः कराङ्गुल्यग्रैर्मुहु. परिस्पृश्य स्पृष्ट्वा चुचुम्ब । कीदृशैः । स्वमुख ममवापितैस्तथा रक्तैं स्वभावात् तरुणत्व तस्य स्पर्शाद्वा ततोऽनु तस्मादनुरागात् किं । अङ्गुल्यग्रे रक्तत्वादनुरागाचुम्बिता । किमुत्प्रेक्षा । रिक्तैरिति पाठे मुहुः परिस्पृश्य ततोऽनु तदनन्तरमेव रिक्तैः प्रलेहशून्यैरेव स्वमुख प्रापितै· कराङ्गुलीमुखैश्चुचुम्बेत्यर्थः । प्रलेहेति । घटकादिनिक्षेपात् तैलादिबिन्दवस्तरन्ति तत्र जात प्रतिमुख प्रतिबिम्बमङ्गुल्या स्पृशति तत्र प्रलेहचलनात् प्रतिबिम्बभङ्गभयात् अङ्गुल्यग्रैर्लेहनव्याजात् परम्परया चुम्बितवानिति भाव । ता प्रति स्वानुरागमदर्शयदिति भाव· ॥ ८६ ॥

अराधि यन्मीनमृगाजपक्षिजैः पलैर्मृदु स्वादु

सुगन्धि तेमनम् । प्रशाकि लोकैः कुत एव जे-
मितुं न तत्तु सङ्ख्यातुमपि स्म शक्यते ८७॥

पराधीति । मीनेभ्यः मत्स्येभ्यः पिच्छकादिमृगेभ्यः अजेभ्य छागेभ्य पक्षिभिस्तित्तिरिलावकादिभक्ष्यपक्षिभिश्च जातैः पक्वैर्मांसैर्मृदु स्वादु सुगन्धि पाकेन परिमलविशेषयुक्तञ्च यत्तेमनाख्य व्यञ्जनं सूपकारैराधि साधितं तद्वाहुल्याल्लोकैः सङ्ख्यातुमपि न शक्यते स्म । जेमितुं तु पुन कुत एव प्रशाकि, अपितु भोक्तुं शक्य नाभूदेव । जेमितु । जिमु अदने ॥ ८७ ॥

कृतार्थनश्चाटुभिरिङ्गितैः परा परास्य यः किञ्च-
नकुञ्चितभ्रुवा । क्षिपन्मुखे भोजनलीलयाङ्गु-
लीः पुनः प्रसन्नाननयान्वकम्पि सः ॥ ८८ ॥

कृतेति । किञ्चन किञ्चित्कुञ्चिते वक्रीकृत्योरिव भ्रुवौ यया कयाचिदिङ्गितैरङ्गुलिवस्त्रादिचेष्टितैः चाटुभिः प्रियवचनैश्च कृतार्थनः स म्भोगप्रार्थना येन तथाविधो यो विटः पुरा पूर्वं परास्य निरस्तः प्रसन्नाननया स्मरवृष्टिव्यञ्जितप्रसादमुख्या तया भोजनलीलया ग्रासमिषेण मुखेऽङ्गुलीः प्रक्षिपन् अङ्गुलीस्पर्शेन ता प्रतिदीनत्व सूचयन् स पुनरन्वकम्पि अनुगृहीत तद्दैन्य दृष्ट्वा सम्भोगस्तयाऽनुमत इति भाव ८८

तुकारि नीहारनिभं प्रभञ्जनाद्धूपि यच्चागरु-
सारदारुभिः । निपीय भृङ्गारकसङ्गि तज्जतै-
र्व्यस्मि वारि प्रतिवारमीदृशम् ॥ ८९ ॥

अकारीति । यद्वारि प्रभञ्जनात् व्यजनादिवायुसङ्गाद्धेतोः नीहारनिभ तुषारतुल्यमकारि यच्च अगरुसारस्य कृष्णागरोर्दारुभिरधूपि धूपितं भृङ्गारके सुवर्णपानपात्रे सङ्ग स्थितिर्यस्यास्तीति तद्वारि । तत्र भोजनावसरे भोजगृहे वा निपीय निरन्तर पीत्वा तैर्जनैः प्रतिवार पुनःपुनरीदृश वस्त्यमाणप्रकारेणावर्णि प्रशंसायि । प्रतिवार निपीयेति वा । अगरुरित्येव पाठ । भृङ्गार कनकालुकेत्यमर । स्वल्पत्वे कन् ॥८९॥

त्वया विधातस्सर्वदकारि चामृतं कृतञ्च यज्जीव-
नमम्बु साधु तत् । वृथेदमारम्भि तु सर्वतोमु-
खं तथाऽर्पितः कर्त्तुमिदंपिबस्तव ॥ ९० ॥

जलवस्तु नमेवाह । त्वयेति । हे विधातः त्वया च यदम्बु उदकं य दमृतमङ्गं सर्वदकारि यच्च जीवनसञ्ज्ञमकारि तद् द्वयमपि साधु उचितमेव कृतम् । 'अमृततुल्यरसत्वात्प्राणधारणहेतुत्वाच्चान्वर्थत्वाद्युक्तमेवैतत् तस्य सञ्ज्ञाद्वयमित्यर्थः । तु पुनरिदं सर्वतोमुखसञ्ज्ञं वृथाऽऽरम्भि कृतं अन्वर्थत्वाभावान्निरर्थकमेतत् कृतं । यस्मादिदं जलं पिबति इद पिबोऽस्मदादिपुरुषस्तथा सर्वतः सर्वदिक्षु मुखानि यस्यैवंविधस्तव कर्तुमर्पितः अस्मदादेर्बहूनि मुखानि सर्वेष्वप्यवयवेषु त्वं चेदकरिष्यत् तर्हि अस्मदादिभिरिदमा तृप्तिं पातुमशक्ष्यत् न त्वेकेन मुखेनेति । नितरां गौरवमाधुर्यादिगुणयुक्तमेतदिति भावः । तौ तुल्ययोगस्य द्योतकौ । पयः कीलालममृतं जीवनं भुवनं वनम् । पुष्करं सर्वतोमुखमित्यमरः । इदंपिबः । पाघ्राध्मादिना (पा०३।१।१३७) शः ॥ ९० ॥

सरोजकोशाभिनयेन पाणिना स्थितेऽपि कूरे मु-
हुरेव याचते । सखि त्वमस्मै वितर त्वमित्यु-
भे मिथो न वादाद्ददतुः किलौदनम् ॥ ९१ ॥

सरोजेति । उभे सख्यौ इति मिथो वादाद् द्वैमत्यात् किलौदनं न ददतुः किलेति व्याजे । इति किं । हे सखि त्वं पात्रमध्ये कूरे ओदने स्थितेऽपि सरोजकोशवदभिनय आकारो यस्य तेन वराङ्गप्रार्थनासूचकेन पाणिना कूरं याचतेऽस्मै कामुकाय कूरं वितर देहि । द्वितीया वदति त्वं वितरेति । विवदमाने कूरदानव्याजेन सरप्रार्थितस्तनवराङ्गदानेऽन्योन्यं प्रवर्त्तयन्त्योर्मध्ये ऽन्योन्य लज्जावशादेकमरा रिरंसुरपि नाङ्गीचकारेति भावः । अनुवादादिति पाठे उक्तरूपादनुवादादुभेऽपि स्वरूपगोपनं किन्न न ददतुरित्यर्थः । ओदनदानव्याजेन सरप्रार्थितदानमङ्गीचक्रुरिति भावः ॥ ९१ ॥

इयं कियच्चारुकुचेति पश्यते पयःप्रदाया हृदयं समावृतम् । ध्रुवं मनोज्ञा व्यतरद्यदुत्तरं मिषेण भृङ्गारधृतः करद्वयी ॥ ९२ ॥

इयमिति । पय.प्रदायाः समावृत वस्त्राच्छन्नमपि हृदयं इति विचार्य पश्यते पृच्छते कामुकाय ध्रुवं निश्चित मनोज्ञा छाया च पराग यत्रैव तस्याः करद्वयी भृङ्गारस्य धृतेर्धारणस्य मिषेण यद्यस्मात्तदुत्तर तदीयप्रश्नस्य प्रतिवचनं व्यतरत् ददौ । इति किं । इय स्त्री कियन्तौ किम्प्रमाणौ चारू सुन्दरौ च कुचौ यस्या सेति । सुवर्णकलशीपरिमाणौ सुवर्णवर्णौ चैतस्याः कुचाविति तं प्रत्य सूचयदिति भाव. । उभावपि मिथोऽनुरागादन्योन्यविलोकनपरावेव तस्थतुरिति भाव. । अन्योन्यमभिप्रायज्ञ. केनचिन्मिषेण प्रश्नोत्तर ददाति ॥ ९२ ॥

अमीभिराकण्ठमभोजि तद्गृहे तुषारधारामृदितेव शर्करा । इयं द्विपद्व्यष्कयणीपय.स्त्रुतं सुधाहृदात् पङ्कमिवोद्धृतं दधि ॥ ९३ ॥

अमीभिरिति । अमीभिर्जन्यजनैस्तद्गृहे भीमगृहे आकण्ठ कण्ठपर्यन्तं यथा शर्कराभोजि भुक्ता । तुषारधारया हिमोदकेन मृदितेव मिश्रितेव । तथा इयं द्विपत्न्या अश्वैरिव्या महिष्या बष्कयिण्या चिरप्रसूताया पयो दुग्ध तस्मात् स्रुत जातदुग्धपरिणामभूतं दध्यप्यभोजि । सुधाह्रदादमृतस्यागाधजलाशयादुद्धृत पङ्कमिवेत्युत्प्रेक्षा । शर्कराऽतिसिता शुभ्रा च दध्यप्यमृतवत् स्वादु शुभ्र घन चेति भाव । तद्गृहेऽमीभिर्विशिष्ट दध्यभोजि । तुषारधारया मृदिता अल्पकरकत्व प्रापिता शर्करेव सुधाह्रदादुद्धृत पङ्कमिवेति दधिविषयमेवोत्प्रेक्षाद्वय वा । दध्न शैत्य शौक्ल्य स्वादुत्वं घनत्व च सूचित । एतेन पय शृतमिति पाठे शर्करा अभोजि । शृतं पक्व तप्त माहिषीपयश्चाभोजि दधि चाभोजि इति सम्बन्धः । चिरप्रसूता बष्कयिणीत्यमर. । महिष्या दधि स्वादुतरं भवति । द्विषःशतुर्वेति वचनात् इयं द्विषन्तीति द्वितीयया द्वितो

याश्रितेति (पा० २।१।२४) योगविभागात् समासः । द्विपक्कफणिनी । पुंवत्कर्मेत्यादिना (पा० ६।३।४२) पुंवद्भावः । श्रृत । श्रृत पाके (पा० ६।१।२७) इति साधु ॥ ८३ ॥

तदन्तरन्तः सुषिरस्य बिन्दुभिः करम्बितं कल्पयता जगत्कृता । इतस्ततः स्पष्टमचारि मायिना निरीक्ष्य तृष्णाचलजिह्वतां घृना ॥ ९४ ॥

तदन्तरिति । तद्दधि निरीक्ष्य सातिशयया तृष्णया ग्रामवासनयाचला चञ्चला अधरप्रान्तलम्बिनी गलज्जला जिह्वा यस्य तस्य भावस्तत्ता तां घृता बिभ्रता, तथा अन्तरन्तर्मध्ये मध्ये सुषिरस्य छिद्रस्य बिन्दुभि रादृशः शिर इत्यादभेदोपचाराच्च छिद्ररूपैर्बिन्दुभिः करम्बितं मिश्रितं व्याप्तं तद्दधि कल्पयता कुर्वता जगत्कृता इतस्ततः सर्वप्रदेशेभ्यस्तद्दधि स्पष्टमचारि प्रकटमपहृतं, स्पष्टं सम्भावनायां अपहृतमिवेत्यर्थः । अपहृतं कथं न दृष्टं इत्यत आह । यतो मायिना अदृश्यमयाऽपहृतमित्यर्थः । सफलसारस्य दध्याकारेण परिणामे दधनि छिद्राणि दृश्यन्ते । अन्यथा अदृश्यतया दधनि वर्तमानः सारो लोलुपेनैव गृहीतः, अन्यथा छिद्राणि कथं दृश्यन्ते । अन्यत गृहीतुं न शक्यते इति तत्रोत्प्रेक्षा । येन निर्मितं तस्य अन्यस्योऽपि जिह्वा चाञ्चल्यनिरूपणात् स्वादुतमं दधीति ध्वन्यते ॥ ८४ ॥

ददामि मे तन्न रुचेर्यदास्पदं न यत्र रागः सितयापि किं तया । इतीरिणे बिम्बफलं पलच्छलाददायि बिम्बाधरयारुचञ्च तत्॥ ९५ ॥

ददामीति । बिम्बफलतुल्यो ऽधरो यस्यास्तया सुन्दर्या पलच्छलात् सामर्थ्यात् बिम्बसञ्ज्ञफलं परिवेषितं मांसरागमेव बिम्बाकार कृत्वा पूर्वोक्तिरूपऽपरकृत्यनयामनया आपमाणाय विदाय प्रदायि दत्त । तत् बिम्बाकारं फलं मया प्रकथं स्वादिममित्यर्थः । मदभिप्राय प्राप्ता लोकापरागमर पलरूपबिम्ब्याश्लिष्टाधरदानमेव प्रति-

ज्ञातमिति सन्तुष्टो ऽभूदिति भाव । इति कि । हे बिम्बोष्ठि यद्रुचे प्रीतरास्पद यत्र वस्तुनि मम प्रीति तन्मे मह्य त्व न ददासि । यद्वा यद्रुचेरास्पद न भवति तन्मह्य न ददासि । तथा मम यस्या राग प्रीतिर्नास्ति तया सितयापि शर्करयापि कि अपि तु न किञ्चित् प्रयोजन । माधुर्य्यसत्त्वादपि शर्करयापि प्रयोजन नास्त्यभिलाषाभावात् अन्येन नास्तीति कि वाच्यमित्यपिना सूच्यते । अथ च यत्र लौहित्य नास्ति तया श्वेतया शर्करयाप्यलकरयापि कि । तस्मान्मे यत्रानुरागो रक्तिमकान्तिश्च तन्मह्य देहीति । कृत तयेति पाठे तथा पूर्व्यता । फलमल्पादिति पाठे फलदानप्रसङ्गव्याजात । बिम्बाकाराऽधरो यस्या इति सप्तम्युपमानेत्यादिना ( पा० २ । २ । २४ । वा० ५ ) नोत्तरपद-लोपी समास । अरुचत पुषादित्यादङ् ( पा० ३ । १ । ५५ ) द्युद्भ्यो लुङीति ( पा० १ । ३ । ९१ ) परस्मैपदम् । ९५ ॥

**समं ययोरिङ्गितवान् वयस्ययोस्तयोर्विहायोप-**
**हृतप्रतीङ्गिता । अकारि नाकूतमवारि सा यया**
**विदग्धयाऽराञ्जि तयैव भाववित् ॥ ९६ ॥**

सममिति । यो ययोर्वयस्ययो सख्योर्विषये स्वाभिप्रायज्ञापनार्थं सम युगपत इङ्गितवान् भ्रूक्षेपादिचेष्टितवान अभूत् । तयोर्मध्ये उपहृत कृत प्रतीङ्गित तदभिलाषस्वीकारसूचकप्रतिचेष्टित यया तामेका विहाय स्थित सन् तयैवाराञ्जि द्वितीययैव प्रत्यनुरञ्जित । तथा कृ-या । यया चतुरया विदग्धया आकूत प्रतीङ्गित नाकारि प्रतीङ्गित कुर्वाणा सा सखी जनसमक्षमिङ्गितकरणमयुक्तमित्यवारि निषिद्धा । यतो भाववित् वैदग्ध्यस्य वेत्ता । द्वितीयया तदिङ्गितदर्शनात्तस्मिन्ननुरागात्तुष्टित्वा प्रतीङ्गित नाकरोत् जनसमक्षमेतदनुचितमिति व्याजेन मत्प्रिय प्रतीयमिङ्गित किमिति करोतीति सापत्न्यं‍र्ष्यया च ता वारितवतीति तस्या वैदग्ध्य । स च तदीयगुणभावज्ञानाद्भाववित् सहचरीसमक्षमिङ्गित कुर्वाणा इयमपि चतुरा । द्वितीया इङ्गित नाकरोताम्नु न्यवारयादिति इयमेव चतुरा मय्यनुरक्ता चेति स चतुरो द्वि

तीयस्यामेवानुरक्ता ऽभूदिति भावः । विहाय स्थितः सन् इति योजना । अन्यथा ह्यानस्य पुरुषः कर्ता रञ्जनस्य स्वातिभिन्नकर्तृकत्वात्तरक्ता न स्यादिति । अराङ्गि वयन्ताञ्चितम् ॥ ९६ ॥

सखीं प्रति स्माह युवेङ्गितज्ञणी क्रमेण तेऽयं
क्षमते न दित्सुता । विलाम तद्व्यञ्जनमर्प्यते
त्वया वरं किमस्मै न नितान्तमर्थिने ॥ ९७ ॥

सखीमिति । यून इङ्गित चेष्टा इंगते एवंशीला काचित् स्वसखी प्रत्याह स्म इत्ययोचत् । हे सखि यस्मादयं क्रमेण परिपाट्या ते दित्सुता त्वत्कर्तृका व्यञ्जनस्य दातुमिच्छुता न क्षमते तस्मात्त्वया नितान्तमतिचञ्चलतयाऽर्थिने याचकायास्मै यूने वरं श्रेष्ठं अभीष्टं तत्तन्नादि व्यञ्जनं विलोमं विपरीतं क्रमरहितं यथा तथा किं नार्प्यते न दीयते अपि तु लम्बिजिह्वायास्मै युगपत् क्षिप्यतामिति छलोक्तिः । अथवा आलिङ्गनचुम्बनादिवाद्यरतपरिपाट्या तव वराङ्गदानेच्छुता न सहते तस्मादतितरलतयाऽर्थिने सम्भोगविलम्बमसहमानायास्मै वरं केवलं श्रेष्ठं वा न विद्यते वरं श्रेष्ठं यस्मात् अवरमधोदेशे वर्तमानं वा रोमरहितं तद्भगलक्षणं व्यञ्जनं अवयवः किमिति त्वया नार्प्यते अपि त्वर्पयेत्युपहासः । अतिसम्भोगाभिनरा तान्त ग्लानमिति व्यञ्जनविशेषणं वा । व्यञ्जनं लाञ्छनं श्मश्रुनिष्ठानावयवेष्वपीत्यमरः । नितरां तान्तमिति पक्षे अनुनासिकस्य क्वीति ( पा० ६ । ४ । १५ ) दीर्घः ॥ ९७ ॥

समाप्तिलिप्सोर्नु जिक्रियाविधेर्दलोदरं वक्तु-
लयाऽऽलयीकृतम् । श्लढ् कृतं क्षीरवटैस्तदाश्रितां
रराज पाकार्पितगैरिकाश्रिया ॥ ९८ ॥

समाप्तीति । क्षीरवटैर्दुग्धमध्यविहितैर्मापमाधितैर्वटकाख्यैः पक्वान्नविशेषैः मध्यमादन्यत्र तत्पूर्वोक्तवटकव्यतिरिक्तव्यञ्जनवर्तुलया पत्राकारया पाकेन महानेकशृङ्गारकाभिसर्योगमार्पितया निर्मितया गैरिकश्रिया गैरिकपाषाणेव श्रिया वटकानामेव शोभया रराज । विति-

पृथक्कमस्थस्थाद् व्यञ्जनान्तर रेज इत्यर्थः । विशिष्टया श्रियोपलक्षितै चीरवटैरलङ्कृत मत् रेज इति वा । किमिव अशतां भुञ्जानानां तेषां भुजिक्रियाविधेः भोजनविधेः समाप्ति । वटकदर्शनमात्रेणान्यस्य तस्य भावाद् व्यञ्जनान्तरविरतेः सम्बन्धिन्या लिप्या समाप्तिसूचिकया ठकाररूपपुष्पिकाकपया आलयीकृत आस्पदीकृत दलोदर श्रीनागादिपत्र मध्यमित्यर्थेत्युपमोत्प्रेक्षा वा । वर्त्तुलया वृत्तया समाप्तिलिप्या श्रित । पाकेन बालकेनार्पितया गैरिकश्रियालङ्कृतं दलोदरमिति वा योज्यं । पाक पाकोऽर्भक इत्यमरः । ग्रन्थलेखनसमाप्तिपत्रे समाप्तिसूचक ठकारादिवर्त्तुलमक्षर दाक्षिणात्यैः क्रियते गैरिकचिह्नञ्च क्रियते, अत्र त्वाजनसमाप्तिसूचक चीरवटकादि इति ॥ ९८ ॥

चुचुम्ब नोर्वीवलयोर्वशीं पर पुरोऽधिपारि-
प्रतिबिम्बिनां विटः । पुनः पुनः पानकपानकै-
तवाच्चकार तच्चुम्बनचटुकृतान्यपि ॥ ९९ ॥

चुचुम्बेति । कश्चिद्विटः पुरोऽग्रे अधिपारि पानकरसपूर्णे सुवर्णादिपात्रपात्रे प्रतिबिम्बिनां उर्वीवलय उर्वशीमिवातिसुन्दरीं काञ्चित्पर केवल चुचुम्बेति न किन्तु पुन पानकस्य द्राक्षादिमाधितमधुरद्रवप्रधानपेयद्रव्यरूपस्य पानं तस्य कैतवात् प्रतिबिम्बितायाः तस्याः चुम्बनस्य सम्बन्धीनि चटुकृतानि चुमितिशब्दानुकरणशब्दस्तस्य करणान्युच्चारणानि तान्यपि चकार । चुम्बनादिना तस्यां स्वानुराग प्रकटीचकारेति भाव । कल्लीश्वरी पात्री पानभाजनमुच्यत इति सारस्वामी । सप्तम्यर्थेऽव्ययीभाव । चटुकृतानि नपुंसके भावे क्तः ॥ ९९ ॥

घनैरमीषां परिवेषकैर्जनैरवापि वर्षोपलगोल-
कावली । चलद्भुजा नृपणरत्नरोचिषा भ्रूवेन्द्र-
चापैः श्रितचान्द्रसौरभा ॥ १०० ॥

घनैरिति । घनैर्बहुभि परिवेषकैरमैकव्यञ्जनदायिभिर्जनैरथ च तैरेव घनैर्मेघैरमीषां भुञ्जानानां राज्ञां कृते वर्षोपला करकास्तत्तुल्यानां

मेलाकर्पूरशर्करालवङ्गतण्डुलपिष्टरचितानां गोलकानामतिवृत्तानां ल-
ड्डुकाविशेषाणामथ च करकारूपाणां गोलकानामावलीपङ्क्तिरर्पि-
तिवीता दृष्टा च । कीदृशैः । परिवेषणकर्मवशाद्वलन्त्यो या भुजा-
स्तासां भूषणेषु रत्नानि तेषां रोचिषा कान्त्या कृत्वा धृतमिन्द्रचाप यै-
र्नानाप्रकारकान्तिभिरित्यर्थः । अथ च तदैन्द्रचापो येषु । कीदृशी ।
श्रितं चान्द्रं कर्पूरसम्बन्धि सौरजं सौगन्ध्यं यया । अथ च चन्द्र एव
चान्द्रः सूर एव सौरस्तयोर्भा श्रिता चान्द्रसौरजा यया । सा शीतल-
दीप्तत्वाभ्यां चन्द्रसूर्यसदृशीत्यर्थः । रात्रिदिनयोर्जायमानत्वाद्वा क्रमे-
ण तत्कान्तिसदृशी । चन्द्रसम्बन्धिनश्चान्द्राश्चन्द्रकान्ताः एवं सौराःसूर्य-
कान्तास्तेषां भा श्रिता यया वा । चन्द्रसम्बन्धिमनोज्ञत्व मादृश्य श्रित
ययेति वा । विश्वप्रकाशे । सुरभिशब्दो मनोज्ञवाची ॥ १०० ॥

• किंयद्बहु व्यञ्जनमेतदर्प्यते ममेति तृप्तैर्वदतां पुनः पुनः । अमूनि सङ्ख्यातुमसावढौकि तैः छलेन तेषां कठिनीव भूयसी ॥ १०१ ॥

कियदिति । एतत्तेननादिव्यञ्जन मम कथत किंपरिमाणं बहु अ-
र्प्यते ऽपितु तृप्ता वयमिति नार्पणीयमिति तृप्तैस्तैः पुनः पुनर्वदतां
तेषां जन्यानां कियत्सङ्ख्यम्य यदेतद्व्यञ्जनमर्प्यते इत्येतद्बहुत्वसङ्ख्यं यत्ता
भवद्भिः पृच्छ्यते किमिति छलेनामूनि व्यञ्जनानि सङ्ख्यातुं गणयितु
असौ गोलकावली भूयसी बहुतरा कठिनी खटिकेव तैः परिवेषकैरढौ-
कि अर्पिता । भवद्भिर्व्यञ्जनसङ्ख्या पृष्टा तत्सेनया कठिन्या यतानि-
गणयतेति कठिनी वार्पितेत्युत्प्रेक्षा । इति वदताममूनि सङ्ख्यातुमि-
व व्याजेनासौ बहुतरा कठिन्यर्पितेति वा योज्य । कठिन्या च सङ्ख्या-
यते एतद्व्यञ्जनममूनीति ममेति वदतामिति चैकवचनबहुवचनानि जा-
तिविवक्षया विज्ञातव्यानि ॥ १०१ ॥

श्रितस्य साऽङ्गितगुप्तचातुरीप्रवल्हिकोत्पाटनपाटवे हृदः । निजस्य टीकां प्रथयन्ध का- मुकः स्पृशद्भिराकूतशतैस्तदीपितो ॥१०२॥

विदग्धेति । कश्चित्कामुको विदग्धायाश्चतुराया बालाया मुग्धाया इङ्गितगुप्तौ चेष्टितगोपनविषये चातुरी यत्कौशल मेव दुर्ज्ञेयत्वात् प्रवह्लिका गुप्ताभिप्रायप्रबन्धविशेषः तस्या उत्पादने भेदने ज्ञानविषये च त्पाटव सामर्थ्यं प्रावीण्यं तत्र विषये तदौचित्ये विदग्धबालेङ्गितानामानुगुण्यं स्पृशद्भि गतैस्तदनुकूलैराकूलगतैर्बहुभिरिङ्गितैः कृत्वा निजस्य हृद. स्वीयाभिप्रायस्य टीकां विवरणं प्रबन्ध प्रकर्षेण कृतवान् । गुप्तान्यपि मदिङ्गितानि ज्ञातवानिति चतुरोऽयमनुरक्तश्चेति तदनुगुणे स्वीयचेष्टितैस्तां स्वाशयं बोधितवानिति भावः । बालाया अपि विदग्धसखीशिक्षया वैदग्ध्यादिङ्गितकरण सहजमौग्ध्यात सलज्जतया तद्गोपनञ्च युक्त । विदग्ध कश्चन युवा बाला च काचन तयोरिङ्गितगुप्तिर्या । यद्वा विदग्धसंङ्गित बालायाश्चार्यादिङ्गितस्यैव तयोर्विषये या चातुरी तत्प्रवह्लिकोत्पादनपाटवे विषये तयोरौचित्यं स्पृशद्भि । अत्र द्वयोरपि भवतोराशयो मया ज्ञात इतीङ्गितैस्तज्ज्ञापनद्वारा अतिचतुरोऽहमेव त्वया भजनीय इति बाला प्रति स्वाशय ज्ञापितवानिति भावः । अन्योऽपि विदग्धो ऽतिगहनायाः प्रवह्लिकाया भेदने विषयेऽनेकैराशयैर्व्याख्यां करोति ॥ १०२ ॥

घृतप्लुते भोजनभाजने पुरःस्फुरत्पुरन्ध्रिप्रतिबिम्बिताकृतेः । युवा निधायोरसि लड्डुकद्वयं नखैर्लिलेखाथ ममर्द निर्दयं ॥ १०३ ॥

घृतेति । कश्चिद्युवा घृतप्लुते आज्यपूर्णे प्रस्तरपत्रे वा भोजनभाजने पुर स्फुरन्त्या विलसन्त्या पुरन्ध्र्याः प्रतिबिम्बिता या आकृतिस्तस्या उरसि लड्डुकद्वय मोदकयुग्म निधाय नखैर्लिलेख, अथ पश्चान्निर्दय ममर्द यदाऽऽवयोः सयोगा भावी तदैव तव कुचावुपचरिष्यामीति त्वत्कुचनखक्षतविमर्द्दे ऽचुरस्मीति वा स्वाशयं बोधितवानिति भाव. । घृतेन प्लुत घृतप्लुत यस्मिन्निति वा । आहिताग्न्यादित्वात् परनिपात (पा० २ । २ । ३७) ॥ १०३ ॥

विलोकिते रागितरेण सस्मितं ह्रियाऽथ वैमु

ख्यमिते सखीजने । तदालिरानीय कुतोऽपि शा-
र्करीं करे ददौ तस्य विटस्य पुत्रिकां ॥ १०४ ॥

विलोकित इति । रागितरेण केनचित् कामुकेन सखीरूपे जने सस्मितं विलोकिते सति अथ विलोकनानन्तरं ह्रिया वैमुख्यं पराङ्मुखत्वं इते गते सति तस्य सखीजनस्यालिः सखी कुतोऽपि कस्मादपि स्थानात् शार्करीं शर्करया रचितां पुत्रिकां आनीय विटस्य वैमुख्यात् सन्दिहानस्य करे ददौ । अधरादिचुम्बनयाऽनुपू शर्करातुल्यरसामेनामहमेव दास्यामि स्वहस्तस्थितामेनां जानीहीति सञ्ज्ञां चकारेति भावः । सखीसमूहे वैमुख्यमिते सति तासां सखीनां काचित सखी तद्दत्तवैलिन्यस्या या शार्करीं पुत्रिका ददौ । शर्करा पुत्रिका परिवेषणेन मिषेणाहं त्वां भजामीति स्वदानसञ्ज्ञामकरोदिति भावः इति वा । शार्करीमिति ईकारप्रत्ययः । पुत्रिका । पुत्रादकृत्रिम इति कन् ॥१०४॥

निरीक्ष्य रम्याः परिवेषिका ध्रुवं न भक्तमेभिरवाप्ततृप्तिभिः । अशक्नुवद्भिर्बहुभुक्तवत्तया यदुज्झिता व्यञ्जनपुञ्जराजयः ॥ १०५ ॥

निरीक्ष्येति । बहुभुक्तवत्तया अत्याहारेणाशक्नुवद्भिर्भोक्तुमसमर्थैरेभिर्वरयात्रिकैः यद्यस्माद्व्यञ्जनपुञ्जानां राजयः परम्परा उज्झितास्त्यक्तास्तस्माद्रम्याः परिवेषिका निरीक्ष्य अवाप्ततृप्तिभिः गतबुभुक्षैरेतैर्भुक्तमेव न इति ध्रुवमहं मन्ये । यावत् क्षिप्तं तावत् तथैव दर्शनादित्युत्प्रेक्षा । रता निरीक्ष्यावाप्ततृप्तिभिरेतैः ध्रुव निश्चितं नैव भुक्तमिति वा । यथा लोको मन्यत इति शेष । तथा व्यञ्जनपुञ्जपरम्परास्त्यक्ताः । यथैभिर्न भुक्तमिति लोको मन्यत इत्यर्थ इति वा ॥ १०५ ॥

पृथक् प्रकारेङ्गितशंसिताशयो युवा यथोदासि तयापि तापितः । ततो निराशः परिभावयन् परामपत्रपाऽऽनोपि सरोपयैव सः ॥ १०६ ॥

पयसिति । पृथक्प्रकारैर्नानाविधैरिङ्गितैश्चेष्टितैः कृत्वा ज्ञापित कथित आशय अभिप्रायो येन स युवा यया स्त्रिया उदासि उदासीनीकृतः। प्रतीङ्गितेन सम्भावितयोदासीनतया तयापि तापितः व्यथितः । उदासी नाहि दुःखं न जनयति, अजनयापि तु तादृश्या अपि दुःखं जनितमिति विरोधार्थो ऽपिशब्दः । ततोऽनन्तरं यस्यां निराशः तस्या सकाशात् निराशा निर्गताभिलाष सन् परां तदन्यां परिभावयन्निङ्गितेनानुकूलयन् सानुराग पश्यन् स युवा सरागया तयैव पूर्वमुदासीनयैव परितापितो न तु द्वितीययत्ययः । सरागा हि दुःखं जनयति न तु सुखं तथापि तादृश्यापि सुखं जनितमिति विरोधाद्द्वायर्थ्यं । अनयत्कस्मिङ्गितकरणमयुक्तमिति तयेङ्गितं पूर्वं न कृत स तु तदाशयमज्ञानानोऽनुरागेणैव प्रतीङ्गितं नाकरोदिति बुद्ध्याऽन्यामपश्यत्, ततश्च सा स पश्यन्त्या सेर्ष्या जातेति मय्यनुरक्तैव पूर्वं तु गाम्भीर्यादिङ्गित नाकरोत् मानुरागैव च सरागा भवतीति रोषादनुरागमनुभाय सन्तुष्ट इति भाव । उपेतयेति पाठे रोषात्समुपसारिणार्थात् समीपमागतयेत्यर्थ ॥ १०६ ॥

पयःस्मिता मण्डकमण्डलाम्बरा वटाननेन्दुः पृथुलड्डुकस्तनी । पदं रुचेर्भोजयभुजां भुजिक्रिया प्रिया बभूवोज्ज्वलकूरहारिणी ॥१०७॥

पय इति । भुजिक्रिया भोजनक्रिया भोज्यभुजां भक्ष्य भुञ्जानाना तेषां प्रिया तृप्तिजननी अथ च स्त्री बभूव । किम्भूता । पयो दुग्धमेव स्मितं हासो यस्याः । तथा क्वचिन्मृदुमूल्मा क्वचिदत्यन्ताग्निसंयोगेन शोणबिन्दवो मण्डका अपूपा एव पट्टसूत्रादिरचितकपमण्डनयुक्तानि अलङ्कारभूतानि वा अम्बराणि वस्त्राणि यस्याः । तथा अतिवृत्तमापसाधितवटकरूपकुङ्कुमोद्वर्तनरक्तभावेनाह्लादक आननेन्दुर्मुखचन्द्रो यस्याः । तथा पृथुलड्डुकस्तनी स्थूलातिकठिनरूपौ मोदकरूपौ स्तनौ यस्याः सा । तथा उज्ज्वलकूरहारिणी विविक्तशुभ्रौदनरूपमौक्तिकमालावती । अथवोज्ज्वलकूरेण मनोहारिणी । यतो रुचेर्ग्रासाभिला-

यस्याश्च कान्तेरनुरागस्य च पदं स्थानं । प्रियापि पूर्वोक्तगुणसहिता रुचेः पदं भवति । यत्र प्रियेति वा । भोज्यभुजां । भोज्यं भक्ष्य इति ( पा० ७ । ३ । ६९ ) साधुः ॥ १०७ ॥

चिरं युवाकूतशतैः कृतार्थनश्चिरं सरोपेङ्गितया च निह्नुतः । सृजन् करक्षालनलीलयाञ्जलीन्व्यपोचि किञ्चिद्विधुताम्बुधारया ॥ १०८

चिरमिति । कयाचित्सुंदर्या कश्चिद्युवा किञ्चिद्विधुतया वक्रचालितयाम्बुधारया कृत्वा असेचि सिक्तः । किम्भूतः । स्वाकूतशतैरिङ्गितसहस्रैः कृतार्थनः कृतप्रार्थनः सन् चिरं सरोषं कोपव्यञ्जि इङ्गितं यस्यास्तस्या भावस्तत्ता तयैव वारम्वारं निह्नुतो निराकृतः सन्नपि तथा करक्षालनस्य लीलया व्याजेन प्रसादप्रार्थनासूचकानञ्जलीन् करयुगसम्पुटान् सृजन् रचयन्, अञ्जलीनिति वचनेन वारम्वारमञ्जलेः करणं सूचितं । वारिधाराकम्पनेन त्वत्प्रार्थना मयाङ्गीकृता करयुगयोजनाद्विरमेति सूचितं । इयं स्वीकारचेष्टा करक्षालनं शुचिक्रियासमाप्तिं द्योतयति ॥ १०८ ॥

न षड्विधः खिङ्गजनस्य भोजने तथा यथा यौवतविभ्रमोद्भवः । अपारशृङ्गारमयः समुन्मिषन् भृशं रसस्तोषमधत्त सप्तमः ॥१०९॥

नेति । षड्विधो मधुराम्ललवणतिक्तकटुकषायास्वादरूपषट्प्रकारो रसः खिङ्गजनस्य रसिककामुकसङ्घस्य भोजने विषये तथा तोषं न अधत्त उदपादयत् । यथा यौवतं स्त्रीसङ्घस्तस्य विभ्रमो विलासस्तस्मादुद्भवो यस्य स रसो भृशं समुन्मिषन् वर्द्धमानः अपारशृङ्गारमयः निर्मर्य्यादानेकविधविभावानुभावव्यभिचारिसंयोगजन्यशृङ्गाररूपः सप्तमो रसस्तोषमधत्त । सप्तमत्वं मधुराद्यपेक्षया ज्ञेयं न स्वाद्यरसापेक्षया । षड्भ्यो रसेभ्योऽन्यस्याभावाद्भोजने सप्तमरसस्य सद्भावादाश्चर्य्यम् १०९

मुखे निधाय क्रमुकं नलानुगैरथोज्झि पर्णालिरवेक्ष्य वृश्चिकम् । दमार्पितान्तर्मुखवास-निर्मितं भयाविलैः स्वभ्रमहासिताखिलैः ॥ ११० ॥

मुख इति । अथ हस्तप्रक्षालनानन्तरं नलानुगैस्तैर्राजभिः क्रमुकं पूगफलं मुखे निधाय वृश्चिकमवेक्ष्य दमेनार्पिता दत्ता पर्णालिर्नागवल्लीदलपङ्क्तिरौज्झि त्यक्ता । किम्भूतं वृश्चिकं । अन्तर्मुखवासेन कर्पूरकस्तूरीखदिररसादिरूपेण मुखसौगन्ध्यकारिणा निर्मितं । किम्भूतैः । भयेन दृष्टनिमित्तशङ्कयाविलैर्व्याप्तैः । अत एव स्वभ्रमेणावृश्चिके वृश्चिकबुद्ध्या हासिता हासं प्रापिता अखिला द्रष्टारो यैः । दमेनार्पितं पर्णमध्ये वर्तमानो योऽन्तर्मुखे वासस्तेन निर्मितमिति वा ॥ ११० ॥

अमीषु तथ्यानृतरत्नजातयोर्विदर्भराट् चारु-नितान्तचारुणोः । स्वयं गृहाणैकमिहेत्युदीर्य तद् द्वयं ददौ शेषजिघृक्षवे हसन् ॥ १११ ॥

अमीष्विति । विदर्भस्य राजा दमो वा क्रमेण चारु सुन्दरं नितान्तं चारु अतिसुन्दरञ्च तयोरीदृशयोस्तथ्यानृतयोः सत्यासत्ययोः रत्नजातयोर्मध्ये एकं तव प्रियं रत्नजातं त्वं स्वयमेव गृहाणेति । अमीषु वारयात्रिकेषु विषये उदीर्य कृत्रिमत्वादतिरमणीयकान्तिविशिष्टं अलीकरत्नजातं जिघृक्षवे ग्रहीतुमिच्छवे वारयात्रिकाय हसंस्तद्ग्रहणहेतोः किञ्चिद्धास्यं कुर्वन् तयोः सत्यासत्ययोरेत्नजातयोर्द्वयं युग्मं तद्रूपं वा द्वयं ददौ । अमीषु मध्ये शेषजिघृक्षवे इति वा । इह द्वयोर्मध्ये शेषजिघृक्षवे इति वा । शेषजिघृक्षवे । द्वितीयेति ( पा० २ । १ । २४ ) योगविभागात् समासः ॥ १११ ॥

इति द्विवारं शुचिमिष्टभोजिनां दिनानि तेषां कतिचिन्मुदा ययुः । द्विरष्टसंवत्सरवारसुन्दरी-परीष्टिभिस्तुष्टिमुपेयुषां निशि ॥ ११२ ॥

इतीति । इति पूर्वोक्तप्रकारेण द्विः कृत्वो द्विवारं दिवारात्रौ च शुचि अदोषं मिष्टं स्वादु च भोजिनां भुञ्जानानां तेषां सायात्रिकाणां कतिचित् पञ्चषाणि दिनानि मुदा ययुः पञ्चषट् दिनानीति महर्षाः तत्रोषुरित्यर्थः । किम्भूतानां ? निशि द्विर्द्विः वारा यस्याः द्विरष्टौ षोडश मत्सरा यासा ता वारस्य महूस्य सुन्दर्य्यो वेश्या दास्यादयस्तासां परीष्टिभिरुप्यनादिसेवाभिः तुष्टिं सन्तोषं उपेयुषां प्राप्तवतां । द्विरष्टेति अत्र च कृत्वसुचो बाधकत्वाद् द्विरिति द्विप्रासेद्विःशत्य इत्यपवादविषये क्वचिदुत्सर्गस्यापि समावेश इति परिभाषया यथाकथञ्चित् परिहर्त्तव्यम् ॥ ११२ ॥

उवास वैदर्भगृहेषु पञ्चषा निशाः कृशाङ्गीं
परिणीय तां नलः । अथ प्रतस्थे निषधान्
सहानया रथेन वार्ष्णेयगृहीतरश्मिना ॥११३॥

उवासेति । नलः कृशाङ्गीं तां परिणीय वैदर्भगृहेषु पञ्च षट् वा प्रमाणमासां ता निशा उवास पञ्चषाणि दिनानि तत्र स्थितवानित्यर्थः । अथ सप्तमे दिने अनया भैम्या सह रथेन निषधान् प्रतस्थे । किम्भूतेन । वार्ष्णेयनाम्ना सारथिना गृहीता रश्मयो यस्य । पञ्चषाः । सङ्ख्ययाव्ययेति ( पा० २ । २ । २५ ) समासे बहुव्रीहौ सङ्ख्येय इत्यादिना ( पा० ५ । ४ । ७३) डचि टिलोपः । निशाः । अत्यन्तसंयोगे च ( पा० २ । १ । २९) इति द्वितीया ॥ ११३ ॥

परस्य न स्पष्टुमिमामधिक्रिया प्रिया शिशुः
प्रांशुरसाविति ब्रुवन् । रथे स भैमीं स्वयम-
ध्यरूरुहन्न तत्क्रिलाशिलष्टादिमां जनेक्षितः ॥११४॥

परस्येति । इति ब्रुवन् स नलो भैमीं स्वयमात्मनैव रथे अध्यरूरुहदध्यारोपयत् । इति किं । इमां पतिव्रतां भैमीं स्प्रष्टुं स्पर्शनेन्द्रियविषयीकर्त्तुं परस्य मदन्यस्य नाधिक्रिया अधिकारः । प्रिया भैमी शिशुरल्पप्रमाणा असौ रथश्च प्रांशुरुन्नत इति स्वयमारोढुमसमर्थेति, त-

गतौ, क्वपि तुक । विपेदतुः । सदेरित्याभ्यासलोपौ । सदिरप्रतेरिति (पा०८।३।६६) षत्वं ॥ ११६ ॥

निजादनुव्रज्य स मण्डलावधेर्नलं निवृत्तौ चटु-
लापतां गतः । तडागकल्लोल इवानिलं तटाद्दु-
तानतिर्व्यावृते विराटराट् ॥ ११७ ॥

निजादिति । स विराटराट् भीमो नलमनुव्रज्यानुगम्य निजान्मण्डलावधेः सकाशान्निवृत्तौ परावृत्तिसमये चाटु प्रियवचनं लपति भाषत इति चटुलापस्तद्भावं गतः प्राप्तः प्रियभाषणः धृताङ्गीकृता नतिर्नमस्कारो येन स एवम्भूतः सन् व्यावृते निजगृहान् प्रति परावृत्त । क इव तडागकल्लोल इव । यथा ऽनिलं वायुमनुव्रज्य तटान्निवृत्तौ चटुला आपो यस्य तद्भाव गतः सन् तीरात् सकाशात् तडागतरङ्गो व्यावर्तत इत्युपमा । चटुलाप इत्यत्र कर्मण्यण् । (पा०३।२।१) षत्रेङ्गगादिना (पा०५।४।७४) समासान्त. । स तु तत्पुरुष एवेति कश्चित् तदुपेक्ष्यम् ॥ ११७ ॥

पितात्मनः पुण्यमनापदः क्षमा धनं मनस्तु-
ष्टिरथाखिलं नलः । अतः परं पुत्रि न कोऽपि
तेऽहमित्युदश्रुरेष व्यसृजन्निजौरसीं ॥ ११८ ॥

पितेति । इत्युक्त्वा उद्गतान्यश्रूणि यस्य स एष भीमो निजामौरसीं स्वीयक्षेत्रबीजाभ्यामुत्पादितां भैमी व्यसृजत् प्राहिणोत् । इति किं । हे पुत्रि आत्मनस्तव पुण्य धर्म एव पिता हितकारित्वाद्धितनिवारकत्वाच्च तथा तव क्षमाः सहनशक्तय अनापदः न विद्यत आपदो याभ्यस्ता आपन्नाशिका इत्यर्थः, तव मनस्तुष्टिः सन्तोषः सन्तुष्टत्वमेव धनं । अथानन्तरं अखिलमेव सर्वं नल एव, किं बहुना तदतिरिक्तमकलाभीष्टदत्वात् सर्वं नलएवेति भाव । अतः परं अद्यप्रभृति अहं भीमस्ते कोऽपि सम्बन्धी बान्धवो न भवामीति ॥ ११८ ॥

प्रियः प्रियैकाचरणाच्चिरेण तां पितुः स्मरन्तीमचिकित्सदाधिषु । शशाम तन्मातृवियोगवा-
डवो न तु प्रियप्रेममहाम्बुधावपि ॥ ११९ ॥

प्रिय इति । प्रीणाति हर्षं जनयति प्रियो नलः पितुः स्मरन्तीं तां भैमीं प्रियस्य मनोहितस्यैकस्य वस्तुन आचरणात् करणात् मनोहितस्य यदेकं मुख्यं केवलं वा करणं तस्माद्वा आधिषु पितृवियोगजमानसपीडासु सत्सु चिरेण बहुना कालेनाचिकित्सत् उपचचार । कस्यचिद्वस्तुनो मेलनात् पितृवियोगदुःखं चिरेणाप्यजयदित्यर्थः । चिरकालं पितुः स्मरन्तीमिति वा । स सर्वजनप्रसिद्धस्तस्या मातृवियोग एव महत्तरत्वाद्वाडवो वडवानलः तु पुनः प्रियस्य नलस्य प्रेमा निरुपाधिकस्नेहस्तद्रूपे महाम्बुधौ सत्यपि तथा अप्रच्युतप्राच्यरूप एव तस्थिवान् तस्मिन्नतिप्रियं कुर्वत्यपि स लेशमपि न शान्त इत्यर्थः । पितृवियोगदुःखान्मातृवियोगस्य गौरवं सूचितं विशेषतश्च कन्यानाम् । अपिरौचित्ये । जलानलयोर्विरोधेऽपि वाडवस्याम्बुधावेव स्थितिरुक्तेत्यर्थः । शशामेति न तु प्रियेत्यपि च स्पष्टार्थः । पितुः । अधीगर्थेत्यादिना (पा०२।३।५२) षष्ठी । अचिकित्सत् । कित निवासे रोगापनयने चेत्यस्माद् गुप्तिज्किद्भ्य इति (पा०३।१।५) स्वार्थे सन् । किमर्थादानेषु पाठाऽस्त्यन्तादपि परस्मैपदमेव न स्यात्मनेपदमिति सिद्धान्तः ॥ ११९ ॥

असौ महीभृद्बहुधा तु मण्डनस्तया निजोप-
त्यकयेव कामपि । भुवा कुरङ्गेक्षणदन्तिचार-
योर्बभार शोभां कृतपादसेवया ॥ १२० ॥

असाविति । असौ महीभृन्नृपः तु पुनर्बहुधा अनेकप्रकारं मण्डितो नानारत्नादिभिरलङ्कृतस्तया भैम्या कामप्यतिशयितां शोभां बभार । किम्भूतया । कुरङ्गवद्धरिणवदीक्षणं विलोकनं दन्तिवद्धस्तिवच्चारो

कृत्वा आश्रिता अङ्गीकृता उद्ग्रीविका ऊर्ध्वीकृतकण्ठतया विलोकनं यथा स्यादेवं पश्यामिव । विलोकिकामिव उच्चगृहत्वाद्दूरत एव दृश्यमानामित्यर्थः । पश्यामिति पाठे मार्गाख्यां पश्यामिव । अन्यापि नायिका प्रोषिते नायके प्रसाधितालङ्कारा सती उद्ग्रीविकया प्रियागमनमार्गान् पश्यति । समारोपो नीलस्यात्पलकत्वे । पश्यामिति कर्तृकर्मणोरिति (पा०२।३।६५) कर्मणि षष्ठी ॥ १२२ ॥

पुरीं निरीक्ष्यान्यमना मनागिति प्रियाय भैम्या
निभृतं विसर्जितः । ययौ कटाक्षः सहसा नि-
वर्त्तिना तदीक्षणेनार्द्धपथे समागमम् ॥ १२३ ॥

पुरीमिति । अयं मत्प्रियो मनाक् ईषत् पुरीं निरीक्ष्य अन्यमनाः कुपित इतिहेतोः अस्मिन्नवसरेऽयं सम्यक् निरीक्षितुं शक्यत इति बुद्ध्या भैम्या प्रियाय प्रियं वीक्षितुं निभृतं गुप्तं यथा तथा विसर्जितः प्रेषितो निजकटाक्षः सकला पुरीमनवलोक्यैव किञ्चिन्निरीक्ष्य भैम्यनुरागवशात् सहसाऽसमय एव पुरीनिरीक्षणान्निवर्त्तिना शीघ्रं परावृत्तेन तदीक्षणेन नलकटाक्षेण सहार्द्धपथ एव समागमं सम्बन्धं ययौ । उभावपि परस्परानुरागेण क्षणमात्रमप्यवलोकनान्तराय न सहेते स्मेति भावः । नितरामनुरागः सूचितः । पुरीनिरीक्षेति पाठे पुरीनिरीक्षणेऽयमन्यमना किमिति वक्तुं प्रेषितः । रहस्य वार्त्तां दूतोऽपि गुप्तं प्रेष्यते । प्रियाय । क्रियार्थोपपदस्येति (पा०२।३।१४) चतुर्थी ॥ १२३ ॥

अथ नगरधृतैरमात्यरत्नैः पथि समियाय स
जाययाऽभिरामः । मधुरिव कुसुमश्रिया सनाथः
क्रममिलितैरलिभिः कुतूहलार्त्तैः ॥ १२४ ॥

अथेति । अथ पुरीसमीपप्राप्त्यनन्तरं जायया कृत्वाभिरामः स नलो नगरे धृते स्थापितैरमात्यरत्नैः सह पथि समियाय मेलनं प्राप । किम्भूतैः । कुतूहले भैमीसहितनलदर्शनकौतुके विषये उत्कैरुत्कण्ठि-

ते । तेन वा उद्धूर्ध्वं कं शिरो येषां ऊर्ध्वीकृतशिरोभिः । क इव । कुसुमश्रिया चम्पकादिपुष्पशोभया सनाथो रमणीयो मधुर्वसन्त क्रमेण वसन्तागमपरिपाट्या मिलितैर्मध्वास्वादकौतुकेनोत्कण्ठितैरलिभिरिव । यथा सम्पूज्यते तथेत्युपमा ॥ १२४ ॥

क्रियदपि कथयन् स्ववृत्तजातं श्रवणकुतूहलच-
ञ्चलेषु तेषु । क्रियदपि निजदेशवृत्तमेभ्यः
श्रवणपथं स नयन् पुरीं विवेश ॥ १२५ ॥

कियदिति । स नलः पुरीं विवेश । किं कुर्वन् । स्वयंवरवृत्ता-न्तश्रवणकुतूहलचञ्चलेषु तेषु मन्त्रिप्रवरेषु कियत् स्वस्य स्ववृत्तजातं स्वदौत्येन्द्रादिमायाप्रकृतिरूपं मदृत्तं वृत्तान्तं सङ्क्षेपेण कथयन् । तथा कियदपि निजदेशवृत्तं स्वराष्ट्रजातमेभ्योऽमात्येभ्यः सकाशात् श्रवण-पथं नयन्नाकर्णयन् । ग्रामगतजातिः । अमुत्रेति पाठे अद् परस्मि-न्नत्रापीति वचनादमुत्रेत्यनेन व्यवहितोऽपि स्वयम्वरः परामृश्यते ॥ १२५ ॥

अथ पथि पथि लाजैरात्मनो बाहुवल्लीमुकुल-
कुलसकुल्यैः पूजयन्त्यो जयेति । क्षितिपतिसु-
पनेमुस्तन्दधाना जनानाममृतजलमृणालीसौ-
कुमार्यं कुमार्यः ॥ १२६ ॥

जयेति । अथ पुरप्रवेशानन्तरं जनानां कुमार्योऽकृतविवाहाः कन्याः क्षितिपतिं नलमेनं समीपमागत्य ननमुः । किम्भूताः । पथि पथि प्रतिमार्गं आत्मनः बाहुवल्लीनां भुजरूपलतानां मुकुलकु-लस्य कलिकावृन्दस्य सकुल्यैस्तत्तुल्यैर्लाजैर्मङ्गलद्रव्यतया प्रकृतदशनेन जय सर्वोत्कर्षेण वर्तस्वेति शब्दपूर्वं पूजयन्त्यः । तथा अमृतजले-र्जाताया मृणाल्या बिसस्येव सौकुमार्यं मार्दवं दधानाः । पुरप्रवेशे मङ्गलार्थं कुमार्य इत्युक्तम् । सकुल्यैः । दिगादित्वाद्यत् (पा०४।३।५४) ॥ १२६ ॥

अभिनवदमयन्तीकान्तिजालावलोकप्रवणपुरपुरन्ध्रीवक्त्रचन्द्रान्वयेन । निखिलनगरसौधाट्टावलीचन्द्रशालाः क्षणमिव निजसंज्ञां सान्वयामन्वभूवन् ॥ १२७ ॥

अभीति । निखिलानां नगरसम्बन्धिनां सौधानां सुधाधवलितगृहाणामट्टावल्य उपरितनगृहविशेषपङ्क्तयस्तासामप्युपरि चन्द्रशालास्तृतीयशिरोगृहा अट्टावलीनां गवाक्षविवराणि वातायनाख्याः, अभिनवा नवोढा दमयन्ती तस्याः कान्तिजालस्यादृष्टपूर्वस्यावलोके प्रवणानामुत्सुकानां पुरन्ध्रीणां वक्त्रचन्द्रस्यान्वयेन सम्बन्धेन कृत्वा क्षणमिव क्षणमात्रं यावत्तत्पुरसम्बन्धस्तावत्पर्यन्तं निजसंज्ञां स्वीयं नाम मुखचन्द्रसम्बन्धितया सान्वयां चन्द्रयुक्ताः शालाः गृहाणि चन्द्रशालाः चन्द्राणां वा सम्बन्धिन्यः शाला इति योगसहितामन्वभूवन् । सान्वयामिवेति चोत्प्रेक्षा । सख्यो अपि पुरनार्यो गवाक्षविवरैः भैमीमपश्यन् । तानि च तन्मुखसम्बन्धेन यौगिकत्वेन कथितोत्प्रेक्षितानि ॥ १२७ ॥

निषधनृपमुखेन्दुश्रीसुधां सौधवातायनविवरगरश्मिश्रेणिनालोपनीताम् । पपुरसमपिपासापांशुलत्वोत्परागाण्यखिलपुरपुरन्ध्रीनेत्रनीलोत्पलानि ॥ १२८ ॥

निषधेति । अखिलानां सकलानां पुरपुरन्ध्रीणां नेत्राण्येव नीलोत्पलानि निषधनृपस्य मुखेन्दुश्रीलक्षणां सुधाममृतं पपुः सादरमालोकितवन्ति । किम्भूतां सुधां । सौधवातायनानां विवरेभ्यश्छिद्रेभ्यो गच्छन्त्यो बहिर्निर्गच्छन्त्यो रश्मिश्रेणयो नयनकिरणपङ्क्तयस्तद्रूपा ये नाला विसयुक्तत्वाद्रसपजलपानसाधनभूता कमलनालदण्डास्तैरुपनीतां नेत्रसमीपं प्रापितां । किम्भूतानि नीलोत्पलानि । असमयाऽतुल्ययाऽतिभूयस्या पिपासया पानेच्छया पांशुलत्वं शुष्कत्वम् शोकपटुतरत्वञ्च तेनैव उत्कृष्टा उद्गच्छन्तो वा परागाः कौसुमरजांसि येषु

एकस्मिन् याने रथे यानं स्थित्यागमनं तथा दूरचकितं ईषत् सभयं सलज्जं यत्कटाक्षैरन्योन्यविलोकनं तच्चैतत्सर्वं दिवि आकाशे स्थित्वा कौतुकेनाप्सरोभ्यामन्वभूत परमहर्षेण सान्द्रा पूर्णा । अथवेति पाठे तयोर्गृहप्रवेशानन्तरमित्यर्थः । स्वयम्वरानन्तरमेव देवा विनिर्गता इति चतुर्दशे सर्गे यद्यप्युक्तं तथापि भूमेर्निर्गत्य नलपुरप्रवेशपर्यन्तं नलभैमीकौतुकविलोकनार्थं गगने स्थिता इति दिविपदेन सूचितम् इदानीं पुनः स्वर्गं प्रति निर्गता इत्युक्ते न कोऽपि विरोधः । किं वा अनन्तरसर्गसङ्गत्यै कलिनलद्वेषारम्भस्याप्रस्तुतता परिहर्तुं नल पुर प्रविष्टौ देवाश्च स्वर्गं जग्मुः । गच्छतां च तेषां मध्ये मार्गे कलेरुत्तरप्रत्युत्तरदानादिना प्रसक्तानुप्रसक्तायसरणाय युक्तमुक्तम् ॥ १३० ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री
हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्म
हाकाव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत् षोड
शः ॥ १३१ ॥

श्रीहर्षमिति । पूर्वार्धं पूर्ववत् । विश्रुते काव्ये चतुर्दशतयीं विद्यां विदद्भिः जानद्भिः सरस्वतीशापदधिष्ठानकाश्मीरदेशोद्भवैरपि विद्वद्भिः परीक्षापूर्वं महिते पूजिते दोषलेशेनापि रहिते सद्गुणपूर्णे । तथा तद्भुवि तस्माच्छ्रीहर्षाद्भवतीति तद्भूः तस्मादुत्पन्ने सर्वस्यैव विधेया । नैषधेति पाठे नैषधनामाधीशस्येति व्याख्येयम् । काश्मीरैरिति पूजार्थे मतिबुद्धीति (पा० ३।२।१८८) इति क्तः क्तस्य च वर्तमान इति (पा० २।३।६७) षष्ठीप्रसक्तौ तृतीया चिन्त्या । पूजिता च सूरिभिरित्यादिशिष्टप्रयोगदर्शनाद्वर्तमानार्थे विहितस्य क्तस्य योगे षष्ठी भवति चकारात् प्रयोजनानुरोधेनान्याऽपि सूत्रार्थो निवर्त्य । चतुर्थ्यर्थे बहुलं छन्दसीत्यत्र बहुलग्रहणं चानुवर्त्य काश्मीरैः करणभूतैर्महिते पूजा सञ्जाताऽस्येति महित इति । तारकादेराकृतिगणत्वात् इतजन्तत्वाभावो वा सम्पाद्य क्तान्तत्वेऽपि कलहमाना महित इत्यादिभट्टिप्रयोगे

समासदर्शनात्. मतिबुद्धिपूजार्थेभ्यश्चेति चकाराद्भूतेऽपि शिष्टप्रयोगानुसारेण क्तप्रत्ययमङ्गीकृत्य क्तस्य च वर्तमाने इति षष्ठीप्राप्त्यभावात् कर्तरि तृतीयैवेति वा. यथा कथञ्चित्तु समर्थनीयं । चतुर्दशतयीं । संख्याया अवयवे इति (पा०५।२।४२) तयप् । टिड्ढाणञिति (पा०४।१।१५) ङीप् । विद्यां विद्भिः । न लोकेति षष्ठीनिषेधः । तद्भुवि । भावि नपुंसकत्वम् नुमभावः । षोडशः पूर्ववत् ॥ १३१ ॥

इति श्रीवेदरकरोपनामश्रीनृसिंहपण्डितात्मज नारायणकृते नैषधीयप्रकाशे षोडशः सर्गः ॥ १६ ॥

# उत्तर नैषध चरिते ।

## सप्तदश सर्ग ।

---

### श्रीलक्ष्मी नृसिंहौ जयतः ।

**अथारभ्य वृथाप्राय धरित्रीधावनश्रम । सुराः**
**सरस्वदुल्लोललीला जग्मुर्यथागतम् ॥ १ ॥**

अथेति ॥ सर्गमङ्गलमिदं च । अथ स्वर्गगमनचिन्तनानन्तर धरित्री प्रति धावनेन जनित प्रयास वृथैव वृथाप्राय व्यर्थमित्यारभ्य विधाय अगाधत्वेनानुपलक्षितरूपविषादतया अथ च तटभूमि प्रति निष्प्रयोजनमागमनेन सत पुनर्यथागत व्यावर्तनेन च सरस्वत समुद्रस्य उल्लोलास्तरङ्गास्तद्वल्लीला यथा तत्तुल्या सुरा आगमनमनतिक्रम्य यथा गत स्वर्ग जग्मु । भैमीमप्राप्यैव जग्मुरित्यर्थ । भैम्यलाभात् श्रमस्य वैयर्थ्यं । नलभैमीवरदानङ्गीकारात्मगौरवरक्षणात प्राय शब्द प्रायोऽजित न तु वृथैवेत्युक्तम् । वृथा वृथात्वम प्राप्यते प्राप्नोति वा वृथाप्रायम् । यथागत अव्ययीभाव । यथागत तथा जग्मुरिति वा ॥ १ ॥

**भैमीमपत्ये भुवस्तस्मै चिर चित्ते धृतामपि ।**
**विद्यामिव विनीताय न विषेदुः प्रदाय त ॥ २ ॥**

तदेवाह । भैमीमिति । ते देवाश्चिर चित्ते धृतामपि भैमीं तस्मै भुव पत्ये नलाय प्रदाय दत्वा न विषेदु पश्चात्ताप न प्राप्ता इत्यर्थ । कस्मै कामिव । विनीताय शिष्याय चिर चित्ते धृता अभ्यस्ता विद्यामिव । दत्तापि विद्या चित्ताद्यथा नोपरमते तथा तस्मै दत्तापि सा सगुणतया तेषा चित्तान्नापरराममेति ॥ २ ॥

कान्तिमन्ति विमानानि भेजिरे भासुराः सुराः ।
स्फाटिकाद्रेस्तटानीव प्रतिबिम्बा विवस्वतः ॥ ३ ॥

कान्तीति । भासुरास्तेजोरूपाः सुराः कान्तिमन्ति रत्नदीप्राणि विमानानि यदृच्छया गामिनो रथान् भेजिरे आरुरुहुः । के कानिव । विवस्वतः सूर्यस्य भासुराः प्रतिबिम्बाः स्फाटिकाद्रेः कैलासस्य तटानीव । प्रतितटं प्रतिफलितत्वात् प्रतिबिम्बानां बहुत्वम् । भासुराः । भञ्जभासेति (पा० ३।२।१६१) घुरच् ॥ ३ ॥

जवाज्जातेन वातेन बलाकृष्टबलाहकैः ।
श्वसनात् स्वस्य शीघ्रत्वं रथैरेषामिवाकथि ॥ ४ ॥

जवादिति । जवात् निजवेगात् जातेन वातेन कृत्वा बलात् आकृष्टाः सहचरीकृता मेघा यैः एषां देवानां रथैः श्वसनात् वायोः सकाशात् स्वस्य तेन शीघ्रगामित्वं दूरगामित्वं अधिकमिव कथितमिव । आकृष्टबलाहकस्य वायोः पश्चाद्गामित्वात् पुरश्चलितानां रथानां शीघ्रत्वमित्यर्थः । शीघ्रशब्दोऽत्र धर्मिवचनः । वेगजेन वातेन गमनेनेति वा । वाधातोर्जीवे क्तः । श्वसनात् । पञ्चमी विभक्ते (पा० २।३।४२) इति पञ्चमी ॥ ४ ॥

क्रमाद् दवीयसां तेषां तदानीं समदृश्यत ।
स्पष्टमष्टगुणैश्वर्यात् पर्यवस्यन्निवाणिमा ॥ ५ ॥

क्रमादिति । क्रमाद्गमनाद् दवीयसां दूरतराणां तेषां तदानीं अणिमा अणुत्वम् स्पष्टं प्रकटं समदृश्यत । किम्भूत इव । अष्टानां गुणानां अणिमादीनामैश्वर्यात् आधिपत्यात् पर्यवस्यन्निव पृथग्भूत इव । सर्वेभ्यो महिमादिभ्यो गुणेभ्यः पृथग्भूतत्वादिव स्पष्टं दृष्ट इत्यर्थः । स्थूलमपि वस्तु दूरत्वात् सूक्ष्मं दृश्यते । तथाष्टौ गुणा यत्र तन्मध्ये अणिमैव तस्मिन् समये स्पष्टं दृष्टो नत्वन्य इत्यर्थः । तस्मिन् काले पर्यवस्यन् स्फुटाभवन्निति वा स्पष्टमुत्प्रेक्ष्यते । तेषां देवानामिति वा । देवानामष्टगुणैश्वर्यात् तत्सम्बन्धाद्दूरेऽप्यणिमाऽभवत् गत इति व्याख्येयम् । दवीयसाम् । अतिशयेन दूराणां ईयसुनि, स्थूल-

दूरेति (पा०६।४।१५६) यणादिपरलोपे पूर्वस्य गुणः । अणिमा । पृथ्व्यादि ॥ ५ ॥

ततान विद्युता तेषां रथे पीतपताकताम् । ल
ग्नकेतुशिखोल्लेखा लेखा जलमुचः क्वचित् ॥ ६ ॥

ततानेति । क्वचित् कस्मिंश्चिदाकाशप्रदेशे लग्नकेतुशिखया ध्वजाग्रेणोल्लेखो योगो यया, तत्सम्बन्धात्कृतविद्युत्प्राकट्येति यावत् तथाविधा जलमुचो मेघस्य लेखा पङ्क्तिस्तेषां दूतानां रथे विद्युता कृत्वा पीता पताका यस्य तद्भावं ततान । ध्वजसम्बन्धात् प्रकटिता विद्युद् ध्वजाग्रे पीता पताकेवाभूदित्यर्थः ॥ ६ ॥

पुनः पुनर्मिलन्तीषु पथि पाथोदपङ्क्तिषु । ना
कनाथरथालम्बि बभूवाभरणं धनुः ॥ ७ ॥

पुनरिति । इतस्ततो गमनवशात् पथि पुनः पुनर्मिलन्तीषु सम्बध्यमानासु पाथोदा मेघास्तेषां पङ्क्तिषु सत्सु धनुरिन्द्रधनुर्मार्गसम्बन्धवशात् नाकनाथरथमालम्बते इत्येवंशीलं सम्बद्धं सदिन्द्ररथस्येवाभरणं बभूव । इन्द्ररथ एवं काले धनुरागच्छन्तीषु मेघपङ्क्तिषु तस्य भूषणमभूदिति वा । मेघा हि सन्ध्याचापा शोभन्ते ॥ ७ ॥

जले जलदजालानां शक्रवज्रेऽनुबिम्बिते । जाने
तत्कालजैस्तेषां जाताऽशनिसनाथता ॥ ८ ॥

जल इति । जलदजालानां जले तस्मिन् काले इन्द्राग्निगमनसमये जातैर्वज्री वज्रस्तस्मात् बिम्बे प्रतिबिम्बे इत्या तेषां मेघजालानामशनिना वज्रेण सनाथता सस्वामिकता जातेति जाने । तदागमने प्रायेण मेघानां वज्रसत्त्वमित्युत्प्रेक्षा ॥ ८ ॥

स्फुटं सार्वाभिसर्वश्यानां कुलच्छत्रं महीभुजां । च
क्रे दण्डभृतश्शुम्भन् दण्डश्चण्डरुचिः क्वचित् ॥ ९ ॥

स्फुटमिति । दण्डभृतां यमस्य दण्डः क्वचिदाकाशप्रदेशे चण्डरुचि

मध्यं वृत्रन् स्पृशन् मन् तं सूर्यमेव सावर्णिमनोर्वंशे जातानां महीभुजां राज्ञां कुलछत्र कुलश्रेष्ठं अथ च कुलक्रमायत राजचिह्न छत्र स्फुटमिव चक्रे । स्वय वृत्तत्वाद्धा दण्डमस्यमध्याच्छत्रमिवेत्युत्प्रेक्षते । सूर्यमण्डलं प्राप्त इति भाव । उदयेऽस्तमये च समानो वर्ण यस्य स सवर्ण सूर्यस्तस्यापत्यम सावर्णि । अत इञ् (पा०४।१।९५) इती ञ्। वश्य । दिगादित्वाद्यत् ॥ ९ ॥

नलभीमभुवोः प्रेम्णि विस्मितायाः दधौ दिवः ।
पाशिपाशः शिरःकम्पस्रस्तमुपश्रवःश्रियम्
॥ १० ॥

नलेति । पाशिपाशो वरुणपाशो नलभीमभुवोरनन्यतुल्ये प्रेम्णि विषये विस्मिताया दिवो विस्मयवशादेव शिर कम्पेन स्रस्ता भूपात् न्यपतत् यस्मादवधिभूतस्य श्रवस. कर्णस्य श्रिय लक्ष्मीं दधौ । तस्यास्ताटङ्करहित. कर्ण इव शुशुभ इत्यर्थ. । अनेन दिवो नायिकात्वं व्यज्यते१०

पवनस्कन्धमारुह्य नृत्यत्तरकरः शिखी । अने
न प्रापि भैमीति भ्रमदत्रक्रं नभःसदाम् ॥ ११ ॥

पवनेति । पवनस्य चन्द्रसूर्याद्याधारेषु आवहादिषु सप्तसु स्कन्धेषु मध्ये ताराचक्राधारभूत स्कन्धमारुह्य नृत्यत्तरा चञ्चलन्त करा किरणा ज्वालारूपा यस्य स शिखी वह्नि: अनेनाग्निना भैमी प्रापि इति नभःसदा देवानां भ्रम चक्रे । भैमीमासिद्यपोऽयं नृत्यति किमिति सर्वेषां देवानां भ्रान्तिर्जातेत्यर्थ. । अन्योऽपि जयवधूलाभे कस्यचिन्मित्रस्य स्कन्धमारुह्य नृत्यत्करा भवति ॥ ११ ॥

तत्कर्णौ भारती दूनौ विरहाद्भीमजागिराम् ।
अध्वनि ध्वनिनिर्गीर्णैरनुकल्पैर्व्यनोदयत् ॥ १२ ॥

तत्कर्णाविति । भारती वाणी भीमजागिरां भैमीवाणीनां विरहाद् दूनौ सन्तप्तौ तेषां देवानां कर्णौ अध्वनि मार्गेऽनुकल्पै. भैमीवाण्याः प्रकाशान्तरभूतै. वीणै. वीणासम्बन्धिभिर्ध्वनिभि. व्यनोदयत् सुखिनौ

चकार । मुख्याभावे अनुकल्पोऽपि कार्य्यार्थमङ्गीक्रियते । स्तनादीनां द्वित्वनिष्ठा जातिः प्रायेण गृह्यत इति वचनात् कर्णाविति प्रतिनियतापक्षे द्विवचनं ॥ १२ ॥

अथायान्तमवैक्षन्त ते जनौघमसत्त्विषम् ।
तेषां प्रत्युद्गमप्रीत्या मिलद्व्योमेव मूर्त्तिमत् ॥ १३ ॥

अथेति । अथ वाग्वीयोवाक्यविलसथयथानन्तर ते देवीदेवा असित्विषं कृष्णत्वकान्तिं आयान्तं सम्मुखमागच्छन्तं जनौघमवैक्षन्त अपश्यन् । उत्प्रेक्षते । तथा देवानां प्रत्युद्गमनस्य प्रीत्या वाञ्छया निगद्युत्यमानं मूर्त्तिमच्छरीर व्योमाकाशमिव । यतः सशरीरस्य क्रियावत्त्वं युक्तम् । जनौघ मषीत्विषमित्यपि पाठ ॥ १३ ॥

अद्राक्षुराजिहानं ते स्मरमग्रेसरं सुराः । अक्षाधिनयविश्वासार्थं कलिनेव पुरस्कृतम् ॥ १४ ॥

अद्राक्षुरिति । ते सुरा अग्रेसरं पुरःसरमाजिहानमागच्छन्तं स्मरं अद्राक्षुः । उत्प्रेक्षते । तज्जनौघस्वामिना कलिना अक्षाणामिन्द्रियाणां अथ च द्यूतपाशकानां सम्बन्धिनोऽधिनयस्य अधिनीतत्वस्य विश्वासार्थं पुरस्कृतमिव प्रेरितमिव अथ च पूजितमिव । स्मरो हीन्द्रियवैकल्यं जानाति इति इन्द्रियाणां अवशत्वहेतुत्वेन द्यूतपाशकेषु विषये न सम्यग्विनयं ज्ञापयितुं पाशकाह्वानद्वारा मल्लं नियच्छेतु कलिनः पूजितं पुरः प्रेषितश्च । प्रायेणात्युत्प्रेक्षा ॥ १४ ॥

आगम्यार्थं तृणप्राणाः पृष्ठस्थीकृतभीह्रियः । शश्वल्लीमुक्तमर्यादा जना यत्पारिपार्श्वकाः ॥ १५ ॥

आगम्येति । यदनुगता जना यस्य कामस्य परितः पार्श्वयोश्चरन्तीति पारिपार्श्विका वयस्या इत्यर्थ सेवका वा । किम्भूताः । गन्तुमशक्यानामगम्यानां राजादीनां मात्रादीनाञ्च सम्भोगार्थं तृणमिवाऽऽत्मीयाः प्राणा येषां ते । अत एव पृष्ठस्थीकृते पश्चात्कृते परित्यक्ते

भीह्रियौ यैस्ते अघभयं पापभयं लोकलज्जा चेत्येतद्द्वयं यैस्त्यज्यते ता दृशा निर्भया निर्लज्जाश्चेत्यर्थः । तथाऽप्राप्याभेद्यश्रीभेदनकृतप्रतिज्ञाभि शम्भलीभि कुट्टिनीभिर्भुक्तं मद्वंस्व येषां ते । सन्तीति शेष । पारिपार्श्विका पूर्ववत् ॥ १५ ॥

बिभर्ति लोकजिद्भावं बुद्धस्य स्पर्द्धयेव यः । य
स्येशानुलयेवात्र कर्तृत्वमशरीरिणः ॥ १६ ॥

बिभर्तीति । य स्मरो लोकान जयतीति लोकजित् तस्य भाव स-र्वजनविजयित्वं बिभर्ति । उत्प्रेक्ष्यते । बुद्धस्य स्पर्द्धयेव । जिनो हि मारजित् इति स्वशत्रुस्पर्द्धयेव मारजिल्लोकजिज्जिन इत्यभिधानात् लोकजित्पदव्याप्त्य बिभर्ति इत्यर्थः । तथा यस्याशरीरिण शरीररहितस्य दग्धदेहत्वादनङ्गस्यात्र लोके कामिनीमनोविकार इति मैथुनद्वारा सर्वजनान् प्रति या कर्तृत्वं स्रष्टृत्वं । अत्राप्युत्प्रेक्षते । विश्वकर्तृ-रीशस्य ममयेव स्पर्द्धयेव । ईश्वरो हि स्मरहरत्वात् स्मरस्य शत्रु तस्मात् स्पर्द्धयैव तस्याशरीरकर्तृत्वं स्वयमपि नये-ङ्गीकृतमित्यर्थः । यथाऽशरीरिण सर्वेश्वरस्य कर्तृत्वमिति न्यायविद । तथाऽयमप्यनङ्ग एव स न् कार्यकारीत्यर्थ । जिनमहेशाभ्यां जिताऽपि लोकजित्वेनाशरीरकर्तृत्वेन च य पुनस्ताभ्यां सम एवंविधाऽतिबलवानिति भाव ।।१६।

ईश्वरस्य जगत्कृत्स्नं सृष्टिमाकुलयन्निमाम् । अ
स्ति योऽस्त्रीकृतस्त्रीकस्तस्य वैरमनुस्मरन् ॥ १७ ॥

ईश्वरस्येति । अस्त्रीकृता शस्त्रीकृता स्त्रियो येन स्य विधो य काम ईश्वरस्येमां सृष्टिं ईश्वरेण निर्मितं कृत्स्नं जगदाकुलयन्नन्यथात्त्वे सि चेत स्वयश दुर्घं न अथवा पीडयन्नस्ति । उत्प्रेक्ष्यते । तस्येश्वरस्य देहदाहजनितं वैरं स्मरन् चिन्तयन्निव । देहदाहो मम अनेन कृत स्त-स्मादेतेन रचितमेतदीयं जगत्पीडयिष्यामीति बुद्ध्वा ईश्वरस्य किञ्चिद पकर्तुमसमर्थं तदीयं जगत् स्त्रीरूपेण शस्त्रेण पीडयस्तेन महापद्यत इत्यर्थः । अत्यन्तोकार्ये आयुधीकृता स्त्री येनेति स्त्रियाऽस्त्रीत्व करणे विरोधाभासः । अथ या या ईश्वरेणापि त्रिपुरवधे मोहिनी स्त्री

मस्त्रीकृता मानेनापि स्त्री मस्त्रीकृता इत्येकविषयतया स्पर्द्धा । शक्ति रूपा हि श्रीविष्णु त्रिपुरवधे भगवता शरता नीत इत्यागम । स्पनु स्मरामीति शुभोऽपेक्षा । शक्तिशब्दो नियतस्त्रीलिङ्ग । तत्परामर्शाच्च- मामिति निर्देश । अस्त्रीकृतेत्यत्रामस्त्रमस्त्र कृताऽस्त्रीष्टतेति च्वौ (पा०७।४।२६) इति ईकार । दत्तोऽत्र । न स्त्री अस्त्री अस्त्रीकृता स्त्री येनेति समास । न ब्रूनर्थेति (पा०५।४।१५३) कप् ॥ १७ ॥

चक्रे शक्रादिनं त्राणा स्मरः पीननतांगिनाम् ।
अपि दैवतवैद्याभ्यामचिकित्स्यमरोचकम् ॥ १८ ॥

कुगकम । चक्र इति । स्मर काम- पीननताङ्गिया आदरकृष्टगल- शोभाना शक्रादिनेत्राणामिन्द्रादीन्याद्विनेत्राणा दैवतवैद्याभ्या नासत्या- भ्यामपि ॥ चिकित्स्य प्रतिकर्तुं न शक्य अरोचक रुच्यभाव चक्रे । अधिकरूपस्य नगस्य दृष्ट्वात्मस्माहीनरूपे स्मरे दृष्टे सर्वं त्राणा प्री- तिर्न जाता । न केवल स्मर दृष्ट्वा न प्रीतास्ते किन्तु दस्रावपि । तयारपि समाद्धीनत्वादित्यर्थ । स्मरदस्रभ्यापि नगोऽधिक इति व्यज्यते । स्न- रमनादृत्य परश्रिता इति भाव । अथवा अरोचक सर्वथा अन्नादिरु- च्यभावा रोगविशेष । स कर्म जात्वा हि वैद्याभ्यामपि चिकित्सितुमश- क्य किंपुनर् वैद्यैरिति समासोक्ति । भक्तमन्तरेण गलरूपातिशयप्रका शतात्पर्यमुक्त । उपमामतिरस्क रात् प्रतीपश्च पीननताङ्गियामिति स्तुती यादिविधेति । (पा०७।१।७४) पुंवद्भावात् नपुंसकत्वस्याभावान्नुमभाव । अचिकित्स्यमिति । शक्यार्थे ण्यतावदिति (पा० ३।१।८७) यत दुश्चिकि- त्स्यमितिपाठे कर्मणि खल । दुनभय सरा रोगाम्नाकसि (पा०२।३।६९) षष्ठीनिषधाद्वितीया भ्यामिति तृनायाद्विवचन । अरोचकमिति । रागा- ख्यायां ण्वुलबहुलमिति (पा० ३।३।१०८) ण्वुल् ॥ १८ ॥

यन्नत् क्षिपन्तमुरुकम्पमुरयायुक्तमथारुणम् । बुबु
धुर्विबुधा क्रोधमाक्रोशाक्रोशवेपिण ॥ १९ ॥

यत्तदिति । अथ विबुधा सुरा क्रोध बुबुधु दद्दृशु । कीदृश । यत्तत् क्षिपन्त यद्यदग्रे पतति तत्त क्षिपन्तमित्यर्थ । पुन किंविध ।

वैराग्यं यः करोत्युच्चै रञ्जनं जनयन्नपि । सूते सर्वेन्द्रियाच्छादि प्रज्वलन्नपि यस्तमः ॥ २२ ॥

वैराग्यमिति । यः क्रोधोऽनितरां मुखादिलौहित्यं कुर्वन् यावत् स्वकार्यं करोति तावद्दुर्द्वेगमपि जनयति । यश्च नितरां प्रदीप्तोऽपि वृद्धोऽभिभवंश्चक्षुरादीनि सर्वाणि बाह्याभ्यन्तरेन्द्रियाणि आच्छादयत्यन्धतमसानमपि उत्पादयति । प्रसिद्धं तम आलोकाभावाच्चक्षुरिन्द्रियमेवाच्छादयति रूपाग्रहणात् । ननु रसनादीनि समस्तमपि रसगन्धादीनां ग्रहणस्य सद्भावादिति चेत्, इह तु क्रोधवशात्मनोऽवधानात् सहकारिसन्निधानाभावाच्चक्षुरादीनां रूपादिस्वविषयग्रहणासामर्थ्यजननात् सर्वेन्द्रियाच्छादि प्रमासामर्थ्यजनकं तमश्च यः सूते इत्यर्थः । अथ च यः पूर्वोक्तप्रकारेण वैराग्यफलभूत जनयितुं रञ्जनं करोति प्रज्वलन्नपि तमः यथा कथञ्चिद्धेतौ शत्रुः आश्चर्यं । अथ वा अपिर्विरोधार्थः । यो लौहित्यं जनयति यश्च प्रीतिमुत्पादयति स एव अप्रीतिमिति कथं । यश्च प्रकर्षेण दीप्तस्तेजोरूपः सोऽन्धकारं ज्वलनञ्च इव कथं सूते । तथापि सर्वेन्द्रियाच्छादनमिति विरोधाभासः । वैराग्यशब्दस्य लौहित्याभावात् प्रीत्यभावार्थत्वेऽपि तम शब्दस्य बाधकार्थत्वेऽपात् । परिहारस्तूक्तप्रकारेण ॥ २२ ॥

पञ्चेषुविजयासक्तौ भवस्य क्रुध्यतो जयात् । येनान्यविगृहीतारिजयकालनयः स्थितः ॥ २३ ॥

पञ्चेष्विति । पञ्चेषुविजयासक्तौ कामजयविषये अभिनिवेशे सति क्रुध्यतो भवस्य क्रुध्यतो महेश्वरस्य जयात् स्ववशीकरणाद्धेतोः येन क्रोधेन अन्यविगृहीतारिजयकालनयः परेण प्रारब्धविग्रहे शत्रौ जयस्य समयस्तत्रावसरस्तस्य नयः स इत्येवरूपो नीत्युपदेशः स्थितोऽङ्गीकृतः । अन्यदा यो जेतुमशक्यः सोऽन्येन विगृहीतो यदा जयति तदा जयो भवतीति नीत्युपदेशोऽन्यदा जेतुमशक्यस्य भवः स्मरेण सह विग्रहसमये जितत्वात् जिन इत्यनुमेदा । महेश्वरोऽपि येन स्ववशीकृतस्तस्य क्रोधस्य माहात्म्यमशक्यवर्णनमिति भावः । विगृहीतारिजयं

प्रग्रहः प्रतिबन्धकः । वृष्टिर्याववग्रहः सम्भाव्यते । महाधनिकोऽपि च द्रव्यात् पात्रपाणौ जनं न वितरतीत्यर्थ । तथा निःस्वान् निर्धनान् स्वान् आत्मनः स्वीयान् पुत्रदारादीन् वा अप्यस्मु धनिकेषु विपय विक्रीणीते निर्गतस्वत्वाभिमानेन । कश्चन विनिमय्य स्वस्वत्वरतिर्गो दासीपुत्रानिव वितरति । हा खेदे, निःस्वेन च धनलोभवशादात्मा स्वीया वा पुत्रादयो धनिकेषु विक्रीयन्ते । दासा यथा स्वेच्छया धनार्थं क्रीयन्ते तथेत्यर्थः । व्यलोकीति पद्यैरस्मदन्वयः ॥ २६ ॥

एकाद्विकरणे हेतू महापातकपञ्चके । न तृणाय मन्यते कोपकामौ यः पञ्च कारयन् ॥ २७ ॥

एकेति । तौ कोपकामौ महापातकपञ्चके ब्रह्मवधादिपञ्चमहापातकमध्ये एकद्विकरणे एकस्य पातकस्य द्वयोश्च करणे क्रमेण हेतू कारणभूतौ यस्मादत एव तयोरल्पकार्यकारित्वाद् यो लोभः पञ्च कारयन् तृणतुल्यावपि तौ न मन्यते । यतः स्वयं पञ्चापि महापातकानि नरकादीनि कारयति कोपाच्च योऽपि ब्राह्मणो हन्यते तस्यैक ब्रह्मवधं प्रति हेतुत्वं कामाद्गुरुतल्पगमनं स्त्रीकामाच्च तद्भर्तुर्ब्राह्मणस्य वधश्चेति महापातकद्वयं प्रति तस्य हेतुत्वं । धनादिलाभात् ब्रह्मवधं सुवर्णस्तेयञ्च स्मलाभात् सुरापानं कामलोभात् स्त्रीजातिमदर्शितवध मलाभाद्वा गुरुतल्पगमनं । इत्येतद्धनलोभादन्यैस्तुभिरपि उक्त सकलं इत्येव लोभस्य पञ्चापि महापातकानि प्रति हेतुत्वादधिकत्वात् कोपकामौ अकिञ्चित्करौ मन्यते । ताभ्यामप्यधिको लोभ इति भावः । एकद्विकरणे इत्यत्र सङ्ख्याया अल्पीयस्याः (पा०२।२।३४वा०७) इत्येकशब्दस्य पूर्वनिपातः । तृणे इति मन्यकर्मण्यनादरे इत्यादिना (पा० २।३।१७) चतुर्थी वैकल्पिकत्वात् पक्षे द्वितीया ॥ २७ ॥

यः सर्वेन्द्रियसद्मापि जिह्वां बहु न लम्भते । न स्यामाचार्यकं यावज्ञापटवे वटवेऽर्जितुं ॥ २८ ॥

य सर्व इति । यो लोकः सर्वेन्द्रियसद्मापि सर्वेन्द्रियाणि पञ्चेन्द्रियाणि सद्मानि यस्य एवंविधोऽपि घ्राणं गन्धलुब्ध चक्षुरूपलुब्धमि

तेषादे कि भविष्यति इत्यादिप्रकारेण पुत्रादियोगक्षेममात्रपरा शिश्नोदरपरायणा. सन्त श्व परेद्युवि प्रतिसन्निहित इति यावत् जातस्य हि ध्रुवा मृत्युरित्यादिवचनप्रामाण्यादरात् अपि सन्निहिते प्राणगमने ज्ञाते सति सन्निपातादिना आतुरत्वेऽपि वा श्व: प्राणप्रयाणे निश्चिते सत्यपि संसारसमुद्रतारक स्मरहर न ध्यायन्ति किन्तूक्तप्रकारेण मरणसमयेऽपि कुटुम्बचिन्तामेव कुर्वन्तीत्यर्थं । इदमपि गूढमगणज । यात्ये नितरमताऽन्याऽपि किमपि न स्मरति । श्व श्व इति पाठे वीप्सा वा द्वि श्व. । स्वप्राणेति पाठे स्वस्य प्राणानामित्यर्थ. । द्विपमिति क र्मत्वविवक्षया द्वितीया । स्मरद्विष इति अधीगर्थेति (पा०२।३।५२) षष्ठी ॥ ३० ॥

पुंसामलब्धनिर्वाणज्ञानदीपमयात्मनाम् । अन्त

स्तापयति व्यक्तं यः कज्जलवदुज्ज्वलम् ॥ ३१ ॥

पुंसामिति । यो मोह, न लब्ध निर्वाण विनाशो येन स ज्ञानरूपो दीपस्तन्मयस्तत्प्रचुर आत्मा मनो येषा ज्ञानिना वसिष्ठादीना तेषामुज्ज्वलमप्यन्तर्निर्मलमप्यन्त करण तथा व्यक्त प्रकट तापयति मलसहित करोति । मोहमोहिता कामाधीना सन्तो ज्ञानिनोऽपि विश्वामित्रादय स्वमना मेनकादिदेवाङ्गनाप्रणयप्रसक्त । एवं मुज्ज्वलस्यापि मनसो मोहेन मालिन्यं कृत । ज्ञानिनामपि चेतासीत्यादिमार्कण्डेयवच प्रमाण । न लब्ध मतान्तरे निर्वाणोपयोगी मोक्षोपयोगी ज्ञानदीपरूप: स्वप्रकाशज्ञानरूप आत्मा येषा तेषा अद्वैतज्ञानरहितानामिति वा । किमिव । कज्जलवत् । यथा मध्यस्थापितस्य दीपस्य कज्जल सुधाधवलिताना घटादीना मध्य मलिनयति ॥ ३१ ॥

ब्रह्मचारिव्रतस्थायियतयो गृहिणं यथा । त्रयो

यमुपजीवन्ति क्रोधलोभमनोभवाः ॥ ३२ ॥

ब्रह्मेति । ब्रह्मचारी व्रतस्थायी वानप्रस्थ: यति सन्न्यासी एते त्रयो ऽप्याश्रमिणो गृहिणं गृहस्थ यथा अशनाच्छादनार्थं उपजीवन्ति सेवन्ते, यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनार्जेन पान्वहम् ।

कुलक । चिन्हिता इति । अमी कामादय कतिचित् कतिपयैर्देवैरिन्द्रादिभि प्राय पुञ्जजातात् परिचयात् पटुतरात् मसृणात् चिन्हिता चिन्हैर्निश्चिता । देवानामपि कामाद्यायत्तत्वात् प्राचीन परिचय । अन्ये तदुपजीविनो यौद्धादय केचन विशेषेण न ज्ञाता यत आचूडं शिरोऽभिव्याप्य मर्यादीकृत्य वा एनसा पापरूपेण कञ्चुकेन मेचका श्यामवर्णा । यो हि नीलवस्त्रादिना आवृतदेह स विशेषतो न लक्ष्यते श्यामत्वात्त युद्ध इत्यर्थ ॥ ३५ ॥

तत्रोद्घूर्णद्वार्णोधौ सैन्येऽभ्यर्णमुपेयुषि । कस्या-
प्याकर्णयामासुस्ते वर्णान् कर्णकर्कशान् ॥ ३६ ॥

तत्रेति । उद्घूर्णे त्यक्तमर्यादे अर्णोधौ समुद्र इवातिगम्भीरे तत्र तस्मिन् काले सैन्ये अभ्यर्णं उपेयुषि सामीप्य गते सति ते देवा कस्याप्यनुपलक्षिताकारस्य चार्वाकस्य कर्णकर्कशान् वर्णानाकर्णयामासु । अभ्यर्ण । अन्तिकाविदूरे इति (पा०७।२।२५) नेट् । गूरी उद्यमे मर्यादाधारणे च । उद्यमत्यागिनीत्यर्थ ॥ ३६ ॥

ग्रावोन्मज्जनवद्यज्ञफलेऽपि श्रुतिसत्यता । का
श्रद्धा तत्र धीवृद्धाः कामाध्वा यत्खिलीकृतः॥ ३७॥

तानेव वर्णानाह । ग्रावेति । ग्रावोन्मज्जनवद्ग्रावाण प्लवन्तीति प्रतिपादितपाषाणतरणवत् ज्योतिष्टोमादियज्ञाना साध्ये स्वर्गादौ फलेऽपि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिश्रुतीना सत्यता यथार्थता ग्रावोन्मज्जनवाक्यस्य प्रत्यक्षबाधितत्वाद्यागानन्तरमेव स्वर्गादेरदृष्टत्वात् ज्योतिष्टोमादियागप्रतिपादिका श्रुतिरपि प्रत्यक्षबाधिता । तथा च यागश्रुतिरप्रमाणा प्रत्यक्षविरुद्धत्वात् ग्रावोन्मज्जनश्रुतिवदिति प्रयोगात् यागश्रुतेरपि स्वर्गादावसत्यतेति च व्याख्येय । अत्र विरुद्धलक्षणया सत्यत्वेऽप्यसत्येत्यर्थ । एवमन्यथापि वेदवाक्याना श्रुतित्वाविशेषादप्रमाणत्वे ह धीवृद्धा बुद्धिमन्तो दयालवः तत्र पले श्रुतौ वो युष्माक का श्रद्धा कथमास्तिक्य धापि स्वप्रामाणिकेऽर्थे श्रद्धा न कार्या । यत् यन कारणेन यद्वृद्धैर्दाक्षिण्यातिक्रमभिया कामाध्वा यदृच्छाचारमा-

यां जीविका जीवनोपायः। तद्व्यवहारधर्मेण द्रव्यमर्जितुमेव न तु पारत्रिको धर्म्मः। परलोकसाधनमिव वेदप्रामाण्यवादिना भवति इति धीयां बृहस्पतिर्जल्पति वदति। चार्वाकः कर्म्म। तदुक्तम् तेनैव।

अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मपुण्ड्रकम्।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः॥

भस्मगुण्ठनमिति वा वचने पाठः। तस्मादग्निहोत्राद्युपजीवनमेवेति भावः। जीविकेति। धात्वर्थनिर्देशो ण्वुल्॥ ३९॥

शुद्धिर्वंशद्वयीशुद्धौ पित्रोः पित्रोर्यदेकशः। तद
नन्तकुले दोषाददोषा जातिरस्ति का॥ ४०॥

इदानीं ब्राह्मणादिजातिधर्म्मानसहमानो जातिं दूषयति। शुद्धिरिति। विशुद्धमातापितृजन्म हि ब्राह्मण्यादेर्लक्षणम्। सा शुद्धिर्दुर्निरूपा। यद्यस्मात् पित्रोर्मातापित्रोर्यौ पितरौ मातामहपितामहौ मातामहीपितामह्यौ च तयोरेकशः प्रत्येकं वंशद्वयीशुद्धिः सत्या, एवं तयोरपि पितामहादिमातृपितामहादिमातृपितामह्यादिमातामहान् पितामहादिमातामहीं तु पितामह्यादिशुद्धौ सत्यां एव ब्राह्मण्ये यावत् प्रत्येकं शुद्धौ सत्यां शुद्धिः परीक्षणीया। तस्मादनन्तकुला स्वसमयपरिमितवंशभेदात्। अत एव दोषा दुर्विज्ञेयाः। शुद्धसन्तानस्त्रीपुंसयोः पारम्पर्यतया शुद्धे सन्देहः। इन्द्रादीनामहल्यादीनाञ्च पुराणप्रामाण्येन व्यभिचारदर्शनादशुद्धेर्निश्चयाच्च जातिसङ्कररूपाद्दोषात् का जातिरदोषास्ति अपितु न कापि। यदाहुः।

अप्येकपङ्क्त्या नाश्नीयात् संयतैः स्वजनैरपि।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेदिति॥

तथा। अनादाविह संसारे दुर्वारे मकरध्वजे।
कुले च कामिनीमूले का जातिपरिकल्पनेति॥ तस्मात् सङ्कीर्णत्वात् सर्वा अपि जातयो दुष्टा एवेति जातिधर्म्मान् विहाय स्वेच्छाचारं कुरुतेति भावः। यद्वा तस्माद्ब्राह्मणमनन्तानां कुलानामदोषाभावाद्व्यभिचारादिदोषरहिता जातिः काप्यस्ति अपितु न कापि। एवं पूर्वं पित्रादिव्यभिचारादिदोषात् सर्वापि जातिर्दुष्टैवेति व्याख्या-

ता । यदा सदेति च पाठः सम्यक् । तयोः पित्रोरनल्पकुलानां दोषा-
भावेन कृत्वाऽदोषाजातिरस्ति अपि तु महति कुलेऽस्य विद्यमानत्वा
त् सर्वोपि जातिदुष्टैवेति व्याख्या । यच्छब्दसामर्थ्यात्तच्छब्दाध्याहार ।
एकश. । सङ्ख्यैकवचनाद्विति (पा०५।४।४३)शस् ॥ ४८ ॥

कामिनीवर्गसंसर्गैर्न कः सङ्क्रान्तपातकः ॥ ना
श्नाति स्नाति हा मोहात् कामक्षाममिदं जग
त् ॥ ५१ ॥

अन्यदप्याह । कामिनीति ।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥१

इति वचनात् पुरुषापेक्षया अष्टगुणकामानां कामिनीनां स्त्रीणां
नानाजातीयानां वर्गं समूहस्तस्य संसर्गैर्योनिसम्बन्धैः कृत्वा कः
पुरुषः सङ्क्रान्तं प्रविष्टं पातकं यत्र स एव विधो न अपि तु । सर्वास
दासु पतति पतितेन सहाचरन् । इति शास्त्रात् कृतपातकस्त्री-
संसर्गात् सर्वोऽपि प्राणी सङ्क्रान्तपातक एव । तस्मात् काम्यत इति
कामः फलं तेन कामरहितं एकादश्युपवासादिव्रतं नियमो यस्य । मन-
दनेन कृत्वा क्षीणं निष्फलं व्रतं यस्य वा तज्जगत् सर्वोऽपि लोकः मोहा
द्विचाराज्ञानाद् वृथैति यावत् नाश्नाति न भुङ्क्ते एकादश्यादौ वृथै
व च स्नाति तीर्थादौ हा कष्टम् । स्वयं शुचित्वेऽपि स्त्रीव्यभिचारादि-
दोषसंसर्गात् स्त्रीणां शुचित्वेऽपि दुष्टसंसर्गात् सर्वथा पातकित्वादुप-
वासादि वृथैव करोति । केवलं प्रयास एव तस्य भवतीत्यर्थः । तस्मा
त् स्वेच्छाचार एव काम्य इति भावः । चार्वाकमते विधिनिषेधाभावा
न्नैव दोष इत्यर्थः । तेषां सदोषत्वाज्जातिरपि सर्वा सदोषैवेत्युक्तं
भवति । अभिलाषेण कृत्वा नष्टं व्रतं यस्य । एकादश्यां भोजनाभिलाषे
सत्यपि न भुङ्क्ते, अभिलाषसत्त्वे यागावाप्त्यादौ स्त्रीभिर्दासि स्नाति
च तीर्थादौ,नामव्रतं वृथैव । कामोपहतत्वाद् वहिः शाधयन्नन्तर्दुष्टति-
त्यर्थः । क्षामः । क्षायो मः इति (पा०८।२।५३) मः ॥ ५१ ॥

ईर्ष्यया रक्षतो नारीर्धिक्कुलस्थितिदाम्भिकान्। स्मरान्धत्वाविशेषेऽपि तथा नरमरक्षतः ॥४२॥

ईर्ष्ययेति। ईर्ष्यया असहनत्वमात्रेण हेतुना नारीः रक्षतस्तासां परपुरुषदर्शनमपि कर्तुमप्रयच्छतः कुलस्थितिर्गोत्रव्यवस्थितिर्मर्यादा तस्या दाम्भिकांस्तद्रूपेण दम्भेन चरन्ति ये तान् पुरुषान् स्त्रीरक्षणमेव कुलस्थितिं मन्यमानान् धिक् ते निन्द्याः। निन्द्यत्वे दाम्भिकप्रयुक्तत्वमेव हेतुः। किम्भूतान्। स्त्रियः पुरुषाश्च विवेकशून्या यतोऽतः स्मरान्धत्वस्याविशेषे साधारण्ये सत्यपि तथा नारीवन्निर्बन्धेन नरमरक्षतः परदारसंसर्गादनिवारयतः। न हि जातिसङ्करो नारीष्वेव व्यभिचारेण प्रयुक्तो यतस्ता एव रक्षणीयाः किन्तु पुरुषाणामपि व्यभिचारेऽपि यदि रक्षणीयं तर्हि द्वयमपि। नचैवं क्रियते। तस्माद्न्यतरस्यैव रक्षणं जातिसङ्करस्यैव तादवस्थ्यात् कुलस्थित्यभावान्नारीणामरक्षणं तेषां दम्भ एवेत्यर्थः। तस्मादीर्ष्यां त्यक्त्वा नरस्य धैर्याद्यथैव स्त्रीणामपि नरान्तरे प्रवृत्तिप्रतिषेधं माकार्ष्टमिति भावः। ईर्ष्ययेत्यनेनेर्ष्यैवात्र हेतुर्न तु धर्म इति सूचितं। अपि च स्मरान्धत्वाविशेषेऽपि नारीरक्षतोऽनेकपतिभ्यः किंत्वेकमेव तस्याः कुर्वतः। नरं तु रक्षोयदरक्षतः। स्त्रिया यथा एक एव पतिस्तथा नरस्यैकैव स्त्रीति न किन्तु ते बह्वीः कुर्वन्ति तस्मादपि निन्द्यास्ते अत्रापि ईर्ष्यैव हेतुः ॥४२॥

परदारनिवृत्तिर्या सोऽयं स्वयमनादृतः। अहल्याकेलिलोलेन दम्भो दम्भोलिपाणिना ॥ ४३ ॥

परेति। परदारेभ्यो या निवृत्तिः ताः सादरं न द्रष्टव्याः किंपुनः स्प्रष्टव्या इत्येतदर्थप्रतिपादकं शास्त्रं सोऽयं परवञ्चनरूपो दम्भः अहल्यया गौतमस्त्रिया सह केलिः कामक्रीडा तत्र लोलेन तत्परेण दम्भोलिपाणिनेन्द्रेण स्वयमात्मनैवानादृत उपेक्षितः। परदारागमनप्रायश्चित्तविभागोऽप्येतेन दूषितः। अन्यं प्रति तन्न कार्य्यमिति उपदिशन्ति स्वयं तु तदेव कुर्वन्तीत्युपहासोऽपि सूचितः। अहल्यासम्भोगलम्पट इन्द्र एव दाम्भिकोऽन्ये परदारपराङ्मुखाः सर्वेऽपि दाम्भिका एवेति भा-

। वज्रहस्तत्वात परदारमर्षणं कृतवान् तस्मादस्य शास्त्रीयो निषेधो न भवति किन्त्वशक्तत्वाद्दम्भ एवेति ॥ ४३ ॥

गुरुतल्पगतौ पापकल्पना त्यजत द्विजाः ॥ ये
पात्र' पत्युरभूधैर्गुरुदारग्रहे ग्रहः ॥ ४४ ॥

अन्यस्त्वाह । गुर्विति । भो द्विजा यूयं गुरुतल्पगतौ पित्रादिभार्यासम्भोगे विषये पापकल्पना,

ब्रह्महा मद्यपस्तेनस्तथैव गुरुतल्पग
महापातकिनस्त्वेते तथा विश्वासघातिन ॥

इत्यादिवचनानुरोधेन महापातकसम्भावना त्यजत । यस्माद्येषा वो युष्माकं पत्यु स्वामिनो द्विजराजस्य चन्द्रस्य देवानां गुरोर्वेदादिपाठयितुर्बृहस्पतेर्दारा तयाहृष्टे सम्भोगे अत्युच्चैरतितरां ग्रहोऽभिनिवेश अभूत इति शाप । वेदादिपाठनात् बृहस्पतेर्देवगुरुत्व । तस्मात् तद्भार्यागमने चन्द्रस्य दोषलेशोऽपि न तत्सेवका यूयमपि गुरुतल्पगमनं काम कुरुतेति भाव । यथोक्त ।

राज्ञि धर्मिणि धर्मिष्ठा पापे पापा समे समा
राजानमनुवर्तन्ते यथा राजा तथा प्रजा इति ॥

अयमभ्युपहास । गुरुभार्यालनेवमुक्त । भक्ष इति पाठे उत्सव ॥ अथ च तेन समूहा गुरुतल्पगमनेऽपि प्रत्युहमुदेत्येव न तु पतित इत्यर्थं । इन्द्रादिनिकटे वाल्मीकिप्रमुखा द्विजास्तिष्ठन्ति तेषां सम्बोधन । बृहस्पतेर्भार्याया गर्भमुत्पाद्य तत्सुतस्वीकारार्थं सोद्यमानिन्द्रादीन् प्रति चन्द्रेण महारणारम्भसम्भ्रम तेन प्रकटित । अनन्तर ब्रह्मणा गुरुभार्यां त्याजितोऽपि स गर्भजपुत्र गृहीतवानिति पौराणिकी कथा । तन्मध्ये नयनीये स्वासत्त्व मन्त्रकृतत्रयारिति विष्ठ ॥ ४४ ॥

पापात्पापा मृदः पुण्यात् परासोः स्युरिति श्रुतिः ॥ वैपरीत्य द्रुत साक्षात्तदाख्याति बलाबलि ॥ ४५ ॥

पुण्यो वै पुण्येन कर्मणा पाप पापेनेत्यादिश्रुति दृश्यति । पापा

दिनि । परा गता अमवो यस्य मृतस्येत्यर्थं तस्य प्राणिन इह कृता-
ऽश्विहिताचरणजात पापात्तावा दुःखानि पुण्यादिह कृताद्विहिताचरण-
जाद्धर्मान्मुद सुखानि स्पृशन्त्येन्ति इति श्रुतिराह । साक्षात्प्रत्यक्षेण
दुतं शीघ्रं वैपरीत्यं दृश्यत इति शेषः । प्रयागादौ प्रातर्माघस्नान
कुर्वतो भवदभिमतसुकृतकारिणः पुरुषस्य तदानीमेव दुःख भवति ।
भवदनभिमतपरदारसङ्गमादिपापकारिणस्तदानीमेव सुख भवती-
ति वैपरीत्यमनुभूयते । अथ चेय श्रुतिः श्रवणमात्र न तु तत्र किञ्चि-
त्प्रमाण । किन्त्वमृतस्य किया भविष्यतीति को वेद जीवतः तावद्वै परी
त्यमनुभूयते तस्मात् श्रुतिप्रत्यक्षयोर्विषये एव बलाबले स्वयमेव प्रा-
त्यात कथयत भवन्त एव विचारयन्त्वित्यर्थः । प्रमाणयोः परस्परवि-
रोधे सबलत्वेन दुर्बलत्वेन च व्यवस्था क्रियते । तत्रच यथा प्रत्यक्षानु
मानविरोधे प्रत्यक्ष बलीय । तथा श्रुतिप्रत्यक्षविरोधे प्रत्यक्षमेव ब-
लीय इति निश्चित्य पापात् सुखमनुभूयत इति पाप सर्वैः कार्यमिति
भाव । प्रबलदुर्बलत्वव्यवस्थापकस्य न्यायस्याप्ययमुपदेशः ॥ ४५ ॥

सन्देहेऽप्यन्यदेहाप्तेर्विवर्ज्यं वृजिनं यदि । त्यज
त ग्रोग्नियाः सत्रं हिंसादूषणसंशयात् ॥ ४६ ॥

सन्दिग्धेऽपि परलोके त्वत्पमेवाशुभ दुधैरित्यादिप्रतिबाधाद्दूषय-
ति । सन्देहइति । तत्र सत्र व्यभिचरितत्वाच्छ्रुतिप्रामाण्यानिश्चयात्
पापं न कार्यं जन्मान्तरे निरयादिदुःखभयादित्येक वदन्ति, अन्यैव
येन कृत स तु दग्धोऽन्यदेहप्राप्तिस्तस्य स्यादित्यत्र का प्रत्याशेति या-
दिविप्रतिपत्तेरन्यदेहाप्ते सन्देहे सत्यपि पातकोऽपि दोष परिहर्त-
व्य इति न्यायेन यदि देहान्तर स्यात् तर्हि पापफलं दु खमनुभूयतेति
शङ्कया यदि वृजिन पाप विवर्ज्य सर्वथा न कार्यं तर्हि हे श्रोत्रियाश्छ-
न्दोध्यायिनो यजमानादयो यूय सत्र अनेककर्तृक याग त्यजत नैव कुरुत।
कुतः । पशुहिंसाया- सम्बन्धिनो दोषस्य संशयात् सन्देहात् । मा हिं-
स्यात् सर्वाभूतानि, अहिंसा परमो धर्मः, इत्यादि श्रुतिस्मृतिनिषेधाद्या-
गेऽपि हिंसा न कार्येत्येके । विधिबलादशङ्कितपापोत्पत्ति सा कार्ये-
त्यन्ये इति सन्देहे यागीयपशुहिंसा चेत् पापहेतु स्यात्तदा नेदृग्मा-

स्तिः किन्त्वनिष्टमेवस्मादिति पार्थिकोऽपि दोष परिहरणीय इत्यनेनैव न्यायेन यागमपि त्यजत न चेदं पापमपि कुरुतेति भाव । सग्रया-दिति पाठे सम्वन्धादित्यर्थ । कलुष वृजिनेत्यमरः ॥ ४६ ॥

यस्त्रिवेदीविदां वंद्यः स व्यासोऽपि जजल्प वः ।
रामाया जातकामायाः प्रशस्ता हस्तधारणा ॥४७॥

त्याज्यमेवाशुभ बुधैरित्यपि सव्यभिचारमाह । य इति । यस्त्रि-वेदीविदा वेदत्रयवेदिनां वो युष्माक वन्द्यो नमस्करणीय स व्यासो-ऽपि इति भारतादौ जजल्पोक्तवान् । इति किं । जातकामायाः कामार्त्तायाः रामाया अज्ञातकुलशीलाया अपि रमणाय ह-स्तधारणा पाणिग्रहण अङ्गीकरणञ्च प्रशस्ता युक्तेव । न केवल वा-ल्मीकिः किन्तु व्यासोऽपीत्यपिशब्दार्थ तद्वचनं भवद्भिः पूज्यत्वादङ्गी-कर्तव्यमित्यपि सूच्यते ।

स्मरार्त्तां विह्वलां दीनां यो न कामयते स्त्रियम् ।
ब्रह्मघ्न स तु विज्ञेयो व्यासो वचनमब्रवीत् ॥

इत्याद्यर्जुनतीर्थयात्राविषये कत्र्यादिप्रसङ्गे च भारतादौ रामाय-णे च शूर्पणखाद्युक्तौ प्रसिद्ध । ततश्च पापवत्त्यकार्यमित्यप्युक्तं । त भयथापि दोष इति भाव. । वेदविदामिति कृत्यानामिति (पा०२३। ७१) षष्ठी ॥ ४७ ॥

सुकृते वः कथं श्रद्धा सुरते च कथं न सा ।
तत्कर्म्म पुरुषः कुर्य्याद्येनान्ते सुखमेधते ॥ ४८ ॥

सुखमन्तरेण पूर्वोक्तमेवाह । सुकृत इति । सुकृते यागदानादौ वो युष्माकं कथ केन हेतुना श्रद्धा आस्तिकता अपि त्वनुचितमेतत् । सा च श्रद्धा सुरते कामिनीविषये न कथमिति । तया तत्र भवितु यु-क्तं । यस्मात् पुरुषस्तत्कर्म व्यापार कुर्य्यात् येन कर्मणा कृत्वाऽन्ते कार्यावसान एव सुखमेधते वर्धतेऽनुभूयते पुरुषेणत्यर्थः । अन्तरा प्रमादिजन्य सुख सन्दिग्धं सुरतजन्यन्तु सर्व स्यानुभवसिद्ध । त-स्माद्यागादिदानादि सुरत त्यक्त्वा सुरतमेवाङ्गीकार्य्यमिति भावः । ए

तेन माभैरुज्जिघृक्षा च पूर्णेन वयमायया। प्रायश्चित्तकर्म कुर्वीत ये-
नात्र मुखमेधत इत्यादि विडम्बितं। दुरितं चेति पाठे परदारगमना-
दीत्यर्थः। यतः परदारगमनानन्तरमेव सुखं दृश्यते ॥ ४८ ॥

बलात् कुरुत पापानि सन्तु तान्यकृतानि वः।
सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥ ४९ ॥

बलादिति। भो द्विजा यूयं पापानि परस्त्रीगमनादीनि बलादनुमतावसत्यामपि कुरुत तानि पापानि वः युष्माकं कृतान्यप्यकृतानि सन्तु फलद योनि मा भवन्त्वित्यर्थः। यतो मनुर्बलेन कृतान् सर्वानर्थान् व्यापारान् अकृतानेवाब्रवीत्। मनुवचनप्रामाण्याद् बलाद् पापं कुरुतेत्यर्थः। बलाद्दत्तं बलाद्भुक्तं बलाद्वामीकृतञ्च यदित्यस्यार्थमपि मनुवचनं यज्ञनार्थान्तरपरिकल्पनया प्रकृते निदर्शयन् प्रतिपक्षान् विडम्बयति ॥ ४९ ॥

स्वागमार्थेऽपि मा स्थास्मिंस्तीर्थिका विचिकित्सथ। तं तमाचरतानन्दं स्वच्छन्दं यं यमिच्छथ ॥ ५० ॥

स्वागमेति। भो तीर्थिकाः सम्प्रदायागतविद्या यूयमस्मिन् पूर्वोक्तमनुवचनरूपस्वागमप्रतिपाद्येऽर्थेऽप्रमेये आत्माराम स्यादिति वार्थे विषये विचिकित्सथ संशयाना मा स्थ भवथ इदं कार्यं न वेति संशयं परित्यज्य इत्यर्थः। मनुना श्रुत्या च इदं कथं प्रतिपादितमित्युभयप्राप्यनादरपरा वा मा भवत। तर्हि किं कार्यमित्यत आह। यूयमानन्देन परदारगमनादि यं यमिच्छथ तं तं स्वच्छन्दं स्वेच्छया निस्संशयमादरेणाचरत आत्माराम स्यादिति श्रुतिप्रामाण्यात्, पूर्वोक्तस्मृतिप्रामाण्याच्च संशयं परित्यज्य आदरेण यदृच्छया सुखमुपलभध्वमिति भावः। अस्मदागमे यद्यपि निन्दापरास्तथापि स्वागमे निन्दा न युक्तेत्यपि सूचितम्। मा निरनुबन्धकस्ततो न लुङ्। तीर्थेनागमेन चरति ठक्। मद्गुपाध्यायस्य वा तीर्थं तस्मादस्त्यर्थे ठन् ॥ ५० ॥

गवनुराः स्वमन्त्रादीन् हेतून कारणमनानाहु अस्माभीरुच्चपादिस्य-दर्थं कृत तेन च त्वया पुत्रादि लब्धमिति यदन्तान्यथं । अन्यथा पुत्रा द्यलाभे मति तानव मन्त्रानमाङ्गानङ्गविकलतया फलस्यामाधकान प्रा चानपूर्वयियोगादिविपरीतफलक मिथ्याहु । सामग्रीसाकल्याभावाद्यो-पोक्तदक्षिणाभावात् फल न जात विपरीतञ्च जातमिति धूर्ता परान् दम्भयन्तीत्यर्थं । तस्माददृष्टफलपुत्रस्य दृष्टान्तनादृष्टफलेष्वपि फल-कल्पना निरवकाशेति श्रुतरप्रमाणैवेति भाव ॥ ५५ ॥

एकस्य विश्वपापेन ताप्यनन्ते निमज्जतः । कः

श्रीतस्यात्मनो भीरो भरः स्यात् दुरितेन ते ५६

श्रुतिप्रामाण्यमभ्युपगम्यापि दृष्टान्तोक्तन्यायेन कात्मवादिमतमतिष्टापत्या-दुपपत्ति । एकस्येति । विश्वेषा सर्वेषा परदारागमनादिजनितेन पापेन हेतुनाऽनन्तेऽक्षये तापे निरयादिदु खे निमज्जत अनन्तदु खमनुभव त वस श्रौतस्य एकमेवाद्वितीय ब्रह्म, नह नानास्ति किञ्चन इत्या दिश्रुतिसिद्धैकस्याद्वितीयस्य त्मनो हे भीरो पापाद्भयशील ते तवैकस्य दुरितेन का भारो गौरवं स्यात अपि तु पर्वतस्य शकटस्य सर्षपेणेव न कश्चिद्भारो भवेत् । एकात्मवादिमते प्राणिमात्रस्यैकस्यैव त्मना यदि च कलत्रचौराद्यभिरुचपापमस्मभ्यस्तदा तत्कर्मानन्याश्रिरयादिदु खानुभ वावसरे तवैकस्यैव पापेन कृत्वा पापाश्चयाश्रितस्य न काऽपि भा र स्यात् । किञ्च तेनैव पुण्य कृत तस्यैव कृतमिति पापे कृतेऽपि त व दोषो नेति यथेष्ट पाप कुर्वित्यर्थं । अपि चात्मैक्यात् स्वपरव्यव-हाराभावे परदारत्वपरस्वत्वाद्यभावात परदारागमनादौ पापलेशस्या भावात् स्वेच्छाचारमेव कुर्वित्यर्थं । भीरो तात्पर्यपर्यालोचनया वि ना भयशीलेत्युपहास । तस्मादेकात्मश्रुतिरुपासनपरा ग्राह्या न तु ता त्त्विकीति भाव ॥ ५६ ॥

किन्ते वृन्तहृतात् पुष्पात् तन्मात्रे हि फलत्य

दः । न्यस्य तन्मूर्ध्न्यनन्यस्य न्यास्यमेवाश्मनो

यदि ॥ ५७ ॥

दोऽपि श्रुतिस्मृती ममैवाज्ञेति श्रीभगवद्वचनाद्वैष्णवीया आज्ञा । अत-स्तत्र वेदरूपायां देवाज्ञायां कामाज्ञातोऽधिकार्हत्वा पूज्या मान्या काऽपि तु देवत्वाविशेषाद्द्वयोरेव कार्य्या कामाज्ञापि माननीयैवेत्यर्थः । आज्ञाद्वयमपि समानं । तस्मात् कामदेवाज्ञामपि कुरुध्वं न त्वेकत्र पक्षपातः कार्य्य इति भावः । यद्वा तत्र द्वयो राज्ञयोर्मध्ये अधिकमर्हणं यस्याः सा काऽऽज्ञा अपितु पूर्ववदविशेषाद्द्वयमपि सममेवेत्यर्थः । द्वयोर्मध्येऽधिकार्हणा केति यूयमेव वक्तयेति । ब्रह्मादिभिरप्यङ्गीकृतत्वाच्छिष्टपरिगृहीतलक्षणप्रामाण्यात् प्रत्यक्षलक्षणसुखहेतुत्वाच्च कामदेवाज्ञैवाधिकार्हणा योग्या । वेदा हि ब्रह्मादीनामेवाज्ञा ब्रह्मादयश्च कामदेवाज्ञाकारिणः । ततश्च यदीयाऽऽज्ञा भवद्भिरनुष्ठीयते तैरपि अनुष्ठीयते या सा भवता सुतरामनुष्ठेयैवेति न्याय इति वा । पक्षपातात तारतम्याज्ञानाच्च मूर्खत्वं । वेदो हीति च पाठः । कामदेवाज्ञामेव कुरुध्वं यस्माद्वेदोऽपि देवाज्ञा । तत्र वेदेऽधिका का पूजा अपि तु कामदेवाज्ञैवानुष्ठेया । ब्रह्मादिभिरपि अनुष्ठितत्वादिति वा । का विगर्हणेति पाठे तत्र कामाज्ञाया का निन्दा कोऽनादर इत्यर्थः । दैवकीया । गहादिषु जनपदयोः कुक्चेत्यत्र देवस्यचेति वक्तव्यात् (पा०४।२।१३८) कुक् छ ॥ ५९ ॥

प्रलापमपि वेदस्य भागं मन्यध्वमेव चेत् ॥ केना

भाग्येन दुःखान्न विधीनपि तथेच्छथ ॥ ६० ॥

श्लोकत्रयेण मीमांसकान् परिहसति । प्रलापमिति । महता प्रयासेन यस्य प्रामाण्यमुपपादितं तस्य वेदस्यैव कञ्चन भागमश्वोऽश्वरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वं इत्याद्यर्थवादमन्त्रनामधेयानर्थकं प्रलापमिवानर्थकवचो रूपं चेन्मन्यध्वं अङ्गीकुरुध्वं । आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामित्यादिना पूर्वपक्षसूत्रेण प्रतिपादितस्यानर्थक्यस्य, विधिना त्वेकवाक्यत्वादित्यादिना सिद्धान्तसूत्रेण स्तुत्यर्थवादादेरुपयोगेऽभिहितेऽपि अतिमात्रक्लेशाभावादतिरुतत्वादर्थवादादि वेदभागमनर्थकवचनप्रायं चेन्मन्यध्वे तर्हि बहुधनव्ययायासमाध्यत्वाद्दुःखजनकान् ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादीन् विधिभा-

गानपि केन भाग्याभावेन तथा प्रलापरूपान नेच्छथ नाङ्गीकुरुथ अपि तु तानपि प्रलापरूपानेव स्वीकुरुथेत्यर्थ । सर्वोऽपि वेदो विधिरूप प्रलापरूपो वास्तु । न त्वर्द्धजरतीयन्याय समाश्रयितुं युक्त इति भाव । वेदत्वाविशेषेऽप्यभाग्यमेव वैषम्यहेतुरित्यर्थ । तु खशब्दस्य नपुंसकत्वेऽपि तु स करोतीति यत्नात् पचाद्यचि तु खानिति ज्ञेयम् ।६०॥

श्रुति श्रद्धत्थ विक्षिप्ताः प्रक्षिप्तां ब्रूथ च स्वयं ॥
मीमांसामांसलप्रज्ञास्ता यूपद्विपदायिनीम् ॥६१॥

प्रकारान्तरेण मीमांसकानुपहसति । श्रुतिमिति । हे मीमांसाया वेदविचारे मांसला परिपुष्टा प्रज्ञा बुद्धिर्येषां ते यूय श्रुति वेद प्रत्यक्ष श्रद्धत्थ आदरेण स्वीकुरुथ । अक्षरमात्रमपि सार्थक मन्यध्वे । तथा विक्षिप्ता वादिभिर्निराकृता भ्रान्तचित्ता पूर्वापरानुसन्धानविकला सन्त स्तामेव श्रुति यूपसम्बन्धिन द्विप दायिनीं दापयन्तीं स्वयमाप्तमनैवाङ्गीकृतप्रामाण्यामपि प्रक्षिप्ता केनचिद्दुष्टकेन खिलरूपा निक्षिप्तान्च ब्रूथ । चकार पूर्वापरविरोधद्योतनार्थं । पूर्वापरानुसन्धानविकलत्वाद्वेदविचारचतुरा नाध्वी भवता बुद्धिरित्युपहासार्थं मीमांसेत्यादिसम्बोधन । मांसलेत्यनेन च स्थूलदृष्टय आपातग्राहिणा यूय न तु कुशाग्रबुद्धय इति सूचितं । ऋत्विजा यज्ञमध्ये यजमान यज्ञसमाप्तनाप्रशंसील समाप्त्यु तत्कालभावि स्वाच्छन्द्य विदित्वा कार्यं यज्ञवेलायामेव स्वप यूपे यूप हस्तिनो बद्धा ऋत्विग्भ्यो दद्यादित्येतत्प्रतिपादकानि वेदवाक्यानि यजमानस्य श्रद्धाजननार्थं पठित्वा याचन्ते । मत्यश्रुतिविहितदेशान्तरनिदर्शनाभ्यामाहितश्च स यजमान श्रद्धालुतया तथैव प्रतिपद्य तेभ्य प्रयच्छतीति नैरर्थ्या स्मृति प्रथिता स्यादित्या गदु मेव वेदमूलेति नोमपूर्वं कर्मभिक्तमिति वेदयाख्यानामर्थवादस्य मङ्गीकरोति । तत्र कानिचिद्वेदवाक्यानि प्रधानानि कानिचिदप्रधानानीति अर्द्धजरतीयन्यायसद्भूय यथेच्छं । यूपहस्तिनो दानमाचरतीति स्मृतमूलत्वा श्रुतिरनिधायने । कल्पितश्रुतिमूलत्वात् स्मृतिरेवाश्रुतिरित्येतमाध्यत । यूपवदत्युपद्विपादान् दापयतीति । वाजपेयादी हि महदशहस्तिना रथा दास्य दक्षिणा इत्युपलक्षणमेतदित्यन्ये ।६१॥

को हि वेदास्त्यमुष्मिन् वा लोक इत्याह या श्रु-
तिः ॥ तदप्रामाण्यादमुं लोकं लोकः प्रत्येतु वा
कथ ॥ ६२ ॥

को हीति । को हि तद्वेद यदमुष्मिन् लोकेऽस्ति वा भवेति दिव्यलो-
काख्यान करानीत्यादि या श्रुतिरमुष्मिन् लोके परलोके विषये सुखादि-
कमस्ति वा नास्तीति वा हि नियतं को वेद अपि तु न कोऽपि स्याह
ब्रवीति, तस्याः श्रुतेः प्रामाण्यात् अमुं लोकं परलोकं लोकः परीक्ष-
कोऽस्मदादिः कथं वा कथमिव प्रत्येतु विश्वासेन निश्चिनोतु ब्रूहि,
अपि तु न कोऽपि । यदीय स्तित्वनास्तित्वयोः श्रुतेरेव सन्देहस्तदप्रा-
माण्यात् पामरो भवादृश एव परलोकं मन्यते न तु प्रामाणिकः कश्चि-
दित्यिजाय ॥ ६२ ॥

धर्माधर्मौ मनुर्जल्पन्नशक्यार्जनवर्जनौ । व्या-
जान्मण्डलदण्डाभ्यां श्रद्धधाति मुधा बुधैः ॥ ६३ ॥

स्मृतिप्रामाण्यमपि दूषयति । धर्मेति । बहुधनव्ययायाससाध्य-
त्वाच्छीतभयाद्यायत्तानाद्यशक्यत्वम् अग्नौ परवासन्तापनादिरूपत-
या तथदिन्द्रियवर्गस्य परिहर्तुमशक्यत्वात् सुखानुभवमूलत्वाच्च क्र-
मेणाशक्य अर्जन वर्जन च ययोस्तौ धर्माधर्मौ बुद्धिपूर्वं जल्पन्
बहुधा प्रतिपादयन् मन्वन्तराधिपतिरादिराजो मनुर्मेस्यस्मृतिकर्ता
ब्रह्मपुत्र स्वायम्भुवो व्याजाद्धर्माधर्मोपदेशकस्मृतिग्रथनमिषेण
विधिनिषेधातिक्रमनिमित्तप्रायश्चित्तद्वारा मण्डलस्य राष्ट्रस्य लोकस्याप-
राध निमित्तीकृत्य दण्ड यद्द्रव्यमभिलाषुको यतस्तस्तं बुधैः पण्डित-
म्मन्यैः मुधा वृथैव श्रद्दधाति आदृत । अधर्माचरणं सुकरमित्यधर्म-
भेव सर्वे करोति । तत्र यत्न कनाप्युपायेन अथ ग्रहणोपाय एव द-
ण्ड मनुनाभिहितो न धर्म इत्यर्थः । बुधैरिति वा । मनुवचनमूल-
त्वात् । स्मृतिमात्रस्याप्रामाण्यमुक्तम् ॥ ६३ ॥

व्यासस्यैव गिरा तस्मिन् श्रद्धेयत्वा स्य ताग्नि

काः । मत्स्यस्याप्युपदेश्यान् वः को मत्स्यानपि भाषताम् ॥ ६४ ॥

पुराणप्रामाण्यं दूषयति । व्यासस्येति । दासदारिकाव्यभिचारजातस्य भ्रातृजायाया पुत्रोत्पादनशीलस्य व्यासस्यैव कवित्वरूपया गिरा तस्मिन् धर्मे परलोके व्यास एव या श्रद्धा भावना आस्तिक्यबुद्धिरित्येतत् तस्माद्धेतोरद्धा निश्चित यूय तान्त्रिका युक्तिज्ञा वाक्यविचारचतुराः स्थ भवथ । विरुद्धलक्षणया स्वयंविगीतेन व्यासेन प्रतिपादिते धर्मे परलोके तस्मिन् वा येषामास्तिक्यबुद्धिस्ते यूयं मुग्धतमा इति भावः । अथ च तान्त्रिकाः कुविन्दतुल्या मूर्खा इत्यर्थः । व्यासस्येत्यंकवचनेनैकवचनेन विगीतत्वं सूचितं । मूलापरिशुद्ध्या भारतादीनां पुराणानाञ्चोपहासः कृतः । मत्स्यपुराणं तु मत्स्यरूपधारिणा विष्णुना मनवे प्रोक्तमिति पृथगुपहसति । मत्स्यस्योपदेश्यान् वो युष्मान् मनुप्रभृतीन् को भाषतां युष्माभिः सह संवादं कः करोतु । परं तावत् मत्स्यानपि को भाषतां । मत्स्या अपि संवादार्हा न भवन्ति तदुपदेशविनस्तच्छिष्या भवन्तस्तु दूरे इति । को भाषतां युष्मान् मन्वादीन् मत्स्यान् को वदतु अपि तु न कोऽपि । यतो मत्स्यस्योपदेश्यान् जलस्थचारिभ्यो ये हीना मत्स्यशिष्यास्तन्निर्देशकारिणः ततश्चोपदेशकापेक्षयोपदेश्यस्य हीनत्वान्मत्स्यशब्देनापि नाभिधेया इति भावः । एवं कूर्मपुराणादीनामुपहासः । अथ च मनुमत्स्यसम्बन्धित्वेन सर्वेऽपि मानवशब्दवाच्या यथा तथा मत्स्यसम्बन्धिना मात्स्यशब्दाभिधेयत्वं युक्तं न तु मत्स्यशब्दाभिधेयत्वमिति को मत्स्यानपि भाषतामिति युक्तमुक्तमिति ध्वन्यते च । तान्त्रिका इति तन्त्रमधीयते वेद वेत्यर्थे वसन्तादित्वात् (पा०४।२।६३) ठक् । मत्स्यस्येति । कृत्यानामिति ( पा०२।३।७१ ) कर्तरि षष्ठी ॥ ६४ ॥

पण्डितः पाण्डवानां न व्यासश्चाटुपटुः कविः ॥
निनिन्द तेषु निन्द्यत्सु स्तुवत्सु स्तुतवान्न किम् ॥ ६५ ॥

पूर्वोक्तमेव व्यासस्याप्रमाणत्वं श्लोकद्वयेनाह । पण्डित इति । पण्डिता बुद्धिमानत एव कविरौपमेतिकसार्थस्य वर्णकः तथा पाण्डवानां युधिष्ठिरादीनां चाटुनि प्रियवचने पटुः एवम्भूत स भवद्भिराप्तत्वेनाङ्गीकृतो व्यासस्तेषु दुर्योधनादीन् निन्दत्सु न निनिन्द किं ? तथा तेषु श्रीकृष्णादीन् स्तुवत्सु सत्सु न स्तुतवान् किं ? तेषु निन्दत्सु स्वयमपि निनिन्द तेषु स्तुवत्सु स्वयमपि तुष्टावेति । पूर्वविशेषणयुक्तस्यापि व्यासस्य पराधीनत्वात् तत्प्रणीत भारताद्यप्रमाणमेवेति भाव । अन्योऽपि पण्डितः प्रभुचित्तानुगुणमेव व्यवहरति तद्वद्यमपीत्यर्थः ॥ ६५ ॥

न ज्ञातुं किल देव्या स व्यास कामान् समासृजत् ।
दासीरतस्तदासीद्यन्मात्रा तत्राप्यदेशि किम् ॥ ६६ ॥

नेति । स भवदीयो व्यासः ज्ञातुमपवित्रत्वाद्देव्या सहित्या कामात् स्मरपरवशत्वादनुरागात् समासृजत व्यवहरति स्म ? किलेति उपहास श्रुतौ च । अस्मद्बुद्ध्या तावत् कामादेव सङ्गतः । पौराणिकास्तु देवराः सुतोत्पत्तेर्धर्मत्वात्तया सुतोत्पादनार्थं मात्राज्ञप्तस्तथा सक्त इति वदन्ति । तस्मात्तथा तयाऽस्तिवय । तदा पुत्रोत्पादनापलक्षिते काल दासया रत आसादिति यत प्रसिद्ध तत्र दासीरतेऽपि मात्रा सत्यवत्याऽदेशि आदिष्ट किं । कथयतेति प्रश्न । काकुरुपहासार्थं । अपि तु तत्र तावन्नादिष्ट । तस्मादुभयत्रापि स्मरपरवशत्वादेव प्रवृत्त । एवंविधस्यानाप्तत्वात तद्वचनमप्रमाणमिति भाव । समासृजत । दशमञ्जेति (पा-६।४।२५) नलोप ॥ ६६ ॥

देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ । गा
नतैः किं न तैर्व्यक्त ततोऽप्याऽस्माऽधरीकृत: ॥ ६७ ॥

इदानीं देवद्विजगोभजनं दूषयति । देवैरिति । देवैर्ब्रह्मादिभि द्विजैर्याज्ञवल्क्यादिभिश्च कृता ग्रन्था पुराणानि स्मृतयश्च त एव येषां भवादृशानां वैदिकानां तदादृतौ तेषां देवानां द्विजानाञ्चादृतौ आदरे विषये पन्था । देवा ब्राह्मणाश्चावश्य भजनीया इत्युपदेशपरा

प्रमाणमिति यावत् । स्वपूजार्थमेव तैर्ग्रन्था निर्मिता । तद्वचनग्रन्थप्रामाण्यात् देवादीनाद्रियन्त एवम्भूता मूर्खा ये तैर्धूर्त्ताभिस्तद्ग्रन्थप्रामाण्याद् देव गाः पशुरूपा सुरभि गते मद्भिस्तत्र पशोर्गौरपि सकाशात् आत्मा स्वरूप व्यक्तं स्पष्टं नाधरीकृत. किन्त्वसौऽथ च हीनो न कृत किन्त्वपि तु कृत एव । नमस्कार्यापेक्षया नमस्कर्तुर्हीनत्वात् पशोरपि सकाशाद्भवन्तो मूर्खतमा इत्यर्थ । व्यक्तं मन्ये इति यावदिति वा । स्वार्थपरवचनस्याप्रामाण्यत्वाद्देवब्राह्मणसुरनिवन्दनं निर्मूलत्वात्त्याज्यमेवेति भावः । दवैर्द्विजैः कृता ये ग्रन्था येषां वः पन्था प्रमाणं तैर्वञ्चितास्थ एव तेषां देवादीनां या ग्रन्थादीनां वा आदरणिमित्त गा मते ततोऽप्याधमेति पूर्ववत् ॥ ६७ ॥

साधु कामुकतामुक्ता शान्तस्वान्तैर्मखोन्मुखैः ।
सारङ्गलोचनासारां दिवं प्रेत्यापि लिप्सुभिः ॥६८॥

इदानीं परलोकमङ्गीकृत्यापि यज्वना ब्रह्मचर्यादि परिहसति । साध्विति । शान्तविषयभोगपराङ्मुखं स्वान्तं चित्तं येषां तैर्मखोन्मुखैर्दीक्षितैरपि यज्ञेषु मोत्साह प्रवृत्तैर्योऽसौ कामुकता सम्भोगलोभिता यदमुक्ता न त्यक्ता तत् साधु युक्तं । यद्वा साध्वी सुखकारिणी सा चासौ कामुकता सा न मुक्ता । शान्तस्वान्तैर्यज्वभि कामुकता साधु मुक्ता त्यक्ता । साध्विति काक्वा विरुद्धलक्षणया नैव मुक्ता किन्तु सम्भोगैकनिष्ठा एव ते इति व्याख्येय । मुक्तत्वाभावेऽपि हेतुगर्भविशेषणमाह । किम्भूतैः सारङ्गलोचनाभि सुन्दरीभि सारा श्रेष्ठा तां दिव. सारा श्रेष्ठा पदार्था यस्या तादृशीं या दिव प्रेत्यापि मृत्वापि लिप्सुभि रम्भादिकाम्यर्थेव बहुधनव्ययायासमसाध्यान् यज्ञानेव कुर्वन्ति । तैः कामुकता नैव त्यक्ता । अन्यथा तु यावज्जीवमेव कामुकस्य यज्वना न मरणानन्तरमपीति प्रेत्यापीत्यनेन सूचित । तस्मात् दीक्षासमयेऽपि ब्रह्मचर्याङ्गीकरणेनाऽऽत्मा न वञ्चनीय इति भाव , दिव । न लोकेति (पा०२।३।६९।) षष्ठी ॥ ६८ ॥

श्रमः क्रियतां प्राज्ञाः प्रियाप्रीतौ परिश्रमः ।
भस्मीभूतस्य भूतस्य पुनरागमनभ्रमः ॥ ६९ ॥

–एतदेवोपजीव्याह । क इति । हे प्राज्ञाः प्रकर्षेणाज्ञा भोमूर्खाः तस्माच्छ्रमः शान्तिः क अपि तु नक्वाऽपि । शमाङ्गीकारेण परलोकसाधनेऽपि काम्यमानकमनीयकामिनीसम्भोगफलत्वाद्द्रूपस्यैव शान्तिस्तस्मान्न कार्येत्यर्थः । तर्हि किं कार्यमित्यत आह । प्रियायास्तरुणरमणीपरमयाः प्रीतौ प्रेम्णि सर्वाः सुखोत्पादने विषये परिश्रमो भूयान् प्रयासः क्रियतां कर्तव्यः । शान्तिः का अपि तु नकापि । यां प्राप्ता बुद्धिमन्तस्तारतम्यविचारचतुराः प्रियाप्रीतौ प्रयास कार्यः । सदा सुखहेतुत्वादिति वा । परलोकगमने लोकान्तरे निरयादि भविष्यतीत्याशङ्क्याह भस्मीभूतस्य मृतस्य देहस्य भूतस्य जातस्य देहिनो वा पुनरागमनं लोकान्तरे क्रियादिदेहप्राप्तिरिति यद्भ्रम., परलोकस्यैवाप्रामाण्यात्, तत्सद्भावेऽपि च देहस्यैवात्मत्वात्तस्य च भस्मीभूतत्वात् कस्य नरकादि भुज्यते । तस्माद्यावज्जीव यथेच्छ सुखं भोक्तव्यमिति भावः । प्रियाप्राप्ताविति च पाठः ॥ ६९ ॥

उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मतं ॥ अपवर्गे तृतीयेति भणतः पाणिनेरपि ॥ ७० ॥

मोक्षाधिकाराभावात् ब्रह्मचर्यादिपरित्यागेन काम एव सेवनीय इति शब्दछलेन वृद्धसम्मत्या स्वीयं मतं द्रढयति । उभयीति । अपवर्गे तृतीयेति भणतः पाणिनेरपि मुनेः उभयी प्रकृतिः स्त्रीपुंसलक्षणा द्वयी व्यक्तिः कामलक्षणे पुरुषार्थे मैथुने धर्मे सज्जेत् आसक्ता भवेदिति सम्मतं करणाभिप्रायो लक्ष्यत इति शेषः । अयमाशयः । अपवर्गे तृतीयेति वदतः पाणिनेः मैथुनधर्मे व्यक्तिद्वयं न पुनः एकेन तीर्थयात्रा ब्रह्मचर्यादिद्वारा मोक्षे प्रयतितव्यं स्त्रीपुंसलक्षणा व्यक्तिर्मैथुने शक्तत्वात् कामभोगे अधिकारिणी न तु तीर्थयात्रादिद्वारा मोक्ष इति । तस्मात् कामस्यैव कार्यमित्यर्थः । न केवलमस्मदाचार्यस्यैव सम्मतं किन्तु भगवतो पाणिनेरपीत्ययमेवार्थः । अथ चैव वदतः पाणिनेरप्ययमाशयः । धर्मार्थलक्षणा द्वयी व्यक्तिः, अथ च पूर्वं प्रयोज्यत्वात् प्रकृतिः कामे सम्बद्धा भवेत् । धर्मार्थकाममोक्षाः स्युरित्यादौ कामाव्यवहितपूर्वत्वेन तस्या उक्तत्वात् । तृतीया तु कामलक्षणा व्यक्तिरथ च पूर्वं प्रयो-

त्यप्रकृतिरपवर्गे सम्यङ्महां । अपवर्गादिव्यवस्थितपूर्वत्वेन तस्या वक्तव्यत्वात् । तस्मादपवर्गे निमित्ते कामाख्या तृतीयैव व्यक्तियुक्ता इत्युक्तत्वात् । मोक्षं प्रति कामस्यैव हेतुत्वात् प्राप्तिरेव सुतरां कार्येति भाव । अपवर्गे फलप्राप्तिरिति सूत्रार्थं शब्दछलेन अन्यथात्प्रेक्ष्य यद्गन्तमिति न्यायमतसमर्थनार्थं दर्शिता । तृतीया प्रकृति षण्ढइत्यमर । उभयोरत्यन्त स्थानित्वात्सयप्रहणात् डाप् । सर्जोत् । अर्शार्थे लिङ् ७०॥

त्रिस्रोत्युपरि यानाय जना जनितमज्जना. ॥ विग्रहायाग्रन पश्चादगत्वरीरभ्रविभ्रम ॥ ७१ ॥

गङ्गास्नायिनो द्रूयति । उपरियानाय स्वर्गं गन्तु । ध्य चोर्द्ध्वं देश गन्तु जनितमज्जना कृतगङ्गास्नाना, अथ च कृताधोगमना जना अग्रतो युद्धाय पश्चात्त्वर पश्चाद्गमनशील तरक्षा मेषदास्य विभ्रम मादृश्य विभ्रति धारयन्ति । मज्जनाद्दूर्ध्वंगमन विरुद्धमिति विपरीताचारित्वान्मेषत्रमृत्वा एवेति गङ्गास्नानेन स्वर्गो भवति इति व्याप्तिरेवेति भाव । विग्रहस्येति पाठे उपरि यानाय कृतगङ्गास्नाना स्वर्गं गच्छतो मेषस्य त्वासि मादृश्य धारयन्ति । ग्रीवबाधया नीचग्रीवतया गमनात् शरीरस्याग्रत शिरोदेशे पश्चात कटिदेश च हस्तयोर्धारणात कृतगङ्गास्नानानां गङ्गास्नानसमयेऽपि मेषतुल्यत्व । यथा जलमध्येऽवगाहमान हस्तिपकरेण मायाानायमान पश्चस्थितबाहुर्भवति,तदा नीचग्रीवतया तरक्षमादृश्य पश्चात्स्थितहस्तस्य च पुच्छसादृश्यमिति मेषतुल्यास्ते जना । ऊर्ध्वगतिगमनयोर्नैर्भास्य विरुद्धस्य करणादुपहास इति व्याख्येय । यानाय विग्रहायेति । तुमर्थेति (पा०२।३।१५) चतुर्थी ॥७१॥

एनसानेन तिर्यक् स्यादित्यादि. का विभीषिका । राजिलोऽपि हि राजत्र स्वैः सुखी सुख हंतुमि ७२ ।

परलोकमङ्गायेऽपि देहान्तरप्राप्तावपि च न किञ्चिदनिष्टमित्याह । एनमेति । अनेन लोके क्रियमाणेन ब्रह्महत्यादोनसा पातकेन तिर्यक् क्रिमिपक्ष्यादिः स्याद्भवेद् इत्यादिरित्येवम्प्रकारा का विभीषि

का भयोपदर्शनं किं? अपि त्वनिष्टहेतुत्वाभावान्न किञ्चिदेतत् हि यस्मा-द्राजिलोऽपि हीनः सर्पविशेषो जलव्यालोऽपि स्वे स्वीये सुखहेतु-भिर्भेकभक्षणजलविहारसजातीयतरुणीसम्भोगादिभिः सुखकारणै रा-जेव सुखी । स्वजात्यनुगुणाहारविहारसम्भोगादीनि विचित्राण्येव सर्वेषां सुखसाधनानि । ततः स्वपापफलभूते तिर्यग्योनित्वे जातेऽपि सुखसद्भावान्न किञ्चिदनिष्टमित्यर्थः । समौ राजिलडुण्डुभावित्यमरः । विभीषिका धात्वर्थनिर्देशे ण्वुलतृचाविति (पा०३।१।१३३) ण्वुलि भियो हेतुभये षुगिति (पा०७।३।४०) षुगागमे प्रत्ययस्थादित् । (पा०७।३।४४) इतीत्वम् ॥ ७२ ॥

हताश्चेद्दिवि दीव्यन्ति दैत्या दैत्यारिणा रणे । त
त्रापि तेन युद्ध्यन्तो हता अपि तथैव ते ॥ ७३ ॥

युद्धे हतानां स्वर्गप्राप्तिरित्यादि भारतवचनं दूषयति । हता इति । सङ्ग्रामे हताः सम्मुखं पतिता दिवि दीव्यन्ति क्रीडन्ति इति चेद्यदि तर्हि दैत्यारिणा विष्णुना रणे हताः हिरण्यकशिपुप्रभृतयो दैत्यास्तत्रापि स्वर्गेऽपि तेन सह युध्यन्तो युद्धं कुर्वन्तु । यस्माद्धता मारिता अपि दैत्या भवदीयमते तथैव रणे सम्मुखपतनात् स्वर्गे जीवन्त एव । ततश्च यं यं वापि स्मरन् भावमित्यादिवचनप्रामाण्यात् मरणसमयेऽपि दैत्यैर्दैत्यारिणा सह विरोधस्य चित्ते धृतत्वात् स्वर्गप्राप्तावप्यसुरत्वाद्यस्य तथैव वर्तमानत्वात् तत्रापि तेन सह योद्धव्यमेव । तत्रापि युध्यन्त एवेति कुत्रचित् पुराणादौ नाकर्ण्यते । तस्माद्रणे पतितानां मरणादधिकं किञ्चिदपि नास्ति । रणादपलायनात् स्वर्ग इत्यादि क्षात्रधर्मप्रतिपादकवाक्यजातमप्रमाणमेवेति भावः । हता अपीत्यत्र हेतौ अपीति पदेन हतौ हिंसायां कृतायामपि मरणे प्राप्तेऽपि । अन्यत् पूर्ववत् । हतावपीति वा पाठः ॥ ७३ ॥

स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलं ॥ इति
स्वोच्छित्तिमुक्त्युक्तिर्वैदग्धी वेदवादिनाम् ॥७४॥

इदानीं मायावेदान्तसिद्धान्तं दूषयति । स्वमिति । संसारे संसरणे

वसरे स्व जीवात्मरूपः प्रपञ्चः तथा अनाद्यविद्याविलासवासनाविद्यमानभेदं ब्रह्म चेति द्वयमप्यस्ति । तौ समप्राधान्यबोधनार्थौ । मुक्तौ तु मोक्षे सञ्जाते पुनराविद्यकजीवव्यवहारनिवृत्तेः केवल स्वप्रपञ्चरहितं ब्रह्मैव वर्त्तते । घटोपाधिनिवृत्तेर्घटाकाशनिवृत्ताकाशमात्रस्यावस्थानवत् संसारोपाधिनिवृत्तेः स्वनिवृत्तौ एकमेवाद्वितीयं ब्रह्मेति ब्रह्मात्मना सम्पत्तिर्भवतीत्यर्थः । तथापि प्रपञ्चस्य शुक्तिरजतवन्मिथ्यादृश्यत्वादित्येव स्वस्योच्छित्तिरेव मुक्तिस्तस्या उक्तिर्वचन तत्र वैदग्धी नानारूपोक्तिनिरूपणकौशलं वेदवादिनां वेदान्तमतानुसारिणा आत्मार्थ सर्वं तस्योच्छेदः प्रतिपादित इति महत् कौशलमिति मायावेदान्तमतोपहासः । वेदवादिनामित्यनेन च्छान्दसास्ते किञ्चिदपि न जानन्तीति सूचितम् । अपि च संसारे द्वय मुक्तौ त्वेक, ततश्च द्वयं परित्यज्यात्मोच्छेदपुर सरमेकं मूर्खादन्यः कोऽपि नेहते । तस्मान्मूर्खा एव त इति भाव. । वेदयेदिनामिति च पाठ । वेदवेदितेति पाठे स्वोच्छित्तिमुक्त्युक्तौ वैदग्धीरूपा वेदार्थज्ञाततत्रा आत्मविनाशो मुक्तिर्वेदार्थपरिज्ञानं नामेत्युपहास· ॥ ७४ ॥

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेत्यैव यथा वित्थ तथैव सः ॥ ७५ ॥

न्यायवैशेषिकसिद्धान्ताभिमतां मुक्तिं दूषयति । मुक्तय इति । यः सचेतसा चैतन्यवतां सुखदुःखाद्यनुभवाभावात् शिलात्वाय पाषाणावस्थारूपायै मुक्तये मुक्तिं प्रतिपादयितुं शास्त्रमूचे न्यायदर्शनं निर्ममे तदत्यन्तविमोक्षोऽपवर्ग इत्यनेन सकलविशेषगुणोच्छेदनाम् मुक्तिरिति मुक्तस्य शिलातुल्यत्व प्रत्यपादयत् यूयं त स्वयमेवावेत्य विचार्यैव गोतम एतन्नामानं मुनिं यथा वित्थ जानीथ स तथ तथा गान्य इत्यर्थः. । स गोतम इति यथा युष्माकं सम्मतस्तथा ममापीत्यर्थः । वैशेषिकास्तु तदीयमतानुसारिण इति भावः । अथवा नाय परं नाम्ना गोतम. किन्तु प्रकृष्टो गौर्गोतम. पशुरेव । सचेतसां शिलाप्रसुक्तिप्रतिपादनादित्यर्थोऽपि गोतम एवेति भावः । आत्यन्तिकी दु एनिवृत्तिर्मोक्षः इति मुमुक्षपि दु-खानुषक्तित्वाद्धेयमिति वदता, सर्वा

र यावसन्तं प्रियाप्रिये न स्पृशत इति च तत्र प्रमाणमुदाहरतां वैशेषिकाणामपीयमेव युक्तिः सम्मतेति न्यायवैशेषिकसिद्धान्तोपहासो ऽनेन कृत इति ॥ ७५ ॥

दारा हरिहरादीनां तन्मग्नमनसो भृशम् । किं न मुक्ताः पुनः सन्ति कारागारे मनोमुवः ॥ ७६ ॥

हरिहरादिध्यानान्मुक्तिरिति वचनानि दूषयति । दारा इति । हरिहरादीनां लक्ष्म्याद्या दाराः स्त्रियो भृशं निरन्तरं तेष्वेव मग्नं ध्याननिश्चलं मनो यासां एवंविधा अपि किं कस्माद्धेतोर्मनोभुवः कारागारे सन्ति? सदैव कामपरवशा स्तिष्ठन्तीत्यर्थः । तस्मान्न पुनर्मुक्ता इति एतेन

सकृदुच्चरितं येन शिव इत्यक्षरद्वयम् तथा
सर्व्वार्पितमनोबुद्धिः स नामेति पाण्डव ॥

इत्यादिवचनैरीश्वरादिध्यानमात्रं मोक्षकारणमिति प्रतिपादयतः शैवादिशास्त्रस्य मुक्त्यभावेन व्यभिचारित्वादप्रामाण्यम् ॥ ७६ ॥

देवश्चेदस्ति सर्वज्ञः करुणाभागवन्ध्यवाक् । तत्किं वाग्व्ययमात्रान्नः कृतार्थयति नार्थिनः ॥ ७७ ॥

ईश्वरवादिनो नैयायिकादीन् दूषयति । देव इति । भूम्यादि सकर्तृकं कार्यत्वाद् घटादिवदित्यादिना विचित्रस्य कार्य्यजातस्यास्मदादिविलक्षणेन कर्त्रा भवितव्यमिति सर्वस्य परमकारुणिकस्य सत्यवचनस्य सर्वकर्तुः परमेश्वरस्य साधितत्वात् सर्वज्ञः कालत्रयवस्तुविज्ञानवान् तथा करुणाभाक् कृपावान् तथा अवन्ध्या सत्या वेदरूपा वाक् यस्य, नैयायिकादिमते ईश्वरप्रणीतत्वादाप्तवचनत्वाद्वेदानां प्रामाण्यात् स्वतः प्रामाण्यस्य दूषितत्वादित्यर्थः । अथ च सफला यथोक्तार्थभाविका वाग् यस्य स सत्यवाक् । भवत्सिद्धान्तेन देवश्चेदस्ति तर्हि अर्थिनो भुक्तिमुक्त्याद्यभिलाषिणो नो ऽस्मान्, भवन्तु अप्रमनोरथा भवन्त्विति वाग्व्ययमात्राद् वाग्विसर्गमात्ररूपेण व्ययेन किं कस्मान्न कृतार्थयति । तस्मान्नास्तीति भावः । अनेनाप्युपहासः सूचितः ॥ ७७ ॥

भविता भावयन् दुःखं स्वकर्म्मजमपीश्वरः ।
स्यादकारणवैरी नः कारणाद्वैरिणोऽपरे ॥ ७८ ॥

इदानीं कर्म्ममीमांसकमतावलम्बिना योग्यापालम्भनमाह । भवितेति । भविता संसारिणा स्वकर्म्मजं स्वकृतपापजातं पापफलभूतं दुःखं भावयन् कुर्वन्, स्वयं जनयदपि भावयन् पुनः स्वयं प्रदर्शयन् ईश्वरो नोऽस्माकमकारणवैरी दयालुत्वादिहेतुं विनैव शत्रुः स्यात् । अपरेऽन्ये परेऽन्ये पुनः कारणाद्वैरलेशाद्यपहारयन्तु यथादेव वैरहता वैरकारिणो भवन्ति । भविता न इति वा सम्बन्धः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा । कर्म्मफलदातेश्वरश्चेत् कर्म्मानुगुणं फलं भवेत् तर्हि ईश्वरेण कर्त्तव्यं न किञ्चिदस्ति । तादृशात् कर्म्मण एव दुःखोत्पत्तिः । एवमपि स चेदनुभावयति तर्ह्यस्मदादीनां द्वेष एव तेन कृतः स्यात् । तस्मात्तस्य दयालुत्वादयो गुणा गताः । तस्मात् कर्म्मण एव प्राधान्यादीश्वरो नास्त्येवेति भावः । पञ्चमी भयेन (पा० २।१।३७) इत्यत्र पञ्चमीति योगविभागात् कारणाद्वैरीति समासं कृत्वा पश्चान्नञ्समासः ॥ ७८ ॥

तर्कप्रतिष्ठया साम्यादन्योन्यस्य व्यतिघ्नताम् ।
नाप्रामाण्यं मतानां स्यात् केषां सत्प्रतिपक्षवत् ॥ ७९ ॥

अन्यदप्याह । तर्केति । प्रमाणानुग्राहकयुक्तिसमूहरूपस्य तर्कस्य प्रतिष्ठा तया पर्यवसानेन कृत्वा यत् साम्यं तुल्यत्वं तस्मात् तुल्यत्वाद्धेतोः सुन्दोपसुन्दन्यायेन विनिमयेन अन्योऽन्यं परस्परं व्यतिघ्नतां दूषयतां केषां मतानां प्रमाणत्वेन समानानामनुमानादीनां अथ च मत्याः सत्येव रम्यमाणात्म्यमश्वरस्याभीश्वरत्यादि प्रतिपादयतां दर्शनानामप्रामाण्यं न स्यादपि तु सर्वेषामपि तुल्यबलत्वेन परस्परविरोधादप्रामाण्यमेव स्यात् । किंवत् सत्प्रतिपक्षौ विरुद्धसाध्यसाधकौ हेतू यस्य तदनुमानं सत्प्रतिपक्षं तद्वत् । तस्येवाप्रामाण्यं स्यादिति सम्बन्धः । वैशेषिकादयो यथा एतत्कृतकत्वाद्घटवदनित्यः शब्द इति वदन्ति । मीमांसका नित्य-

यवत्वादात्मवन्नित्यं शब्दं वदन्ति । तत्रान्तरेण पूर्वप्रदर्शिते दोषविशेषे पूर्वस्य यथा ऽप्रामाण्यं तथेत्यर्थः । सत्प्रतिपक्षानुमाने यथा ऽप्रामाण्यं द्वयोरप्यन्यर्थं, समस्यर्थं बलिः, तर्कणे निश्चीयतेऽर्थो यैस्ते तर्का अनुमानानि तथाप्रतिष्ठया समबलद्वितीयसद्भावेनानिश्चितस्वरूपमित्यर्थ इति च व्याख्येयम् । गगनं नित्यममूर्तं द्रव्यत्वादात्मवत् । गगनमनित्यमस्मदादिबाह्येन्द्रियग्राह्यगुणाधारभूतत्वाद्घटवदिति इति सत्प्रतिपक्षानुमानयोरिवेत्यर्थः ॥ ७९ ॥

अक्रोधं शिक्षयन्त्यन्यैः क्रोधना ये तपोधनाः ॥
निर्धनास्ते धनायैव धातुवादोपदेशिनः ॥ ८० ॥

अन्यच्चाह । अक्रोधमिति । क्रोधना अकारणरोषवशाः ये तपोधनास्तप एव सर्वस्वं दुर्वासःप्रभृतयः ये ते क्रोधो बहुनर्थकारित्वात् सर्वथा त्याज्य इति अक्रोधं क्रोधाभावमन्यैः प्रयोज्यैः शिक्षयन्ति अन्यं क्रोधाभावं शिक्षन्ते तान् क्रोधो न कार्य्य इति प्रयोजयन्ति उपदिशन्तीति यावत् । स्वयन्तु क्रुद्धा यत् किञ्चिदाचरन्ति अन्यांस्त्वेवमुपदिशन्तीत्युपहासः । तथा ये ऽतिनिर्धनास्ते धनायैव स्वस्य धनप्राप्त्यर्थमेव लोहादिधातुना सम्बन्धिनवादं स्पृष्ट्वा यत्र अन्यान्यरिपुमित्राभावहानेन धातूनां संयोगात् स्वर्णरूप्यादि मया कर्तुं शक्यते मदुपदेशात् त्वमपि कुरु इत्येवं रूपं धातुवादं उपदिशन्तीत्येव शीला भवन्ति । परन्तु स्वस्मै किञ्चित्तन्न दानव्यं इत्येव परमतारणावुक्तौ च न तु तत्त्वतः । यत स्वयं निर्धना इति हेतुः । तादृक्सामर्थ्यसद्भावे तेषामधनत्वं न युज्यते । ततश्च स्वयमतीर्णः स कथं परांस्तारयतीति । अनेन धातुवादिनामप्युपहासः । अन्यैः प्रयोज्यकर्तुरनभिहितत्वात् कर्तरि तृतीया । क्रोधनाः । क्रुधमण्डार्थेभ्यश्चेति ( पा०३।२।१५१) युच् ॥ ८० ॥

किं वित्तं दत्थ तुष्टेयमदातरि हरिप्रिया । दत्त्वा
सर्वं धनं मुग्धा बन्धनं लब्धवान् बलिः ॥ ८१ ॥

इदानीं दानधर्मं दूषयति । किमिति । भो जना यूयं वित्तं स्वर्णादि यज्ञादौ दक्षिणात्वेन पात्रेभ्यः किमिति दत्थ अपि तु कस्मैचिदपि न

देय यस्मादियं हरिप्रिया विष्णोः प्रेयसी सम्पद्रूपा लक्ष्मीः अदातरि अकृतदानोपभोगे कृपणे तुष्टा प्रीतिं प्राप्नोति तत्रैव वसतीत्यर्थः । दानेवाधकमाह । यस्मान्मुग्धा मूर्खा दानव्यसनपरा तथोदर्कविचारशून्या स्मृतिपुराणादौ श्रद्धायां बलिः सर्व्वं धनं श्रीवामनाय दत्त्वा बन्धनं लब्धवान्, वाक्पाशेन बद्धः सन् पातालप्रवेशरूपं बन्धनं प्राप्तवान् इति पुराणकथा । दानं कर्त्तव्यमित्यत्र स्मृत्यादिकमेव प्रमाणं बलिप्रभृतीनां दानमशुभोदर्कं जातमित्यत्रापि तदेव प्रमाणं । तथा च कर्तृद्रव्यपात्रशुद्ध्यादियुक्तेऽपि दानविधौ सति विरुद्धफलदर्शनाददातरि च लक्ष्म्याः स्थैर्यदर्शनादन्वयव्यतिरेकाभ्यां दानधर्म्मः सर्व्वथा त्याज्य एवेत्युक्तमिति भावः । हरिप्रियेत्यनेन श्रीहरिणापि याचकत्वाङ्गीकारात् लक्ष्मीप्रीत्यर्थमदातृत्वमेवाङ्गीकृतमिति च सूचितं ॥ ८१ ॥

दोग्धा द्रोग्धा च सर्व्वोऽयं धनिनश्चेतसा जनः ।
विसृज्य लोभसङ्क्षोभमेकद्वा यद्युदासते ॥ ८२ ॥

पात्राभावाद्दानं न कर्त्तव्यमित्याह । दोग्धेति । अयं प्रत्यक्षदृश्यमानोऽयं सर्व्वोऽपि जनो धनिनः आढ्यान् नरान् दोग्धा दोहनशीलः स्वाभिमतदानादिविध्युपदेशादिना येन केनाप्युपायेन धनिकेभ्यो धनमाकर्षतीत्यर्थः । तथा द्रोग्धा मनसा तद्विषये द्रोहकरणशीलश्च कथं केन हन्यामेतस्य धनादि च कथं गृह्णीयामित्यादिप्रकारेण तद्विषये द्रोहमेव चिन्तयतीत्यर्थः । सर्व्वोऽप्ययमिति कथमुच्यते इत्यत आह । लोभसङ्क्षोभं द्रव्याद्यभिलाषजनितं मनसो नितरां क्षोभं कर्म्म दयापारवश्यजनितविकारं अभिलाषातिरेकं वा विसृज्य यद्युदासते उदासीना भवन्ति परस्वाकर्षणादुपरता भवन्ति तर्ह्येकौ द्वौ वा न तु तृतीयस्तादृशस्त्यजनीयास्तस्माद्दुर्लभमेवोक्तमित्यर्थः । तस्मात् परप्रतारणप्रयोजनक एव दानार्थं धर्माद्युपदेश इति भावः । परप्रतारकत्वात् पात्रस्याभावाद्दानं कस्मैचिदपि न कर्त्तव्यमित्यर्थः । विषह्येति पाठे लोभातिरेकं बलात्तिरस्कृत्येत्यर्थः । दोग्धा, द्रोग्धा ताच्छील्ये तृन् । तद्योगे न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद्धनिन इति द्वितीया । एको द्वौ वा एकद्वाः । सङ्ख्याव्ययेत्यादिना (पा०२।२।२५) समासे एते बहुव्रीहौ,

मङ्कय इति (पा०५।४।७३) इच् समासान्तः ॥ ८२ ॥

दैन्यस्यायुष्यमस्तैन्यमभक्ष्यं क्वास्ति वञ्चना । स्वा
च्छन्द्यमृच्छतानन्दकन्दलीकन्दमेककम् ॥ ८३ ॥

इदानीं विधिनिषेधजातं दूषयन्नुपसंहरति । दैन्येति । अस्तैन्यं चौर्याभावो दैन्यस्य निर्धनत्वस्यायुष्यं वर्द्धकमित्यर्थः । चौर्यं यावन्न क्रियते तावद्दैन्यं नापयाति तस्मात्तत् कर्तव्यमेवेति भावः । तथा अभक्ष्यं लशुनगृञ्जनग्राम्यशूकरादि, तद्भक्षणमिति यावत् तत्कुक्षिवञ्चना, स्वोदरविप्रलम्भनमेव । स्वादूत्तममभक्ष्यमिति परित्यागे जठरवञ्चनैव भवति न तु मधर्मं । तस्मात् किं बहुना आनन्दस्य सकलसुखस्य या कन्दली प्ररोहः कन्दं मूलभूतमेककमसहायं केवलं स्वाच्छन्द्यं स्वेच्छाचारित्वं ऋच्छत आश्रयत । श्रौतस्मार्तसकलविधिनिषेधान् परित्यज्य सर्वं दुःखहेतुत्वेन स्वेच्छाचारमेव कुरुतेत्युपदेशानस्मत्समाकर्णयतेति शेषः । आयुष्य । तस्मै हितमिति (पा०५।१।५) यत् । अस्तैन्य । स्तेनशब्दात् स्तेनाद्यन्नलोपश्चेत्यत्र (पा०५।१।१२५) स्तेनादिति योगविभागात् यति, अर्थाभावेऽव्ययीभावः । एवमभक्ष्यमित्यत्रापि । विन्दतीति वा । विद्लृ लाभे लाट् ॥ ८३ ॥

इत्थमाकर्ण्य दुर्वर्णं शक्रः सक्रोधतां दधे । ऊचे च
उच्चैः कस्कोऽयं धर्ममर्माणि कृन्तति ॥ ८४ ॥

इत्थमिति । शक्रः इत्थं पूर्वोक्तं दुर्वर्णं वेदादिदूषकचार्वाकस्य दुष्टवर्णवाक्यमाकर्ण्य सक्रोधतां दधे सकोपोऽभूदित्यर्थः । अनन्तरं उच्चैः नितरां तारस्वरं इत्यवोचत् । इति किं । एतेषु मध्ये अनिश्चितरूपोऽयं कस्कः श्रुत्यादिमूलानि धर्मरहस्यभूतानि वेददूषणात् कृन्तति छिनत्ति । कोऽयं कोऽयं एव भाषत इति वक्तृविशेषनिश्चयाय कोपाभिव्यञ्जकसम्भ्रमोक्तौ कस्कशब्दः कस्कादित्वात् साधुः ॥ ८४ ॥

लोकत्रयी त्रयीनेत्रा वज्रवीर्यं स्फुरत्करे । क
इत्थं भाषते पाकशासने मयि शासति ॥ ८५ ॥

क्रोधमेव द्योतयन् वेदप्रामाण्यं प्रतिजानीते । लोकेति । पाकशास-

मत्यामपि स्वजिघांसयैव सङ्करजातित्वं पातित्यमस्तीति निश्चयमिदंभङ्ग मेव प्रमाणयेत्यर्थ इति व्याख्येयं । यथा मति व्याख्या ज्ञातव्या ॥ ८६ ॥

ब्राह्मण्यादिप्रसिद्धाया गन्ता यन्नेक्षते जयम् । त
द्विशुद्धिमशेषस्य वर्णवंशस्य शंसति ॥ ८७ ॥

पूर्वोक्तमेव दृढयति । ब्राह्मण्येति । ब्राह्मण्यमादिर्यस्य क्षत्रियादिजातिविशेषस्य तेन प्रसिद्धाया यद्वा ब्राह्मणी स्त्र्यादिर्यस्याः क्षत्रियादिस्त्रियः सा ब्राह्मण्यादिः सा चासौ प्रसिद्धा च तस्याः इयमुत्तमा ब्राह्मणीत्यादिप्रकारेण रूढायाः स्त्रियो गन्ता कामुकस्तामनुज्ञातो नरो दिव्ये जयं न ईक्षते पश्यतीति यत् न प्राप्नोतीत्यर्थः । तज्जातीयानां तासामेव कृत्स्नं अशेषस्य वर्णवंशस्य ब्राह्मणादिवर्णसङ्घस्य मातापित्रादिपरम्परायाः विशुद्धिं निर्मलतां निर्दोषत्वं शंसति कथयति । ब्राह्मणी व्यभिचारा मया ब्राह्मण्याऽहं ब्राह्मणो नागमिति प्रतिज्ञाय यदा दिव्यं करोति तदा स पराजयत एवेति तावत्प्रत्यक्षं । तथा च गम्यायाः गन्तुश्च पारदार्यादिदोषदूषितत्वेऽपि तन्मातापित्रादिपरम्परायां ब्राह्मण्यादिविशुद्धिः तत्पराजयेनैव स्पष्टं कथिता । यदि जातिशुद्धिर्नाभविष्यत् तदैव प्रतिज्ञायां कृतायामपि तयोर्ब्राह्मणत्वाभावाद्भङ्गो नाभविष्यत् । स तु दृश्यत इति भङ्गस्यान्यथानुपपत्त्या जातिशुद्धौ प्रमाणमित्यर्थः । ब्राह्मण्यादिप्रसिद्धाया गन्ता यः पुरुषः यद्जयं जङ्गमीषते तद्भङ्क्षणमिति वा व्याख्या ॥ गन्तेति तृच् । अन्यथा । न लोकेति (पा०२।३।६९) षष्ठ्यभावः स्यात् । प्रसिद्धायामिति पाठे विषयसप्तमी । अन्या व्याख्या क्लिष्टत्वादुपेक्ष्या ॥ ८७ ॥

जलानलपरीक्षादौ संवादो वेदवेदिते । गलह
स्तितनास्तिक्यां धिक् धियं कुरुते न ते ॥ ८८ ॥

इदानीं संवादादपि वेदस्य प्रामाण्यमित्याह । जलेति । हे चार्वाक वेदेन वदिते बोधिते तन्मूलजलानलयोस्ताभ्यां वा या परीक्षा शुद्धत्वनिश्चयः स आदिर्यस्य तुलादिव्यादेस्तादृशेऽर्थे संवादो यथोक्तज्ञानरूपः स ते तव धियं बुद्धिं गलहस्तितं बलान्निरासितं नास्तिक्य

धस्य मे अधिगोष्ठिकथामधिकृत्य वाचो यत्क्रौ कण्ठोष्ठं कुण्ठयामि यु-
क्त्याप्रतिहतत्वाद्वक्तुमसमर्थं करोमि । मन्त्रं सपि भवच्छास्त्रं दूषयिष्या
मीत्यर्थः । वाग्व्यापारे प्रतिकण्ठोष्ठस्यैव दण्डो युक्त । अयमपि का-
धाहङ्कारविकारे । तिष्ठतिष्ठेति क्रोधातिशयद्योतनार्थं पुनरुक्तिः । क
ण्ठोष्ठं प्राण्यङ्गत्वादेकवद्भावः । कुण्ठयामि वर्तमानसामीप्ये भविष्यति
लट् ॥ ३६ ॥

वेदैस्तद्वचोभिस्तद्वत् स्थिरे मन्वादिभिः कृतम् । परं
कस्तं परं वाचा लोकं लोकायत त्यजेत् ॥ ३७ ॥

इदानीं श्लोकत्रयेण परलोकं धर्मं च साधयन् कोऽहि वद तर्को
प्रतिष्ठापयेत्येवमाद्यक्षरमाह । वेदैरिति । चतुर्भिः ऋग्वेदादिभिर्वेदैर्य-
थास्थिरीकृतं तद्वतस्य वेदस्य व्याख्याया तद्युक्तैः तदर्थोपजीविभि
र्वेदानुसारिभिर्मन्वादिभिः श्रुतिस्मृतिपुराणादिभिः वादिप्रतिवादिभिर्वेदे-
र्मीमांसादिशास्त्रैश्च स्थिरीकृतं निर्णयेन व्यवस्थापितं परं श्रेष्ठं अन्यच्च
स्वर्गादिलक्षणं लोकं हे लोकायत नास्तिकाधम परं केवलं ते वाचः नि
र्युक्तिकेन वचनमात्रेण कोऽपि विद्वान् त्यजेत् अपि तु न । किन्तु स
र्वैरपि तद्युक्तिभिः परलोकः स्वीकृत एवेत्यर्थः । तदस्तित्वे सन्देहा-
पादिनो को हि वेदैस्त्यादिश्रुतिस्तस्य परत्र ॥ ३७ ॥

समज्ञानानामपभूयिष्ठपान्थैर्मत्यमेतां यम् । लोके
प्रयासि पन्थानं परलोके न तं कुतः ॥ ३८ ॥

समेति । एकस्मिन् गोदवर्यं समज्ञाना तुल्यमतयोऽल्पं ऽल्पमल्पत्या
भूयिष्ठा बहुतरसङ्ख्याश्च पान्थास्तैरा बैमत्य मार्गान्यत्वविरोधमेत्य प्र प्य
ज्ञात्वा वा इहलोके यं पन्थानं त्वमेव प्रयासि परलोकेऽपि विषये त्व
मेव तादृशमेव मार्गं कुतो हेतोर्नं गच्छसीति प्रश्नः । अपि तु तमेतमेव
गच्छेरित्युपदेशो वा । यथा केनचिद्वामो दक्षिणो वा काशीमार्ग इति मा
र्गं पथिकेषु पृष्टेषु पञ्चभिर्वामभार्गे कथिते सति पञ्चाशद्भिर्दक्षिणमार्गे
कथिते द्विधे "बहूनां वचनं ग्राह्यम्" इत्यादि न्यायात् कुशलेन पञ्चाशदुक्त-
मार्गेणैव गम्यते एव परलोकेऽप्यल्पविमतिं निरस्य बह्वनुगत एव मा

गः किमिति नाश्रियत इत्यर्थः । परलोकमार्गस्य तस्याया धर्मस्तं कथं न मन्यसे अपि तु तमेवाङ्गीकुरु । परलोकसत्तानिश्चयमपि गतश्रामवत् कुर्विति भावः । तर्काप्रतिष्ठयेत्यस्याप्ये तदुत्तरं ज्ञेय ॥ ९८ ॥

स्वकन्यां मन्यसात्कर्तुं विश्वानुमतिदृश्वनः । लो-
के परत्र लोकस्य कस्य न स्याद्दृढं मनः ॥ ९९ ॥

बहुसम्मतिमेव दर्शयति । स्वकन्यामिति । स्वकन्यामात्मपुत्रीमन्यसात्कर्तुमन्यस्मै वराय अधीनां देयां कर्तुं विश्वेषां सर्वेषां श्रुतिस्मृतिपुराणादीनां लोकानां चानुमतिं सम्मतिं दृष्टवतोऽनुभवतः तथा कुर्वतश्च कस्य जनस्य, परत्र लोके स्वर्गादौ मनो दृढं निःसन्देहं निश्चलं न स्यादपि तु सर्वस्यापि स्यादेव । न केवलमन्यस्यैव किन्तु चार्वाकस्य तवापीत्यर्थः । सर्वोऽपि परलोकबाधभिया स्वकन्यामन्यस्मै ददाति । यदि परलोको नाभविष्यत्तर्हि स्वपुत्रीमन्यस्मै कथमदास्यत् । अयं सदाचारः सर्वेषां सम्मतः । स च त्वयाप्यन्यस्मै पुत्रीदानादङ्गीकृत एव । अन्यथा स्वपुत्र्याः स्वेनैव ग्रहणमापद्येत । तस्मादन्येषामनुमतिं गृहीत्वैव यथा कन्याऽन्यस्मै दीयते तथा बहुसम्मतिदर्शनात् परलोकमप्यङ्गीकुर्विति भावः । अन्यसात् । देये त्रा चेति ( पा० ५।४।५५ ) साति । विश्वेति पूर्ववत् ॥ ९९ ॥

कस्मिन्नपि मते सत्ये हताः सर्वमतत्यजः ।
तद्दृष्ट्या व्यर्थनामात्रमनर्थस्तु न धर्मजः ॥ १०० ॥

श्लोकद्वयेन श्रुतिस्मृत्यर्थबोधेषु, तर्काप्रतिष्ठेत्यादेरुत्तरमाह । कस्मिन्निति । धर्मं परलोकादिप्रतिपादनपराणां बहूनां मतानां मध्ये कस्मिन्कस्मिन्नपि मते सत्ये सत्यत्वेनाङ्गीकृते सति सर्वमतत्यजः सर्वमतत्यागिनः परस्परविरोधात् सर्वमतासत्यत्ववादिनो नास्तिका एवं हता नाशिताः । तथायं मन्थः । मतानामसत्यत्ववादिभिः किञ्चिन्मतं सत्यमङ्गीक्रियते न वा, चेदङ्गीक्रियते तर्हि कस्यापि कन्यादानादिप्रतिपादकस्य स्वीयमतस्यैव वा सत्यस्याङ्गीकारात् सर्वमप्रमाणमिति सर्वासत्यत्ववादिनो व्याघाताय सिद्धान्ताभ्यां दूषिता एवेति वैदिक-

सिद्धान्ता निर्दोष इत्यायात । न वेत्यपि पक्षे नास्तिकमतस्याप्यसत्य- त्वादसन्यमूलस्य दूषकत्वाभावान्निर्दोषो वैदिक- पक्षः सिद्धएवैरयपि नास्तिका दूषिता । निर्दोषत्वेऽपि वैदिकपक्षानङ्गीकारे स्वपक्षाऽपि तै- नाङ्गीकार्य इत्यादिज्ञेयम् । एवञ्च नस्यैकस्य मतस्य दृष्ट्या सत्यताज्ञाने नोभयवादिसिद्धतया पुत्रेष्ट्यादौ पुत्रजन्मादिफलसिद्धौ सत्यां यत्र क्वचि त फलव्यभिचारस्तत्र कर्माङ्गो वैकल्याद् व्यर्थतात्र फलसाधनत्वरा- हित्यनात्र तु पुन अधर्मः प्राचीनपुत्रवियोगादिर्नरर्थकः । दुःखरा शि धर्मजो न, पुत्रेष्ट्यादिधर्मजन्यो न भवति विपरीत तु धर्मेण न जन्यते, किन्तु प्राचीनदुष्कर्मनिमित्तमेव । वेयल तु काकतालीय- न्यायेन तस्य पुत्रेष्ट्यादनन्तरभावित्व । न च तावतैव नरकाद्यंस्यागिति व्याप्तेरित्यथ इत्यादि ज्ञातव्यम् । कस्मिन्नपि मातृगमनादिनिषेधे स्व कन्यादानादौ विषये च वैदिके मते सत्ये सति तस्मिन्न सत्यत्वेऽङ्गी कृते सति सर्वजनसमङ्गमिति वदन्तो नास्तिका हता । मातृगमन निषेधादेरशस्य भवद्भिरपि परिपालनादित्यर्थः । तथा च मद्दृष्ट्या क- न्यादानमातृगमननिषेधादिरूप यो मतयोर्मां विधिनिषेधांशोऽत्र दृष्टा- न्तेनान्यथाङ्गो व्यवतास त्र वचनजातैव्यर्थमित्युच्यते न तु धर्मजो वास्तवोऽनर्थः प्रयोजनाभाव । तद्दृष्टान्तेन व्यर्थतागात्रमन्यत्राप्यर्थ तैवति परपक्षमतिप्रकृतम् ॥ १०० ॥

क्वापि सर्वैरवैमत्यात् पातित्यादन्यथा क्वचि त् ॥ स्यातव्यं श्रौत एव स्याद्धर्मे शेषेऽपि त द्धते ॥ १०१ ॥

उपसंहरति । क्वापीति । सर्वैर्नास्तिकैरपि क्वापि कस्मिन्नपि अहिंसा कन्यादानादौ श्रौते वेदोक्त एव धर्मे स्यातव्यं कुत अवैमत्यात् सर्वे- षामित्यर्थः शेष श्रौतानां बौद्धानां माध्यमिकानामपि सम्प्रतिपत्ते अ- हिंसादेस्तैरप्यनिषिद्धत्वादङ्गीकृतत्वाच्चेत्यर्थः स्यातव्यमेवेति वा । तथा क्वचिद्वर्णाश्रमाधिकार विहिते अन्यथा करणे निषिद्धाचरणे च पाति- त्यदोषाद्विहिताकरणनिषिद्धाचरणप्रत्यवायभयादपि श्रौत एव धर्मे

स्यातव्यं अन्यथा वैमत्येऽपि श्रौत एव क्वचित् कस्मिंश्चिद्धर्मे स्यातव्यं। कुत पातित्यात्। यत्तु श्रौते धर्मे तेषां विप्रतिपत्तिसादनङ्गीकारेऽपि प्रत्यवाय स्यादित्यङ्गीकार्य्यं एवेत्यर्थ इति वा। एव ज्ञापेऽपि नित्यनैमित्तिकाभ्यामतिरिक्ते काम्ये ज्योतिष्टोमादावपि स्यातव्य। कुत। तत्कृते तस्य वेदस्य कृते कारणाद्वेदविहितत्वाविशेषादित्यर्थ। यद्वा तत्कृते वेदमूलत्वात्केवे स्मार्तेऽपि धर्मे स्यातव्य, सदाचारानुमितस्मृत्या श्रुतेरनुमानात्। स्मार्तधर्मा अपि वेदमूला इति तेऽप्यङ्गीकर्तव्या इत्यर्थ। एतेन यस्मिन्नास्तीति जनेन जानतेति एकस्य विप्रापर्णेनेति खल्व ब्रह्मचेत्यादेः सर्वस्याप्युत्तर दत्तम्। चातुर्वर्णादि दिकप्रामाणिकमेव। अमिहिस्तु साधनवैगुण्यादिति सर्वमपि समर्पितमिति ज्ञेयम्। तत्कृतमिति पाठे हेतुगर्भविशेषण। तस्मान्न मतानां प्रामाण्य श्रुतिस्मृत्याद्यैकमत्यमप्यविरुद्धमिति श्लोकद्वयतात्पर्य्यार्थं श्रुहिमादयः स्मृत्युक्त नहि साधारणधर्मास्तेषु क्वापि श्रौतेऽपिधर्मे स्यातव्य। पातित्यादित्युभयत्रापि हेतु। सर्वेषामनुमत विहिते वेद स्थीयेत तर्हि विहितस्याननुष्ठानादिति स्मृतेः पातित्यमित्यर्थं तथा, च विहितानां केषाञ्चिदुक्भिरनुष्ठानात्रिषिद्धानां केषाञ्चिद्भक्तिरपि दर्शनात् सर्वथा विमते निषिद्धे चेत् स्थीयते तथा निन्दितस्य सेवनादिस्मृतौ पातित्यमित्यर्थ। तथा चैतद्वृत्तांते मान्यत्वऽपि विधिनिषेधाशेषु तत्कृते, श्रौतत्वाविशेषादेव हेतो स्यातव्य। तेऽपि प्रामाणिकत्वे स्वीकार्या इति वा व्याख्या इत्यादि ज्ञातव्यम् ॥ १०१ ॥

वभाण वरुणः क्रोधादरुणः करुणोज्झितम्।
किं न प्रत्ययान् पापमदपाश पाशाद्विभेषि नः ॥ १०२ ॥

वभाणेति। क्रोधादरुणो रक्तकायकान्ति। वरुणः करुणया उज्झित यथा तथा वचन यथा वभाण। हेपापमदपाश नास्तिकाधम त्वं नो ऽस्माक प्रपयहाद्दृ महापाशात्क विभेषि किं। भुशयाय, पात्रे पाशविति (पा०५।३।४७) पाशप् प्रत्ययः ॥ १०२ ॥

मानवाशक्यनिर्म्माणा कूर्म्माद्यङ्कबिला शिला ।
न श्रद्धापयते मुग्धास्तीर्थिकाध्वनि वः कथं ॥१०३॥

मानवेति । मानवैर्मनुष्यैरशक्यं निर्म्माणं यस्याः तथा कूर्मचक्राद्यङ्कानि वराहसिंहादयोऽङ्कास्तिद्धानि येषामेवंविधं बिलम्बिवरं यस्याः सा च शिला गण्डकाख्या तीर्थविशेषसम्भवा शालग्रामशिला भो मुग्धा मूर्खा तीर्थिकाध्वनि ईश्वरमार्गे वैदिकाध्वनि वा वो युष्माकं कथं न श्रद्धापयते आस्तिक्यं न प्रापयति । चित्रमेतद्भवतां मूर्खतरत्वमित्यर्थः । ननु यैरशक्यरचनं सावयवत्वेन कार्य्यं शिलादिस्वनिर्म्माणशक्तमिच्छामात्रेण कर्तारं मनुष्यादिभिन्नमीश्वरमाक्षिपति । विमतं सकर्तृकं कार्य्यत्वात् घटवत् । अनुमानात्पक्षधर्म्मतायत्नादिभिन्नतयो कर्तरीश्वरे सिद्धेऽपि कथमनाश्रिताश्रि इत्याशय । एतेन देवदत्तस्ति सर्वज्ञ इत्यादेरुत्तर दत्तमिति ज्ञेयम् ॥ १०३ ॥

शतक्रतुजयाद्याख्य विख्याता नास्तिकाः कथम् ।
श्रुतिवृत्तान्तसत्यत्वैर्न वश्चमदचीकरन् ॥ १०४ ॥

शतेति । भो नास्तिकाः शतक्रतुः श्रीविष्णोरूरुभ्यां अजायत इत्युरुजो वैश्य न आदिराद्या या येषां ते ब्राह्मणादिपर्यायास्तेषामाख्या शतक्रतुमुखजबाहुज इत्यादीनि नामानि तेषां विशेषेण ख्यातिर्यासां श्रुतिवृत्तान्तमयानि वेदोक्तेतिहासे करणे. या युष्मान् कथं न चमत्कारं नाकारयदपितु आश्चर्यं भवतां तयोत्पाद्य । चमदित्यव्ययमाश्चर्ये । शताश्वमेधकर्तृत्वादिन्द्रो भवति । इन्द्रस्यैव शतक्रतुत्व वेदेनोक्तम् लोकेनापीन्द्र एव शतक्रतुत्वेन व्यवह्रियते न तु यज्ञादिरिति । तथा च ब्राह्मणोऽस्य मुखमासीदित्यादिना श्रुत्या ब्राह्मणक्षत्रियादीना मुखजत्वबाहुजत्वाद्युक्तं । लोकेनापि ब्राह्मणादय एव मुखजत्वबाहुजत्वादिभिर्व्यवह्रियते न तु विपर्य्ययेणेति यदोक्तेन सह लोकस्यानुभूयमानत्वात । एवादादपि वेदे यथोक्तं तथैव लोको व्यवहरत्याद्यप्यसेनस् । आश्चर्य्यं पूर्वं तद्प्रामाण्य कथ न विश्वमिपेत्यपि तु विश्वसनीय तमत्याशय. । कण्ठजपद वृत्तानुरोधात् मायोति । त

वशान् । कः कानिव । मत्तो निर्मलो मदिरामत्तो वा मातङ्गमदचण्डालो द्विजानिव । किम्भूतान् मत्त चण्डालं दुष्टमप्यनर्हान् । चण्डालप्लव-मातङ्गदिवाकीर्तिजनङ्गमा इत्यमरः । गमश्चेति (वा॰३।२।४७) खच् । खित्वान्मुम् ॥ ११२ ॥

स्वस्ति वास्तोष्पते तुभ्यं शिखिन्नस्ति न खि
न्नता । सखे काल सुखेनासि पाशहस्त मुद
स्तव ॥ ११३ ॥

स्वस्तीति । हे वास्तोष्पते इन्द्र ते तुभ्यं स्वस्ति क्षेममस्ति कच्चित् । तथा हे शिखिन्नग्ने ते तव खिन्नता चित्तक्लेशो नास्ति कच्चित् । हे सखे काल यम सुखेनासि किं । हे पाशहस्त वरुण तव मुदः सन्ति कच्चित् । गृहमात्रस्याधिपत्यादसामर्थ्यं सूचयेव ज्वालाजटिलत्व कृत्रिमत-त्वमायुधधारणेयम्यं च सम्बुद्धिभिः सूचितं । सप्तमानां कुशलप्रश्नैः सह स्वाम्यन्तेभ्योऽधिकत्व सूचयति । इन्द्राय स्वस्तिप्रयोगः स्वाशिभाव ब्राह्मण्य वा कलेर्द्योतयति । वर्णमात्रेण यमे सखिशब्द-प्रयोगः । धनमेव गर्वोऽनला चेति शेष । स्वस्त्याशी क्षेमपुण्यादावि-त्यमरः । वास्तोष्पतिर्गृहमेधाच्चेति लिङ्गात् साधु तुभ्यमिति । न-म स्वस्तीति (पा॰२।३।१६) चतुर्थी । इतरत्र तव सम्बन्धमात्रम् ॥ ११३ ॥

स्वयंवरमहे भैमीवरणाय त्वरामहे । तदस्मान
नुमन्यध्वमध्वने तत्र धाविने ॥ ११४ ॥

स्वयमिति । हे देवा वयं स्वयंवरमहे नष्टे उत्सवे भैमीवरणाय यस्मात् त्वरामहे सत्वराः स्मः तस्मात् तत्र धाविने स्वयंवरस्थानं प्रति शीघ्रगामिनेऽध्वनेऽस्माननुमन्यध्वम् आपयत त्वराश्रवाद्न्या गोष्ठी न क्रियते । आज्ञैव दीयतामित्यर्थः । अध्वने । तादर्थ्ये चतुर्थी ॥ ११४ ॥

तेऽज्ञाय तमस्योच्चैरहङ्कारमकारणम् । ऊचिरे
ऽति चिरेणैनं स्मित्वा दृष्टमुखा मिथः ॥ ११५ ॥

त इति । ते देवाः पूर्वोक्तमकारणं निर्हेतुकं उच्चैरतिशयित प्र-

स्य कर्णोद्धरणार्थं दर्पणमणाय मिथो ऽन्योन्य दृष्टमुखाः सन्तः मूर्खं. स्व यम्वरवाचं कि करोमीति स्मित्वा हास्यं कृत्वाऽलिपिरेण पापीयसा ऽनेन सह कथं वक्तव्यमिति बुद्ध्या भूयांस कालं विलम्ब्यैनं कलिं प्रत्यूचिरे वक्ष्यमाणं वचो यथा ॥ ११५ ॥

पुनर्वक्ष्यसि मामेव कथमुद्वक्ष्यसे तु सः । सृष्टवान् परमेष्ठी य नैष्ठिकब्रह्मचारिणम् ॥ ११६ ॥

पुनरिति । हे कले त्वं स्वयम्वरार्थं गमिष्यामीति एकवारमस्मान्ुक्तं तद्विदमन. पर पुनर्मा मा एवं वक्ष्यसि मा मा वोच. । यस्मात् परमेष्ठी य त्वा आमरणं गुरुकुलनिवासिन नैष्ठिकब्रह्मचर्यव्रतधारिणं सृष्टवान् (ननु पुनस्त्वं कथमुद्वक्ष्यसे परिणेष्यसि कृतयुगादयो निष्कलाश्च यत्र सृष्टाः ) तस्मादेव स्वयम्वरयात्राऽनुचिताऽसंगोणित्वापात् । तस्मादेव पुनर्मा स्म वाच इत्यर्थः । पापरूप प्रत्युपहासवचनमेतत् । माङ्ग्यस्य निरनुबन्धकत्वाद्वक्ष्यतीति यथेलुँट् । मा मेति निषेधविषयार्थं वीप्सायां द्विरुक्तिः । परमे स्थाने तिष्ठति इति इनि म च कित् । अत आलोपः, घञर्थे कविधानम् (पा०८०३ ९७) सूत्रेण पत्वं । तत्रैव, परमेष्ठीहरिति निपातनादृद्लत्वम् ।

नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि च । इति स्मृतिः ॥ ११६ ॥

द्रौहिणं द्रुहिणो वेत्तु त्वामाकर्ण्यावकीर्णिनम् त्वज्जनैरपि वा धातुः सेतुलंङ्घ्यस्त्वया न किम् ॥ ११७ ॥

द्रौहिणमिति । द्रुहिणो ब्रह्मा त्वां पुत्रं व्यवकीर्णिनं क्षतव्रतं आकर्ण्य निशम्य तत्क्ष द्रौहिणं गुरुद्रोहकारिणं वेत्तु । एवं त्वया कृते ब्रह्मैव ज्ञास्यतीति भावः । अथ वा तेन ज्ञातेऽपि तव किं भवितेति मा शङ्कामनाः । त्वज्जनैस्त्वदनुयायिभिः कामक्रोधादिभिरपि धातुः सेतुर्मर्यादा धर्मस्थापना लङ्घ्य. त्वया पुनः किम लङ्घ्यः । त्वदाज्ञया सेवका अपि ब्रह्माणं लङ्घयन्ति त्व लङ्घयसीति किम्

सर्व्यमित्यर्थः । यद्वा त्वज्ज्ञैरपि सेतुर्नैलङ्घ्यस्त्वया न लङ्घ्य इति किं साध्यं । त्वदाज्ञालङ्घनमनौचित्यान्न कार्यमित्यर्थ इति काक्वा । पाताऽस्त्रयानिर्त्युक्ति इत्यमरः । दुव्यत्यमुखेभ्यः औणादिकः किन् ११७॥

अतिवृत्तः सवृत्तान्तस्त्रिजगद्युवगर्व्वनुत् । आगच्छनामपादानं स स्वयम्वर एव नः ॥ ११८ ॥

स्वयम्वर मत्यागमने हेत्वन्तरमपि ब्रूते । अतीति । एक विना सर्व्वपरित्यागात्त्रिजगत्सु यत्तत्कालीना यूना तत्कालीना सौन्दर्य्यविषय गर्व्व नुदतीति नुत् नाशक स वृत्तान्तो भैमीस्वयम्वरोऽतिवृत्तो ऽतिक्रान्त सञ्जात इत्यर्थः । भवद्भि कथ ज्ञातमित्यत आहुः । स स्वयम्वर एव । आगच्छता नोऽस्माकमपादान नियमाऽवधिभूतोऽथ इत्यर्थः । वयमपि तत्र गतास्तत एव आगच्छाम इति सर्व्वोऽपि वृत्तान्तोऽस्माभिर्ज्ञायत इति । अतोऽपि त्वया तत्र न गन्तव्यमिति भावः । विश्लेषे चञ्चलं स्थिरं वा यदुदासीन तदपादानमिति वैयाकरणाः ॥ ११८ ॥

नागेषु सानुरागेषु पश्यत्सु दिविषत्सु च । भूमिपाल नलं भैमी वरं सा वव्रदुरम् ॥ ११९ ॥

कथ यूना गर्व्वनाश को वा तया वृत इत्याशङ्कायामाहुः । नागेष्विति । नागेषु वासुकिप्रभृतिषु सानुरागेषु दिविषत्सु अस्मदादिषु कौतुकवशादेव पश्यत्सु तान् सर्व्वाननादृत्य सा भैमी नागाद्यपेक्षया वरं सर्व्वगुणाश्रयत्वाच्छ्रेष्ठं भूपालं सार्व्वभौमं नलं भूवरं वरं परिणेतारमववरत् वरयामास । सर्व्वानादरेण नलवरणात् सर्व्वेषां सौन्दर्य्यगर्व्वो गत इत्यर्थः । पश्यत्सु दिविषत्सु इत्यनेनास्माभि कौतुकार्थं वरदानार्थमेव च गत न तु तद्वरणार्थमिति च व्याख्यान्तरेण सूचितमिति ध्येयम् । नागेष्वित्यादौ, षष्ठी चानादरे इति (पा०२।३।३८) सप्तमी । अववरत् । वर ईप्सायामिति चुरादावदन्तपाठात् स्वार्थणिजन्ताद्वरयतेर्याग्लोपित्वात् सन्वद्भावादित्वदीर्घत्वाभाव ॥ ११९ ॥

भुजगेशानसद्वेपान् वानरानितरान् नरान् । चामरान् पामरान् भैमी नल वेद गुणोज्ज्व

लम् ॥ २० ॥

किमिति ते परित्यक्ता इत्याशङ्कायां कारणमाह । भुजगेशानिति । भैमी भुजगेशान् वासुकिप्रमुखान् फणागणजिह्वालालनादिवैरूप्यादमद्वैपानमनोहरान् वेद जानाति । तथा इतरान् नलादन्यान् नरान् मनुजाधीशान् चापल्यनिर्गुणत्वाभ्यां वानरान् वेद । तथा अमरान् प्रचतुरत्वात् पामराक्षोचान् वेद । केवलं नलमेव गुणोज्ज्वलं शूतवीर्यौदार्यसौन्दर्यादिभिः प्रकाशमानं वेद । सर्वगुणाकरत्वान्नल एव तया वृतोऽन्ये तु परित्यक्ता इत्यर्थः । विवर्णः पामरो नीच इत्यमरः । वेदेति इदानीमपि तथैव प्रतीते मत्वाद्वर्तमानता । विभक्तिप्रतिरूपको निपातो वा । तथाऽज्ञासीदित्यर्थः ॥ १२० ॥

इति श्रुत्वा स रोषान्धः परमश्चरमं युगम् ।
जगन्नाशनिशारुद्रमुद्रस्तानुक्तवानदः ॥ १२१ ॥

इतीति । चरममन्त्यं युगं स कलिः इतीन्द्रादिवचनं श्रुत्वा परमोऽत्युत्कृष्टो रोषान्धः, रोषान्नितरां निर्विचारतया पुरस्थमपि वस्त्वजानन् अत एव जगन्नाशसम्बन्धिनी निशा, यस्यां निशि जगन्नाशो भवतीति यावत्, तत्सम्बन्धी प्रलयकाले सकलभूतग्रामसंहारसम्बन्धी रुद्रस्तद्वन्मुद्रा आकारो यस्य सः । क्रोधवशान्नितरामाविष्कृताकार इति यावत् । एवंभूतः सन् तान् सुरानदो वक्ष्यमाणमुक्तवान् ॥ १२१ ॥

कयापि क्रीडतु ब्रह्मा दिव्याः स्त्रीर्दीव्यतु स्वयम् ।
कलिस्तु वरतु ब्रह्म भैमीं चातिप्रियाय वः ॥ १२२ ॥

पुनर्यत्त्वमिमामीर्यमित्यादेरुत्तरमाह । कयेति । हे देवा ब्रह्मा कयाऽप्यनिर्मुन्दर्या गायत्र्यादिपदवाच्ययाऽन्तःनामजातिगोत्रया वाऽप चामरत्वाद् यस्या नामकथनेऽप्यस्याक लज्जा भवति तया सुतया सह सुखेन क्रीडतु । तथा यूयं स्वयमात्मना दिव्याः स्वर्गभवा रम्भादीः स्त्रीः अहल्यामुख्या वा रमणीर्दीव्यत स्वेच्छया ताभिः सह सुरतक्रीडां कुरुत । प्रजापतिः स्वां दुहितरमभ्यधावदिति श्रुत्या ब्रह्मणः स्वाकन्याङ्गमनं पुनरां स्वाचन्यामिति स्वपरिणत्यमेगोक्तम् । कलिस्तु

पुनर्ब्रह्मचर्य्याख्यं व्रतं यावज्जीवं चरतु वा ऽथवा जीवन् कलिरस्मा नुपहसिष्यतीति अनेन न जीवितव्यमिति वो युष्माकमतिप्रियाय नितरां तुष्टये प्रैतु म्रियतां । स्वयं सर्वैः स्वेच्छाचारः क्रियते मया तु स्वेच्छाचारो न कर्तव्यो मर्त्तव्यमेवेति कीदृशीयं जगतां परमद्वैपरीतिरिति लोकरीत्युपहासः । अथ च यूयं ब्रह्मादयः सर्वेऽपि स्वेच्छाचारिणः स्वाच्छन्द्यं कुशलं नाम कलिस्तु न तादृगिति ब्रह्मैव चरतु युष्माकमत्यतिप्रियाय मैत्रीलक्षणाय वस्तुने म्रियतां । मवद्वास्वेच्छाचारं न करोमि किन्तु मैत्रीप्राप्तये प्रवृत्तस्य मम मरणमेव स्वाद्यदृष्यस्त्विति भावः । अत्राप्युपहास एव तात्पर्यं कीदृशा चेति । द्वि.कर्म चेति (पा०१।४।४३) करणस्यापि कर्मत्वात् स्त्रीभिरित्यर्थे स्त्रीरिति द्वितीया ॥१२२॥

चर्य्यैव कृतमेयं वः परस्मै धर्मदेशिनाम् । स्वयं तत् युष्माभिः सर्वं श्रोतुं यद्विन्नितः श्रुती ॥१२३॥

उपहासमेव प्रकटयति । चर्य्येति । हे देवाः परस्मै अन्यस्मै जनाय स्वसुतादिगमनं न कार्यमिति धर्मदेशिनां धर्ममुपदिशतां स्वयं तद्ब्रह्महत्यास्वसुतादिगमनं सर्वं निषिद्धं कर्म कुर्वतां वो युष्माकमिय कतमैव कैव चर्या आचाररीतिरपि तु न कार्येत्याक्षेपः । अचेतनं अपि श्रुती कर्णौ यद्भवदीयमहल्यादिगमनं कर्म श्रोतुं विभितः त्रस्यतः । स्वेच्छाचारिणां भवतां परपीडायामेव तात्पर्यमिति भावः । चर्या । गदमदेति पा०३।१।१००) भावे यत् ॥ १२३ ॥

तत्र स्वयम्बरेऽलम्भि भुवः श्रीर्नैषधेन सा । जगतो ह्रीश्च युष्माभिर्लाभस्तुल्याभ एव वः ॥१२४॥

तत्रेति । तत्र स्वयम्बरे नैषधेन भुवः श्रीः सौन्दर्याद्भूलक्ष्मीः सा भैमी अलम्भि प्राप्ता । युष्माभिस्तु पुनर्जगतो ह्रीस्त्रैलोक्ये यावती वर्तते सा लज्जा जगतः सकाशाद्धि, भैम्याऽनादृतत्वात् या लज्जा साऽलम्भीति वो नमस्य युष्माकञ्च लाभोऽपूर्ववस्तुप्राप्तिस्तुल्याभ एवाभासते । तुल्याभ एव । शकारह्रकारमात्र वैरूप्यं, इतरत्तुल्यमेव । प्रत्युतलज्जैव लब्धा न तु भैमीति रूपस्य दर्पो वृथैवेति भावः । अयच्च यु-

यच्च पूय तेषां दः एकशेष. ॥ १२४ ॥

दूरान्नः प्रेक्ष्य यौष्माकी युक्तेयं वक्रचक्रमा। ल
ज्जयैवासमर्थानां मुखमस्माकमीक्षितुम् ॥१२५॥

दूरादिति। आगच्छतो नोऽस्मान् दूराद् दूरत एव प्रेक्ष्य यौष्माकी इयं वक्त्रचक्रमा मुखमीलित्यकरणा युक्तैव। किंभूतानां। गुणीभूतस्य विग्रहान्तर्गतस्य युष्मच्छब्दस्य विशेषणं। यतो नैष्यवृत्तत्वात् सज्ञातलज्जयैव हेतुना ऽस्माकं मुखमीक्षितुमसमर्थानां। लज्जाशीलो ह्यन्य दूरादेव दृष्ट्वा लज्जया मुखं न दर्शयति सलज्जा भवन्त इति युक्तमेवैतदिति भावः। अयमप्युपहास लज्जयैवेति पाठे उत्प्रेक्षा। प्रेक्ष्येति वक्रणापेक्षया समानकर्तृत्व दूरादेव दृष्ट्वा। यौष्माकीति, तस्येदमिति (पा०४।३।१२०) अणि, तस्मिन्नणि चेति० (पा०४।३।२) युष्माकादेश। युष्माकमिति पाठ साधु। एवमस्माकमित्यत्रापि द्रष्टव्य। वक्रणेति नामधातोर्युच ॥ १२५ ॥

स्थितं भवद्भिः पश्यद्भिः कथं नोऽस्त्यदसाम्प्रतम्।
निर्दग्धा दुर्विदग्धा किं सा दृशा न ज्वलत्क्रुधा ॥ १२६ ॥

स्थितमिति। भो देवास्तत्करणा पश्यद्भिर्भवद्भिः कथ स्थितं उदासीन्येनेति शेष। असाम्प्रतमनुचितमेतदित्यर्थ.। दुर्विदग्धा भयदयत्यागादचतुरा सा भैमी ज्वलन्ती देदीप्यमाना क्रुत् क्रोधो यस्या तया दृशा कस्मा किमर्थं न निर्दग्धा सुतरा न भस्मसात्कृता, अपि तु साङ्गमाशय्यं मद्वरणाय तस्माद् सापराधत्वे दग्धुमुचित, तदपि न कृतमित्येतदत्यनुचितमेवेत्यर्थ। युक्ते द्वे साम्प्रतं स्थाने इत्यमर। भोरिति प्रत्येक सम्बुद्धि. ॥ १२६ ॥

महाविशालनाकृत्य महान्तमभिलाषुका। स्वीच
कार कथ कारमहो सा तरलं नलम् ॥ १२७ ॥

महेति। कुलशीलादिना महान्तमुत्कृष्ट मम अभिलाषुका मां त्रैलोक्यपतयाभ्यन्तरयशाम् दिव्यवस्त्रादिभूषणान् युष्मान् परित्य

न्य तरल चञ्चलस्वभाव अनिश्चितबुद्धे नल कथंकारं कथमिव स्वीचकार अहो आश्चर्यं । महान्तं कामयमानाया देवपरित्यागेन मनुष्यवरणान्महच्चित्रमित्यर्थः । अयं च या महापरिमाणं वाञ्छति सा विशालान् दृढान् वेणून् परित्यज्य सच्छ्रत्वज्ञामात्रेणापि चञ्चलं तुच्छं च नलाख्यं तृणमङ्गीकरोतीति चित्रमेव । एतत् अयं सा किं न जवङ्गिदंष्ट्रेति भावः । अभिलापुका । लषपत० (पा०३।२।१५४) इत्युकञ् । महान्तं इति, नलोकेति (पा०२।३।६९) षष्ठीनिषेधाद् द्वितीया । कथंकारं पूर्ववत् ॥ १२७ ॥

त्वया दृशोर्दिशामीशैर्मृग्यमाणां मृगेक्षणाम् । स्वीकुर्वाण कथं सोढ कृतचौरस्तृण नलः ॥ १२८ ॥

इदानीं नलं कथं सोढ इत्याह । भवादृशोरिति । भो देवा दिशामीशैर्महासमृद्धिभिर्भवादृशैर्मृग्यमाणा काम्यमाना मृगेक्षणा भैमीं स्वीकुर्वाण सन्नुद्वहन् अत एव भवत्सु कृतचौरः कृतावज्ञः तृणतुल्योऽतिनिःसारः, अथ च नलनामत्वान्नाम्यत्वात् तृणतुल्य नलो जवङ्गि कथं केन प्रकारेण सोढः क्षान्तः । सा जवङ्गिरभिलषिता तथा तु भवन्तो नादृता इत्युपहासः । मृगेक्षणा । न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद्द्वितीया । सोढः । सोपसर्गेति (पा०३।३।१८) इत्युच्चिकत्वात् यस्य विभाषेति (पा०७।२।१५) निष्ठ या नेट् ॥ १२८ ॥

दारुणः कूटमाश्रित्य शिखी साक्षी भवन्नपि । नावहत् किं तदुद्वाहे कूटसाक्षिक्रियामयम् ॥१२९॥

दारुण इति । अयं शिखी वह्निर्दारुणः कूटं काष्ठराशिं आश्रित्याग्निसाक्षिके विवाहे साक्षी भवन्नपि साक्षाद्द्रष्टा भवन्नपि सभ प्रकाशमानोऽपि सर्वभैमीनलयोस्तस्य तस्या वा तद्वाहे विवाहे विषये कूटसाक्षिणोऽलीकसाक्षिणः क्रिया मत्यापलापलक्षणा विनावहन् अपि त्वेतदप्यनुचितं कृत । कूटसाक्षी हि परकीय वस्त्वन्यस्मै दापयति । तदनेन प्रायशस्तत्र न स्थितमित्यग्निसाक्षिको विवाह एव न भवतीति भैमी नलेन वोढेति भैमी नलादन्यस्मै प्रवरस्य मध्ये फ-

सोचित् किमिति न दापितेत्यर्थः । अथ च दारुणः पापकारित्वाद-तिक्रूरः पुरुषः कपटमाश्रित्य व्यवहारे साक्षी भवन्नपि तस्य चित्ते धृतस्य कार्यस्योद्घाटे कूटसाक्षित्वं धत्ते अत्र तु नेत्याशयः ॥ १२९ ॥

अहो महःसहायानां सम्मता भवतामपि । कुमैवास्मै कलङ्काय देवस्यैवामृतद्युतेः ॥ १३० ॥

अहो इति । हे देवा महःसहायानां तेजस्विनां दिव्यमूर्तीनां भवतामपि समैवास्मै कलङ्काय, इन्द्रादिषु सत्स्वपि भैमी नलं वृतवतीति अपयशसे, अथ च नलकृतानादरकृताय, अथ च लज्जाद्यनादन्यवधीक्षणाशक्तिसुप्रमालिन्यकृपाय कलङ्काय सम्भूता । अहो महदाश्चर्यं गुणभूतापि क्षमा दोषाय जातेत्यर्थः । महः सहायस्य तेजस्विनो देवस्य दीप्यमानस्यामृतद्युतेश्चन्द्रस्येव । यथा चन्द्रस्य क्षमा भूमिः कलङ्काय जाता भवतामपीत्यपिशब्दं न यत्र कलङ्कशङ्कापि नास्तीति सूचितम् । भूश्चन्द्रे कलङ्क इति ज्योतिर्विदः । महःसहायानामपीति वा चन्द्रस्य यथा तथा भवतामपीति समुच्चयार्थो वा । क्षमा परित्यज्य भवद्भिरन्यतरस्य चेद् दण्डो नाकरिष्यत् तर्ह्ययशो नाभविष्यदिति भावः ॥१३०॥

सा वत्रे यं तमुत्सृज्य मह्यमीर्ष्याजुषः स्थ किम् ।
भूतागःसङ्ग नस्तस्माच्छद्मा न द्याच्छिनद्मि ताम् ॥ १३१ ॥

सेति । हे देवाः भैमी च वत्रे तं नलं उत्सृज्य यूयं स्थ मह्यं कस्मै किमिति ईर्ष्याजुषः अक्षान्तिपराः स्थ भवथ अपराधिनस्तस्यापकर्तुमशक्ताः सन्तोऽनपराधाय मह्यं किमिति ईर्ष्यायुक्ताः स्थेत्युपहासः । तस्माद्यूयं भूत कथयत । अहं तस्मान्नलात् सकाशाच्छद्मना कपटेन कममपि यत्नविशेषा अद्यैव तामाच्छिनद्मि आहरामि । यत् आगमा न यदनादरकृतापराधस्य सद्भावाश्रयभूतस्तस्मात् । अविलम्बं नैव तामाहरामि गच्छामि तामनुगन्तव्यामित्यर्थः । अन्येनापराधे कृतेऽन्यस्मै द्रुह्यत इति युक्तमिति लोकरीत्युपहासः । भूत भो युष्माकमस्माकञ्चागमदा अनादरकरणात् अपराधिनीं तां नलादानयामीति वा । मह्यं । ह्

भटूहेति (पा०१।४।३१) चतुर्थी। आच्छिनत्ति। वर्त्तमानसमीप्ये लट् १३१॥

यतध्वं सहकर्त्तुं मां पाञ्चाली पाण्डवैरिव। सा

पि पञ्चभिरस्माभिः संविभज्यैव भुज्यताम् ॥१३२॥

यतध्वमिति। यूय मा सहकर्त्तुं सहकारिणं कर्त्तुं यतध्वं यत्नं कुरुत। भैमीमानेतुमहं गच्छामि यूयं मम सहायाः भवतेत्यर्थः। तत्र साहाय्ये ऽस्माकं किं फलमित्यत आह। अस्माभिरिन्द्राग्नियमवरुणैर्मया सह पञ्चभिः सा भैम्यपि संविभज्य भागकालं समानभागमेव कृत्वैवापभुज्यताम्। तथा च भवतामपि फलमस्तीति भावः। के केव। पञ्चभिः पाण्डवैः पाञ्चाली द्रौपदीव॥ पाञ्चालीदृष्टान्तेनैतस्याः पतिव्रताया बहुभिरुपभोगेन दुष्टत्वरा इत्यलौकिकत्वं परिहृतं। पाण्डवानामप्रमाणित्वात् तदानीं दृष्टान्तत्वेन कलेर्योगित्वात् भविष्यद्यज्ञानसामर्थ्याद्वचनं युक्तम्। जगत्प्रवाहानादित्वात् पाण्डवपाञ्चालीवृत्तान्तमतीतत्वादुदाहरणीकृत्यैतदुक्तमिति। पाञ्चाली। जनपदवाचिनः क्षत्रियवाचिनः पञ्चालशब्द, जनपदशब्दात्क्षत्रियादिति (पा०४।१।१६८) अपत्येऽञ् ॥ १३२ ॥

अथाऽपरिवृढः सोढुं मूर्खतां मुखरस्य ताम्। च

क्रे गिरा शराघातं भारती भारतीव्रया ॥१३३॥

अथेति। अथ पूर्वोक्तकलिवचनाकर्णनानन्तरं तामुक्तप्रकारां मुखरस्यानुचितभाषणशीलस्य कलेर्मूर्खतां सोढुं मर्षितुमपरिवृढाऽसमर्था भारती सरस्वती अर्थगाम्भीर्यात् भारया श्रेष्ठया परुषत्वाच्च तीव्रया दुःसहया गिरा कलौ शराघातं बाणव्यथामिव चक्रे बाणवत् पीडाकरं परुषवचनमूचे इत्यर्थः। भारतीव्रयेति पाठे अर्थगाम्भीर्येण दुःसहया १३३॥

कीर्त्तिं भैमी वराख्यास्मै दानमेवागमन्नमी। न

लीढं धीरवैदग्ध्यां धीरगम्भीरगाहिनी ॥ १३४ ॥

कीर्त्तिमिति। हे कले अमी देवा असौ नलाय भैमीं दातुमेव, तथा भैमीं कामयमानोऽपि इन्द्राद्यर्थं भैम्या सह दूत्यं कृतवानेवंविधोऽतिधीरः कोऽपि नास्तीति कीर्त्तिं यशः, तथा भैमीञ्च प्रत्यक्षल-

मृत इति । हे देवाः स्वयम्वरलक्षणे कर्मणि वृत्ते जाते सति किं कार्यं कुर्म्मोऽपि तु किञ्चिदिदानीं कर्त्तुं न शक्यं। पश्चात्तापमात्रं भवति न तु तज्ज्ञानं परदारत्वाद्गतशोका न कर्त्तव्य इति च । तस्मात्ता प्रति वाञ्छितं त्यक्तमित्यर्थः । यद्वयस्मात्तदा स्वयम्वरमयं यत्र तत्र नागम स्थिता । तदानीं चेत्तत्र भविष्यामस्तर्हि तथैवाकरिष्यामस्तत्रा भूदित्यर्थः । हे देवा यूयं इदानीं पुनर्भैम्या नले वृते सत्यपि कालाचितं समयोचितं कोऽस्माकमालोचित विचारं शुभं आकर्णयत । नले कृपालेशोऽपि नास्ति इति यथोक्तं तत्प्रकारमाकर्णयतेत्यर्थः । न अस्मदोद्वयार्थेति (पा०१।२।५९) बहुत्वं । आलोचितं भावे क्तः ॥१३७॥

**प्रतिज्ञेयं नले विज्ञाः कलेर्विज्ञायतां मम । तेन भैमीञ्च भूमिञ्च त्याजयामि जयामि तम् ॥ १३८ ॥**

तदेवाह । प्रतिज्ञेति । हे विज्ञाः कलममैव प्रतिज्ञा नले विषये विज्ञायतां भवद्भिरिति शेषः । इयमिति किं । अहं तेन नलेन प्रयासेन भैमीञ्च भूमिञ्च त्याजयामि शीघ्रं नाशयामि अतः एव तं जयामि इति प्रतिज्ञा मम चेतस्येव वर्तत इति भवद्भिर्ज्ञायत एव तथापि स्पष्टं मया कथ्यते, तदाकर्ण्यतामित्यर्थः । कलेममेत्यहङ्कारः सूचितः । तेन । अनुक्ते कर्तरि तृतीया । त्याजयामि जयामीति वर्त्तमानसामीप्ये भविष्यति लट् ॥ १३८ ॥

**नैषधेन विरोधं मे चण्डतामण्डतौजसः । जगन्ति हन्त गायन्तु रवेः कैरववैरवत् ॥ १३९ ॥**

नैषधमिति । चण्डतया भैमीपरित्याजनद्वाराऽतिपीडाकारित्वातिद्वियत्वेन मण्डितौजसोऽलङ्कृततेजसो मे मम नैषधेन सह विरोधं जगतीत्रयेऽपि लोका गायन्तु कीर्त्तयन्तु । कस्य किमिव । चण्डतामण्डितौजसा रवेः सूर्यस्य कैरवैः कुमुदैः सह वैरवत विरोधमिव । हन्त खेदे । अयोग्येन हीनतेजसा नलेन सह विरोधारम्भात् त्रैलोक्ये मद्व्यपयशो भविष्यति तथापि किं कुर्मः इति रे वद, अपयशः समुदयेऽपि सूर्येण कैरववैरवत् मयापि नलवैरं करिष्यते एवेति भावः ।

एतेन दर्पः सूचितः ॥ १३९ ॥

द्वापरः साधुकारेण तद्विकारमदीदिपत् । प्रणीय
श्रवणे पाणिमत्राचन्नमुचे रिपुः ॥ १४० ॥

द्वापर इति ॥ द्वापरस्तृतीययुगरूप. सहचरः तस्य कलेर्विकार नले न सह विरोधरूपं साधुकारेण साध्विति शब्दोच्चारणेन अदीदिपत् सा धूचितमेव त्वया विचारितमित्युद्दीपयामास तस्य प्रोत्साहन चकारेत्यर्थः । अथ नमुचेर्दैत्यस्य रिपुरिन्द्रो युष्माभिः साहाय्य कर्तव्यमिति कलिनोक्तस्य वचन उत्तरस्यैनैतद्द्वापारमध्येऽस्माभिर्न स्थीयत इति लौकिकाजिनपथ्यक्षुणयशाच्छ्रवणे पाणिं प्रणीय यत् त्वया विचारित तदस्माभिः श्रोतुमप्यनर्हमिति वा पाणिभ्यां कर्णौ पिधाय कलिमवोचत् । अदीदिपत् दीपेर्ण्यन्ताल्लुङि 'भ्राजभासभाषदीप' (पा०७।४।३) इत्यादिनोपधाह्रस्वविकल्प. ॥ १४० ॥

विस्मेयमतिरस्मासु साधु वैलक्ष्यमीक्षसे । यद्
तेऽल्पमनल्पाय तद्धन्ते ह्रियमात्मने ॥ १४१ ॥

विस्मेयेति । हे कले त्वं विस्मेयाश्चर्यहेतुर्मतिर्यस्यैवंविधोऽसि यस्मात्त्वमस्मासु वर्तमान वैलक्ष्यं सलज्जत्वं साधु सम्यक् प्रकारेणेक्षसे जानासि । पराशयवेदितया तव तीक्ष्णबुद्धित्वाद्वय विस्मिता. स्म इत्युपहासः । साधूचितं यद्वैलक्ष्यं तद्यस्मादीक्षसे इति वा । कथ मदस्मु वैलक्ष्यमुचितमित्याशङ्क्य समर्थयते । पुरुषोऽनल्पाय महते पुरुषायाल्प अतितुच्छ वस्तु दत्ते इति यत् स पुरुषस्तदल्पवस्तुदान कर्तृ आत्मने स्वस्मै ह्रियमेव दत्ते । महते यत् अल्प दीयते तदल्पदानमेव कर्तृ दात्रे पुरुषाय लज्जामेव दत्ते तेन तस्य लज्जैव भवतीत्यर्थ इति वा । तथा च महते नलाय अस्माभिरल्पमेव दत्तमिति विषादादस्मासु लज्जा युक्तैवेति भावः । अतितरां नलमाहात्म्यं सूचितं । एतेन दूतान्नः प्रेष्यन्ति नम्योत्तर । यद्यदि तथापीति वा योज्यं । यद्वा अनल्पाय न विद्यतेऽल्पो यस्मादिति दीनायेत्यर्थः । यदस्मादादिरल्पकर्माऽप्य धर्मकर्मादि हन्तमीन्याद्युपात्तमवचनं दत्त करोति तत्

स्वस्मै ह्रियमेव दत्ते । अधमस्य महोपालम्भयोग्यस्य तवाप्येषोपालम्भः कृत इति विषादादस्माकं वैलक्ष्यं युक्तमेवेति व्याख्येयम् । अधमायाप्यमपि उपालम्भादिप्रवृत्तौ तत् स्वस्मै ह्रियं दत्ते । अधमेन सह सम्भाषणनिषेधात् तस्योपालम्भोऽपि न कार्यं स त्वस्माभिः कृतः । तथा च पापरूपेण भवता सह सम्भाषणमस्माभिरनुचितं कृतमिति विषादादस्माकं वैलक्ष्यं युक्तमेवेति वा । इयमपि वक्रोक्तिः ॥१५१॥

फलसीमा चतुर्वर्गो यच्छतांशोऽपि यच्छति । न
लस्यास्मदुपज्ञा सा भक्तिर्मूलाग्रकेशिनी ॥१५२॥

दानात्मत्यागलक्षणमफलत्वप्रपूर्वं वैलक्ष्यमस्यैवाह—फलेति । यस्या नलभक्तेः शतांशोऽपि शततमो भागः फलस्य सीमा मर्यादाभूता निरतिशयफलरूपं चतुर्वर्गं धर्मार्थकाममोक्षरूपं यच्छति नलाय दातुं शक्नोति सास्मदुपज्ञाऽस्मदाश्रयाऽस्मद्विषया नलस्य भक्तिरग्रकेशिनी फलभूता जाता । यस्या भक्तेः शततमेनांशेन ब्रह्मादिकैरस्माभिस्तु फलरूपत्वेन चतुर्वर्गोऽपि नलाय दातुं शक्यते तस्या निरतिशयायाः परिपूर्णायाश्चतुर्वर्गादधिकतमस्य फलस्याभावादस्माकं दातुमसामर्थ्यात् सा निष्फलैव जातेत्यर्थः । निरतिशयभक्तियुक्तत्वान्नलाय चतुर्वर्गोऽप्यल्पतरफलत्वाद्दातुमयुक्तः । तादृशाय भैमीलक्षणाल्पतरफलदाने कृतेऽस्माकं लज्जा युक्तैवेति भावः । यच्छततमांशवशीकृतैरस्माभिरस्मत्सामर्थ्यं नलोऽप्यन्यस्मै जनाय फलावधि चतुर्वर्गं दातुं शक्नोतीति यावत् सा भक्तिरपूर्णा निष्फला जातेति वा व्याख्येयम् । मांऽपीति पाठे चतुर्वर्गं दत्त्वास्माकं न नलोऽपि क्रियमाणधर्मफलमर्यादां ब्रह्मार्पणं ददाति । तस्याः पुनः प्रत्यर्पणात् अस्माकञ्च साम्यमेव । किन्तु नलस्यास्मद्विषया निरतिशया दास्यमात्रस्यापि ब्रह्मणे धार्पणात् फलाभिसन्धानरहिता भक्तिर्वन्ध्या जाता । तादृशस्य भक्तिफलदानेऽस्माकमसामर्थ्यात् तया च वैलक्ष्यमेव युक्तं भवतीति व्याख्येयम् । यच्छता । सम्बन्धे षष्ठी । शतस्यांशस्तावच्छतांश इति विगृह्य तत्पूरणे डट् शततमोंऽश इति । उपज्ञा आश्रय इति साधु ॥१५२॥

भव्यो न व्यवसायस्ते नले साधुमती कले । लो
कपालविशालोऽसौ निषधानां सुधाकरः ॥१४३॥

नलेन वैरार्हो न भवतीत्याह । भव्य इति । हे कले रागद्वेषादि- राहित्येन साध्वी निर्मला मतिर्यस्य तस्मिन्नले विषये ते व्यवसायो वैरकरणोद्यमो भव्यः शुभोदर्को न । किन्तु निषधदेशानामाह्लादकत्वा त् सुधाकरश्चन्द्रोऽयं नलः, लोकपाला दिक्पालास्तद्वद्विशेषेण शालते शोभते स्वाभाविकेन शौर्यादिना तद्रूपत्वाद्वा लोकपालवन्महाशयः । अतस्तेन सह वैरं तव शुभोदर्कं न भवतीति न तत् कार्यमित्यर्थः । मते इति पाठे असाध्वी मतिर्यस्येति अकारप्रश्लेषेण कलेर्विशेषणम् । म नः कलेरिति पाठे अस्य द्वापरादेरनुमत इति व्यवसायविशेषणम्॥१४३॥

न पश्यामः कलेस्तस्मिन्नवकाशं क्षमाभृति । नि
चिताखिलधर्म्मे च द्वापरस्योदयं वयम् ॥१४४॥

एतदेव स्फुटयति । नेति । वयं तस्मिन् क्षमाभृति राज्ञि नले कले- स्त्वद्युगस्य तवावकाशं प्रवेशावसरं न पश्यामः सम्भावयामः । तथा नि चितस्य द्वापरस्य च उदयं नलपराभवसामर्थ्यं न सम्भावयामः यतो नितरां चिता अर्जिता अखिला धर्मा यत्र श्रौतस्मार्तधर्म्मानुष्ठानशी- लत्वमत्र हेतुः । तस्य धर्ममयत्वादुभयोः पापरूपत्वात्तत्रावकाशले- शोऽपि न सम्भाव्यत इत्यर्थः । यद्यपि देवा नलपराभवस्य भविष्यत्तां जानन्ति तथाप्युत्साहभङ्गद्वारा कलिनिषेध एव तात्पर्यात् अवकाशं न पश्याम इत्यूचुः । यद्वा पश्याम इति वर्तमानसामीप्ये भविष्यति ल ट्प्रयोगात् वस्तुतोऽवकाशो नास्ति विलम्बेन भविष्यतीति सूचितमि ति ज्ञेयम् । अथ च यथा सहने तितिक्षाशीले पुरुषे कलहावकाशो न निचिता सकलधर्मा रहस्ये च सन्देहस्योदयः प्रभवतीति युक्तम् ।१४४॥

सा विनीततमा भैमी व्यर्थानर्थग्रहैरहो । कथं
भवद्विधैर्बाध्या धर्मिनिर्विभ्रमैरिव ॥ १४५ ॥

भैम्यपि न बाध्येत्याह । सेति । पातिव्रत्यादिधर्मनिष्ठत्वाद्विनी- ततमा सा भैमी व्यर्था निर्हेतुका वैराचरणलक्षणोऽनर्थस्तत्र ग्रहोऽभि

नार्हति । युवामपि नार्हथ । सत्ययुगेऽधर्मलेशमस्मायनापि सम्भवेन्न तु नले। तथा त्रेतायामपि न तु भैम्यां । तथा चाद्ययुगद्वय ताभ्यां स्पर्द्धितुमपि न शक्यं, युवां पुनर्न शक्ताविति किं वाच्यमित्यर्थ इति वा॥ अथ च दृश्ययोर्युग नल स्पर्द्धितुमर्हति । गार्हपत्याहवनीयदक्षिणाग्नित्रयरूपा त्रेता च भैमीं स्पर्द्धितुमर्हति । यतः शुद्धः केवलः प्रकाश उज्ज्वलः प्रसिद्धो वा, धर्म्मः स्वभावः सौन्दर्य्यादिगुणो वा ययोर्भैमीनलयोः प्रकाशशोभालक्षणो धर्म्मो ययोरिति वा । अग्नित्रयपक्षेऽप्येकः केवलः प्रकाशस्तेज एव धर्म्मस्वभावो यस्या इति सौन्दर्य्यादिमत्त्वात् पावित्र्याच्च दृश्ययुगमग्नित्रयञ्च ताभ्यां तुल्यं भवितुमर्हतीत्यर्थः। कलिद्वापरौ युवां पुनर्न । असुन्दरत्वात् पापप्रधानत्वाच्चेत्यर्थः । अथ चैको विरुद्धधर्म्मरहितः प्रकाशो निश्चितश्च धर्म्मो यत्र तच्च ताभ्यां कलहसन्देहौ स्पर्द्धितुं नार्हतः । विरुद्धधर्म्मत्वे हि कलहसम्भवो विशेषधर्म्मप्रकाशे च सन्देहसम्भवः । तत्र त्वेकधर्म्मत्वात् प्रकाशमानधर्म्मत्वाच्च कलहसन्देहौ न सम्भवत इति युक्तमिति भावः । त्रेताग्निस्त्रितये युगे, प्रकाशश्च प्रसिद्धे स्यात्, सन्देहद्वापरौ चार्थेत्यमरः । प्रकाशधर्म्म शब्दयोः पूर्वं बहुव्रीहौ, धर्म्मादनिच् केवलात् (पा०५।४।१२४) इति समासान्तः पश्चात् पूर्वसमासः ॥ १४६ ॥

करिष्येऽवश्यमित्युक्त्वा करिष्यन्नपि दुष्यसि । दृष्टादृष्टा हि नायत्ता कार्य्ये हेतवस्तत्र ॥ १४७ ॥

करिष्य इति । हे कलेऽवश्यं निश्चितं करिष्येऽपकारमिति प्रतिज्ञावचनं यस्येदं त्वं करिष्यन्नपि कर्त्तुकामोऽपि दुष्यसि दुष्टो भवसि । अपकारस्य भविष्यत्त्वादिदानीं साक्षात्कायव्यापाराभावेऽपि मनस्यपकारकरणाभिमतत्वात् वचनेन चान्यायादिद्विविधापकसङ्गावाद् अहन्त्वाया अकरणेऽपि प्रहर्तत्वात् करिष्याम्यादिदिति । कुर्व्वाणो दुष्टो भविष्यसीति किं वाच्यमित्यपिशब्दार्थः । अथ वा कर्त्ता दुष्यत्येव प्रतिज्ञाभङ्गादिति किं वाच्यमिति । कार्यमनधिकार्य दृष्टदृष्टमानयोः तावत्तया सम्पादयितुमशक्यम् किन्तु सा तस्य समग्रकारणवशात् स्वयमेव सम्पद्यत इत्यर्थान्तरन्यासः । तथा चैव त्व-

या चित्ते धृतेऽनुदिते चेद्विविधपातकमेव भवति न तु त परामवितुं शक्नोषीति । यद्यपि त पराभवितुं शक्यसे तथापि नलाय दृष्टादृष्टसामग्र्येव तत्र प्रयोजिका न तु त्वमिति । मयैव करिष्ये मयैव कृतमित्यादिरूपा प्रतिज्ञा प्रति त्वमात्रस्य कारणत्वाभावाद् दृष्टादृष्टकारणवैगुण्येन प्रतिज्ञाभङ्गस्यापि शङ्कितत्वादिन्द्रोऽपि कर्तुमशक्तस्त्वं तु को नाम वराक इति च भावः । यद्वा दृष्टादृष्टरूपा हेतवः । दृष्टसामग्री यथा कथञ्चित् यद्यपि सम्पादयितुं शक्यते तथाप्यदृष्टसामग्री त्वया न शक्यते । तया च नलन यदि परमो धर्म्मः कृतस्तर्हि स त्वया पराभवितुमशक्य । अथाधर्म्मः कृतस्तर्हि धर्म्मवशादेव तस्य तादृशीदशा भविष्यति त्वया किं क्रियते इत्युभयथापि दोषात्, मयैव क्रियते करिष्यसे, कृतमित्यादिविकल्पना न कार्य्येति भावः । इत्युक्तेति पाठे अवश्यंवश्यः करिष्ये इत्युक्त्वाऽकारप्रश्लेषेणाकरिष्यन्नपि दुष्यसि । वाङ्मात्रेणापि पापसिद्धेः किं पुनः करिष्यन्निति । अन्यत् पूर्ववत् । कार्य्यीया । ॥ खेदमित्यर्थः । तस्मै हितमित्यर्थं इति वा ॥ १४७ ॥

द्रोहं मोहेन यस्तस्मिन्नाचरेदचिरेण सः । तत्-
पापसम्भवन्तापमाप्नुयादनयान्नतः ॥ १४८ ॥

द्रोहमिति ॥ यः पुरुषो मोहमाहात्म्येनापि तस्मिन् पुण्यश्लोके अनपकारिणि द्रोहमपकारमाचरेत् स पुरुषस्ततस्तस्मात् अनयादन्यायाद्द्रोहरूपादचिरेण तस्मात्तादृशापकरणजातात् पापात् सम्भवो यस्य त पापदुःखं प्राप्नुयात्, बुद्धिपूर्वकारी लभत इति किं वाच्यमित्यर्थ । नलद्रोहस्तस्मात् त्वया सर्वथा त्याज्य इति भावः । अनेन शापोऽपि दत्त इति ज्ञेयम् । मोहेनेत्यत्रार्थादिविशब्दो योज्य । मोहस्येन स्वामिन् अज्ञानाश्रय मूर्खतर इति वा सम्बोधन ॥ १४८ ॥

युगशेष तव द्वेषस्तस्मिन्नेव न साम्प्रतं । मयि-
ता न हितायैतद्वैरं ते वैरसेनिना ॥ १४९ ॥

युगेति । हे युगानां सत्यादीनां शेष कले तस्मिन्नले तवैव द्वेषो न साम्प्रतमयुक्त यस्माद्वैरसेनिना नलेन सह सन्तत् प्रारब्ध वैरं ते तुभ्य

हिताय न भविता शुभोदर्कं न भविष्यति । युगेपु शेप इति निर्देश
यो महमीसमासः । साम्प्रतमव्ययम् । हितयोगे तुम्यमिति चतुर्थी ॥१४९॥

तत्र यामीत्यसज्ज्ञान राजस सदि हास्यताम् । इ
ति तत्र गता मा गा राजसभादि हास्यताम् ॥१५०॥

तत्रेति । हे कले तत्र नलसमीपे पराभवार्थं यामि गच्छामीति ए
वम्भूत राजस ज्ञान रजोगुणसहित विचारात्मक ज्ञान एवासद्योजन
सद्वर्तमान इहास्मिन काले देशे वा हास्यता त्यज्यता इति, सद्वृत्तमिति
वा, इति विचार्य्येति यावत् । इति किं । तत्र राजससदि तस्या नल-
सभाया गत सन् हास्यता परिहासास्पदत्व मा गा । एव विचार्यं त
त्र गत सभ्यैरुपहास्य एव भविष्यसि । न तु नल पराभवितु शक्ष्यसी
त्येवविधो विचार परित्याज्य एवेत्यर्थः । असत्सदिति विरोधाभास ।
तत्र यामीति ज्ञानमसत अयुक्त यतो राजस । तर्हि किं कर्तव्य तत्रा
ह । इहास्मिन्नेव देशे आसता स्थीयता इत यत परावर्तनीयमि
त्यर्थः । इति असदीय ज्ञान सद्वृत्तमितीतिशब्दमावृत्य व्याख्येयम् ।
विपक्षे बाधकमाह तत्राहेन । तत्र स्वयम्वरे गतो राजसभाया स्वय
म्वरे वृत्त किमयमागत इति हास्यतामेव गमिष्यसि ॥ १५० ॥

गत्वान्तरा नल भैमी नाकस्मात्तत्र प्रवेक्ष्यसि ।
पश्चाद्क्रमसयुक्त पठ्यमान हकारवत् ॥ १५१ ॥

गत्वेति । हे कले निषधदेशान् गत्वा प्राप्य नल भैमीमन्तरा नल-
भैम्योर्मध्ये अकस्मात्शीघ्र दुरितलक्षणकारणमन्तरेण वा त्व न प्रवे-
क्ष्यसि प्रवेश कर्तुं न शक्ष्यसि । नलस्य पुण्यश्लोकत्वाद्भैम्याश्च पाति-
व्रत्यादिधर्मयुक्तत्वात् तौ पराभवितु न शक्नोषीत्यर्थः । क इव । अ
सयुक्त पूर्वं सन्धितया पृथक्कृतप्रकृतिप्रत्ययविभाग पश्चात् पठ्यमान
सहितया प्रयागादिमुच्चार्यमाणमिति यावत्, एवम्भूत पश्चात्क्रम पश्चा-
दिति शब्दरूपस्य वर्णवृन्दमन्तरा मध्ये हकारवत् हकारो वर्णो यथा
अकस्माद्विधिमन्तरेण न प्रविशतीति साधर्म्योपमा । पट्शब्दात् पञ्चा-
बहुवचने षट्चतुर्भ्यश्चेति (पा०७।१।५५) नुटि तस्मादिते आमि, स्वादि

प्रसन्नमानस्यान इति (पा०१।४।१७) पूर्वपदस्य पदत्वात् भला जशो- ऽन्त इति (पा०८।२।३९) जश्त्वेन टकारस्य डकारे न पदान्तादिति (पा० ८।४।४२) निषेधस्य अनाम्नवतीति (पा०७।४।४२) सू० १ वा ) निषेधात् ष्टुना ष्टुरिति (पा०८।४।४१) ष्टुत्वेन नाम्ना नकारस्य णकारादेशे यरो ऽनुनासिके इति (पा०८।४।४५) डकारस्यापि अनुनासिकस्य व्यवस्थितवि कल्पत्वादनुनासिकस्यात्र नित्यत्वेन णकारे जाते यद्यपि न स्वस्व रू पेण षण्णामिति पदमध्ये डकारो यथा प्रवेशं लभते तथा तथापीत्यर्थः मपीत्याशय । अन्यथा विकल्पत्वात् षड् षड्नामिति स्यात तस्माभूदि त्यत्र व्यवस्थितविभाषाऽङ्गीकरणाया । एवं हि अत्र णकार एवमन्- त्य मैत्री चेति याज्य । तथा च क्रमेण पर्य्यायेण संयुक्त षण्णामिति कम भूतशब्दमय अन्तरा डकारो यथा न प्रविशति असंयुक्तावस्था- या यद्यपि स्वं न रूपत्वावस्थान यतते तथापि संयुक्तावस्थाया नास्ती त्यर्थ इति वा । षण्णामित्यत्र प्रकृतिप्रत्ययरूपाया एकस्मादागमात्कावृत्त रूपतया डकारो यथा प्रविशति तथा त्वं प्रवेश्यसीति वैधर्म्योपमया व्याख्येय । टकारवदिति पाठे यावमाने ( ८।४।५६ ) इत्यवसान एव च स्वविकल्पात खरभावात षट्कित्यादिवत षण्णामित्यत्र खरवसान- याभावात टकारो यथा न प्रविशतीति साधर्म्योपमैव । रूपकाऽप- म् । नल भैमी । अन्तरान्तरेणेति (पा०२।३।४) द्वितीया ॥ १५१ ॥

अपरेऽपि दिशामीशा वाचमेना शचीपतेः । अ
न्वमन्यन्त किन्त्वेना नादत्त युगयोर्युग ॥१५२॥

अपर इति । अपरे दिशामीशा वरुणादय शचीपतेरेना पूर्वोक्ता वाच अन्वमन्यत इन्द्रो युक्तमाज्ञापयतीत्येवमभ्यनन्दन् किन्तु पुनर्मू- र्तें युगयो कलिद्वापरयोर्युग एनामिन्द्रगिर नादत्त नाङ्गीचक्रे । दिशा माशानामपि सम्मताया वाचि तयारसम्मते किन्तुशब्देन सूत्रतरस्वमाप्र- च्छिन्न याक्त । एना । अन्वादेशे एनादेश । आदत्त । अनास्यविहर- णत्वात्तङ् ॥ १५२ ॥

कलि प्रति कलि देवा देवान् प्रत्येकश कलि ।
सोपहास समैत्रेर्यैरित्थ व्यरचयन्मिथ ॥ १५३ ॥

कलिमिति । देवाः कलिं युगं प्रति लक्षीकृत्य कलिर्देवान् प्रत्येकशः एकैकमुद्दिश्य मिथोऽन्योन्यं समेयिवांसस्तुल्यैरक्षरैः श्लिष्टे शब्दे सोपहासं सपरिहासं यथाक्रममहितं कलिं कलहं वाग्युद्धं कृत्य वक्ष्यमाणप्रकारेण व्यरचयन् व्यरचयन् कृतवन्त कृतवान् इत्यर्थः । व्यरचयन । कोहादिकस्मादन्तस्वादश्लोकपिप्यान् सन्धाय । व्यरचयदित्यपि पाठ ॥ १५३ ॥

तवाऽऽगमनमेवाहं वैरसेनौ तया वृते । उद्वेगेन विमानेन किमनेनापि धावता ॥ १५४ ॥

इन्द्रः कलिमुत्याह । तवेति । हे कले तया वैरसेनौ वृते सति तवागमनं गमनाभावः एवाहं युक्तं । उद्वेगेन उत्कृष्टजवेन अत एव धावता शीघ्रगामिना अनेन प्रत्यक्षदृश्येन विमानेनाकाशगामिना रथेन किं ? अपि तु न किञ्चित्प्रयोजनमस्ति, अन्यस्य वृतत्वादित्यर्थः । वैरसेनानुसरेण वा सम्बन्धनीयं । अनया नलेऽवृते एव तव स्वपुरागमनं युक्तम् नलवरणानन्तरमिदानीं सर्वथा गमनं न कार्यमित्यर्थ इति वा । एतावत्पर्यन्तं किं कृतं इदानीं किमर्थमागम्यते इत्युपहासः । एतदेव एव कलिरिन्द्रं प्रत्याह । हे शक्र भैम्या नले वृते सति तव यथागमनमेवाकृतकार्यत्वादिदानीं स्वर्गं प्रत्यागमनमेव युक्तं निर्लज्जत्वमङ्गीकृत्येन्द्राण्यादीनामपि कथं मुखं दर्शयिष्यसि अपि त्वनुचितमेतत्, सर्वथा स्वर्गं प्रति न गन्तव्यमेव युक्तं इत्यर्थ इति वा । विमानेनाहङ्काररहितेनापिधा तिरोधानं तद्युक्तेन नितरां गोपितेनानेन मुखदर्शनानुमितेनोद्वेगेन निर्वेदेन किं ? अपि तु तद्गोपनं व्यर्थं धैर्यमवलम्ब्य निर्वेदो यद्यपि त्वया गोप्यते तथापि मया ज्ञात एव । अथ च भैमीनलाभ्यां वरदानार्थमेव समागतमित्यादिव्याजेन निर्वेदगोपनं क्रियते, तथापि स निर्वेदो ज्ञात एव । अभिमानशून्यत्वान्न किञ्चिदनेन निर्वेदेन साधयितुं शक्यते । तस्मात् सर्वथा दुःखं मा कार्षीरित्युपहसितवानित्यर्थः । विमाने मान्यवरणादवमानेन हेतुना य उद्वेगस्तेन प्रकटेन किं ? अपि तु न गोपयेति वा । चिन्तुतामानामिन स्वानित् मिनरामभिमानशून्य इन्द्र गोपितेन यानेन निर्वेदन किमिति वा । उद्वेगेन किं ? अनेन धावता विमानेनापि किमिति वा । अपिधा । आतवांप-

ध्रुं या नलः पीडनीय इति मत्वेऽनिष्टपापकारत्वाद्दूरं मत्वा दिवि चिप दधुः। युगद्वयमसद्वचन न शृणोति अतः परं यत्किञ्चिद्वचनं किम स्माकमिति विचार्य्य स्वर्गं गन्तुमोपुरित्यर्थः। तार्तीयीकः पूर्ववत्। तीयादीकक् (पा०४।२।८। वा०३) तृतीय । चतुरश्चयता याद्यक्षरलोप श्चेति (पा०५।२।५१ वा०१) यत् ॥ १५७ ॥

द्वापरैकपरीवारः कलिर्मत्सरमूर्च्छितः। नलं निग्राहिणीं यात्रां जग्राह ग्रहिलः किल ॥ १५९ ॥

द्वापरेति। कामादिसैन्यं परावृत्य द्वापर एवैकमद्वितीय यस्य तथा मात्सरेण नलगुणद्वेषेण मूर्च्छितो विमूढ इत्यतिमात्सरेण प्रवृद्धो वा। तथा ग्राहिला निवारणस्यानाकर्णनादाग्रहवत् कलि अवश्य नल निग्रहीष्यामीत्यवरूपा नलनिग्राहिणीं यात्रां जग्राह निवधान् प्रतस्थ इत्यर्थः। किल यस्माद्ग्रहिलस्तस्मात् प्रतस्थे उपहासे वा। एकः परी वारो यस्येति विगृह्य द्वापरैकपरीवार इति समासः। परीवार इ उपसर्गस्य घञीति (पा०६।३।१२२) दीर्घस्य। निग्राहिणीं आवश्यके णिनि. ॥ १५८ ॥

नलेष्टापूर्त्तसम्पूर्त्त्या दूरदुर्गानमुं प्रति। निषेधन्ति पथान् गन्तु विघ्नः सज्जघटे घनः ॥ १६० ॥

नलेति। नलस्य इष्टापूर्तानां यागतडागादिधर्माणां सम्पूर्तै स पूर्णत्वाद्धेतोः नितरां धर्मबाहुल्यात पापरूप प्रस्थितममुं प्रति अनु दूर नितरां दुर्गान् दुर्गमानतेन प्रवेष्टुमशक्यत्वात् निषधान् गन्तु गम नाय निषेधन् वारयन् घनो महान् निरन्तरश्च विघ्नो यत्यमानप्रकारे ण भज्जघटे सज्जते। धर्मबाहुल्य दृष्ट्वा सहसा तान् प्रवेष्टुं शक्तित इत्यर्थः। अथ च घनो मेघो जलपूर्तैः दुर्गमदेशं गन्तुं विघ्नरूपो भव- न्निषेधति इष्टञ्च पूर्तञ्चेति द्वन्द्वे. अन्येषामपि दृश्यत इति (पा०६।३। १३७) दीर्घः. ॥ १६० ॥

मण्डलं निषधेन्द्रस्य चन्द्रस्येवामल कलिः। प्राप म्लापयितुं पापः स्वर्भानुरिव सग्रहः ॥ १६१ ॥

मण्डलमिति । पापः कलिः पापग्रहमध्ये गणितत्वात् पापः स्वर्भानुरिवामलं निष्पापं निषधेन्द्रस्य मण्डलं राष्ट्रं अमलं परिपूर्णप्रकाशं चन्द्रस्य मण्डलं बिम्बमिव मग्रहः सम्यगाग्रहात् हठाद्गुहणायोगवशाद्वा स्थापयितुं विनाशयितुं ग्रसितुञ्च प्राप ॥ १६१ ॥

कियताऽपि च कालेन कालः कलिरुपेयिवान् ।
भैमीभर्त्तुरहंमानी राजधानीं महीभुजः ॥१६२॥

कियतेति । कालो युगलक्षणः समयरूपोऽथ च पापरूपत्वाच्छ्यामवर्णोऽथच दारुणत्वात् कृतान्ततुल्यः तथाऽहंमानी नलपीडनेऽहङ्कारवान् कलिः कियताऽपि भूयसा कालेन भैमीभर्त्तुर्महीभुजो नलस्य राजधानीमुपेयिवान् प्राप्तवान् । पूर्वं देशं प्राविशदिदानीं राजधानीमिति भावः । अत्र भैमीत्याख्ये कलेरभिनिवेशोऽतिप्रायो विशेषणद्वयेन सूच्यते । कियताऽल्पीयसेति वा । अहमिति ममममहंमानः सोऽस्यास्तीति सर्वं कार्यमहमेवेति मन्यते तच्छील इति वा ॥ १६२ ॥

वेदानुद्धरतां तत्र मुखादाकर्णयन् पदं । न प्रसारयितुं कालः कलिः पदमपारयत् ॥ १६३ ॥

इदानीं पुरप्रवेशविघ्नमाह । वेदानिति । तत्र पुरे वेदान् ऋगादीनुद्धरतां गुणनिकां कुर्वतां ब्राह्मणानां मुखात् पदं पदकारकल्पितसन्धिविभागरूपं पदसमूहं आकर्णयन् शृण्वन् कालः समयरूपोऽथ च पापरूपः कलिः पदमेकमपि चरणन्यासं प्रसारयितुं नापारयत् पापरूपत्वादित्यर्थः । एतेन नलपुरस्य धर्मपूर्णत्वमुक्तम् । वेदान् । न लोकेति (पा०२।३।६९) षष्ठीनिषेधः ॥ १६३ ॥

श्रुतिपाठकवक्त्रेभ्यस्तत्राकर्णयतः क्रमं । क्रमः सङ्कुचितस्तस्य पुरे दूरमवर्त्तत ॥ १६४ ॥

श्रुतीति । तत्र पुरे श्रुतिपाठका वेदाध्यापयितारस्तेषां वक्त्रेभ्यः सकाशात् क्रमं पूर्वपदपरित्यागेनोत्तरपदग्रहणादिकक्रमसंज्ञं ग्रन्थं आकर्णयतः शृण्वतोऽस्य कलेः क्रमश्चरणो गतिर्वा दूरं नितरां सङ्कुचितः क्रमाकर्णनाद्भयेन पापः पदमपि पुरस्खलितुमशक्तस्ततो देशाद् दूरं नि

पवित्रमङ्गलं प्रवेष्टुं नाशकदित्यर्थः। अन्योऽपि पिच्छिले देशे पतति ॥१६७॥

पुटपाकमिव प्राप क्रतुशुष्ममहोष्मभिः । तत्प्रत्यङ्गमिवाकर्षि पूर्त्तामिव्यजनानिलैः ॥ १६८ ॥

पुटेति । असौ कलिः क्रतुशुष्मा यागसम्बन्धी वह्निस्तस्य महोष्मभिः प्रकृष्टतापैः कृत्वा पुटाभ्यां पुटयोर्वा पाकं उभयपार्श्वयोर्यत्राहेशान्तरमग्निसंयोगमिव प्राप प्रतिगृहं यागप्राचुर्यात् वामदक्षिणपार्श्वयोर्वह्नितापैर्नितरां पीडामन्वभूदित्यर्थः । तथा पूर्तानां धार्मिकनिर्मितवापीकूपतडागादीनां कर्म यत्तद्रूपाणि व्यजनानि तेषामनिलैर्वायुभिः तस्य प्रत्यङ्गं सर्वाङ्गं अकर्त्तीव छिन्नमिवाभूत् इत्युत्प्रेक्षा । प्रत्यवयवकर्तनेन च पीडातिशयात् वारवादितरक्तस्रायुरपञ्जंनात्रेण नितरां व्यथितोऽभूदित्यर्थः । वह्निः शुष्मा कृष्णवर्त्मेत्यमरः ॥ १६८ ॥

पितॄणां तर्पणे यस्तैः कौत्साद्वेश्मनि वेश्मनि । कालादिव तिलात् कालाद् दूरमत्रसदत्र सः ॥१६९॥

पितॄणामिति । अत्र पुरे वेश्मनि वेश्मनि प्रतिगृहं ब्राह्मणादिकर्तृके पितॄणां तर्पणे जलतर्पणे विषये कौत्सात् शिष्टात् पितृप्रियात् कालात् कृष्णवर्णात् तिलात् सकाशात् स कलिः कालादिव कृतान्तादिव दूरं नितरां अत्रसत् भयमाप । तर्पणैरिति पाठे तर्पयन्तीति तर्पणैरिति वस्तु विशेषणं । तिलात् । इति जातावेकवचनम् ॥ १६९ ॥

स्नातॄणां तिलकैर्मेने स्वमन्तर्दीर्णमेव सः । कृपाणीभूय हृदयं प्रविष्टैरिव तस्य तैः ॥ १७० ॥

स्नातॄणामिति । स कलिः स्नातॄणां स्नानं कुर्वतां वैदिकानां तैस्तादूर्ध्वैर्गोपीचन्दनादिरचितैर्ललाटस्थानादिस्थैर्द्वादशभिस्तिलकैः कृपाणीभूय खड्गतामङ्गीकृत्य तस्य कलेः हृदयं विदार्य तैः प्रविष्टैरिव स्वं स्वकीयं अन्तः शरीरमध्यं दीर्णमेव शकलीभूतमेव मेने । कृपाणैर्हि विदारणं भवतीति युक्तम् । खड्गाकारांस्तिलकान् दृष्ट्वा विव्यथ इत्यर्थः ॥ १७० ॥

पुमांसं मुमुदे तत्र विदन् मिथ्यावदावदं । स्त्रियं
प्रति तथा वीक्ष्य तमथ म्लानवानयं ॥ १३१ ॥

पुमांसमिति । तत्र पुरे अयं पुमांसं मिथ्यावदावदं मृषाभाषिणं विदन् जानन् स्वमित्रलाभान्मुमुदे । अथ पश्चात्तदनन्तरं स्वस्त्रियं प्रत्युद्दिश्य तं तथालोकमाषिणं वीक्ष्य ज्ञात्वा मित्रनाशादिव दुःखवशात् म्लानवान् म्लानतां गतः । पत्नीं प्रति क्रीडायाममर्दिति दोषाभावात्स्थितोऽभूदित्यर्थः । न नर्मयुक्तं वचनं हिनस्ति स्त्रीपुंसयोरिति भारतादौ । विदन् । विदेः शतुर्वसुः (पा०७।१।३६) इत्यत्र विकल्पानुवृत्तेर्वसुनाय । एवं चतुर्दशसयोविद्याविद्वद्भिरित्यत्रापि ज्ञेयम् । वदावद । चरिचलीत्यादिना (पा०६।१।१२वा०८) द्वित्वमभ्यासस्यात्त्वं । म्लानवान् क्तवतोस्तकारस्य संयोगादेरात इति (पा०८।२।४३) नः॥ १३१ ॥

यज्ञयूपघनां जज्ञौ स पुरं शङ्कुसङ्कुलां । जनै-
र्धर्मधनैः कीर्णां व्यालक्रोडीकृतां च तां॥१३२॥

यज्ञेति । स. यज्ञयूपैः खादिरोदुम्बरपशुबन्धस्तम्भैः घना नितरां व्याप्ता तां पुरं शङ्कुभिर्लोहस्तम्भकीलैः सङ्कुलां व्याप्तामिव जज्ञौ मेने । तथा धर्मधनैर्जनैः कीर्णां तां पुरं व्यालैः सर्पैः दुष्टश्वापदैर्वा दुष्टगजैर्वा क्रोडीकृता सर्वत्र पूर्णा व्यालाः क्रोडे मध्ये यस्यास्तामेतादृशीं कृतामिव मेने । कीलसर्पादिभिर्व्याप्तं स्थानं यथा प्रवेष्टुमशक्यं तथा सा पुरी तस्य प्रवेष्टुमशक्या जातेत्यर्थः । व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः । रेफान्तो पूःशब्दस्त्रीलिङ्गः । चः समुच्चयार्थं इवार्थो वा ॥ १३२ ॥

स पार्श्वमत्राक्रन्तुं न वराकः पराकिणां । मा
सोपवासिनां छाया लङ्घने घनमस्खलत् ॥१३३॥

स इति । वराक कश्चिदपि स्थानमलाञ्जाष्टीनः स कलि. पराकिणां द्वादशरात्रोपवासकपराकाख्यकृच्छ्रविशेषव्रतचारिणां पार्श्वं गन्तुं नाशकत् । मया मासोपवासिनां कायप्रतिच्छायाया अपि लङ्घनेऽसिमार्गे तस्या अपि समीपे गन्तुं घनं निरन्तरं अस्खलत् स्खलत्पदोऽभूत् ।

तच्छायामपि द्रष्टुं नाशकदित्यर्थः । वराकः । अल्पाभिख्येति (पा०३।२।१५५) कन् ॥ १७३ ॥

आवाहितां द्विजैस्तत्र गायत्रीमर्कमण्डलात् । स
सन्निदधतीं पश्यन् दृष्टनष्टोऽभवद्भिया ॥१७४॥

आवाहितामिति । तत्र पुरे स द्विजैर्विप्रैः आगच्छ वरदेत्यादिमन्त्रैरावाहितामर्कमण्डलाद्भिया अतिशयसामर्थ्यात् सूर्यबिम्बान्निर्गत्य दिव्यरूपेण सन्निदधतीं तत्समीपमागच्छन्तीं प्रातःसन्ध्याधिदेवतां गायत्रीं पश्यन् गायत्र्याः सकाशाद्भयेन गायत्र्यैवादौ दृष्टः पश्चात्तदानीमेव नष्टोऽदृश्योऽभवत् । सन्ध्यावन्दनं कुर्वतो द्विजान् दृष्ट्वा गायत्री मां विनाशयिष्यतीति तत्स्थानात् पलाय्य गत इत्यर्थः । गायत्री सूर्यबिम्बस्था इति ध्यानम् । अर्कमण्डलादावाहितामिति वा । दृष्टनष्टः । पूर्वकालैकेति (पा०२।१।४९) समासः ॥ १७४ ॥

स गृहे गृहिणां पूर्णे वने वैखानसैर्वृते । यत्या-
धारेऽमरागारे क्वापि न स्थानमानशे ॥ १७५ ॥

स इति । स कलिर्गृहिणां गृहस्थैः पूर्णे गृहे तथा वैखानसैर्वानप्रस्थैर्वृते व्याप्ते वने तथा यतीनां परमहंसानां सन्न्यासिनामाधारे आश्रयभूते तैर्व्याप्ते अमरागारे देवालये स्थानं नानशे आश्रयं न प्राप । क्वापि कस्मिन्नपीति सर्वत्र योज्यम् । गृहिभिर्गृहे पूर्णे सतीति सप्तमी वा सर्वत्र ॥ १७५ ॥

क्वापि नापश्यदन्विष्यन् हिंसामात्मप्रियामसौ ।
स्वमित्रं तत्र न प्रापदपि मूर्खमुखे कलिः ॥१७६॥

क्वापीति । असौ कलिस्तत्र पुरे आत्मनः प्रियां इष्टां निषिद्धां हिंसां द्यूतं च स्त्रियं अन्विष्यन् न क्वापि कस्मिन्नपि देशे नापश्यत्, तथा कलहप्रियस्य तस्य स्वस्य मित्रं कलिं कलहं मूर्खाणामपि मुखे सम्भावितस्थलं न प्राप । मूर्खा अपि तत्र न कलहायन्ते । हिंसाकलहयोरभावात्तत्र स्थितिं न लेभ इत्यर्थः । अन्योऽपि यत्र मित्रस्वस्त्र्याद्यभावस्तत्र क्षणमपि न तिष्ठतीत्युक्तिः ॥ १७६ ॥

हिंसागर्वीं मखे वीक्ष्य रिरंसुर्धावति स्म सः । सा
तु सौम्यवृषासक्ता खरं दूरान्निरास तं ॥१७७॥

हिंसेति । मखे गोमेधाख्ये यज्ञे हिंसागर्वीं हिंसासम्बन्धिनीं गवीं वीक्ष्य रिरंसुर्दुष्टचित्तः स कलिः निषिद्धगोहिंसा मत्प्रियेति धावति स्म । सा तु हन्यमाना गौः पुन सौम्ये सोमदेवताकद्रव्यसाध्ये वृषे धर्मे आसक्ता तत्सम्बन्धिनी तत्साधिका सती अभिचारादिदुष्टकर्मराहित्यात् सौम्यो रमणीयः पारलौकिको धर्मस्तत्साधिका सा खरं पापरूपत्वाद्दुष्टं सह तयोरभेदात् खलं वा पापरूपं दूरादेव निरास निराचकार । अधर्मसाधनं गोहिंसादि दृष्ट्वा प्रवृत्तः पश्चाद्धर्मसाधनमग्नीषोमीयवैदिकपशुहिंसादि दृष्ट्वा मत्प्रिया हिंसा न भवतीति दूरात् परावृत्त इत्यन्वयः । मुख इति पाठे हिंसाप्रतिपादिका गौः वाणीं यज्ञमुखे वीक्ष्य अस्त्येति धावन्, रिरंसुरधावत् । सा तु वाणी सौम्यप्रतिपादिका सती तं खरम् अग्नीषोमीयं पशुमित्यादिवाक्यार्थेन मार्गेण दुःखवशान्निस्तेजस्कं दूरान्निरासेति वा । अथ च कामातुरः पुरतो खरो गर्दभः गां वीक्ष्य यद्यपि धावति तथापि सा रमणीयवृषभानुरक्ता सती विजातीयत्वाद्गर्दभं दूरान्निराकरोति । मखे यज्ञप्रारम्भ इति वा । अथ च गौर्यथा सौम्यं वृषजमनुसरति क्रूरं वृषभं त्यजति । सुकृते वृषभे वृषः इत्यमरः । हिंसागवीति नारतद्धितेति (पा०५।४।९२) टच् ॥ १७७ ॥

मौनेन व्रतनिष्ठानां स्वाक्रोशं मन्यते स्म सः । व
न्द्यवन्दारुभिर्जज्ञौ स्वशिरश्च पदाहतं ॥ १७८ ॥

मौनेनेति । स कलिः मौनव्रतनिष्ठानां वाग्यमव्रतिनां माध्यन्दिनपरोणिनां वा मौनेन वाङ्नियमेन कृत्वा स्वस्यात्मन आक्रोशं गालीप्रदानमेव मन्यते स्म । तथा वन्द्येषु नमस्कारार्हेषु गुर्वादिषु वन्दारुभिः नमस्कुर्वद्भिर्नरैः स्वशिरश्च पदाहतं चरणताडितमिव जज्ञौ अज्ञासीत् । च इवार्थो वा । वन्दारुभिः । शृवन्द्योरारुरित्यारुः (पा०३।२।१७३) । वन्द्यानिति पाठे, तद्योगे, न लोकेति (पा०२।३।६९) षष्ठीनि

वेषाद्वितीया ॥ १७८ ॥

ऋषीणां स वृसीः पाणौ पश्यञ्जाचामतामपः ।
मेने घनै रमी हन्तुं ग्रामं मामद्रिरुद्यताः ॥ १७९ ॥

ऋषीणामिति । स कलिः ऋषीणां पाणौ हस्ते वृसीः कुशासनानि पश्यन् अमी अपयः घनैर्लोहमुद्गरैर्मां हन्तुमुद्यता इति मेने । तथा आचामतां तेषामेव हस्ते आचमनार्थं गृहीता अपः पश्यन् अमी मामद्रिभिरिव भस्मसात्कुर्वन्तीति ग्रामुमिर्यति प्रमीयमाणोऽमंस्त । सकुशानिति पाठे कुशानमथ पश्यन्निरित्यर्थः । अत्र दैत्यांत कुशा एव घनतुल्याः । आचामता । छियुरुकुमुचनामिति (प ७।३।७५) दीर्घ ॥ १७९ ॥

मौञ्जीधृतो धृताषाढानाशशङ्के स वर्णिनः । रज्ज्वामी बद्धमायान्ति हन्तुं दण्डेन मां ततः ॥१८०॥

मौञ्जीति । स कलिः मौञ्जीधृतो मुञ्जतृणमेखलाधारिणः तथा धृताषाढान् पालाशदण्डधारिणो वर्णिनो ब्रह्मचारिणः एवम्भूतानाशशङ्के मेने, अमी पुरुषा रज्ज्वा मां बद्ध्वा ततो बन्धनानन्तरं दण्डेनमां हन्तुमायान्तीति । मौञ्जीधृतो धृताषाढा एते ब्रह्मचारिणो न भवन्ति किंतु मां रज्ज्वा बद्ध्वा दण्डेन हन्तुमायान्तीत्याशशङ्के इति वा । धृताषाढानिति पाठे एवम्भूतान् ब्रह्मचारिण इति नाशशङ्के किंत्विदमुक्तरीत्या । पालाशो दण्ड आषाढः । वर्णिनो ब्रह्मचारिण इत्यमरः । मौञ्जी । विकारेऽण् । वर्णोऽस्त्येषां ब्रह्मचारिणामिति वर्णिनः ॥ १८० ॥

दृष्ट्वा पुरः पुरोडाशमासीद्दुःखासदुर्मनाः । मत्वा नः फणिनीस्तत्र स मुमोचाशु च स्रुचः ॥ १८१॥

दृष्ट्वेति । स तत्र पुरोऽग्रेऽश्मप्रकारान् पुरोडाशं अष्टादशकपालादिसंस्कृत पशुशरीरावयव दृष्ट्वा तनुसंताकरूपमिव दुर्मना दुःखित आसीत् । तथा स्रुचः सर्पफणाकारपुरोभागा वैकङ्कतादिरूपाः फणिनी सर्पिणीर्मत्वाऽसौ मुमोच दर्शनक्रिया करोदित्यर्थः । पुरोडाशोऽकारान्तः । पुरोडाशभुजामिष्टमिति माघः ॥ १८१ ॥

मुमुदे मदिरादानं विन्दन्नेष द्विजन्मनः । दृष्ट्वा सौत्रामणीमिष्टिं तं कुर्वन्तमदूयत ॥ १८२ ॥

मुमुद इति । एष द्विजन्मनो ब्राह्मणस्य मदिरादानं मदिरास्वीकारं विन्दन् जानन् पश्यन् अयं महापातकीति बुद्ध्या मुमुदे । अनन्तरं च सौत्रामणीमिष्टिं इन्द्रदेवताकं यागं कुर्वन्तं द्विजं दृष्ट्वाऽदूयत । सौत्रामण्यां सोमग्रहान् सुराग्रहांश्च गृह्णातीति श्रुतेर्मदिरादानस्य वैधत्वाद्ब्रह्मण्यत्वविनाशादिव खिन्न इत्यर्थः । सौत्रामणीति देवतार्थे च स्वस्थनाम्नि चाऽणि ञ्णिति (पा०६।४।१६७) प्रकृतिभावः ॥ १८२ ॥

अपश्यद्यावतो वेदविदां ब्रह्माञ्जलीनसौ । उदडीयन्त तावन्तस्तस्यास्याञ्जलयो हृदः ॥१८३॥

अपश्यदिति । असौ वेदविदां यावतो यावत्संख्याकान् बहून् ब्रह्माञ्जलीन् ब्रह्माध्ययनसमये क्रियमाणान् हस्तस्वरकल्पनार्थं संयोजितान् करपुटान् वा सूर्योपस्थायिना गायत्रीमन्त्रजपाञ्जलीन्,

ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः ॥

इति मनूक्तलक्षणान् करपुटानपश्यत् तावन्तस्तस्य कलेः हृदः सकाशाद्दास्याञ्जलयोरक्तपूर्णा अञ्जलयः उदडीयन्त आपतिता निर्गताः । तद्दर्शनमात्रेण नितरां विदीर्णं हृदयोऽभूदित्यर्थः । तदस्रेति वा पाठः सम्यक्त्वः ॥ १८३ ॥

स्नातकं घातकं जज्ञे जज्ञौ दान्तं कृतान्तवत् । याचंयमस्य दृष्ट्यैव यमस्येव बिभाय सः ॥१८४॥

स्नातकमिति । स विद्याव्रतस्नातकं उभयस्नातकं च स्वस्य घातकं विद्याव्रतयोरिति जज्ञे मन्ये । तथा दान्तं तपःक्लेशसहं जितेन्द्रियं नरं कृतान्तवत् यमस्येव भयहेतुं जज्ञौ ज्ञातवान् । तथा याचंयमस्य मौनिनो दृष्ट्यैव दर्शनमात्रेण मौनिकर्तृकस्वकर्मककर्मौनिकर्म दर्शनेनैव वा बिभाय । कर्मेव यमस्येव । यमकर्तृकस्वकर्मकस्वकर्तृकयमकर्म दर्शनेन वा । यमेन दृष्टेन यथा भयं तथा मौनिना इत्यर्थः । स्नातक-

ष्मिंतजपमालिकासु वर्त्तमानानां पद्माक्षादिबीजानां जपगणनार्थमाकर्षणं तस्य दर्शनाद्धेतोर्जीवानां प्राणानामाकृष्टिराकर्षणं तया जातानि कष्टानि दुःखानि अन्वभूत् । यस्माद्विपरीतदृक् विरुद्धदर्शी । सर्वं हितधर्मं सहितत्वेन जानानस्तादृग्धर्मं दर्शनमात्रेण महद्दुःखमन्वभूदित्यर्थः । अथ च विपरीतदर्शनशीलत्वाद्दोजेत्यत्र व्यञ्जनमात्रव्यत्ययेन जपवी. सावर्ण्येन च जीवेति भवतीति जीवाकृष्टिकष्टानुभवनं युक्तं १९०॥

त्रिसन्ध्यं तत्र विप्राणां स पश्यन्नघमर्षणं । व
रमैच्छद् दृशोरेव निजयोरपकर्षणं ॥ १९१ ॥

त्रिसन्ध्यमिति । स तत्र त्रिसन्ध्यं प्रातर्मध्याह्नसायाह्नरूप सन्ध्यात्रयमभिव्याप्य विप्राणां ऋतञ्चेत्यघमर्षणं ऋग्भिर्नासापर्शाभिमन्त्रितचुलुकोदकं तृप्रक्षेपणोदकं वा पश्यन् निजयोर्दृशोरपकर्षणं उन्मूलनमेव वरं श्रेष्ठमिति ऐच्छत् । मदीयनेत्रे यदि कोऽप्युदमूलयिष्यत् तदैतद्दुःखमूलं नाद्रक्ष्यतां । तस्मान्नेत्रोन्मूलनमेव वरमिति मेन इत्यर्थः । तदपि दृष्ट्वा दुःखितोऽभूदिति भावः । अघमर्षणादर्शनव्यथा नेत्रापकर्षव्यथयातुल्या । त्रिसन्ध्यं । अत्यन्तसंयोगे द्वितीया ॥ १९१ ॥

अद्राक्षीत् तत्र कश्चिन्न कलिः परिचितं क्वचित् ।
भैमीनलव्यलीकाणुप्रश्नकामः परिभ्रमन् ॥१९२॥

अद्राक्षीदिति । भैमीनलयोर्व्यलीकस्यानृतस्याणु दोषलेशमपि प्रश्नकामः प्रष्टुं वाञ्छन् अत एव तत्र पुरे कपटस्वामिग्रणवेषणार्थं परिभ्रमन् परितो विचरन् स कलिः क्वचिदपि स्थाने कञ्चिदपि स्वस्य परिचितं जिनतपस्व्यादिमिव नाद्राक्षीत् । नलेन भैम्या वा तत्रस्थेन जनेन वा कृतेषु क्वचिदपि केषुचिदपि महापातकेषु मध्ये किञ्चिदपि परिचितं पातकं नाद्राक्षीत् । त्वया भैमी नलोऽन्यत्र लोकैर्वा दृष्टः किमिति कलिः पृच्छति । तदेकमपि पापं नास्त्येवेति भाव इति वा ॥१९२॥

तपःस्वाध्याययज्ञानामकाण्डाद्दृष्टतापसः । स्व
विदुषां श्रियं तस्मिन् पश्यन्नुपतताप सः॥१९३॥

तप इति । पञ्चाग्निसाधनादि तप, वेदपाठरूपः स्वाध्यायः, देवतोद्देशेन द्रव्यत्यागो यागो यज्ञः, एषां स्वस्य पापरूपत्वाद् विद्विषां वैरिणां तस्मिन् पुरे श्रियं समृद्धिं बाहुल्यं पश्यन् अकाण्डं निष्कारणमेव द्विष्टस्तापसो येन स कलिः उपततताप अतिदाहमापातिदुःखितोऽभूदित्यर्थः । अन्योऽपि स्ववैरिलक्ष्मीं पश्यन् पतप्यते । मन्त्रार्थतया स्वाध्यायस्य अभ्यर्हितत्वात् पूर्वं निपातः ॥ १९३ ॥

**कम्रं तत्रोपनम्राया विस्रस्या वीक्ष्य तुष्टवान् ।**
**स मस्तौ तं विनाध्याय वामदेव्यारयुपासकं ॥ १९४ ॥**

कम्रमिति । स तत्र मुनेः उपनम्रायाः उपासकस्य समीपमागत्य स्थितायाः स्वजातायाः विजातीयायाः गम्यायाः अगम्यायाः वा विस्रस्याः स्त्रियः कम्रं कामुक न सम्भुञ्जानं कञ्चन नर वीक्ष्यायं महापातकी म माश्रयो भविष्यतीति बुध्वा तुष्टवान् । अथ पश्चाद्विचारणायां क्रियमाणायां त कम्र वामदेवेन मुनिना दृष्टं ब्रह्मसाम कयानश्चित्रमित्यादि वामदेव्य नाम साम तस्य ब्रह्मविद्याया अभ्युपासकं विभाव्य मत्वा म स्लौ दुःखितोऽभूत् । वामदेव्योपासने सर्वाः स्त्रिय उपसीदन्तीति श्रुति दृष्टं सामेत्यर्थे, वामदेवाद्‌ यड्यताविति (पा०४।२।९) सूत्रः ॥ १९४ ॥

**वैरिणी शुचिता तस्मै न प्रवेशं ददौ भुवि । न**
**वेदध्वनिरालम्बमम्बरे विततार च ॥ १९५ ॥**

वैरिणीति । शुचिता लोकानां बाह्याभ्यन्तरशुचिता मनः शुद्धिः गोमयगन्धानुलेपनजनिता च शुचिता भुवि प्रवेशं तस्मै न ददौ । यस्माद शुचेस्तस्य वैरिणी । नगरमध्ये सर्वेषां जनानां भूमेश्च शुचित्वात् स्थातुं नाशकदित्यर्थः । तथा वेदध्वनिरम्बरे शब्दाश्रये नगरसम्बन्ध्य परितनाकाशदेशे आलम्बमाश्रयं न विततार । अम्बरस्य वेदध्वन्याप्तत्वात् तत्रापि स्थातुं नाशकदित्यर्थः । चः समुच्चये । अन्योऽपि वैरिणे स्थान न ददाति ॥ १९५ ॥

**दर्शस्य दर्शनात् कष्टमाग्निष्टोमस्य चानशे । जु**
**घूर्णे पौर्णमासेक्षी सामं सोऽमन्यतान्तकं ॥ १९६ ॥**

दर्शस्येति । दर्शस्यामावास्यायागस्य अग्निष्टोमयागस्य च दर्शनात् कष्ट महद्दुःखमानशे प्राप । तथा पौर्णमासं यागमीक्षते एवयोल सन् ग़ुपूर्णो बभ्राम । तद्दर्शनेन मुमूर्च्छेत्यर्थः । सोमयागं तु अन्तकाले यामन्यत । तद्दर्शनान्मरणमेवाभ्यभूदित्यर्थः । ह्यन्यस्यापि ज्वरादिपीडा पश्चान्मूर्च्छा अनन्तरं मरणं भवति ॥ १९६ ॥

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जिनाः । ना पश्यत् सोऽग्निनिर्मुक्तान् जीवन्मुक्तानवैक्षत ॥१९७॥

तेनेति । तेन कलिना वीरान् शूरान् घ्नन्तीति धर्मधर्मजीविनो धार्मिका अदृश्यन्त । वीरान् अग्नीनाधारयन्तः घ्नन्तीति वीरहणो जिना न दृष्टा । शूरा एव येऽहंन्यन्ते न तु सदाचारा तादृशा महावीरा एव तत्र तेन दृष्टा इत्यर्थः । यद्वा वीरयते शूरो भवति तेजस्वी वह्निस्त घ्नन्त्युपेक्षया नाशयन्तीति वीरहणो महाग्नयस्ते पुनर्न दृष्टाः । सर्वोऽपि गृहस्थ आग्निक एव तत्रेत्यर्थः । तथा स अग्निनिर्मुक्तान् येषु सुप्तेषु सूर्योऽस्तमेति तादृशान् सूर्यास्तमयसमये निद्रितान् अनाचारास्तत्र नापश्यन् । किन्तु जीवन्तश्च ते मुक्ताश्च तान् विषयपरित्यागिनो ब्रह्मज्ञानिनोऽवैक्षत । वीरघ्ना वीरहननयोग्या दृष्टा न तु ये वीरान् हतवन्तस्ते दृष्टाः । वीरमारणमपि तत्र राष्ट्रे न क्रियते इत्यर्थः इति वा

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ।

अंशुमानभिनिर्मुक्ताभ्युदितौ तु यथा क्रमम् ॥

इत्यमरः । वीरघ्ना । मूलविभुजादित्वात् कः ॥ १९७ ॥

स तुतोषाग्निनो विप्रान् दृष्ट्वा स्पृष्टपरस्परान् । होमशेषीभवत्सोमभुजस्तान् वीक्ष्य दूनवान् ॥१९८॥

स इति । स विप्रान् स्पृष्ट परस्परं येऽत्तान्न्यान्यस्पर्शिनो ऽग्नतो भुञ्जानान् दृष्ट्वा तुतोष । उच्छिष्टाना मिथः स्पर्शनिषेधाच्छुद्धतिक्रमका रिण स्यात्रपतन सम्भाव्य हृष्ट इत्यर्थः । अनन्तरं होमशेषीभवत् सोमभुज होमावशिष्टं सोमस्त भुञ्जते सोमभक्षणं कुर्वाणास्तान् वीक्ष्य विषाद्य दूनवान् व्यथितोऽभूत् । न सोमेनोच्छिष्टा भवन्तीति श्रुतेः ।

दर्शसेति। दर्शस्यामावास्यायागस्य अग्निष्टोमयागस्य च दर्शनात् कष्टं महद्दुःखमानशे प्राप। तथा पौर्णमासं यागमीहते एवंशीलः सन् सुघूर्णं बभ्राम। तद्दर्शनेन मुमूर्छेत्यर्थः। सोमयाग तु अन्तकमेवामन्यत। तद्दर्शनान्मरणमेवाभ्वभूदित्यर्थः। अन्यस्यापि ज्वरादिपीडा पश्चान्मूर्छा अनन्तर मरण भवति॥ १९६॥

तेनादृश्यन्त वीरघ्ना न तु वीरहणो जिनाः। ना पश्यत् सोऽग्निनिर्मुक्तान् जीवन्मुक्तानवैक्षत ॥१९७॥

तेनेति। तेन कलिना वीरान् शूरान् घ्नन्तीति क्षत्रधर्मजीविनो धार्मिका अदृश्यन्त। वीरान् श्रेष्ठानाचारवतो घ्नन्तीति वीरहणो जिना न दृष्टा। शूरा एव वैहंन्यन्ते न तु सदाचाराः तादृशा महावीरा एव तत्र तेन दृष्टा इत्यर्थः। यद्वा वीरयते शूरो भवति तेजस्वी वह्निस्तं प्रत्युपेक्षया नाशयन्तीति वीरहणो महाऽनयस्ते पुनर्न दृष्टाः। सर्वोऽपि गृहस्थ आग्निक एव तत्रेत्यर्थः। तथा स अग्निनिर्मुक्तान् येषु सुप्तेषु सूर्योऽस्तमेति तादृशान् सूर्यास्तमयसमये निद्रितान् अनाचारास्तत्र नापश्यन्। किन्तु जीवन्तश्च ते मुक्ताश्च तान् विषयपरित्यागिनो ब्रह्मज्ञानिनोऽवैक्षत। वीरघ्ना वीरहननयोग्या दृष्टा न तु ये वीरान् हतवन्तस्ते दृष्टाः। वीरमारणमपि तत्र राष्ट्रे न क्रियते इत्यर्थ इति वा

सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च।
अंशुमानभिनिर्मुक्ताभ्युदितौ तु यथा क्रमः॥

इत्यमरः। वीरघ्ना। मूलविभुजादित्वात् कः॥ १९७॥

स तुतोषाग्नो विप्रान् दृष्ट्वा स्पृष्टपरस्परान्।
होमशेषीभवत्सोममुजस्तान् वीक्ष्य दूनवान् ॥१९८॥

स इति। स विप्रान् स्पृष्ट परस्पर यैस्तानन्योन्यस्पर्शिनोऽश्नतो भुञ्जानान् दृष्ट्वा तुतोष। तच्छिष्टानां मिथः स्पर्शनिषधात्तदतिक्रमस्तारित्य स्वाश्रयत्वेन सम्भाव्य तुष्ट इत्यर्थः। अनन्तर होमशेषीभवत् सोमभुज होमावशिष्टः सोमस्त भुञ्जते सोमलताचूर्णं भुञ्जानास्तान् वीक्ष्य विषाद्य दूनवान् व्यथितोऽभूत्। न सोमेनोच्छिष्टा भवतीति श्रुतेः।

हीनमुख सन् प्रद्रवत् तस्मात् प्रदेशाद्दूरं पलायाञ्चक्रे । दीक्षितो न ददाति न जुहोतीत्यादिश्रुतेः । नित्यनैमित्तिककर्मत्यागस्य वैधत्या-द्दोषाभावात् सतोऽपि पलायित इत्यर्थः । नैमित्तिक । आगतार्थे भ-वार्थे वा ठक् ॥ २०१ ॥

आनन्दं निरीक्ष्याय पुरे तत्रात्मघातिनः । सद्र्व्
स्वारस्य यज्वानमेन दृष्ट्वा ऽथ विव्यथे ॥२०२॥

आनन्देति । अथ तत्र पुरे आत्मघातिनः कश्चन निरोत्यानन्दं । सर्वं त एवास्मान् गोपायेदिति विप्रतिक्रमात् पापकार्यं नयाश्रय स्यादिति बुद्ध्या जहर्षेत्यर्थः । अथ विचारणाया सत्या एनमात्मघा-तिनं नाम्ना सर्वस्वारस्य यज्ञस्य यज्वानं यजमानं दृष्ट्वा ज्ञात्वा विव्य-थे । आसन्नमरणो ह्यचिकित्स्यरोगार्तस्तत्राधिकारी । सोऽन्त्येष्टौ सर्व-स्वाराख्ये यज्ञे आत्मानमेव पशुमन्त्रैः संस्कृत्य पातयित्वा यज्ञभागमर्प-यतीति श्रुतिः । वैधत्वादात्मघात दोषाभावात् व्यथित इत्यर्थः । आ-त्मघातिन । ताच्छील्ये णिनिः ॥ २०२ ॥

क्रतौ महाव्रते पश्यन् ब्रह्मचारीत्वरीरतम् । जज्ञे
यज्ञक्रियामज्ञः ॥ नायडाकायडतायडव ॥२०३ ॥

क्रताविति । स महाव्रताख्ये क्रतौ ब्रह्मचारी इत्वरी च तयोरतं मैथुनं पश्यन् यज्ञक्रिया भण्डानामसभ्यभाषणादिव्यापारशीलानामका-ण्डताण्डवमसमयाहृतनृत्यमिव जज्ञे मेने । यताऽसौ मूढः । भण्डा यथा बहुजनसमक्षं गुह्यादि प्रकाशयन्ति तथा द्विवेव बहुजनसमक्ष-शीलव्यापारकरणात् यागकर्म भण्डव्यापारतुल्यमिति। यज्वान सर्व-ऽप्यसभ्या इति मेने इत्यर्थः । महाव्रते ब्रह्मचारिपुंश्चल्योः सम्प्रवाद इ-त्युपनिषत । इति तच्छीलेत्वरी स्वैरिणी, इणनशोति (पा०३।२।१६३) क्वरपि तुकिच टिड्ढाणञिति (पा०४।१।१५) ङीप् ॥ २०३ ॥

यज्वभार्याश्वमेधाश्वलिङ्गालिङ्गवराङ्गता । दृष्ट्वा
चष्ट स कर्णौ श्रुतेर्भयहमपण्डितः ॥ २०४ ॥

यज्वेति । स यज्वनो यजमानस्य भार्याया अश्वमेधाख्यस्य यज्ञस्य

द्यस्तस्य लिङ्गत्वाल्लिङ्गत्वेनशील चराङ्ग गुह्य यस्यास्तस्या भावस्तत्ता ता दृष्ट्वा श्रुतेर्वेदस्य कर्त्तारं जगत्तमाचष्ट अकथयत् द्वापरस्याग्र इत्यर्थं । उ न्मत्तत्वादात्मान मत्येव वा । यतोऽपविद्ध शास्त्रानुसारिपवित्रबु- द्धिरहित ।

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ॥

आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभि ॥

इति राजाज्ञायत्रिर्विचार वेदार्थोऽनुष्ठेय । अश्वमेधप्रकरणे ऽश्वस्य शि श्न गृहित्वा उपस्थे निधत्ते इत्यादि श्रुते कर्त्ता जगत इति श्रुतिकर्त्तु- र्भण्डत्वाभिधानात्मूर्खं ॥ २०४ ॥

अथ भीमजया जुष्टं व्यलोकत कलिर्नलं । दुष्ट दृग्भिर्दुरालोकं प्रभयेव प्रभाप्रभु ॥ २०५ ॥

अथेति । अथैव पुरपरिभ्रमणशादनन्तरं कलिर्भीमजया भैम्या जुष्ट प्रीत्या सेवितं नल व्यलोकत । किमिव प्रभया सज्ञादेव्या ऽपयासहिते योजुष्ट प्रभाप्रभु सूर्यमिव । किम्भूतमुभय । दुष्टा मत्सरादिदोषदु- ष्टता दृग्बुद्धिर्येषां तै पापलोकैर्दुरालोक । पुण्यश्लोकत्वात् पतिव्रतया तया च युक्तत्वात् कलिप्रकृतिभि सुखेन द्रष्टुमशक्य, काचकामलादि दोषदुष्टदृग्भिर्दुर्दर्शश्च । प्रकृष्टा भा कायकान्तिर्यस्या इति भैमीविशेषणञ्च प्रकृष्टया कायकान्त्या यामिभिर्दुरालोक खलु, तद्योगे च न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद्दुष्टदृग्भिरिति तृतीया ॥ २०५ ॥

तयोः सौहार्दसान्द्रत्वं पश्यन् शल्यमिवानशे । स मर्च्छेदमिवानर्च्छ ■ तन्नर्मोक्तिभिर्मिथः ॥ २०६ ॥

तयोरिति । स तयोर्भैमीनलयो सौहार्दसान्द्रत्वं अन्योन्यानुरागो- त्कर्षं पश्यन् शल्यमिव हृदि नाराचव्यथामिवानशे प्राप । तत्तुल्यदु खो ऽभूदित्यर्थः । तथा मिथोऽन्योन्य तयो नर्मोक्तिभिः क्रीडाकल्लोले मो स्वाभिकुलबुध्यमादिभिरनुभाये कृत्वा मर्मच्छेदमिव प्राणहरणशरीराव यवकर्त्तनमिव आनर्च्छ प्राप । सौहार्दसान्द्रत्वस्य कारणत्वादालिङ्गना- दिमंनवधेकार्यत्वात्र पौनरुक्त्यशङ्का । सौहार्द । युवादित्वादणि च

पि. सूत्रेण (पा०७।३।१९) वस्युभयपदवृद्धिः ॥ २०६) ॥

अमर्यादात्मनो दोषात्तयोस्तेजस्विताुणात् । स्प्रष्टुं दृष्ट्वाप्यनीशस्तौ तस्मादप्यचलत् कलिः ॥ २०७ ॥

अमर्यादेति । कलिः अमर्यात् नैमीनलम्रीतिमर्मायहनशीलत्वरूपा द्दोषात्, तथा आत्मनो महापातकादिरूपाद्दोषाद्दुर्निकाश्रयणाशक्तेः, । तथा तयोर्नैमीनलयोस्तेजस्वितागुणात् सौन्दर्यातिशयात् सामतेजस-साधर्म्यीयत्वरूपाद्गुणादित्येवं हेतुत्रयात् तौ नैमीनलौ न परं मनसा किं दृष्ट्वापि न पुनरङ्गेनापि स्प्रष्टुमनीशोऽसमर्थः किं पुनर्हस्तादिना । एवम्भूतौ यतोऽतस्तस्माज्जलाशयात् प्रासादादपि सकाशात् कलिर्निर्गतः । एवंविधौ तौ दृष्ट्वा तत्रापि प्रवेष्टुमशक्तस्ततोऽपि प्रस्थित इत्यर्थः । अन्योऽपि मलिनस्तेजस्विनं दृष्ट्वा वीक्षितुमशक्तस्ततः पलायते ॥२०७॥

अगच्छदाम्रयान्वेषी नलद्वेषी स निश्वसन् । अभिरामं गृहारामं तस्य रामसमश्रियः ॥ २०८ ॥

अगच्छदिति । नलद्वेषी नलद्वेषपरः अत एव तत्परामर्शार्थं आश्रयान्वेषी निवासं मृगयमाणः कुत्रचिदपि तदलाभाद्दुःखादमर्षेण च निश्वसन् स कलिः रामेण श्रीरामेण समा तुल्या श्रीः शोभा सम्पद् यस्य तस्य नलस्याभिरामं वृक्षादिसमृद्धिमत्त्वाद्रमणीयं गृहारामं प्रासादसमीपवर्तिक्रीडावनं अगच्छत् गतवान् । समीपे स्थितौ क्रियमाणायां नलदोषविचारः सुकर इति गृहाराम प्राप्तवानित्यर्थः । श्रीरामसाम्ये नलस्य पावित्र्यं सौन्दर्यं सम्पदाधिक्यं ज्ञाविराज्यपरित्यागश्चेति सूचितं । तदानीं रामस्य भाविस्वे कल्पभेदया भूतत्वात् प्रवाहस्यानादित्वया वा भूतत्वाद्दुपमा युक्तैवेति ज्ञेयं ॥ २०८ ॥

रक्षिलक्षावृतत्वेन वाधनं न तपोधनैः । मेने मानी मनाक् तत्र स्वानुकूलं कलिः किल ॥२०९॥

रक्षीति । कलिः तत्र पुरे रक्षिणां लक्षं बहुस्तेन यद्वृतत्वं परिवेष्टि-

द्यस्तस्य लिङ्गमालिङ्गत्येवंशीलं वराङ्गं गुह्यं यस्यास्तस्या भावस्तत्ता ता दृष्ट्वा श्रुतेर्वेदस्य कर्तारं जरठमाचष्ट अकथयत् द्वापरस्याग्र इत्यर्थः । त स्मत्तत्वादात्मानं मत्वैव वा । यतोऽप्रविष्टतः शास्त्रानुसारिप्रविष्टबु-द्धिरहितः ।

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ॥
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥

इति राजाज्ञावन्निर्विचारं वेदार्थोऽनुष्ठेयः । अश्वमेधप्रकरणे ऽश्वस्य शिश्नं महिष्या उपस्थे निधत्ते इत्यादि श्रुतेः कर्ता जरठ इति श्रुतिकर्तुर्जरठत्वाभिधानान्मूर्खः ॥ २०४ ॥

अथ भीमजया जुष्टं व्यलोकत कलिर्नलं । दुष्ट
दृग्भिर्दुरालोकं प्रभयेव प्रभाप्रभुं ॥ २०५ ॥

अथेति । अथैवं पुरपरिभ्रमणपश्चादनन्तरं कलिर्भीमजया भैम्या जुष्टं प्रीत्या सेवितं नलं व्यलोकत । कमिव प्रभया सवादेव्या ऽपयाश्लिष्टो जुष्टं प्रभाप्रभुं सूर्यमिव । किम्भूतमुभयं । दुष्टा मत्सरादिदोषोपहता दृग्बुद्धिर्येषां तैः पापलोकैर्दुरालोकं । पुण्यश्लोकत्वात् पतिव्रतया तया च युक्तत्वात् कलिप्रभृतिभिः सुखेन द्रष्टुमशक्यं, काचकामलादिदोषदुष्टदृग्भिर्दुर्दर्शं च । प्रकृष्टा भा कान्तिर्यस्या इति भैमीविशेषणं वा प्रकृष्टया कान्त्या पापिभिर्दुरालोकं खलु, तद्योगे च न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद् दुष्टदृग्भिरिति तृतीया ॥ २०५ ॥

तयोः सौहार्दसान्द्रत्वं पश्यन् शल्यमिवानशे । स
मर्च्छेदमिवानर्च्छ स तन्नर्मोक्तिभिर्मिथः ॥२०६॥

तयोरिति । स तयोर्भैमीनलयोः सौहार्दसान्द्रत्वं अन्योन्यानुरागोत्कर्षं पश्यन् शल्यमिव हृदि नाराचव्यथामिवानशे प्राप । तत्तुल्यदुःखोऽभूदित्यर्थः । तथा मिथोऽन्योन्यं तयोः नर्मोक्तिभिः क्रीडाकल्लोलैः प्रीत्यालिङ्गनचुम्बनादिभिरनुभावैः कृत्वा मर्मच्छेदमिव प्राणहरणशरीरावयवकर्तनमिव आनर्च्छ प्राप । सौहार्दसान्द्र्यस्य कारणत्वादालिङ्गनादिनर्मसविकार्यत्वाच्च पौनरुक्त्याभावः । सौहार्दं । युवादित्वाद्भावे अ

वि, हृद्भग (पा०७।३।१९) इत्युभयपदवृद्धिः ॥ २०६ ॥

श्रमर्यादात्मनो दोषाद्वयोस्तेजस्विताग़ुणात् ।
स्प्रष्टुं दृशाप्यनीशस्तौ तस्मादप्यचलत् कलिः
॥ २०७ ॥

अमर्यादेति । कलिः अमर्यात् भैमीनलप्रीतिमनोसहनशीलस्यरूपा द्दोषात्, तथा आत्मनो महापातकादिरूपाद्दोषाद्दार्मिकाश्रयणाशक्तेः, । तथा तयोर्भैमीनलयोस्तेजस्विताग़ुणात् सौन्दर्यातिशयात् क्षात्रतेजस्याधर्षणीयत्वरूपाद्गुणादित्येवं हेतुत्रयात् तौ भैमीनलौ न परं मनसा किं दृशापि न पुनरङ्गेनापि स्प्रष्टुमनीशोऽसमर्थः किं पुनर्हस्तादिना । एवम्भूतौ यतोऽतस्तस्मान्नलावासात् प्रासादादपि सकाशात् कलिर्निर्गतः । एवंविधौ तौ दृष्ट्वा तत्रापि स्थातुमशक्तस्ततोऽपि निःसृत इत्यर्थः । अन्योऽपि मलिनस्तेजस्विनं दृष्ट्वा स्थातुमशक्तस्ततः पलायते ॥२०७॥

अगच्छदाश्रयान्वेषी नलद्वेषी स निःश्वसन् । अ
भिरामं गृहारामं तस्य रामसमश्रियः ॥ २०८ ॥

अगच्छदिति । नलद्वेषी नलद्वेषपरः अत एव तत्पराभवार्थं आश्रयान्वेषी निवासं मृगयमाणः कुत्रचिदपि तदलाभाद्दुःखादनर्थेन च निःश्वसन् स कलिः रामेण श्रीरामेण समा तुल्या श्रीः शोभा सम्पद्व यस्य तस्य नलस्याभिरामं वृक्षादिसमृद्धिमत्त्वाद्रमणीयं गृहारामं प्रासादसमीपवर्तिक्रीडावनम् अगच्छत् गतवान् । समीपे स्थितो क्रियमाणायां नलदोषविचारः सुकर इति गृहारामं प्राप्तवानित्यर्थः । श्रीरामसाम्ये नलस्य पावित्र्यं सौन्दर्यं सम्पदाधिक्यं राज्यपरित्यागश्चेति सूचितं । तदानीं रामस्य भावित्वे काव्यपेक्षया भूतत्वात् प्रवाहस्थानादितया वा भूतत्वादुपमा युक्तैवेति ध्येयं ॥ २०८ ॥

रक्षिलक्षकृतत्वेन बाधनं न तपोधनैः । मेने मा
नी मनाक् तत्र स्वानुकूलं कलिः किल ॥२०९॥

रक्षीति । कलिः तत्र पुरे रक्षिणां लक्षं सङ्ख्यस्तेन यद्भृतत्वं परिवेष्टि-

तत्वं तेन हेतुना प्रवेष्टुमशक्यत्वात्तपोधनैः कृत्वा न बाधयतीति न बाधनमेवमुक्तं मेने विशेषणबलाद्विशेष्याक्षेपात् तमारामं स्वहितं मेन इत्यर्थः । यतो मानी अभिमानवान् । नन्वपराभवार्थं तत्रैव निवास याच्ञामद्वदित्यर्थः । किल प्रसिद्धौ । रक्षितृकृतत्वेनैव बाधकं न पुनस्तपोधनैर्बाधकमतस्तत्र पुरे तमाराममेव मनाक् स्वहितं मेने इत्यर्थः । रक्षकबाधे सत्यपि अदृश्यतयापि स्वस्य प्रवेष्टुं शक्यत्वान्न तु तपोधन इति मनागित्युक्तं । एवं सङ्कटं किमिति त्वयासीदित्यत आह । यतो मानी । अभिमानवान् साधनीयेऽर्थे सङ्कटमपि मानिनः सहन्त इत्यर्थं इति वा । रक्षकवृतत्वेन मुनिकर्तृकं बाधनं मनागपि तत्रारामे नास्तीति तं स्वानुकूलं तामसानां तत्र प्रवेशाभावात् तापससमितिस्वबाधारहितं स त एव मनागीषत् स्वानुकूलं स्वस्मै हितमेवंविधं मेन इति वा ॥ २०९ ॥

दलपुष्पफलैर्देवद्विजपूजाभिसन्धिना । स नले
नार्जितान् प्राप तत्र नाक्रमितुं द्रुमान् ॥२१०॥

दलेति । स कलिः तत्रोद्याने वने दलैः पत्रैः पुष्पैः फलैश्च कृत्वा देवानां अतिथीनाञ्च पूजा तद्विषयेणाभिसन्धिनाऽऽशयेन कृत्वा देवद्विजपूजैवाभिसन्धिराशयो यस्यैवंविधेन वा, दलादिभिर्देवपूजां कर्तुकामेन नलेनार्जितानारोपितानाम्रादिद्रुमान् आक्रमितुं आरोढुमाश्रयितुञ्च न प्राप । तेषां धर्मोपयोगित्वात् स्वस्य च पापरूपत्वात् तानाश्रयितुं नाशकदित्यर्थः ॥ २१० ॥

अथ सग्रोद्विशसक्तिपूरणाय स रोपितं । वि
भीतकं ददर्शैकं कुटं धर्मेऽप्यकर्मठं ॥ २११ ॥

अथेति । अथ स कलिः धर्मे धर्मकार्ये विषयेऽकर्मठमकार्मणमपि विप्रादीनां देवाद्युपयोगाद्धर्मकार्यानर्हमपि सर्वपाशुद्धिदां वृक्षाणामसतः सान्निध्यस्य पूरणाय वृक्षलतागुल्मादिजातिराशाविति कोऽपि पूर्णिमाय तथोद्याने नलेन आरोपितमेकं सद्य वृक्षाणामतिपूरणार्थं केनैव कनकादिरूपं विभीतकं कुटं वृक्षं ददर्श । अनोकहः कुटः शाल इत्यमरः । कर्मठः । कर्मणि घटत इति कर्मणि घटोऽठप्

(पा०१।२।३५) कर्म्म गूरस्तु कर्म्मठ । उद्भिदस्तरुगुल्माद्या इत्यमरः ॥२११॥

स तं नैषधसौधस्य निष्कुटं निष्कुटध्वजं । बहु मेने निजं तस्मिन् कलिरालम्बनं वने ॥२१२॥

स इति ॥ तस्मिन् वने नैषधसौधस्य निकट समीपवर्त्तिन निष्कुटस्य गृहारामस्य ध्वज लाञ्छनभूत ग्रथ चात्युच्चतरत्वात् ध्वजमिव तद् यस्थित्वा नलदर्शनयशात्तदीयदोषविचारोपायभूत त विभीतक निज स्वीयमालम्बनमाधार बहु मेने । गृहारामास्तु निष्कुटा इत्यमर ॥ २१२॥

निष्पदस्य कलेस्तत्र स्थानदानाद्विभीतकः । कलिद्रुम परं नासीदासीन् कल्पद्रुमोऽपि सः॥२१३॥

निष्पदस्येति । तत्र पुरे वने च निष्पदस्याश्रयरहितस्य कलेः स्थानदानात् स्वेनैव तदाधारभूतत्वात् स विभीतक केवल निवासभूतत्वात् कलिद्रुम कलिसम्बन्धी द्रुम पर केवलमासीदिति न किन्तु कलिमत्यभिलापपूरणात् कल्पद्रुमोऽप्यासीत् । अन्योऽपि निराश्रयस्याश्रयदानात् कल्पद्रुमत्वेन व्यपदिश्यते । भूताऽवास कलिद्रुम इत्यमरः ॥२१३॥

ददौ पदेन धर्म्मस्य स्थातुमेकेन यत् कलिः । एकः सोऽपि तदा तस्य पदं मन्येऽमिलन्नतः ॥ २१४॥

पापिना कलिना विभीतक स्थान प्राप्तमित्यत्र हेतुमुत्प्रेक्षते । ददाविति । यद् यस्माद्धेतो कलि प्रवाहानादितयाऽतीते कलियुगसमये धर्मस्यैकेन पदेन चतुर्थाशेन पद स्थान ददौ तस्मात् तदा नलराज्यसमये कृतयुगे स विभीतकोऽपि एक एव तस्य कले पद चरणोऽय च स्थानममिलत् मन्ज्ञात इत्यह मन्ये । कृत कर्म्म युज्यते इति न्यायेन कालान्तरे यावत दत्त तावदेव तदानी तेन लब्धमित्यह मन्य इत्युत्प्रेक्षा । धर्म्मस्य सम्बन्धमात्रविवक्षया षष्ठी ॥ २१४ ॥

उद्भिद्भिरचितावास. कपोतादिव तत्र स । राज्ञ साग्रे द्विजात्तस्मात् भन्ता समाप दीक्षितात् ॥२१५॥

उद्भिदिति । तत्रोद्याने उद्भिदि वृक्षे विभीतके विरचित आवास

स्थितिर्येन स कलिः साग्नेरग्निहोत्रवतो द्विजात् क्षत्रियात् तथा दीक्षितात् स्वीकृताग्निहोत्रादियागदीक्षादस्माद्राज्ञ अभिषेकादिगुणयुक्तात् नलात् सकाशात् सम्यक्त्रासं महाशापनिग्रहं प्राप । राज्ञो द्विजादित्येताभ्यां स्वाभाविकं निग्रहे सामर्थ्यं सूचितं । साग्नेर्दीक्षितादित्येताभ्याञ्च तपोजनित शापे सामर्थ्यं सूचितं । एवंविधोऽयं समीपस्थितं मां निश्चयेन ज्ञास्यति शापं दास्यतीत्यन्तमंहद्भयं प्रापेत्यर्थः । अग्निहोत्रिणो नलस्य सम्बन्धिनः कृतयज्ञदीक्षात् तस्मादतिप्रसिद्धाद् द्विजात् ब्राह्मणाद् गौतमाख्यात् पुरोधसः सकाशाद् भयं प्राप । नलाग्निहोत्रादिपरिचर्यार्थं तत्र वसमानात् स्वयमग्निहोत्रादिदीक्षायुक्ताच्च गौतमात् पुरोधसः सकाशाद्भीत इत्यर्थं इति वा । कस्मादिव कपोतादिव । यथाऽग्निसहितादङ्गारभक्षिणः तथा दीक्षितात् कपोतनाम्नो द्विजात् पक्षिणः सकाशात् वृक्षे विरचितावासः काकादिः पक्षी पुरुषो वा वृक्षाकर्दो वृक्षाधःस्थायी वा भयं प्रापत् पूर्वं कदाचित्तथैत्युपमा । स यथा प्राप्नोति तथेत्यर्थः । अग्निः कपोतजठरमन्तः प्रविष्टोऽतएव तद्भक्षिता पापाणकणिकापि जीर्यत इत्येतिरुद्य । साग्नेरङ्गारभक्षिणः । कपोतविशेषो ह्यङ्गारान् भक्षयति । वह्निदा तृणकाष्ठादिना निर्मितगृहः पुनर्वाऽन्युद्गारिनेत्रात् स्वोपवेशनमात्रेण गृहदाहाद्यनिष्टसूचकात् गृहोपरि विलोकनात् कपोतो ह्युलूकपक्षिणः सकाशाद्यथा भयं प्राप्नोति तथाऽसावपि प्रागुक्तपोतो हि गृहं प्रविष्टोऽनिष्टसूचकः । एवमद्भुतकर्मणोऽपि स्वर्गोद्युक्तादिरोहिणो दूरात् कपोतात्कहस्थासौ पक्षी नरो वा स्वस्यापि भक्षणशङ्कया गारोपतनशङ्कया वा यथा बिभेति तथेत्यर्थः । एव यथागति व्याख्यातव्यं ॥ २१५ ॥

विभीतकमधिष्ठाय तथाभूतेन तिष्ठता । तेन भी
मभुवोऽभीकः स राजर्षिरधर्षि न ॥ २१६ ॥

विभीतकमिति । विभीतकमधिष्ठायाश्रित्य तथाभूतेन तिष्ठता तस्य धर्मोपयोगात्तथाभूतयाहित्येन स्थितवता अथ च तादृशगतदर्शनात् पूर्वोक्तप्रकारेण विभ्यता अत्यन्ताभिपरेण कलिना भीमभुवोऽभीकः भैम्याः कामुकः स राजा नलो तथापि राजर्षित्वेऽपि धर्मप्रधानत्वाद्गुणिम्

त्यो नलो माधर्वि न पराभूत । अपराभवे राजर्षित्वमेव हेतुः । अथ च विभीतकतुल्यं तरुमाश्रित्य तिष्ठता तथाऽतिमहता भूतेन भूतत्व प्राप्तेन केनचित् प्रेतेन पिशाचेन भीमया भयानकाया भूमे रणभूमेरु द्रभूमेर्वा हेतोरभीको भयरहितो राजर्षिर्धार्मिको न पराभूयत इत्यु चितं । भीमा भूमिमत्वादूत्य निर्भय इत्यर्थं । अनादरे षष्ठी ॥ २१६ ॥

तमालम्बनमासाद्य वैदर्भीनिषधेन्द्रयोः । कलुष कलिरन्विष्यन्तत्रासीद्वत्सरान् बहून् ॥ २१७ ॥

तमिति । कलि स विभीतक आलम्बमनाश्रयमासाद्य प्राप्य वैद र्भीनिषधेशयोः कलुषं पापाचरणमन्विष्यन् गवेषयितुमित्यर्थः, बहून् व त्सरानवासीत् दोषसम्पर्कोनेन विना तयो पराभवे ऽशक्तत्वाद्दोषपरी क्षार्थं बहुकालं तत्रैव स्थितवानित्यर्थं । अन्विष्यन् । हेतौ शता । अ वात्सीत् । वसेर्लुङि सिचि, वदव्रजेति (पा०७।२।३) वृद्धौ, सस्यार्द्धधा तुक इति (कौ० । व्या० । पत्र १३० पङ्क्ति ६ । का०) तत्वम् । वत्स रान् । अत्यन्तसंयोगे द्वितीया ॥ २१७ ॥

यथासीत् कानने तत्र विनिद्रकलिका लता । त था नलच्छ्रलासक्तिविनिद्रकलिकालता ॥ २१८ ॥

यथेति । तत्र कानने तस्मिन् उद्याने यथा येन प्रकारेण विनिद्रक लिका विकसितकोरका लता वल्ली आसीत् तथा तेन प्रकारेण नलस्य छले आसक्तिरभिनिवेशस्तद्वशाद्विगतनिद्रो जागरूक सावधान कलि लक्षणः काल समयो यत्र तद्भावस्तता सापि तत्र वने आसीत् । सदा विकसितकोरकवल्लीमत्त्वमस्योद्यानस्य यथाभूत् तथा सदा कलिसत्त्व मोऽप्यभूदित्यर्थं तावन्मात्रेण श्लेषमात्रेण चौपम्य । नलच्छलनार्थं नलदो षान्वेषणाय जागरूकः स कलिस्तत्राव स्थोदित्यर्थं ॥ २१८ ॥

दोष नलस्य जिज्ञासुर्बभ्राम द्वापरः क्षितौ । न दोषः कोऽपि लोकस्य मुखेऽस्तीति दुराशया ॥ २१९ ॥

अथ कलेरवस्थान निरूप्य द्वापरस्यावस्थानमाह । दोषमिति । ला कापवादरूप अभिशस्तिरूपं वा नलस्य दोष जिज्ञासुर्द्वापर इत्यघटना

नया दुराशया छिन्नो बल्वाम । इति किं । लोकस्य सुखं अनयामिषोपा-
मदोषो दोषरहितः कोऽपि नरो नास्ति सर्वो जनो य निर्दोषमाह ता
दृग पुरुष एव नास्तीति नलस्यापि किञ्चिद्दोषं कोऽपि वदिष्यतीति ।
न दोष इति पाठे लोकोक्तावल्पोऽपि दोषो नास्ति अपि तु मायेषा भ
विष्यतीति दुराशयेति काक्वा सम्भावनापरत्वेन व्याख्येयम् । दोष । न
लोकेति (पा०२।३।६९) षष्ठीनिषेधः ॥ २१९ ॥

अमुष्मिन्नारामे सततनिपतद्दोहदतया प्रसूनैस्त्विड्रैरनिशममृतांशुप्रतिभटे । असौ बद्धालम्बः कलिरजनि कादम्बविहगच्छद च्छायाभ्यङ्गोचित रुचितया लाञ्छनमृगः ॥ २२० ॥

अमुष्मिन्निति । असौ कलिः श्यामपक्षत्वसजातीया कादम्बविहगाः कलहंसाश्च्यपक्षिविशेषाः तेषां छदा पक्षाः तेषां छायायाः कान्ते रभ्यङ्गे उचितो योग्यो तैलाभ्यङ्गेनेव स्वसंस्पर्शमात्रेण स्वैश्यामलिमप्रका रिणी श्यामतरा रुचिः कान्तिर्यस्य तस्य भावस्तत्ता तया कृष्णवर्णत या चन्द्रे लाञ्छनमृगोऽजनि कलङ्कमृगोऽभूत् । किम्भूतः । सतत स दा निपतन् निक्षिप्यमाणो धूमादिर्दोहदो यत्र तस्य भावस्तत्ता तया अनिशं सदा उन्निद्रैर्विकसितैः प्रसूनमालत्यादिसितपुष्पैः कृत्वा उज्ज्व लत्वाद्धानन्ददायित्वाच्चामृतांशोश्चन्द्रस्य प्रतिभटे प्रतिस्पर्द्धिनि चन्द्रतुल्ये ऽमुष्मिन् पूर्वोक्ते आरामे नलोद्याने बद्धः कृत आलम्बो यामो येन सः । चन्द्रे हि कलङ्केन भविमव्य तत्स्थाने कलिरेवाभूदिति । एतेन निर्दोषे नलोद्याने कलिरेव दूषकोऽभूदित्युक्तम् । तत्र व्यधात्सीदित्य- र्थः । पुष्पफलानामाकालिकसमुद्भवे वृक्षेषु वृक्षायुर्वेदोक्तो धूपादिदोह द क्रियते, तथा चम्पके विपाकादिजलसेकः, बकुले सुन्दरीगण्डूषजल मदिरासेकः, रक्ताशोके च तरुणीचरणप्रहारमित्यादि ॥ २२१ ॥

स्फारं तादृशि वीरसेनिनगरे पुण्यैः प्रजानां घनं
विघ्नं लब्धवताश्रिरात्तुपनतिस्तस्मिन् किलासीत्
कलेः । एतस्मिन् पुनरन्तरान्तरमिलानन्दः सभै

मीनलाभाराद्धं व्यधित स्मरः श्रुतिशिरावन्दारुचूड़ं धनुः ॥ २२१ ॥

स्मार इति। स्मारे विशालनरे तादृशि उक्तप्रकारेण धर्मामूले स्मारस्वेऽपि मन्त्र धर्मपूर्णे वैरसेनिर्नलस्तस्य नगरे प्रजानां पुण्यैर्हेतुभिर्घन भूयास चिरं लब्धवतः प्राप्तवतः निरामयस्य कलेस्तस्मिन् नलाद्याने चिरात् बहुकाल नलदोषगवेषणार्थं उपनतिरयस्थिति किला भूत्। किलेति पुराणादौ श्रूयन इत्यर्थं। प्रजाना पुण्यैः स्मारे व्याप्त इत्यर्थं इति वा हेतुगर्भविशेषणम्। एतस्मिन्नन्तरेऽवसरे पुनरन्योन्ययो र्यमेलनादन्तर्मनसि अमितानन्द प्रासनि भीमद्वयं. स प्रसिद्धप्रभाव स्मरो भैमीनली आराद्धं सेवितु सुतरा पीडयितु वा धनुः श्रुतिशिराकर्णौ देवास्तौ वन्दारु स्पर्शिना चूडा अग्रभागो यस्य एवंविधमाकर्णपूर्णं व्यधित चकार। भैमीनली नगर प्राप्तौ सुरेषु स्वर्गतेषु कलौ च समालम्बिनि सति इतरेतरानुरागातिशयेन चिरविरहातिसस्पृहौ स्मराराधनं चक्रतुरिति भावः। अनेनोत्तरसर्गे सम्भोगारम्भस्य नात् भङ्गिति सूचिता। कलिकर्तृकपराभवस्य भविष्यत्वात्सायकापकर्षस्यावर्णनीयत्वाच्च सर्गोक्त ॥ २२१ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्। यातः सप्तदश स्वसुः सुसदृशि छन्दप्रशस्तेर्महाकाव्ये तद्भुवि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ २२२ ॥

श्रीहर्षमिति। पूर्वार्द्ध पूर्ववत्। एककर्तृकत्व त् स्वसुर्भगिन्याः छन्दस राजविशेषस्य प्रशस्तेर्वर्णनात् ग्रन्थस्य सुसदृशि तुल्ये तद्भुवि श्रीहर्षरचिते सप्तदशाना पूरणो निसर्गोज्ज्वलः स्वभावसुन्दर सर्गः समाप्तः। छन्दप्रशस्तिरपि ग्रन्थो मया कृत इति सूचित। भोदर्याश्च तुल्या भवन्ति। छन्द प्रशस्तेरिति पाठे छन्दो बन्धकमस्वरूपनिरूपणापरस्य ग्रन्थस्येत्यर्थः। सप्तदश इति तस्य पूरण इति (पा०५।२।४८) डट्।

तद्भुवि । भाविलपुस्तकम् ॥ २२२ ॥

इति वेदरकरोपनामकनरसिंहपण्डितात्मजनारायणविरचिते नैष-धीयप्रकाशे सप्तदश सर्गः ॥ १७ ॥

समाप्तः सप्तदशः सर्गः ।

## उत्तरनैषधचरिते ।

## अष्टादशः सर्गः

---

श्रीलक्ष्मीनृसिंहौ जयतः ।

सोऽयमित्थमथ भीमनन्दिनीं दारसारमधिगम्य नैषधः । तां तृतीयपुरुषार्थवारिधेः पारलम्भनतरीमरीरमत् ॥ १ ॥

सोऽयमिति । सर्गमङ्गलिकमेव । सोऽयमुक्तसौन्दर्यादिगुणप्रभावो नलः, इत्युक्तप्रकारेण त्रैलोक्यनायकममस्त दारसारं स्त्रीरत्नभूतां सा-मिन्द्रादिभिरप्यजितलभ्यमानां भीमनन्दिनीमधिगम्य तृतीयपुरुषार्थवा-रिधौ कामरूपदुस्तरसमुद्रे सम्यग्भिन्नां पारलम्भनतरीं परतीरप्राप-णनौकारूपां तां भैमीं अरीरमत् रमयामास । तादृश्या विना कामपु-रुषार्थपारं कामशास्त्रोक्तनानारतपारं न प्राप्यत इत्यनेन सौन्दर्यानु-रागातिशयः सूचितः । अन्यापि तरी वारिधेः पारं प्रापयति । तार-तरीमित्यपि पाठः । अरीरमत् । रमेर्ण्यन्ताल्लुङि चङि उपधाह्रस्वा-दित्यादि ॥ १ ॥

आत्मवित् सह तया दिवानिशं भोगभागपि

न पापमाप सः । स्वात्मना हि विषयैकतानता ज्ञानधौतमनसं न लिम्पति ॥ २ ॥

अनुरागातिशयाद्दम्पोरात्र तासम्भोगे दोषमाशङ्क्य परिहरति । स्वात्मविदिति ॥ स नलस्तया सह दिवानिश भोगभाक् सन्नपि दिवामैथुननिषेधातिक्रमजनित पाप नाप । यत आत्मवित् जीवब्रह्माभेदबुद्धिमान् । उक्तमर्थं युक्त्यन्तरेण द्रढयति । हि यस्मात् आत्मना कर्त्रिना विषयैकतानता स्रक्चन्दनादिविषयपरता ज्ञानेन परमात्मज्ञानेन धौत क्षालित कामक्रोधादिमलित मनो यस्य त पुरुष न लिम्पति पापसंस्पर्शेन न करोति । स्वाभाविकी हि विषयपरता पापसङ्घकारिणी, परमात्मज्ञानवतस्तु सा न भवति, किन्तु भोगात् पूर्वं कर्मक्षयार्थमेव सा विषयपरताङ्गीकार्या । अतः स्वकीया विषयपरता ब्रह्मज्ञानिनं पापिनं न करोतीति आत्मवित् स पाप नाप्नोतीति युक्तमेवोक्तमित्यर्थः । विषयपरतायाः अहार्य्यत्वे दोषाभावाद्दिवारात्र तया सह चिक्रीडेत्यर्थः । दिवानिशं । अत्यन्तसयोगे द्वितीया ॥ २ ॥

न्यस्य मन्त्रिषु स राज्यमादरादारराध मदनं प्रियासखः । नैकवर्णमणिकोटिकुट्टिमे हेमभूमिभृति सौधभूधरे ॥ ३ ॥

दिवानिशं सम्भोगे राज्यरक्षणं कथमित्यत आह । न्यस्येति । स नलो मन्त्रिषु राज्य न्यस्य नैकवर्णमणिकोटिकुट्टिमे नानावर्णरत्नसमूहबद्धभूमिके तथा हेमभूमिभृति सुवर्णभूमिधारिणि सौधभूधरे प्रासादरूपेऽत्युच्चे पर्वते प्रियासखः सन् मदनमादरादासक्त्या आरराध सिषेवे । प्रियासख इत्यालम्बनविभाव । कामस्य धर्मविषयत्वञ्च सूचित । अत एव तद्दूषणं न प्रतीति । नैकवर्णेत्यादिविशेषणसामर्थ्याद् भूधरो हेमाद्रि' सौधभुव धरति नलप्रमादाकारेण परिणते अनेकवर्णमणिकुट्टिमे हेम- सुवर्णस्य भूमिभृति पर्वते हेमाद्रौ प्रासादसौन्दर्यमुच्चत्वं च सूचित । इत आरभ्य तत्र सौधेति यावन्महाकुलक ॥ ३ ॥

वीरसेनसुतकण्ठभूषणीभूतदिव्यमणिपङ्क्तिशक्ति

भिः । कामनापनमदर्थनागुणाद् यस्तृणीकृत
सुपर्वपर्वतः ॥ ४ ॥

वीरसेनेति । य सौधभूधरो वीरसेनसुतस्य कण्ठभूषणीभूता दिव्या मणयस्तेषां पङ्क्तिर्मौक्तिकश्रेणिश्चिन्तामणिमाला तस्याः शक्तिभिरलौकिकसामर्थ्यैः कृत्वा कामनयाभिलापमात्रेणोपनमन्तः सन्निहितीभवन्तो नलेनान्येन वा लभ्यमाना दृष्टा अर्था पदार्था यत्र तद्भावस्तत्ता सैव गुणस्तस्माद्धेतोस्तृणीकृतः सुपर्वणां देवानां पर्वतो मेरुर्येन स । सर्वार्थदायिचिन्तामणिरत्नस्य मेरावत्र च विद्यमानत्वाद्यो मेरुतुल्य इत्युपमा । अत्र बहूनां चिन्तामणीनां सद्भावात्ततोऽप्याधिक्यं वा ॥४॥

धूपितं यदुदराम्बरं चिरं मेचकैरगुरुसारदारु
भिः । जालजालधृतचन्द्रचन्दनक्षोदमेदुरसमी
रशीतलं ॥ ५ ॥

धूपितमिति । मेचकैः श्यामलैरगुरुसम्बन्धिभिः सारैः श्रेष्ठैर्दारुभिः काष्ठैश्चिरं यदुदराम्बरं यदीयो गर्भभागो धूपितं वासितं यदुदराम्बरं धूपार्थं दह्यमानैस्तैरर्पितपरिमलमित्यर्थः । तथा धूपजसन्तापत्याजना य जालप्रकारेषु जालजालेषु सर्वेषु गवाक्षेषु जालानां वा जालेषु गवाक्षसमूहेषु धृतः स्थापितः चन्द्रचन्दनक्षोदः कर्पूरचन्दनचूर्णं कल्पितस्तेन मेदुरः पुष्टस्तत्परागैश्चाप्यधिकमिश्रितः परिमलबहुलश्च यः समीरो वायुस्तेन शीतलं शीतलतरं । सर्वेऽप्येते उद्दीपनविभावाः । जालजालं । प्रकारे द्विरुक्तिः, षष्ठीसमासो वा ॥ ५ ॥

कुत्रापि कामशरवृत्तवर्तयो यं महासुरभितैलदी
पिकाः । तेनिरे वितिमिरं स्मरस्फुरद्दोः प्रताप
निकराङ्कुरश्रियः ॥ ६ ॥

कुत्रापीति । महासुरभिचम्पकादिद्रव्यसुगन्धि तैलं यासु तथाविधा दीपिका यं सौधभूधरं कुत्रापि भित्त्यन्तरालगृहादेशे वितिमिरं विगततमस्कं प्रकाशमानमनन्तं चक्रुः । किम्भूताः । कामशरवृत्ता कामशा-

यथर्तुग्लाः कामशरेण कर्पूरेण धूपविशेषेण वा धूम्रा निष्पन्ना धूपकर्पूरगन्धा यस्यं यस्तन्तुमङ्कुराचिता दीपाधारज्वाला देशा यामान्ताः । तथा स्मरस्य भैमीनलव्यपार्थं स्फुरन् दोः प्रतापनिकरस्तस्याङ्कुराणां प्रथमोद्भेदानामिव श्री शोभा यामान्ता । एनादृशनायिकादग्निमात्रेण ता मोत्पन्नस्तुल्यरूपस्यास्य दीपिकाः कामप्रतापाङ्कुरा इवेत्युपमो-पेक्षा । राज्ञनिकटस्था दीपा कर्पूरादियुक्तवर्तयः क्रियन्ते ।

पुरमज्जर्वभयानाला मत्ताऽन्नादिकटागरे ।
समैः समधुभिर्धूपो यत्र कामशराभिध ॥

इति कामशरो धूपः ॥ ६ ॥

कुङ्कुमैणमदपङ्कलेपिताः क्षालिताश्च हिमवा
लुकाम्बुभिः । रेजुरध्वतलशैलजस्रजा यस्य मु
ग्धमणिकुट्टिमा भुवः ॥ ७ ॥

कुङ्कुमेति । यस्य मुग्धानि रमणीयानि मणिकुट्टिमानि यासु ता भुवो रेजुः । किम्भूता । कुङ्कुमस्य मृगमदः कस्तूरी च तयोः पङ्केन कर्दमेन लेपिताः । तथा जलमध्ये निक्षेपाद्द्रवीभूत हिमवालुकाम्बुभिः कर्पूरवासितोदकैः क्षालिताश्च । तथाऽध्वनि नलागमनमार्गे तला विस्तारिता मृदुसुगन्धयः शैलजा हिमवत्समुद्भूतमालत्यादिस्रजो माला यासु ताः । अतिशैत्यसौगन्ध्यार्थं पूर्वं कुङ्कुमकस्तूरीलेपः कृतोऽनन्तरञ्च सम्यक्परीक्षया कर्पूरजलैः क्षालनं कृतं तेनाधिकसौगन्ध्य जात । अनन्तरञ्च भैमीनलचरणयोर्मृदुत्वान्मार्गे मणिवद्भूकाठिन्यपरिहारार्थं मृदुनरशैलजप्रक्षेप इति । पाठक्रमादर्थक्रमो बलीयानिति पूर्वं कर्पूरोदकैः क्षालिता, पश्चाद्गोमयस्थानीयकुङ्कुमकस्तूरीपङ्केन कृतासम्मार्जनाः, अनन्तरञ्च पुनः शैलेयमाला धृतसुन्दरमणिखचितभूपृष्ठाः सत्यः शुशुभिर इति वा । यत्रेत्यपि पाठः । वालुकाम्बुभिरिति पाठे शु

स्रक्पूरपूर्णै त्वालिताश्छुरिताः कृतस्रङ्मालिका इत्यर्थः । अत्र मान्त्री ऽपि क्षमा घटते । लेपिता । अस्यन्ताभिप्रा ॥ ७ ॥

नैषधाङ्गपरिमर्दमेदुरामोदमार्द्रमनोज्ञवर्णया ।
यद्भुवः क्वचन सूनशय्यया ऽभाजि भालतिलकप्रगल्भता ॥ ८ ॥

नैषधेति । क्वचन नलनिद्रास्थानदेशे सूनशय्यया पुष्परचितास्तरणेन यस्य सौधस्य सम्बन्धिन्या भुवो भूमेर्भालस्य ललाटस्य तिलकस्तस्य प्रगल्भता रमणीयता ऽभाजि भूता । पुष्पशय्या भूमेर्ललाटतिलक इव रेजे इत्यर्थः । कीदृश्या । नैषधाङ्गस्य नलाङ्गस्य परिमर्दैन संस्पर्शेन यद्गणस्य परदारागमस्थानं मेदुरो नितरामधिकीभूत आमोदः सौरभ्यमार्द्रं मनोज्ञं मद्देवाङ्गानत्वात् सुन्दरो वर्णश्च यस्यास्तस्या । तिलकोऽपि कस्तूर्यादिनिर्मितत्वात् सुगन्धि सुवर्णश्च भवति । अथ च यद्भूसम्बन्धिनि क्वचन देशे नलाङ्गसम्बन्धेनामोदादियुक्तया पुष्पशय्यानुरूपया ऽतिमृद्व्या भैम्या भालतिलकेन या प्रगल्भता प्रकाशमानताभ्य अभाजि भञ्जिता । मस्तकतया तिलकस्य मृष्टत्वादित्यर्थः इति वा । अभाजि । पक्षे, भञ्जेश्च चिणि (पा॰६।४।३३) इति नलोपः ॥ ८ ॥

क्वापि यन्निकटनिष्कुटस्फुटत्कोरकप्रकरसौरभोर्मिभिः । सान्द्रमाद्रियत भीमनन्दिनीनासिकापुटकुटीकुटुम्बिता ॥ ९ ॥

क्वापीति । क्वापि क्वचित् प्रदेशे यस्य सौधस्य निकटे निष्कुटे गृहारामे स्फुटन्तो विकसन्तः कोरकप्रकरा मल्लिकादिकलिकासमूहास्तेषां सौरभोर्मिभिः सौगन्ध्यपरम्पराभिः भीमनन्दिन्या नासिकापुटकुटी नासिकापुटरूपगृहं तत्र कुटुम्बिता पुत्रकलत्रादिमत्त्वमव्याजेन सान्द्रं नितरामाद्रियताङ्गीकृता । अन्यगृहे बहुकुटुम्बी यथा स-

स्पर्शेन यथाति तथा भैमीनासिकाभ्यां तैरुपितमित्यर्थः । यमोपान्तेषु द सद्भिर्भैमी सकलपुष्पपरिमलं यत्र प्रत्यहमन्वभूदिति भावः । अथ च भैमीनासापुटकुल्यः कुटुम्बितासादृश्यं धृत । कुटुम्बिनो हि सजातीया भवन्ति । भैमीनासाग्रासमीरमतुल्यता यन्निकटवर्तिवनपुष्पसौरभैः कृतस्यर्थं ॥ ९ ॥

ऋद्धसर्वऋतुवृक्षवाटिका कीरकृत्तसहकारशी करैः । यज्जुषः स्वकुलमुख्यमाशुगो प्राणघातमुपदाभिरत्यगात् ॥ १० ॥

ऋद्धेति । आशुगो वायुः, ऋद्धा पुष्पफलपल्लवादिसमृद्धिमन्तः सर्वे ऋतवः वसन्तादिसकलर्तुसम्बन्धिन आम्रादयो वृक्षा यस्याः सा ऋद्धा सर्वे ऋतवः सर्वे वृक्षाश्च यस्यां वा, तस्यां वाटिकायां कीरैः शुकैः चञ्चुपुटैः कृत्वा कृत्तानि खण्डितानि यानि सहकारपुष्पाणि फलानि वा तेषां शीकरैर्मकरन्दबिन्दुभिर्निर्यासबिन्दुभिर्वा उपदाभिस्तद्रूपैरुपहारैः कृत्वा यज्जुषां यत्सेविनामलस्य जैम्या वा यस्य कस्यापि वा प्राणघातं नासाग्रासम्बन्धं प्राणाख्यं वायुं यज्जुषां यत्सम्बन्धी वा वायुस्तयोर्दम्पत्योरन्यस्य वा अत्यगात् स्म व्यपूपुजत् । उपहारैरुपलिप्तवान् स्मेति वा । यस्मात् कुलमुख्यः पञ्चवायुमध्ये प्राणस्यादिभूतत्वात् कुलवृद्धस्य । कुलवृद्धश्च तदायैः पूज्यते । आम्रशीकराननयनं वायुर्वं रसेविनः जनं सुखयति स्मेत्यर्थः । सहकारशीकरैरित्यनेन वायोः शैत्यसौगन्ध्ये, चञ्चनीत्यनेन च मान्द्यं सूचितम् । सर्वऋत्वित्यत्र ऋत्यकः (पा०६।१।१२८) इति प्रकृतिभावः । सहकारेत्यत्र पुष्पफले वा वाच्ये प्रत्ययस्य, पुष्पमूलेषु बहुलमिति (पा०४।३।१६६ । वा०२) लुप् । फले लुगिति वा (पा०४।३।१६३) तस्य लुक् । यज्जुष इति क्विबन्तात् षष्ठी । पक्षे इगुपधात् कः ॥ १० ॥

त्रिषु भित्तिगैरवरश्मिभिः कुड्यखचितरत्नकिरणैः सुवर्णादिषु प्रतिफलितैर्मणिवद्भूमिकिरणैर्वा अमन्दा भूयसी चन्द्रिका ज्योत्स्ना यत्र तमोलेशस्याप्यनायात् । तथा तपेऽपि उष्णबहुले ग्रीष्मर्तावपि जलधारामण्डारिमणिस्तम्भादिरचितजलयन्त्रेभ्यो मालुकैर्निर्गममणालैरासारैर्धारासम्पातैर्दूरं नितरां धुना निराकृता तापजनिता तन्द्रिका मूर्च्छा निःसहता येन सः । शीतत्वात् सुखकर इत्यर्थः । तामसी । मत्वर्थीयप्रकरणे, ज्योत्स्नादिभ्य उपसङ्ख्यानम् (पा०५।२।१०३।वा०१) इत्यण ॥ तन्द्रिका । तन्द्रीशब्दात् स्वार्थे कनि, केण (पा०७।४।१३) इति ह्रस्वः ॥ १४॥

यत्र पुष्पशरशास्त्रकारिका सारिकाध्युषितनागदन्तिका । भीमजानिषधसार्वभौमयोः प्रत्यवैक्त न रते कृताकृते ॥ १५ ॥

यत्रेति । यत्र सौधे, अध्युषिता अधिष्ठिता नागदन्तः शयनस्यान्ते गृहावयवभूतगजदन्तनिर्मितः पञ्जरो वा यया सा, तथा पुष्पशरस्य कामस्य वात्स्यायनादिप्रणीत शास्त्रं तस्य कारिका अभ्यासबाहुल्यात् कामशास्त्रनिर्माणसमर्थशब्दं करोति एवम्भूता सारिका पक्षिणी, भीमजानिषधसार्वभौमयोर्दमयन्तीनलयोरते विषये चुम्बनालिङ्गनादीनां प्रत्येकं कृताकृते विहिताविहिते कर्मभूते प्रत्यवेक्षणानुकारेणानुसन्दधे, अनुवदति स्म, अनुचकारेत्यर्थः । आलिङ्गनादीनां बहवो भेदाः कामशास्त्रे निरूपिताः । तत्र किञ्चिदालिङ्गनं कृतं किञ्चिन्न कृतमित्यादि अपश्यदित्यर्थः । शास्त्रे श्लोकरूपा कारिका भवति । भाषादौ प्रस्तावे यः एताकृताविवक्षा भवति । नागदन्तिका । डीपादिहिसाथंति ( पा०५।४।१४४) कपि, प्रत्ययस्थात् (पा०७।३।४४) इतीत्वं ॥ १५ ॥

यत्र मग्नकरयष्टिकुम्भीलनाश्मीलकोटिपनकौक्तिय-
स्तयोः । क्वापि दृष्टिमरयापि चाधिकान्तमहं

समिथुनस्मरोत्सव ॥ १६ ॥

यत्रेति । यत्र सौधे मत्तै कलविङ्कैर्गृहचटकै र्मीलितानां मुहुर्मुहु क्रियमाणानां चुम्बनादिराहित्याज्जनमयत्न करणाच्च अमीलितानां या म्याया केलीना सुरतक्रीडाना पुनरुक्त वसते यत्र तैर्या कृत्वा पुनरुक्तियुक्त यथा तथा क्वापि कस्मिन प्रदेशे वापिकाया तलमूलानि भूयणीभूतानि तत्र वर्तमानानि हंसमिथुनानि तेषा स्मरोत्सव सुरतक्रीडा तया तयार्जमीलनलयाद्यदिजिसल्लापारैर्वा अद्यापि अलसित अदर्शि त्यथ । प्रादौ कलविङ्ककेलि दृष्टा अनन्तरञ्च हंसकेलिरिति पुन सुरतदर्शनात पुनरुक्ति । रतान्ते श्रणीभूतमात्राया कामिना तिर्यंगादि सम्भोगदर्शन पुन कामोद्दीपक जयतीति कामशास्त्रात तिर्यक्सम्भोग पश्यतिस्मेति भाव ॥ १६ ॥

यत्र वैणरववैणवस्वनै. कूजितैरुपवनीपिकालिना। कङ्कणालिकलहैश्च नृत्यता कुञ्चित सुरतकूजित तयो ॥ १७ ॥

यत्रेति । यत्र सौधे सम्भाग कुर्वतोस्तयोर्भैमीनलयो सुरतकूजित कण्ठमात्रस्थाव्यक्तमधुरस्वररूप वैणरवैर्वीणाशब्दै, तथा वैणवस्वनैर्वेणुस्वनितैर्गीतै, तथा उपवनीपिकालिनामारामवर्तिना कोकिलषट्पदाना कुहूते कूजिते समञ्जसाभ्या ताभ्या नृत्यन्तौ यत्र दृश्यन्ते इव तौ न दृश्येते तादृशोद्देशे नृत्यता स्त्रीपुरुषाणा कङ्कणादीना केयूरनूपुरादिभूषणगणाना कलहैरन्योन्योपमर्दोदितसिञ्जितैश्च कुञ्चित मन्दीकृतमाच्छादितमित्यर्थ । नृत्यत्या नृत्यन्तश्च पुमान स्त्रिया (पा० १।२।६७) इत्येकशेष । कुञ्चित । तत्करोतीति (पा०३।१।२६।वा०१) णयन्तान्निष्ठा ॥ १७ ॥

सीत्कृतान्यशृणुतां त्रिशङ्कुयोर्यत्प्रतिध्वनिरतिस्म

कृष्णसारमृगशृङ्गभङ्गुरा स्वादुरुज्ज्वलरसैकसारणिः । नानिशं त्रुटति यत्पुरः पुरा किन्नरीविकटगीतिझङ्कृतिः ॥ १९ ॥

कृष्णेति । कृष्णो वर्णः सारः श्रेष्ठो यस्य तस्य मृगस्य शृङ्गवद्भङ्गुरा-तिवक्रा बहुभङ्गीयुक्ता, तथा स्वादु श्रुतिमधुरा अत एवोज्ज्वलाः प्रकाशमानाः शृङ्गारादयो रसाः तेषां उज्ज्वलस्यैव वा रसस्यैकाऽद्वितीया मुख्या वा सारणिः कृत्रिमनदी शृङ्गाररसपरिपूर्णेत्यर्थः । एवंभूता गाननिपुणानां किन्नरीणां विकटा षड्जादिसप्तस्वराणामारोहावरोहरीत्या विषमा गीतिर्गानं तस्य झङ्कृतिर्ध्वनिविशेषो यस्य सौधस्य पुरोदेशे मुखेऽनिशं सर्वदा न त्रुटति पुरा कदाचिदपि विच्छिन्ना नाभूत् । भैम्याः सकाशाद् गानकलाशिक्षाहेतोरुद्यनरस्य तस्य सुन्दरे द्वारि आगत्य गन्धर्वकन्या अपि यत्र सर्वदा जगुरिति भावः । स्वर्गं च गानमङ्गलार्थं सदा गायतीवेत्युत्प्रेक्षा सूच्यते । अथ च मृगशृङ्गवद्भङ्गुरगामिनी तथा स्वादूदका तथा किन्नर्य इव किन्नर्यो ज्वमयः कमलजातुल्यानां श्रेष्ठा गुञ्जनझङ्कृतिर्यस्याः एवंविधा विकसत्कमलान्तर्भ्रमद्भृङ्गनयना निर्मलजला एका कुल्या यस्य सौधस्य पुरोभागे कदाचिद्ग्रीष्मर्तावपि नात्रुटत्, बहुजलैव स्थितेत्यर्थः । एकविंशे सर्गे तुङ्गप्रासादवासादित्यनेन कुल्याया अपि वर्णयिष्यमाणत्वात् प्रकृते सौधवर्णनोपयोगित्वादयमर्थः कविना विवक्षित इति प्रतीयते । विकट सुन्दरे प्रोक्तो विशालविकरालयोरिति विश्वः । त्रुटति । भूते, पुरिलुङ्चास्म ( पा० ३ । २ । १२२ ) इति लट् ॥ १९ ॥

भित्तिचित्रलिखिताखिलक्रमा यत्र तस्थुरितिहाससङ्कथाः । पद्मसम्भवसुतारिरंसुतामन्दसाहससन्मनोभुवः ॥ २० ॥

भित्तीति । यत्र सौधे पद्मसम्भवस्य ब्रह्मणः सुतायां सरस्वत्यां रिरंसुता सम्भोगाभिलाषस्तद्रूपममन्दं महत् साहसं अविचार्यकारित्वं

प्रासादस्य कीर्तिं कान्ति, उच्चगतां उड्डीयमानानां कलरवाणां पारावतानां मालि पङ्क्तिस्तस्याः केतवाद्व्याजाज्जगदवदायति स्म शोधयति स्मोऽज्ज्वलं चकारेत्यर्थः । एते कलरवा न भवन्ति किन्तु शरच्चन्द्रचन्द्रिकातुल्या कीर्तिरेवैतस्येत्यर्थः । पारावतः कलरवः, इत्यमरः । दायति । दैप् शोधने इति भ्वादिरपूर्वः सकर्मकः । लट् स्मे ( पा० ३ । २ । ११८ ) इति लट् । कार्तिकी । नक्षत्रेण युक्तः कालः ( पा० ४ । २ । ३ ) इत्यणि ङीप् । अत्र कृत्तिकायुक्तो दिवसः कार्तिक इति भावितपुंस्कत्वसम्भवेऽपि तिथयो द्वयोरित्यभिधानात् पुलिङ्ग न तिथिशब्देन समासे स्त्रीलिङ्गस्य समानाधिकरणस्योत्तरपदस्याभावात्, पुंवत्कर्मधारय ( पा० ६ । ३ । ४२ ) इति सूत्रेण न पुंवत् । ततश्च कार्तिकी चासौ तिथिश्चेति समासः ॥ २२ ॥

गौरभानुगुरुगेहिनीस्मरे द्वन्द्वभावमिति वृत्तमाश्रिताः । रेजिरे यदजिरेऽभिनीतिभिर्नाटिका भरतभारतीसुधाः ॥ २३ ॥

गौरेति । गौरभानोश्चन्द्रस्य गुरुगेहिन्यां बृहस्पतिभार्यायां तारायां विषये स्मरजनितो यः उद्भूतभावः, गुरुतल्पगामित्वाद्भावरत्यागित्व चन्द्रतारयोर्विषये स्मरस्योद्भूतभावः कामजनितसामर्थ्यातिशयः, तद्वर्णनं वा इतिवृत्तं पुरावृत्तमाश्रिता प्रतिपादयन्त्य, तथा भरतेन मुनिना प्रणीता भारती भरताख्यो नाट्यवेदस्तस्मिन् सुधा अमृतरूप्यो भरताकान्तस्तरीत्याश्रितोयमानाः सत्य सुधाप्राया इति यावत् । एवम्भूता नाटिका दशरूपकान्तर्गतचतुरङ्गबन्धविशेषा यस्य सौधस्याजिरेऽङ्गणे अभिनीतिभिः सात्विकाङ्गिकवाचिकाहार्यभेदभिन्नैश्चतुर्विधैर्नटाभिनीयमानैरभिनयैः कृत्वा रेजिरे । तयोः स्मरोद्भूतभावस्य मिति सम्यक् परिच्छित्तिः यत्र वृत्तं व्यापारोऽतीतः वा प्रमेयं यत्रैवंविधनाटकादिमन्यमाश्रिता इति वा ॥ २३ ॥

व्रामभुद्गारुचनमम्भुजक्रियामाघवव्रजवधूविलास

यो: । गुम्फितैरनया सुभाषितैर्यस्य हाटकविटङ्कमङ्कितं ॥ २४ ॥

गुम्फितेति । यस्य सौधस्य हाटकविटङ्कं सुवर्णघटितकपोतपालिका शम्भोर्दारुवने मन्दरकन्दराया देवदारुवने शम्भुनिक्रिया गौर्या सह दिव्यसहस्रवर्षपर्यन्तं या सुरतक्रीडा, माधवस्य श्रीकृष्णस्य व्रजवधूभिर्गोपिकाभिः सह विलासो रासक्रीडादिस्तयोर्विषये ऽनयाऽनया शुक्राचार्येण गुम्फितैः श्लोकरूपेण ग्रथितैः सुभाषितैरतिचमत्कारकारिनवीनार्थशब्दविशेषैः कर्तृभिरङ्कितं चिह्नितं । इतरस्त्रीकामविलासवर्णकाव्यरचितकाव्यश्लोकाः कामोद्दीपनार्थं मदीयहाटकविटङ्के टङ्कैरङ्किता इत्यर्थः. कपोतपालिकायां तु विटङ्कं पुंनपुंसकमित्यमरः। विशेषेण टङ्क्यते बध्यते इति विटङ्कं पक्षिविश्रामार्थं कुड्याद्बहिर्निर्गतं दारु ॥ २४ ॥

अह्नि भानुभुवि दासदारिकां यच्चरः परिचरन्तमुज्जगौ । कालदेशविषयासहस्मरादुत्सुकं शुकपितामहं शुकः ॥ २५ ॥

यच्चरीति । यस्मिन् सौधे चरतीति यच्चरः शुकः पक्षी शुकपितामहं पराशरमुज्जगौ तारस्वरं गायति स्म । किम्भूतं । अह्नि दिने भानुभुवि सूर्यपुत्र्यां यमुनायां विषये दासदारिकां कैवर्तकुमारीं योजनगन्धां परिचरन्तं सम्भुञ्जानं, अत एव यथाक्रमं कालस्य रात्र्यादेरनिषिद्धस्य दिनरूपस्य देशस्य तीर्थदेवस्थानादिव्यतिरिक्तस्यानिषिद्धस्य निजाश्रमादेर्विषयस्य परदारादिव्यतिरिक्तस्य स्वभार्यालक्षणस्यासहनात् कालादीनामसहनात् अधैर्यगमकात् स्मरात् हेतोरुत्सुकं कामातिरेकं सोढुमसमर्थमित्यर्थः । पौराणिककथ्यमानपराशरादिवृत्तान्तमात्रेण प्राकृतः शिशुरपि पक्षी यद्विहारी कीरः, तादृशी भारतादिरचना यस्य गृहे वर्तत इति भावः । यच्चरीत्यादिना कामातुरस्य कालाद्यसहनमर्थं समर्थितं । अन्योऽपि यावुश्रयं स्वपितामहमपि निन्दति । कैवर्ती दाशधीवरावित्यमरः । यच्चरः । अधिकरणे चरेष्टः (पा० ३।२।१६) इति टः ॥ २५ ॥

नीतमेव करलभ्यपारतामप्रतीरं मुनयस्तपो
म्बुधि । अप्सरः कुचघटावलम्बनात् स्वायिनः
क्वचन यत्र चित्रगाः ॥ २६ ॥

नीतमिति । यत्र सौधे मुनयः परमात्मज्ञानचतुरा ऋषयो क्वचन कस्मिन्नपि भित्तिभागे चित्रगाश्चित्रे लिखिता वर्त्तन्ते । किम्भूता । करलभ्य पारं परतीरं यस्य तद्भावस्तां ता नीतमेव लक्षणया सन्निहितमपिकनत्वात् समाप्ति प्रापितप्रायमेव, अथ च सन्निहितपरतीरमपि तपोरूपदुस्तरमसंख्य समुद्रमप्रतीरमपरिसमाप्यानन्तोऽयं वा तपोविघ्नार्थं इन्द्रेण प्रेषितानामप्सरसां रम्भादीनामत्युच्चकठिनकुचलक्षणानां घटानामवलम्बनाद्धारणाद्धाधाराद्धेतोः स्वायिन स्यातु शक्ता । कुचमर्दनादिसम्भोगकारिण इत्यर्थः । योऽपि प्रतीर्यमाणं समुद्रं नद्यादि वा तीरसन्निहितेऽपि आलम्बनादुत्तरितुमशक्तः स जलमध्य एव घटादिकमवलम्बनमासाद्य चित्रलिखित इव निश्चलस्तिष्ठति । कुट इति पाठे कुट कोटे घटे गेहे इति विश्वः ॥ २६ ॥

स्वामिना च वहता च त मया स स्मरः सुरत
वर्जनोज्झितः । योऽयमीदृगिति नृत्यते स्म
यत् केकिना मुरजनिस्वनैर्घनैः ॥ २७ ॥

स्वामिनेति । यस्य सौधस्य सम्बन्धिना केकिना क्रीडामयूरेण इतिहेतोर्घनैर्निविडैर्मुरजानि ध्वनैर्मृदङ्गध्वनिभिरिव च तैरेव मघैर्नृत्यते स्म । इति किं । योऽयमीदृगन्यस्मादिवशीकारकारी स महाप्रभावः स्मरः स्वामिना कार्त्तिकेयेन प्रभुणा च तदीयपत्रत्वेन तं वहता पृष्ठेन धारयता मया मयूरेण च सुरतवर्जनोज्झित इति । चान्योन्यसमुच्चये । कुमारस्य नैष्ठिकब्रह्मचारित्वान्मयूराणाञ्च वपत्तु महता नेत्रोपान्तरन्ध्रमार्गेण निर्गच्छताश्रुमयशुक्रबिन्दुना मयूरीमुखग्रहणमात्रेण गर्भसंभूतलिङ्गभगसङ्घर्षणरूपरतिपरित्यागो जयहेतुः । मयूराश्च मेघशब्दभ्रान्त्या मृदङ्गशब्दैर्नृत्यन्ति ॥ २७ ॥

यत्र वीक्ष्य नलभीमसम्भवे मुह्यतोरतिरतीशयोरपि । स्पर्द्धयेव जयतोर्जयाय ते कामकामरमणी बभूवतुः ॥ २८ ॥

यत्रेति । यत्र सौधे सम्भोगपरे नलभीमसम्भवे नलभैम्यौ वीक्ष्य मुह्यतोः सुरताभिलाषिणोरथ च ग्लानिं प्राप्नुवतोस्तथा जयतोः सर्वोत्कर्षेण वर्तमानयोरथ च नलभैम्यौ स्ववशे कुर्वता रतिरतीशयोः रतिकामयोः स्पर्द्धयेव ईर्ष्ययेव जयाय तौ पराभवितुं ते नलभैम्यौ कामकामरमणी बभूवतुः स्मररती अभूताम् । सम्भोगयुक्तौ स्त्रीपुंसौ दृष्ट्वाऽन्यावपि स्त्रीपुंसौ उद्दीप्तस्मरौ भवत इति तादृशौ भैमीनलौ दृष्ट्वा प्रान्तावस्थापन्न कृतावासौ चेतनौ रतिकामौ मुह्यतः सुरतेच्छौ जातौ । तथा सौन्दर्यातिशयाद्भैमीनलौ काम इति कामस्य च भैम्या रतिरिति संज्ञान्तरभ्रमो च जातौ । एवम्भूतावतिशयितान्योन्यरागजननाद्वशीकृतभैमीनलौ यत्र भूतौ रतिकामावेवाभूतामिति कामयोर्द्वन्द्वरूप जातमित्यर्थ । अयमेव तयोर्जय । अथ च स्वसम्भोगदर्शनात्तयोरपि सम्भोगवाञ्छोत्पादनाज्जय । तत्रापार्थं बुद्धिपूर्वं व्यापाराभावात् स्पर्द्धयेवेत्युत्प्रेक्षा रूपकं चेत्युक्तम् । अथ च रतिकामसन्निधाने यथा स्त्रीपुंसयोः सम्भोगवाञ्छामनुदयस्तथा तयोरपि रतिकामसन्निपातमेव प्रेमरसातिशयादन्योन्यसन्निधानमात्रेणैव कामसम्मोहः प्रादुरासीदिति भावः । नलभैम्यौ दृष्ट्वा मोहं भजमानत एव नलभैमीभ्यामाभ्यां जितावित्यपि तं जेतव्यमिति स्पर्द्धयेव जयतारिति यथाश्रुत एव वा सम्बन्धः । तत्र सर्वप्राप्यात्प्रमरत्वात् प्राय प्राप्तोऽपि पूर्वं निपातो रतेर्नले कामभ्रमोदयाम्न रतित्वारोपदाना प्राक्प्रयोगस्य, रतीशस्य च भैम्या रतित्वगादपाङ्गीनत्वभावरतीशकामरमणीपदाना पश्चात् प्रयोगस्यौचित्यं सूचयतीति ज्ञेय । रतिरतीशयोर्विषये स्पर्द्धयेति केचित् । ते । प्रथमाद्विवचनान्त । कामश्चामरमणी बभूवतुरिति चित्र ॥ २८ ॥ युग्मकम् ॥

तत्र सौधसुरभूधरे तयोराश्रिरासुरथ कामकेल

यः । ये महाकविभिरप्यवीक्षिताः पांसुलाभि
रपि ये न शिक्षिताः ॥ २९ ॥

तत्रेति । अथ तत्रोक्तगुणे सौधरूपे सुरतगृहे मैत्री तयोस्ते कामकेलय आविरासुः स्पष्टं दिदीपिरे । ते के । ये कामकेलयो महाकविभिर्व्योमकालिदासादिभिर्निगूढभावदर्शिभिरपि अवीक्षिता न बुद्धिगोचरीकृताः । तेषामपि न स्फुरिता इति यावत् । तथाऽनेकनरसम्भोगचतुराभिः पांसुलाभिः स्वैरिणीभिरपि ये न शिक्षिता अभ्यस्ताः नागजातिशिक्षोपदेशादपि न ज्ञाताः । एतेनालौकिकाः कामविलासा वर्णयिष्यन्त इति सूचितम् । द्रवकेलिपरीहासा इति केलिशब्दः पुंलिङ्गोऽपि ॥२९॥

पौरुषं दधति योषिता नले स्वामिनि श्रितत
दीयतावया । यूनि शैशवमतीतया कियत्
प्रापि भीमसुतया न साध्वसं ॥ ३० ॥

पौरुषमिति । एवम्भूतया भीमसुतया एवम्भूते नले विषये कियत् किंपरिमाणं साध्वसं भयं न प्रापि अपि तु बहु भयं न प्राप्तम् । अत्यल्पं प्रापेत्यर्थः । किम्भूते नले । पौरुषं दधति अलिनि । किम्भूतया । स्वयं तु योषिताऽबलया । तथा स्वामिनि आत्मनः प्रभौ राजनि च । स्वयं तु श्रितोऽङ्गीकृतस्तदीयस्वभावस्तदीयत्वं वा तन्मदाभीभूतया । तथा यूनि तरुणे । स्वयं तु शैशवं बाल्यमतीतयाऽनतिक्रान्तया वयःसन्धौ वर्तमानया । बलिनः स्वामिनः तरुणस्य स्त्रीत्वबलया दासीभूतया बालया भयं प्राप्यत इति युक्तमिति । अत्र प्रथमसम्भोगे स्त्रिया भावोत्पत्तिर्दृश्यते नले ईदृश्या तया महद्भयं प्राप्तोति न्यायः । सद्यपि विशेषणानि हेतुगर्भाणि । अथ च श्रितो नलविषयो भावो रमणाभिलाषो यथैतादृश्यापि स्वामिनि भर्तरि नले महद्भयं प्रापि । यतः पूर्वोक्तगुणविशिष्टे पूर्वोक्तगुणविशिष्टया चेति । एवम्भूतेऽपि नले एवम्भूतयापि तया साध्वसं कियदल्पमेव प्राप्तं बहु साध्वसं वर्तत एव तथापि किञ्चित् साध्वसं परित्यक्तं । यस्माच्छ्रितो नल-

विषयो रमणाभिलाषो ययेति वा । अथ च श्रितः परिशीलितो ध्वान्तो नलविषयो यया बालया मम कण्ठोपभोगं न करिष्यतीति विनिश्चितनलाभिप्राया भयं न प्रापेति भावः । श्रितोऽनुष्ठितो नलाशयो यया नलज्ञायानुकूलवर्त्तिन्या प्रथमसम्भोगे पौरुषमवलम्ब्य क्रीडाकौतुककारी भवति, कान्ता त्वनुवर्त्तिनीयैव किमत्र ज्ञायेति तया किञ्चिदप्यजानानाऽल्पं भयं विहाय प्रियभावानुकूल्यमाश्रयतीति । एतदनुभवसाक्षिकमिति भावः ॥ ३० ॥

दूत्यसङ्गतिगतं यदात्मना प्रागशिश्रवदियं प्रियं गिरः । तं विचिन्त्य विनयव्ययं ह्रिया न स्म वेद करवाणि कीदृशं ॥ ३१ ॥

इदानीं लज्जानुभावपूर्वं कामशास्त्रानुरोधेन प्रथमसम्भोगक्रममाह— दूत्येति ॥ इयं भैमी प्राक् विवाहात् पूर्वं दूत्येन देवदूतव्यापारेण सङ्गतिं गतं सम्बन्धं प्राप्तं साक्षाद्दृष्टं प्रियं नलं आत्मना विरहप्रकाशिनीर्नयनमर्गोक्ता गिरो वाणीः अशिश्रवत् श्रावयामासेति यत् तं प्रियस्य स्वयमनश्रावणलक्षणं विनयस्य व्ययं नाशं चापल्यं विचिन्त्य विशेषेण स्मृत्वा ह्रिया कृत्वा कीदृशं किङ्करवाणीति न वेद स्म नाज्ञासीत् । तदानीं तन्मया महदनुचितं कृतं तत्प्रतिक्रिया कीदृशी भवति चाधुं किं कार्यमिति विनयव्ययस्मरणाज्जातया ह्रिया किंकर्तव्यतामूढाभूदित्यर्थः । उन्नतत्वं सूचितं । उन्नता हि पूर्वानुचितस्मरणाल्लज्जन्ते । अतो सम्भवेनापि मनज्ञाभूत् प्रारब्धसम्भोगानुभयदशायामनुमनज्ञात्वं किं वाच्यमिति भावः । अशिश्रवत् । शृणोतेर्णौ चङि ह्रियंचने उपधाह्रस्वत्वे सन्वल्लघुनीति (पा०७।४।९३) सन्वद्भावे श्रयति शृणोमि (पा ०७।४।८१) इत्यभ्यासस्येत्त्वं । प्रियं । शृणोतेः शब्दकर्मत्वाद्णौ कर्मत्वं ॥३१॥

यत्तया गदितनैषधः स्वयं प्राग्वृतः सपदि वीतलज्जया । तन्निजं मनसि कृत्य चापलं साऽशशाक न विलोकितुं नलं ॥ ३२ ॥

यदिति । तया सदसि मिलितलोकत्रयजनसमक्षं वीतलज्जया निर्लज्जया सत्या सपदि स्वयं परवर्त्तनाद्यभावेऽप्यात्मनैव वरणमालया कृत्वा यत् प्राक् नैषधो वृत इति तत् नलवरणलक्षणं निजं चापलं धार्ष्ट्यं मनसि कृत्य विचार्य्य, तदानीं लज्जा त्यक्ता मया महद्धार्ष्ट्यमवलम्बितमेतदनुचितमिति स्मृत्वा सा लज्जातिशयवशात्तदानीं नलं विलोकितुमपि न शशाक अत्राप्युत्प्रेक्षस्य सूचितं । तद्यापलं मनसि कृत्य विशेषेणेता प्राप्ता वामा लज्जा च तया कृत्वा नलं वीक्षितुं नाशकदिति वा । मनसि कृत्य पूर्ववत् ॥ ३२ ॥

आसने मणिमरीचिमांसले यां दिशं स परिरभ्य तस्थिवान् । तामसूयितवतीव मानिनी न व्यलोकयदियं मनागपि ॥ ३३ ॥

आसने इति । अनुरागातिशयादेकासने वर्त्तमानयोस्तयोर्मध्ये स नलः मणिमरीचिभिः खचितोत्तमरत्नप्रभाविकिरणैः मांसले व्याप्ते आसने सिंहासने स नलः यां दिशं परिरभ्य च सिंहासनप्रदेशमाश्रित्य तस्थिवान् । इयं भैमी तां दिशं मनागपि न व्यलोकयत् । उत्प्रेक्षते । असूयितवतीव ईर्ष्यावतीव । दिशं स्त्रीत्वादियं मद्भर्त्रालिङ्गितेति सपत्नीबुद्ध्या असूया कृतवतीव तां नापश्यदित्यर्थः । यतो मानिनी । लज्जाभयाभ्यां नापश्यत तत्रेयमुत्प्रेक्षा । असूयितवती । कण्ड्वादियगन्तात्क्तवतु उगित्वात् ङीप् ॥ ३३ ॥

ह्रीसरिन्निजनिमज्जनोचितं मौलिदूरनमनं दधानया । द्वारि चित्रयुवतिश्रिया तया भर्तृहूतिशतमश्रुतीकृतं ॥ ३४ ॥

ह्रीति । निरन्तरप्रवाहरूपत्वात् ह्रीरूपाया सरिति निजस्यात्मनो निमज्जनमुचितं योग्यं यस्यैवम्भूतं मौलेः शिरसो दूरं नितरां नमनमानानिर्नम्रीभावं दधानया तया द्वारि गृहद्वारदेशे चित्रलिखितयुवतिवत् श्रीः शोभा यस्यास्तया लज्जाभिभवात्स्पन्दहीनया. प्रवेशु ...

तिनिश्चलया तत्रैव स्थितया भैम्या, भैम्यागच्छेति भर्तुर्नलस्य कृतोना-माह्वानः श्रुत अश्रुतीकृत श्रुतमप्यश्रुतीकृत । श्रुतमपि लज्जाभया-भ्यामनुत्तरादगमनाद्वाऽश्रुतमिव कृतमित्यर्थः । नवोढाजातिरियं॥३४।

वेश्म पत्युरविशन्न साध्वसाद् वेशितापि श
यनं न साभजत् । भाजितापि सविधं न सा
स्वपत् स्वापितापि न च सम्मुखाभवत् ३५

वेश्मेति । सा किमग्रे भविष्यामीति साध्वसाद्भयात् पत्युर्वेश्म न स्वयमविशत् । अनन्तरं सख्या नलेन वा वेशितापि गृहमध्यं प्रापितापि शयनं नाभजत् । ततोऽपि सख्या नलेन वा शयनं भाजितापि सा सविधं नलसमीपं यथातथा नास्वपत् किन्तु दूरत एव निद्राति स्म । ततोऽपि सख्या नलेनैव बाहुपाल्यादिना सविधं समीपं स्वापितापि न च सम्मुखाऽभवत् किन्तु शय्यापार्श्वपट्टिकावलम्बिनी पराङ्मुख्येवाभूदित्यर्थः । प्रथमसम्भोगे मुग्धाया जातिरियं । साध्वसादिति सर्वत्र । अस्वपत् । अङ्गार्ग्येति (पा०७।३।९९) अट् ॥ सम्मुखा स्वाङ्गाच्चोपसर्जनाद् (पा०४।१।५४) इति विकल्पान्न ङीप् ॥ ३५ ॥

आत्मनापि हरहारसुन्दरी यत् किमप्यभिलला
ष चेष्टितं । स्वामिना यदि तदर्थमर्थिता मु
द्रितस्तदनया तदुद्यमः ॥ ३६ ॥

आत्मनेति । हरहारवत् गौरीवत् सुन्दरी । सा भैमी आत्मनापि स्वयमेव यत्किमपि यत् किञ्चिच्चेष्टितं तदुचितं कटाक्षवीक्षणता-म्बूलदानालापनादि अभिलषय कर्तुमैच्छत् तदपि तस्मै प्रयो-जनाय तदनुदानायेङ्गितज्ञेन स्वामिना नलेन ताम्बूलं देहीति यद्य-र्थिता याचिता तर्हि अनया भैम्या तस्य नलस्य उद्यमो याचनप्रय-त्नो मुद्रितः ताम्बूलादीनामदानात्खण्डितः । तेन याचिता सती न ददाविति भाव । एषिरेयर्थः । स्वामिनेत्यनेनावश्य कर्तव्यतायां म-

त्वामपीति सूचित । गौर्य्यपि प्रथमसम्भोगे हरेणार्पिता सत्येवमेवाक-रोदिति ध्वनि. ॥ ३६ ॥

केवलं न खलु भीमनन्दिनी दूरमत्रपत नैषधं प्रति । भीमजाहृदि जितः स्त्रिया ह्रिया मन्मथोऽपि नियतं स लज्जितः ॥ ३७ ॥

केवलमिति । भीमनन्दिनी केवल नैषध प्रति उद्दिश्य दूर नितरा अत्रपत लज्जा प्रापेति न किन्तु भीमजाहृदि वर्त्तमानत्वाद्ध्रिया ल-ज्जारूपया स्त्रिया जित खलु जित इव सोऽतिप्रसिद्धपराक्रम' हृद्येव वर्त्तमानो मन्मथोऽपि नियत बहुकाल लज्जित । मथ च मनो मथ्नाति पीडयतीति मन्मथ पृषोदरादि । एवंविधोऽपि जितो लज्जित स्तुर्चित्रश्चेति चित्र । ह्रायश्चाम्बलविषयोऽतिपीडाकरोऽपि कामो बहु-काल तामभिभवति स्मेति भाव । अन्योऽपि स्त्रिया जितो लज्जते ॥३७॥

ह्रीभराद्विमुखया तया त्रियं सज्जितामननुराग शंसिनि । स स्वचेतसि लुलोप सस्मरन् दूत्यकालकलितं तदाशयं ॥ ३८ ॥

ह्रीभरादिति । दूत्यकाले कलित बुद्ध परीक्षित तदाशय तैस्यभिप्रा-य सम्यक् दृढसंस्कारतया स्मरणपथारूढ स्मरन् विचारयन् स नल ह्री-भराद्विमुखया तया विमुखत्वादेवाननुरागशंसिनि किमस्या मयि अनु-रागो नास्तीति शङ्काशील स्वचेतसि सज्जिता जनिता अनुरागाभावस-म्भावनी भीति लुलोप निरस्यति स्म । दूत्यवसरमप्यनुरागातिशयादि-न्द्रादीनपि परित्यज्य मदलाभे कृतमरणनिश्चयेयमिदानीमनुराग न त्य-क्ष्यतीति निश्चित्य जाता शङ्का तत्याज । मुग्धा लज्जाभरादेव विमु-खीयं न त्वननुरागादिति निश्चिकायेत्यर्थ । तदाशय । औपत्याविवक्ष या षष्ठ्यभाव ॥ ३८ ॥

पार्श्वमागमि निजं सहालिभिस्तेन पूर्वमथ सा

तयैकया । क्वापि तामपि नियुज्य मायिना
स्वात्ममात्रसचिवावशेषिता ॥ ३९ ॥

पार्श्वमिति । तेन नलेन भयवशादेकाकिनो नलस्य सन्निधानमागच्छन्ती सा आलिभिः सखीभिर्भूयसीभिः सह निजं पार्श्वम् आगमिं प्रापिता । भवतीभिरपि कञ्चित् कालमनया सार्द्धमागन्तव्यमित्यादिष्टाभिस्ताभिस्तां स्वसन्निधिं प्रापितवानित्यर्थः । अथानन्तरं कियतापि कालेन किञ्चिद्विधासमाप्त्यनन्तरं एकया एकाकिन्यैव तया सख्या सह स्वन्तरपरिहारेण सन्निधिं प्रापिता । अथानन्तरं कियतापि कालेन तामपि सखीं क्वापि गन्धमाल्यताम्बूलाद्याहरणविषयेऽङ्गीकृत्य नियुज्य गन्धाद्यानयेति छलात् प्रेष्य, यतः मायिना कामशास्त्रोक्तकन्याविस्रम्भणकपटपटुना चतुरेण तेन स्वात्ममात्रः सन् यत्र सचिवः तया यस्याः स्वसहायैकाकिनोऽवशेषिता स्वसमीपे स्थापिता विजनादिति स्त्रीयमिङ्गितमदर्शयत् तदीयं वा ऽपश्यदिति भावः । कन्याविस्रम्भणप्रकारोऽयं । आगमि यन्तात् कर्मणि चिण् । चिणमुलोः ( पा०६।४।९३ ) इति दीर्घविकल्पात् पक्षे ह्रस्वः ॥ ३९ ॥

सन्निधावपि निजे निवेशितामालिभिः कुसुम
शस्त्रशास्त्रवित् । आनयद्व्यवधिमानिव प्रिया
मङ्क्षु पालिवलयेन सन्निधिं ॥ ४० ॥

सन्निधावपीति । स नल आलिभिः स्वयमेव निजे सन्निधौ निवेशितामपि तैनैव प्रयोजकेन स्वसमीपे प्रयोज्याभिः सखीभिः स्थापितामपि प्रियामङ्कपार्श्वभागीपृष्ठभागस्य स्वाङ्गेन स्वीयैकभुजालिङ्गनविशेषस्य वलयाकारेण वेष्टनेन कृत्वा सन्निधिमानयत् । यतः कुसुमशास्त्रः कामस्य वात्स्यायनादिप्रणीतं शास्त्रं वत्तीति वित् । तद्वेत्ता, व्यवधिमानिव, दूरस्थो यथा प्रिया सन्निधिमानयति । कामशास्त्रे ।

आदौ रतं बाह्यमिदं प्रयोज्य

तथापि चालिङ्गनमेव पूर्वमिति ।

तथा सामीप्यगाम्भीर्य नवोढां सन्निधापयेत् ।
विश्रामसद्मना गाढालिङ्गनात्त्याजयेद्भयम् ॥

इत्यादि सन्निधिस्थापनव्याजेन गाढमालिङ्ग्य भय त्याजितवानिति भावः ॥ ४० ॥

प्रागचुम्बदलिके ह्रियानतां तां क्रमाद्वनतां कपोलयोः । तेन विश्रसितमानसां झटित्या ननं स परिचुम्ब्य सिस्मिये ॥ ४१ ॥

प्रागिति । स ह्रिया आनतामसिनम्रान्तां प्राक् अलिके ललाटपट्टेऽचुम्बत् । अतिनतत्वात्तदानीं कपोलादिचुम्बनस्याशक्यत्वादिति भावः । ततः किञ्चिद्दूरचुम्बनभयत्वात् पूर्वापेक्षया दरनतामीषन्नम्रां किञ्चिदुन्नतमुखीं क्रमात् परिपाट्या तदानीमेवान्यदा वा किंयतापि कालेन द्वयोरपि कपोलयोश्चुम्बनेन ललाटफलकचुम्बनेन ततोऽपि विश्वसितमानसं यस्यास्तां ततोऽप्युन्नतमुखीमाननं झटिति मुखग्रहणादिभयादपि परिचुम्ब्य दुर्लभाधरचुम्बनलाभजनितानन्दवशात् सिस्मिये ईषद्धसितवान् । स्फुटहासे पुनर्लज्जा स्यादिति त्रपादीपकत्वहासेत्यर्थः । अयं च यदेतावत्पर्यन्तं त्वया वञ्चितं तदधुना मया लब्धमिति हासः । ललाटादीनि कामशास्त्रोक्तानि चुम्बनस्थानानि । इयमपि विस्रम्भणरीति ॥ ४१ ॥

लज्जया प्रथममेत्य हुङ्कृतं साध्वसेन बलिनाथ तर्जितः । किञ्चिदुच्छ्वसित एव तद्धृदि न्यग्भूत पुनरर्भकः स्मरः ॥ ४२ ॥

लज्जयेति । ललाटादिचुम्बनक्रमानुभावजातसुखविश्रम्भोल्लसितकामादयायास्तस्या हृदि मानसे किञ्चिदुच्छ्वसित एव विकसित एवार्भको मुग्धत्वादप्रौढः स्मरः प्रथमं चुम्बनजनितया लज्जया एत्य गत्य हुङ्कृतं हुङ्कारेण निषिद्धः । अथ पश्चाद्बलिना प्रबलेन चुम्बनजन्येन साध्वसेन सात्त्विकभयेन तर्जितो भर्त्सितोऽस्मदीयभैमीहृदयलक्षण

तयैकया । क्वापि तामपि नियुज्य मायिना स्वात्ममात्रसचिवावशेषिता ॥ ३९ ॥

पार्श्वमिति । तेन नलेन भयवशादेकाकिनी नलस्य सन्निधाननागच्छन्ती सा आलिभिः सखीभिर्भूयसीभिः सह निजं पार्श्वं आगमि प्रापिता । भवतीभिरपि कञ्चित् कालमनया सार्द्धमागन्तव्यमित्यादिष्टाभिस्ताभिस्ता स्वसन्निधिं प्रापितवानित्यर्थः । अथानन्तरं कियतापि कालेन किञ्चिद्विश्वासमाप्त्यनन्तरं सकया एकाकिन्यैव तया सख्या सह सख्यन्तरपरिहारेण सन्निधिं प्रापिता । अथानन्तरं कियतापि कालेन तामपि सखीं क्वापि गन्धमाल्यताम्बूलाद्याहरणविषयेऽलीकं नियुज्य गत्वा द्यानयेति छलात् प्रेष्य, यतः मायिना कामशास्त्रोक्तकन्याविस्रम्भणकपटपटुना चतुरेण तेन स्वात्ममात्रं सत एव सचिवं सखा यस्याः स्वसहायैवैकाकिन्यवशेषिता स्वसमीपे स्थापिता विजनाचितं स्वीयमिङ्गितमदर्शयत् तदीयं वा ऽपश्यदिति भावः । कन्याविस्रम्भणप्रकारोऽयं । आगमि यपन्तात् कर्मणि चिण् । चिण्णमुलोः (पा०६।४।९३) इति दीर्घविकल्पात् पक्ष ह्रस्वः ॥ ३९ ॥

सन्निधावपि निजे निवेशितामालिभिः कुसुमशस्त्रशास्त्रवित् । आनयद्ध्वनिमानिव प्रिया मङ्कुपालिवलयेन सन्निधि ॥ ४० ॥

सन्निधावपीति । स नल आलिभिः स्वयमेव निजे सन्निधौ निवेशितामपि तेनैव प्रयोजकेन स्वसमीपे प्रयोज्याभिः सखीभिः स्थापितामपि प्रियामङ्कपार्श्वसमीपपृष्ठभागस्य स्वक्रोडस्य स्वीयैकभुजालिङ्गनविशेषस्य वलयाकारेण वेष्टनेन कृत्वा सन्निधिमानयत् । यतः कुसुमशस्त्रशास्त्रं वात्स्यायनादिप्रणीतं शास्त्रं वत्तीति वित् । वलयेन, व्यवधानमिव, दृश्यता यथा प्रिया सन्निधिमानयति । कामशास्त्रे ।

आदौ रत पार्श्वमिद प्रयोज्य

तथापि चालिङ्गनमेव पूर्वमिति ।

तथा सामीप्यगाम्भीर्हं नवोढां सन्निधापयेत् ।

विश्वासछद्मना गाढालिङ्गनात्त्याजयेद्भयं ॥

इत्यादि सन्निधिस्थापनव्याजेन गाढमालिङ्ग्य भयं त्याजितवानिति भाव' ॥ ४० ॥

प्रागचुम्बदलिके ह्रियानतां तां क्रमाद्दूरनतां कपोलयोः । तेन विश्वसितमानसां झटित्याननं स परिचुम्ब्य सिस्मिये ॥ ४१ ॥

प्रागिति । स ह्रिया आनतामतिनम्राङ्गीं प्राक् अलिके ललाटपट्टेऽचुम्बत् । अतिनतत्वात्तदानीं कपोलादिचुम्बनस्याशक्यत्वादिति भावः । ततः किञ्चिद्गतचुम्बनभयत्वात् पूर्वापेक्षया दूरनतामीषन्नम्रां किञ्चिदुन्नतमुखीं क्रमात् परिपाट्या तदानीमेवान्यदा वा कियतापि कालेन द्वयोरपि कपोलयोश्चुम्बनेन ललाटफलकचुम्बनेन ततोऽपि विश्वसितमानसं यस्यास्तां ततोऽप्युन्नतमुखीमानने झटिति सुरतक्रीडादिभिया शीघ्रं परिचुम्ब्य दुर्लभाधरचुम्बनलाभजनितानन्दवशात् सिस्मिये ईषद्धक्रमहसत् । स्फुटहासे पुनर्लज्जा स्यादिति तथाद्दीयत्नकृतेत्यर्थः । अयं च मद्दैताधन्यमत्त त्वया वञ्चित तदपीदानीं मया लब्धमिति हासः । ललाटादीनि कामशास्त्रोक्तानि चुम्बनस्थानानि । इयमपि विस्तम्भणरीति ॥ ४१ ॥

लज्जया प्रथममेत्य हुङ्कृतः साध्वसेन बलिनाथ तर्जितः । किञ्चदुच्छ्वसित एव तद्धृदि न्यस्य भूत पुनरर्भकः स्मरः ॥ ४२ ॥

लज्जयेति । ललाटादिचुम्बनक्रमानुभावजातसुखविशेषोल्लसितकामोदयायास्तस्या हृदि मानसे किञ्चिदुच्छ्वसित एव विकसित एवार्भको मुग्धत्वादप्रौढ स्मरः प्रथमं चुम्बनजनितया लज्जया एत्य गत्य हुङ्कृतः हुङ्कारेण निषिद्धः । अथ पश्चाद्बलिना प्रबलेन चुम्बनजन्येन साध्वसेन सात्त्विकभयेन तर्जितो भर्त्सितोऽस्मदीयमेतद्धृदयलक्षण

स्वधनुषा समं सह मनागनामि शिथिलिता । कामेन धनुषि किञ्चि-दारोप्यमाणे लज्जा ऽप्यस्या जातेत्यर्थः । पूर्वं भामोभयलज्जाभ्यां स्थागित:, इदानीं तु भैमीभयं नलेन निराकृतं एका स्त्री प्रौरवशिष्टा सा कामेन सुखेनाक्षिप्तेति भयलज्जयो किञ्चिदपासनेन पूर्वं मन्दी-भूतो ऽपि कामस्तोकं पुनरुल्ललासेति भाव । अनामि । ज्वलत्वल मि (पा० १२३ । ५ । ५ ) इति वार्त्तिकान्मित्वस्य पाक्षिकत्वान्मि-त्वाभावे ह्रस्वाभाव. मित्वेऽपि चिण्णमुलोरिति ( पा० ६ । ४ । ९३ ) पाक्षिको दीर्घ ॥ ४८ ॥

सिस्मिये हसति तेन न स्म सा प्रीणितापि प रिहासभाषितैः । स्वे हि दर्शयति ते परेण का ऽनर्घ्यवृन्तकुरुविन्दमालिके ॥ ४९ ॥

सिस्मिये इति । तेन परिहासभाषितै परिहासप्रधानै सप्रेमवचनैः प्रीणिता जनितप्रीतिरपि सा तस्मिन् हसत्यपि विकसत्कपोलनयनं स्वलक्षितदन्त सिस्मिये स्मितञ्चकार । दर्शितदन्त प्रसरद्धास्य तु न चकार । अन्या तु परिहासप्रीणिता हसति इय तु नेति चित्रमित्य-पिशब्दार्थं । हि यस्मात् प्रसिद्धेऽनर्घ्ये निर्मूल्याः सुलतया दन्तास्त एव ताम्बूलरागत्वात् कुरुविन्दानि माणिक्या तेषां मालिकेऽल्पे ह्र-स्वे वा माले स्वे आत्मीये सद्वे स्वरूपे का कुलीना स्त्री परेणान्येन हासेन येन केनचित् पुरुषेण च दर्शयति दर्शनवत्यौ करोति, अपि तु हास्य स्त्रीणा दोष येयुत्तमस्त्रीत्वात् प्रकटितदशनं हास्य न च-कारेति युक्तं । न ह्यनर्घ्यं वस्तु अन्यस्मै प्रदर्श्यते । तेन सह न ह-सति स्मेति वा । स्मितहसितविहसितोपहासाट्टहासप्रकारैर्हास्यरसो भरतेन पञ्चविधो निरूपित इति स्मितहसितयोर्भेद । अपौ यः कर्त्तेति कर्तृसञ्ज्ञानुवादेन कर्मत्वविधानात् सञ्ज्ञापूर्वकविधेरनित्य-त्वात् परेणेत्यत्र दृशेर्बुध्यर्थत्वाद्गतिबुद्धीति (पा० १ । ४ । ५२ ) मा-प्तकर्मत्वाभाव ॥ ४९ ॥

वीक्ष्य भीमतनयास्तनद्वयं मग्नहारमणिमुद्रया

स्वधनुषा समं सह मनागनामि शिथिलिता । कामेन धनुषि किञ्चि-दारोप्यमाणे लज्जा ऽप्यस्या जातेत्यर्थः । पूर्वं मामोभयलज्जाभ्यां स्थगितः, इदानीं तु भैमोभयं नलेन निराकृतं एका लज्जैव परिशिष्टा सा कामेन सुखेनापितेति भयलज्जयोः किञ्चिदपासनेन पूर्वं मन्दीभूतो ऽपि कामस्तोकं पुनरुल्लसितेति भावः । अनामि । उपसर्गस्य घञ्यमनुष्ये बहुलमिति (पा० १२५ । ५ । ५) इति वार्त्तिकान्निपातस्य पाक्षिकत्वान्नित्यत्वाभावे ह्रस्वाभावे नित्येऽपि चिण्णमुलोरिति ( पा० ६ । ४ । ९३ ) पाक्षिको दीर्घः ॥ ४८ ॥

सिस्मिये हसति तेन न स्म सा प्रीणितापि प
रिहासभाषितैः । स्वं हि दर्शयति ते परेण का
ऽनर्घ्यवृन्तकुरुविन्दमालिके ॥ ४९ ॥

सिस्मिये इति । तेन परिहासभाषितैः परिहासप्रधानैः सप्रेमवचनैः प्रीणिता जनितप्रीतिरपि सा तस्मिन् हसत्यपि विकसत्कपोलनयनं अलक्षितदन्तं सिस्मिये स्मितञ्चकार । दर्शितदन्तं प्रसरद्धास्यं तु न चकार । अन्या तु परिहासप्रीणिता हसति इयं तु नेति चित्रमित्यपिशब्दार्थः । हि यस्मात् प्रसिद्धे ऽनर्घ्यौ निर्मूल्याः सुलक्षणा दन्तास्त एव ताम्बूलरागत्वात् कुरुविन्दानि माणिक्यानि तेषां मालिके ऽल्पे हे स्वे वा माले स्वे आत्मीये मद्दस्वरूपे का कुलीना स्त्री परेणान्येन स्वामिना येन केनचित् पुरुषेण च दर्शयति दर्शनयत्ने करोति, अपि तु हास्य स्त्रीणां दोष येन्युनमरसत्वात् प्रकटितदशनं हास्यं न चकारेति युक्तं । न ह्यनर्घ्यं वस्तु अन्यस्मै प्रदर्श्यते । तेन सह न हसति स्मेति वा । स्मितहसितविहसितोपहासापहसितातिहसितप्रकारैर्हास्यरसो भरतेन पञ्चविधो निरूपित इति स्मितहसितयोर्भेदः । अधो यः करोतीति कर्तृसञ्ज्ञानुवादेन कर्मत्वविधानात् सञ्ज्ञापूर्वकविधेरनित्यत्वात् परेणेत्यत्र दृशेर्बुद्ध्यर्थत्वाद्गतिबुद्धीति (पा० १ । ४ । ५२ ) प्राप्तकर्मत्वाभावः ॥ ४९ ॥

वीक्ष्य भीमतनयास्तनद्वयं मग्नहारमणिमुद्रया

ङ्कितं । सोढकान्तपरिरम्भगाढता सा त्वमानि सुमुखी सखीजनैः ॥ ५० ॥

योत्स्येति । सखीजनैस्तु सा सुमुखी सोढा कान्तस्य परिरम्भणानामालिङ्गनानां गाढता दृढपीडनं यया एवम्भूतामानि अनुमिता । किं कृत्वा । भीमतनयायास्तनद्वयं, स्तनद्वये मग्नानां हारमणीनां मुद्रया किञ्चिद्गम्भीररक्तीभूतस्थानघियाङ्कितं चिह्नितं वीक्ष्य । स्तनयोर्मग्नहारमणिस्थानदर्शनादन्यथानुपपत्त्या गाढालिङ्गनमनया सोढमिति सखीभिर्ज्ञातमित्यर्थः । सुमुखीत्यनेनालिङ्गनसञ्जातहर्षो ऽपि सूचितः ॥ ५० ॥

याचते स्म परिधापिकाः सखीः सा स्वनीविनिविडक्रियां यदा । अन्वमिन्वत तदा विहस्य ता वृत्तमत्र पतिपाणिचापलं ॥ ५१ ॥

याचत इति । सा यदा यस्मिन् समये परिधापयन्तीति परिधापिकाः सखीः स्वनीव्याः आत्मीयवस्त्रमेखलाबन्धस्य निविडक्रियां गाढबन्धनं याचते स्म प्रार्थितवती तदा ताः सख्यो अन्योन्यमुखविलोकनपूर्वं विहस्यात्र नीवीबन्धश्लथीकरणार्थं वृत्तं जातं पत्युः पाणिचापलं बलादुन्मोचनव्यापारमन्वमिन्वतानुमितिविषयमकुर्वन् । अन्यथैवं प्रार्थना न युज्यते इति पूर्ववृत्तं निश्चितवत्य इत्यर्थः । धापिर्द्विकर्मा । अन्वमिन्वत । मिनोतिरनुपूर्वो ज्ञानार्थः ॥ ५१ ॥

कुर्वती निचुलनं ह्रिया कियत् सौहृदाद्वियत सौरभं कियत् । कुड्मलेन्मिषितसूनरश्मिनीं पद्मिनीं जयति सा स्म पद्मिनी ॥ ५२ ॥

कुर्वतीति । कामशास्त्रोक्तलक्षणा पद्मिनी सा भैमीपद्मिनीं कमलिनीं जयति स्म । किम्भूता । कियत् किञ्चित् मुखादि सम्भोगकर्म ह्रिया निचुलनं स्थगितमप्रकटं कुर्वती । कियदालिङ्गनादिकं सौहृदाद्वितमीक्ष्या

द् विवृतं प्रकटितं सौरभं कामशास्त्रोक्तकौशलं यत्र एवम्भूतं कर्म्माणि । किम्भूतां पद्मिनीं । कुड्मलोन्मिषितानि मुकुलान्येव प्रफुल्लानि सूनानि पुष्पाणि सेवते भजत्येवंशीलां । अर्द्धविकसितपुष्पवतीं निघुलितकलिकास्थानीयां विवृतसौरभां विकसितपुष्पस्थानीयां । कियत् कलिकारूपकियद्विकसितमला कमलिनीव साभूदित्यर्थः । विवृतं सौरभं मनोज्ञत्वं सौगन्ध्यं वा यस्येति वा ॥ ५२ ॥

नाविलोक्य नलमासितुं स्मरो ह्रीर्न वीक्षितुमदा न्मृगीदृशः । तद्दृशः पतिदिशाचलन्नथ ह्रीडिताः समकुचन्मुहुः पथः ॥ ५३ ॥

नेति । स्मरो मृगीदृशः सुन्दर्या भैम्या नलमविलोक्यासितुं स्थातुं ह्रीश्च समीक्षितुं नादात् यस्मात्तस्मात्तस्या दृशः कटाक्षविक्षेपरूपा नेत्रव्यापाराः क्रमेण पतिदिशा नलाधिष्ठितदेशमुद्दिश्य चलितवतीव वारं वारमचलन् । अथ पश्चात् अभिमुख नलनेत्रसम्मेलने सत्यनन्तरं व्रीडिताः सत्यः नलमप्राप्य पथो मार्गादेव मुहुः पुनः पुनः समकुचन् परावृत्ताः कामप्रेरितत्वाद्दीक्षितुमारेभे, लज्जया निषिद्धत्वाच्च तदीक्षणान्निवृत्तेति भावः । लज्जाकामयोः समबलत्वाद्भावसन्धिः । दृशां व्यापारापेक्षया बहुत्वं ॥ ५३ ॥

नानया पतिरनायि नेत्रयोर्लक्ष्यतामपि परोक्षतामपि । वीक्ष्यते स खलु यद्विलोकने तत्र तत्र नयने ददानया ॥ ५४ ॥

नेति । अनया पतिः प्रियो नेत्रयोर्लक्ष्यतां गोचरत्वमपि नानायि परोक्षतामगोचरत्वमपि न प्रापि । नन्वेकस्य वस्तुनः परोक्षता वा भवेदपरोक्षता वा भवेन्न तूभयता विरोधादित्याशङ्क्यापपादयति । खलु यस्माद्धेतोः यस्य हारमुकुरस्तम्भादेर्वस्तुनो विलोकने सति स नलो वीक्ष्यते तत्र तत्र हारादिवस्तुनि विषये नयने ददानया प्रेरयन्त्या मुकुरादेर्विलोकने तत्र तत्र प्रतिबिम्बितो नलोऽनुपलक्षितदर्श-

नेन दृष्टो नासियं पश्यतीति तेनाघ्रातत्वात् उद्दिश्यतया विम्बरूपस्तु न दृष्ट इति विषयान्तरविलोकनव्याजेन प्रसङ्गात् सञ्जातदर्शनस्य नल स्योभयरूपताकारेण वैचित्र्यादेकस्यापि विरुद्धोजयरूपस्वरूपसम्भवे स- स्कारेन्द्रियाभ्यां सहोत्पादनाच्चास्ते प्रत्यभिज्ञावर्णाके च सरतुरगोभयो भूतत्वाद्वेसरवच्च युक्तेत्यर्थः । लज्जावशात् साक्षाद्यद्यपि नापश्यत्तथा- पि कामप्रेरितत्वाद्दर्पणादिद्वाराऽपश्यदिति भावः । वीक्ष्यते स्मेति पाठः सुबोधः । यद्यस्माद्विलोकने नलविलोकननिमित्तां तत्र तत्र व- स्तुनि नेत्रे ददत्या स वीक्ष्यते स्मैव तस्माच्चक्षुष्मत्ता परोक्षता च ना- नायीति वा ॥ ५४ ॥

वासरे विरहनिःसहा निशां कान्तसङ्गममयं स
मैहत । सा ह्रिया निशि पुनर्दिनागमं वाञ्छ
ति स्म पतिकेलिलज्जिता ॥ ५५ ॥

वासर इति । सा यस्माद्वासरे दिने विरहनि सहा सम्भोगविच्छेद वोढुमशक्ता तस्मात् कान्तस्य सम्भोगसमय सम्भोगसमयरूपा निशा स मैहत, रात्रिः कदा वा समेष्यतीति । निशि प्राप्तायां पत्यु केलिभि. नवनवकामक्रीडाभिर्लज्जितात एव ह्रिया कत्या पुनर्दिनोदय वाञ्छ- ति स्म । प्रभात कदा वा समेष्यतीति । हेतुहेतुमद्भावाच्च पौनरुक्त्य। सहजया ह्रिया युक्ता ततोऽपि पतिकेलिभिर्विशेषेण लज्जितेति वा न पौनरुक्त्य ॥ ५५ ॥

तत् करोमि परमभ्युपैमि यन्मा ह्रियं व्रज भियं
परित्यज । आलिवर्ग इव ताहमित्यमूं शश्वदाश्व
सनमूचिवान्नलः ॥ ५६ ॥

तदिति । नलः इमां भैमीं शश्वन्निरन्तर इति आश्वसनं विश्वासहेतु वच. ऊचिवान् । इति किं ? हे भैमि चतुर्विधेष्वालिङ्गनचुम्बनादिषु म ध्ये यत् त्वं अभ्युपैषि अनुमन्यसे तत्परं केवलं अत्यर्थं वा करोमि ना न्यत्, तस्माद्भियं मा व्रज, पुनरुपमर्द्देन किं वा भावीति चित्ते धृता

त्रियं परित्यज, यतोऽहन्ते ष्वालिवर्ग इव सखीसमूहतुल्यः, तस्मात्त-
स्मिन् यथा विश्वसिषि तथा मय्यपि विश्वसिहि भयं मागमीरिति ।
इह त इति पाठे इह चुम्बनादौ विषयेऽहन्तवालिवर्ग इव, सखी-
कर्तृके चुम्बनखादौ यथा कापि न भीतिस्तथात्रापी-त्यर्थः ॥ ५६ ॥

येन तन्मदनवह्निना स्थितं ह्रीमहौषधिनिरु
द्धशक्तिना । खिद्धिमद्भिरुदतेजि तैः पुनः स प्रि
यप्रियवचोऽभिमन्त्रणैः ॥ ५७ ॥

येनेति । येन तस्या मदनरूपेण वह्निना, ह्रीरेव महौषधिर्दिव्यौष-
धिस्तया निरुद्धा शक्तिः सामर्थ्यं यस्य तेन, लज्जया विलीनेन स्थि-
तं, स कामाग्निः पुनः खिद्धिमद्भिः प्रकृतार्थसाधनसमर्थैस्तैरुक्तरूपैः
प्रियस्य प्रियवचांसि तद्रूपाण्यभिमन्त्रणानि रहस्यमन्त्ररूपास्तैरुदतेजि
प्रदीपि प्रकटीकृतसामर्थ्योऽकारीत्यर्थः । पूर्वोक्ताश्वासवचनैः पुनरुद्दी
प्तकामा जातेति भावः । अन्योऽपि वह्निरौषधवलिरुद्धशक्तिः सुसिद्धै-
र्वह्निप्रकाशकैर्मन्त्रैः पुनरुद्दीप्यते । उदतेजि । तिज निशाने । निशा
नमुद्दीप्तकरणं । अत्र समासोक्तिरलंकारः ॥ ५७ ॥

यद्विधूय दयितार्पितं करं दोर्द्वयेन पिदधे कुचौ
दृढं । पार्श्वगं प्रियमपास्य सा ह्रिया तं हृदि स्थि
तमिवालिलिङ्ग तत् ॥ ५८ ॥

यदिति । सा दयितेन मर्दनाय कुचयोरुपर्यर्पितं करं करान्या
विधूय निराकृत्य स्वस्तिकरूपेण करद्वयेन दृढं कुचौ यत् पिदधे तत्तेन
कुचपिधानप्रकारेण पार्श्वगं समीपे स्थितं प्रियं ह्रियापास्य हृदि स्थितं
तमेवालिलिङ्गेत्युत्प्रेक्षा । स्त्रीणां गात्रस्पर्शो यन्निवारणं तदेव कामस्य
परमायुधं । आलिङ्गनेन यथा कामः प्रदीप्तो भवति तथा कुचमर्दन-
निषेधपरेण कुचपिधानेनापि नलः प्रदीप्तकामो जात इति भावः ।
मुग्धाजातिरियं ॥ ५८ ॥

अन्यदस्मि भवतीं न याचितायारमेकमधरं ध.

यामि ते । इत्यसिस्वददुपांशुकाकुवागुपमर्द्दं
हठवृत्तिरेव तं ॥ ५९ ॥

अन्यदिति । इति एवम्प्रकारादुपांशु सद्भीत्या प्रार्थनादैन्यवशात् काकु ध्वनिविकारयुक्ता वाक् यस्य स नलो दीनप्रार्थनवशात् किञ्चिदनुमतौ सत्यामुपमर्द्दं दन्तदशनोष्ठपीडनगाढालिङ्गनादौ या ह॰ ठ तेन सहिता वृत्तिरधरपानादिव्यापारो यस्य सोऽयमन्यदा करधूननादिसविघ्नाधरपानहठवृत्तिर्यस्य वा एवम्भूत एव सन् तमधरमसिस्वदत् अपात् । एवमालिङ्गनाद्यपि । इति किं ? हे भैमि अहं भवतीं त्वामन्यदपरं किमपि कुचमर्द्दनादि न याचितास्मि प्रार्थयिष्ये, किन्तर्हि अहं एकवारं तेऽधरं धयामि पिबामि । अपाने दीनवचनं । पाने तु बलात्कारं एकवाराधरपानानुमतेरुपमर्द्दन साङ्गेन ताडिता हठवृत्तिरननुमतद्वितीयवाराधरपानव्यापारो यस्येति वा । एकवाराधरपानमात्रानुमतौ लब्धायामालिङ्गनाद्यपि द्वितीयाद्यधरपानमप्यकरात् दपराधभाजनं त्वमन्तरं करिष्यामीति बुद्धोतिज्ञाय । पूर्वं मात्रपानमात्रमकरादनन्तरं नखक्षताद्यपीति केचित् । अन्यदेति पाठ क्षणान्तरे पुनरधरपानमपि न याचिष्य इत्यर्थं । सोऽयमर्द्देति पाठे काऽप्यमर्द्दं किञ्चिन्मात्रो हठो यत्रैवंविधो व्यापारो यस्य । पूर्व्वपाठे स इति ज्ञेयः । याचिता तृच् । वारं । काले द्वितीया ॥ ५९ ॥

पीततावकमुखासवोऽमुना भृत्य एष निजकृत्यम
र्हति । तत्करोमि भवदूरुमित्यसौ तत्र सन्य
धित पाणिपल्लवं ॥ ६० ॥

पीतेति । असौ नलः इत्युक्तिव्याजेन तयोरूरोः पाणिपल्लवं मृदुसुखस्पर्शतया पल्लवतुल्यं पाणिं सन्न्यधित न्यधात् सन्निवेशितवान् इति किं ? हे भैमि एष भृत्यः नलरूपो दासः पीततावकमुखासवोऽमुना मधुना पीतत्वदीयमुखमधुः गुणगृह्यो यतैवम्भूत अतएव अमुना निजस्य चरणसंवाहनादिरूपं भृत्यसम्बन्धि कार्यं कर्त्तुमर्हति उचितो भवति । तस्मात् गुरुतरानुग्रहाविष्कारादिना स्थितं भवदूरु त्वदीयमूरु

करोमि संवाहयामि । अथ सामर्थ्यादूर्ध्वं करोमीति । अनेकार्थत्वात् करोतिः संवाहनार्थः । अन्योऽपि भृत्यो भुक्तमुत्थाच्छिष्टचरणसंवाहनं करोति ॥ ६० ॥

चुम्बनादिषु बभूव नाम किं तद्भया भयमिहापि मा कृथाः । आलपन्निति तदीयमाद्रिमं स व्यमु स रसनावलिव्ययं ॥ ६१ ॥

चुम्बनेति । इत्युदीर्य्य, सोऽयं नलः, मृगीदृशस्तदानीमतिसमयच्छलदृष्टो भैम्या आदिम कदाचिदप्यकृतपूर्वत्वात् प्रथमं रसनावलिव्ययं मेखलाकलापमोचनं निर्म्ममे चक्रे । ऊरुस्पर्शादौ यास्य भयञ्च भजन्त्या भैम्या एवमिलम्बाथपूर्वकं वचनमाचकर्षेति भावः । इति किं ? नामेत्यनुभूतविषयप्रश्नाभिनये, हे भैमि चुम्बनालिङ्गनादिषु किं नाम विरुद्ध बभूवापि तु न किञ्चित्, तस्मादिहाप्यस्मिन् क्रियमाणे सुरतारम्भेऽपि मुजपीडने वा मेखलामोचने वा वृथा अकारणं भय मा कृथा ॥ ६१ ॥

अस्ति वाम्यभरमस्ति कौतुकं चास्ति घर्म्मजलमस्ति वेपथु । अस्ति भीति रतमस्ति वाञ्छितं प्रापदस्ति सुखमस्ति पीडनं ॥ ६२ ॥

अस्तीति । सा एवम्भूत रत प्रापत् । किम्भूत । आरम्भसमये अस्ति वर्त्तमानो वाम्यभरो रतिप्रातिकूल्याचरणबाहुल्यं यत्र, आरम्भानन्तरञ्च अस्तिकौतुक अननुभूतचरत्वादत्याश्चर्य्यं यत्र, ततोऽपि सात्विकोत्पत्तेः अस्तीदृशास्ति घर्म्मजल यत्र, तथा अस्ति वेपथुर्यत्र, ततः सम्भोगे प्रारब्धे भये निवृत्तेऽपि किमन्ते भावीत्यस्ति भीतिर्यत्र, तथा सुरतहेतुत्वादस्ति वाञ्छितमभिलाषो यत्र, तथा लिङ्गकमसम्भूदस्ति सुख यत्र, समरसमुरतावसानमज्ञातमुखमिति यावत्, ततोऽप्यस्ति पीडन सम्भोगावसाने सर्वाङ्गगाढालिङ्गनं यत्र, एवम्भूतं प्रथमसम्भोगमत्यभूदिति भावः । अस्तीति (सि० कौ० २९।१।७५) विभक्तिप्रतिरूपमव्यय । अस्ति क्षीरादयश्चेति समासः ॥ ६२ ॥

बाह्विति । तेन बोधिता सा भैमी इति पूर्वोक्तप्रकारेण समकेति सङ्केतिता । इति किं । हे भैमि उत्सुकाः स्वस्वकार्यसाधनोत्साहघ्नन्तो जना यत्र रात्रिवृत्ताकर्णनाद्यर्थमुत्सुक- सखीजनो यत्रैवंविधे वा दिने, स्मित इति भैमीसम्बोधनं वा, दिवसेऽपि ते सम्बन्धिनीः, बाहू च वक्त्रं च जघनं च स्तनौ च अङ्घ्री च तस्य वाऽऽह्लादे कामशास्त्रप्रसिद्धा ये बन्धा नागपाशादीनि करणानि तेषां गन्धो लेशो विद्यते यत्र तादृशं रतं तेन सङ्गता मिलिताश्च ता नलयन्न नितरां नम्रस्वातिकौशलातिशयनिर्मितानवद्यधर्मीभावात् सङ्गता इति पृथग् वा नतीरिच्छुरभिलाषुकोऽस्मीति रात्रिकृतमन्यरतप्रत्यभिज्ञानं यथा जनयति तथा वीक्षणमात्रेणेङ्गितं कृत्वानुरागातिशयाद्दिनेऽपि स्वीय तादृग्रताभिलाषं तां प्रति ज्ञापितवानिति भावः । यद्वा वाऽऽह्लादेस्ता प्रसिद्धाः क्रमेण बन्धश्च गन्धश्च रतञ्च सङ्गतञ्च आननञ्च ता बाह्वोर्नागपाशादिबन्धा वक्त्रस्य गन्धः पद्मिनीत्वात् सौरभं जघनस्य रत स्तनयोः सङ्गतश्लेषश्चरणयोः पतनमानतिरित्यर्थः । स्वस्वसम्बन्धिनीस्ताः स्वस्वव्यापारकारणमात्रनिरता दृष्टिता जना यत्रैवम्भूते दिनेऽपि इच्छुरस्मीति विवक्षिता तामेन स्वाशयं ज्ञापिता । यद्वा त्वां पश्यामि तदैवं ममैव वाञ्छोदेति त्वद्दर्शनमेव मम सम्भोगसमय इति च ज्ञापितेति भावः । उत्सुकसखीजनं स्मिते इति पाठे रात्रिवृत्तप्रश्नग्राच्छादनार्थे तस्माल्लज्जा माभूदिति अस्मिते स्मितरहिते प्रोढिते एवंविधे सानुमेयोत्सुके सखीजने सखीजनसन्निधौ पूर्वोक्तप्रकारेण वा तेन सङ्केतिता शङ्किता । यद्वाऽथवाचरित वाहुबन्धादि तदिदानीमिच्छुरस्मीति रात्रिवृत्तान्तज्ञापनार्थं सखीसन्निधावेवमुक्तेत्यर्थ, अत एव मा व्रीडिता । उत्सुके सखीजने स्मिते प्रारब्धहासे सति व्रीडितेति वा । त्वं भैमि ते बाह्वादिबन्धादीन् दिने वीक्षिता दृष्टा एवम्भूतोऽभिलाषुको ऽसि, रात्रौ यद्यपि कृतास्तथापि न दृष्टा । तस्माद् दिने तद्दर्शने दिदृक्षुरस्मीत्येव मा तेन शङ्किता न परमहमेव किन्तु त्वत्सखीजनोऽपीत्युत्सुकपदेन सूचितमिति वा । व्याख्यानान्तर ग्रन्थगौरवभयान्नोक्तं । नतीरित्यत्र वशुगीविततेत्येताभ्यां योगे, न

लोकेति ( पा० २ । ३ । ६९ ) षष्ठीनिषेधः ॥ ६५ ॥

प्रातरात्मशयनाद्विनिर्यतीं सन्निरुध्य यदसाध्यमन्यदा । तन्मुखार्पणमुखं सुखं भुवोजम्भजित्क्षितिशचीमचीकरत् ॥ ६६ ॥

प्रातरिति । भुवो जम्भजिद्भूमीन्द्रो नलः प्रातरात्मशयनादुत्थाय विनिर्यतीं शीघ्रं बहिर्निर्गन्तुकामां सन्निरुध्य चेलाञ्चलादौ सम्यक् धृत्वा क्षितिशचीं भूमीन्द्राणीं सुन्दरीं सौभाग्यवतीं च अन्यदा अन्यस्मिन् काले रात्रौ प्रागेव क्षोभवशाद्यदसाध्यमप्राप्य तत्तस्या मुखार्पणं मुखमादिर्यस्य तत् सुखं सुरतं अचीकरत् । रात्रिप्राप्तसमये त्वं न दुक्तं चेत् करिष्यसि तर्हि बहिर्गमनं तुभ्यं दास्यामि नान्यथेति तां सन्निरुध्यालिङ्गनादि कृतवान् । सा गन्तुकामापि चेदेतदुक्तं न करिष्यामि तर्ह्येव गन्तुं न दास्यति सखीनामयमत्रागमनसमय इति विचार्य चुम्बनादि दत्त्वा शीघ्रं निर्गतेति भावः । सुखमनायासेनाचीकरदिति क्रियाविशेषणं वा । प्रभातसमये पद्मिनी रत्यर्थेति कामशास्त्रम् । क्षितिशचीमिति । हृक्रोरिति (पा०१।४।५३) कर्मत्वम् ॥ ६६ ॥

नायकस्य शयनादहर्मुखे निर्गता मुदमुदीक्ष्य सुभ्रुवां । आत्मना निजनवस्मरोत्सवस्मारिणी यमहृणीयत स्वयं ॥ ६७ ॥

नायकस्येति ॥ अहर्मुखे प्रातर्नायकस्य शयनान्निर्गता इयं भैमी सुभ्रुवां प्रौढानां सुन्दरीणां सख्यादीनां स्वस्वप्राणेशसुरतजनितां मुदमानन्दमुदीक्ष्य आत्मनैव निजः स्वीयो नवः स्मरोत्सवः सम्भोगस्तस्य स्मारिणी स्मारयन्शीला सती स्वयमेवाहृणीयत लज्जिता । अनतिप्रौढत्वाल्लज्जा जाता । शयनान्निर्गतां सखीनां प्रौढपतिसंभोगप्रकाशीभासांदि दृष्ट्वा स्वसम्भोगचिह्नेन स्वस्वरूपेण एत्य निजनवस्मरोत्सवस्मारयन्तीशीला या सती स्वयं लज्जा । निजपदेत्यपि पाठः । सुभ्रूश् कंप्वादि ॥ ६७ ॥

तां मिथोऽभिदधतीं सखीं प्रियस्यात्मनश्च स
निशाविचेष्टितं । पार्श्वगः सुरवरात् पिधां द
धददृश्यतां श्रुतकथो हसन् गतः ॥ ६८ ॥

तामिति । स नलः तां भैमीं हसन् दृश्यतां गतः, स्वेच्छयैव पुनर्मैथमगोचरत्वं प्राप्तः । किम्भूता । प्रियस्य नलस्य आत्मनः स्वस्य च स्वसखीं प्रति मिथो रहसि निशाविचेष्टितं सम्भोगादि रात्रिवृत्तान्तमभिदधतीं कथयन्तीं । किम्भूतः । सुराणां वरात् पिधामदृश्यत्वं दधत्, अत एव पार्श्वगो निकटस्थः, अत एव श्रुता भैम्यभिधीयमाना रात्रिवृत्तान्तकथा येन । अदृश्येन मया अत्रैव स्थित्वा सर्वं श्रुतमिति प्रत्यक्षो भूत्वा हसन् चाकथयदित्यर्थः । हसद्गत इति पाठे श्रुतकथो दृश्यतां गतस्तामहसदित्यर्थं । पिधेति आतश्चोपसर्गे (पा०३।३।१०६)इत्यङ्॥६८॥

चक्रदारविरहेक्षणक्षणे बिभ्यती धवहसाय साभ
वत् । क्वापि वस्तुनि मदत्यनागतं चित्तमुग्धद
निमित्तवैकृते ॥ ६९ ॥

चक्रेति । सा भैमी चक्राणां चक्रवाकानां दारैः चक्रवाकीभिः सह विरहस्येक्षणक्षणे दर्शनकाले सन्ध्यायां, ममापि प्रियेण सहैतद्वियोगो माभूदिति तत्क्षणमपि वियोगाद्बिभ्यती धवस्य नलस्य हसाय हासायाभवत् । सन्ध्यावन्दनमात्रजन्येनैव वियोगेन चक्रवियोगदर्शनमात्रेण च किमिति विभेषीत्येवं सा प्रियेण हसितेत्यर्थः । तावतैव वियोगेन तद्वियोगदर्शनमात्रेण च किमिति भीतेत्याशङ्क्याह क्वापि कस्मिंश्चिद्वस्तुनि विषये उत्पद्यमानमनिमित्तमकारणं वैकृतं हर्षशोकभयादि यस्मिन्नेवम्भूतं चित्तं कर्तृ अनागतभाविनमर्थं शुभमशुभं वा वदति, तस्माद् भाविवियोगसूचिका साध्वसो तस्या भीतिर्युक्तेत्यर्थः । भावी विरहः सूचितः । एवं ज्ञातास्वादा नितरां सम्यग्नुरक्ता चेति सन्तोषवशात् स तेन हसितेति भावः । बिभ्यतीं स परिरभ्य मुग्धदृगिति पाठे भयमोचनार्थं गाढमालिङ्ग्यैव तस्थावित्यर्थः । विकृतिरेव वैकृतं, प्रज्ञादित्वादण् ॥ ६९ ॥

चुम्बितुं न मुखमाचकर्ष यत् पत्युरन्तरमृतं ववर्ष तत्। सा नुनोद न भुजं यदर्पितं तेन तस्य किमभून्न तर्पितं ॥ ७० ॥

चुम्बितुमिति। सा क्रमेण गतभोर्जितलज्जा च सती चुम्बितुं प्रियेण चुम्बितुमारब्धं मुखं यन्नाचकर्ष वक्रीचक्रे तच्चुम्ब्यमानमुखानाकर्षणं कर्तृ पत्युरन्तश्चेतसि अमृतं ववर्ष। तदीयं मनः सुधावृष्ट्येव परितुष्टं चक्रे इत्यर्थः। तथा तेन स्तनादावर्पितं भुजं यन्न नुनोद निराचकार तेन भुजस्वीकारेण प्रयोजकेन तस्य किमङ्ग तर्पितं नाभूत् अपि तु सर्वाङ्गं तेन प्रीणितमभूत् ॥ ७० ॥

नीतयोः स्तनपिधानतां तया दातुमाप भुजयोः करं परं। वीतबाहुनि ततो हृदंशुके केवलेऽप्यथ स तत्कुचद्वये ॥ ७१ ॥

नीतयोरिति। स नलः तया पाणिपीडनभिया स्तनपिधानतां कुचाच्छादनतां नीतयोः प्रापितयोस्तदीयभुजयोः परं केवलं करं दातुं स्प्रष्टुं चाप शक्तोऽभूदित्यर्थः। ततोऽनन्तरं वीतबाहुनि अपनीतभैमीकरे हृदंशुके हृदयावरणवस्त्रे करं दातुमाप। अथ ततोऽपि पश्चात् केवले निरंशुके तत्कुचद्वये करं दातुमाप। मुग्धा जातिः। लज्जापचयकामापचयौ क्रमेणोक्तौ ॥ ७१ ॥

याचितां न ददतीं नखार्पणं तां विधाय कथयान्यचेतसं। वक्षसि न्यसितुमात्तनःकरः स्वं विभिद्य मुमुदे स तन्नखैः ॥ ७२ ॥

याचितामिति। त्वमपि नखोल्लेखं कुरु इति प्रेमभरेण याचनादपि नखक्षतं न ददतीं कथापि कथयान्यस्मिन् गोष्ठीरूपे कथया चेतो यस्यास्तां विधाय च गोष्ठीसंवादनुसन्धानव्याजेन स्ववक्षसि न्यसितुं न्यासयितुं आत्तः स्वहस्तेन गृहीतस्तस्याः करो येनैवंभूतः सन् तस्याः स्वहस्तधृतहस्तनखैः स स्वशरीरं विभिद्य विलिख्य मुमुदे ॥ ७२ ॥

स प्रसह्य हृदयापवारणं हर्तुमक्रमत सुभ्रुवो बहिः । ह्रीमयं न तु तदीयमान्तरं तद्विनेतुमभवत् प्रभुः प्रभुः ॥ ७३ ॥

स इति । स प्रभुः स्वामी सुभ्रुवो भैम्याः बहिर्हृदयापवारणं स्तना-च्छादि वसनं प्रसह्य हठाद्धर्तुमक्रमत, तु पुनः ह्रीमयं आन्तरं अन्त-स्य भैमीसम्बन्धि तत्कामक्रीडानिवारकं कुलस्त्रीहृदयभूषणीभूतमपवा-रकमपनेतुं प्रभुः समर्थो नाभवत् । एवं विस्रम्भणक्रमेण यद्यपि लज्जा त्याजिता तथापि हृदयाच्छादिवस्त्रापाकरणपूर्वं कुचस्पर्शादिना पुनर-पि लज्जितैवेति भावः ॥ ७३ ॥

सा स्मरेण बलिनाप्यहापिता ह्रीक्रमे भृशमशोभताबला । भाति चापि वसनं विना न तु ह्रीहधैर्यपरिवर्जनं जनः ॥ ७४ ॥

सेति । सा बलिना प्रभाववता अथ च प्रद्योहेनापि स्मरेण ह्रीक्रमे लज्जाधैर्ये अहापिताऽत्याजिता सा अबला स्त्री अथ च बलीत्वाद् दुर्बला भृशमशोभत, युक्ताऽयमर्थः । यतो जनो वसनं विनापि भाति च शोभत एव तु पुनः ह्रीहधैर्ययोः परिवर्जने परित्यागे नैव शोभते । तस्माद्युक्तमर्थान्तरन्यासः । तद्ह्रीहेऽपि कामे लज्जाधैर्यापरित्यागाक्लि-ष्टतरं मनस्स्पृहणीयत्वात् शुशुभ इति भावः ॥ ७४ ॥

आस्थ नेति रतयाचितेन चेन्मामतानुमतस्त्वमि स्फुटं । इत्यमुं तदभिलापनोत्सुकं धूनितेन शिरसा निरास सा ॥ ७५ ॥

आस्थेति । सा इत्यवमजह्र्या स्वनिषेधार्थमपि तस्या अभिलापने मञ्जुलवाणीश्रवणे उत्सुकं कौतुकिनममुं धूनितेन कम्पितेन शिरसा कृत्वा निरास निषिषेध । इति किं । हे भैमि त्वं मह्यं सुरतं देहि प्रसी-देति सुरतयाचितं मां यद्यस्माकोति न आत्थ ब्रूते हेतोरप्रसिद्धमनुमतं भवतीति न्यायेन स्फुटं सुरतं कुर्विति मामनुमितवत्यसि अनुलालयती

त्यमसीति,, इय सुरत नानुमन्यते पर मया सह न वदत्यपीत्येव परिहासज्ञापणे क्रियमाणे निषेधार्थमपि किञ्चिद्वदिष्यतीत्याशया नलेन तद्वाचनार्थमेव यत्ने कृतेऽपि कुत्र ? नञ्जार्थिर्यंवशाच्छिरोधूननेनैव त न्निषेधव तु साक्षादुत्तरमप्युवाचेति भाव. ॥ ७५ ॥

या शिरोविधुतिराह नेति ते सां मया न किमियं समाकलि । तन्निषेधसमसङ्ख्यताविधिर्व्यक्तमेव तव वक्ति वाञ्छितं ॥ ७६ ॥

येति । हे भैमि ते या शिरोविधूति शिर कम्प. नेत्याह निषेधार्थं ब्रूते मया सेय किं न समाकलि सम्यक न ज्ञातापि तु सम्यगूज्ञातैव । कथमित्याह । तयोः शिरोधूनिरूपयोर्निषधयोर्या समसङ्ख्यता तुल्यसङ्ख्यता सा तववाञ्छित सुरतरूप विधि व्यक्तमेव वक्ति वदसि सुरत तवेष्टमित्याहेत्यर्थ. । द्वयोरेव निषेधयो सुन्दोपसुन्दन्यायेनान्योन्यघाताद्वौ नञौ प्रकृतार्थं गमयत इति न्यायेन च सुरत त्वया विधेयमेवेति मा प्रति विधावेव तात्पर्यमिति मया त्वदाशयो ज्ञात इति भाव. । इति पुनरपि भैमीवादनार्थे वक्रोक्ति । विधिरिति पाठ तस्य नाम्नाचितस्य शिरोधूनतिद्वयरूपौ निषेधौ तया. समसङ्ख्यैव विधिः । स तवाभिलाष स्पष्टमेव वक्तीति व्याख्येय ॥ ७६ ॥

नाथ नाथ शृणवानि तेन किं तेन वाचमिति तां निगद्य सः । । सास्म दूत्यगतमाह त यथा तज्जगाद मृदुभिस्तदुक्तिभिः ॥ ७७ ॥

नेति । स नलस्ता इति पूर्वोक्तं निगद्योक्त्वा, सा दूत्यं गते प्राप्त दूत्येन हेतुना वा नैमीसविध गत त नल तदद्य विप्रस्य वृण इत्यादि यथा आह स्म ब्रूते स्म, तदेव मृदुभिरतिमञ्जुलाभिस्तस्या भैम्या वक्तिभिस्तद्भाषणानुकारिणीभिर्जगाद तादृगेवानूदितवानित्यर्थ. । इति किं । हे भैमि, यद्यहं ते वाच न शृणवानि तेन मदश्रवणेन हेतुना मया नाकर्णनीयमिति बुद्ध्या त्व नाथ न ब्रूषे न किं त्वद्वाक्यानि मया पूर्वमेवाकर्णितानि इदानीं तव भाषण मया न श्रोतव्यमिति वृ-

चैवेयं मुखमुद्रणेति त्वया वक्तव्यमित्यवदद्दिति भावः । त्वं गादर्वेति स्वरभङ्ग्या मामवादीरित्यर्थः । किमित्याक्षेपे वा ॥ ७७ ॥ पुरमम् ॥

नीविसीम्नि निविडं पुरारुणत् पाणिनाथ शिथिलेन तत्करं । सा क्रमेण न न नेति वादिनी विघ्नमाचरदमुष्य केवलम् ॥ ७८ ॥

नीवीति । सा पुरा प्रथमं सम्भोगारम्भे नीविसीम्नि वर्त्तमानं तस्य करं स्वपाणिना निबिडमतिगाढं यथा तथा अरुणत् । अथानन्तरं क्रमेण भयभङ्गानन्तरं दिनान्तरे नितम्बजघनस्पर्शकारिणं नलकरं शिथिलेन पाणिना रुरोध । ततोऽपि लज्जाविजयानन्तरं निषेधमात्रार्थं न न नेति वादिनी सती अमुष्य नलकरस्य नलस्यैव वा केवलं विघ्नमाचरत् । न न नेत्युक्ते यदि न निवर्त्तेत मा निवर्त्ततां वदामि तावदेवमिति वचोमात्रेण विघ्नमाचरन्न तु कर्मणेति भावः । मुग्धाजातिः । भयलज्जात्याग सूचितः ॥ ७८ ॥

रूपवेषवसनाङ्गवासनाभूषणादिषु पृथग्विदग्धतां । सान्यदिव्ययुवतिभ्रमक्षमा नित्यमेत्य तमगान्नवा नवा ॥ ७९ ॥

रूपेति । सा रूपेषु देववरदानात् कामचारनिर्मितेषु सौन्दर्यविषयेषु, वेषेषु महाराष्ट्रलाटगुर्जरादिस्त्रीधृतवस्त्रालङ्कारादिशृङ्गारभङ्गीषु, वसनेषु नीलपीतदुकूलादिषु वस्त्रेषु, अङ्गवासनासु चन्दनकस्तूरीकर्पूरादाङ्गरागैरगरुचन्दनादिधूपैश्च कृतेषु देहामोदेषु, भूषणेषु सौवर्णेषु मुक्तामाणिक्यहीरकादिखचितेषु अलङ्कारादिषु विषये पृथक् प्रत्येकं प्रतिदिनं विदग्धतां चातुरीमेत्य प्राप्यातएव नवा नवा नूतना सती नित्यं तमगात् सम्भुङ्क्ते इत्यर्थः । किम्भूता । अन्यस्या दिव्ययुवतेरम्भादिस्वर्गस्त्रिया भ्रमं इयमेव सेति भ्रान्तौ क्षमा योग्या समर्थेत्यर्थः । अन्वहमन्येयमिति तस्य चेतसि स्फुरितेत्यर्थः । वा इवार्थः । नित्य नवेव सागादपि तु नवीनेव जगामेति काकुः ।

अन्यच्च नूतनत्वादनुरागातिशयादन्यायरोधाङ्गनासम्भोगविमुखो नलो जात इति भावः । नलेति पाठे भैमीविशेषणम् ॥ ७९ ॥

इङ्गितेन निजरागनीरधिं संविभाव्य चटुभिर्गुणाङ्कितां । भक्ततात्र परिचर्ययानिशं साधिकाधिकवशं व्यधत्त तं ॥ ८० ॥

इङ्गितेति । साऽधिका सर्वगुणैरुत्कृष्टा चतुरा च तं अधिकमतितरां यथा आत्मन्यनुरागिणं व्यधत्त चकार । किञ्चित्प्रौढा ऽभूदित्यर्थः । किं कृत्वा ? इङ्गितेन मल्या दिषु भर्तृगुणवर्णनरूपं भावम् तद्वदीयपत्नाय पश्चादाभिमुख्येन शयनं पूर्वं मुखालम्बनागमने तुष्टिः प्रभावे वैमनस्यं मदागमनमुखदु इत्येत्याद्यनुरागद्योतकेन चेष्टितेन निजअगाधत्वादनुरागमेव नीरधिं नलं संविभाव्य सम्यक् ज्ञापयित्वा, तथा चटुभिः भवादृशोऽतिसुन्दरो ऽतितेजस्वी वदान्यः सर्वकलाकुशलः क: ? अपि तु न कोऽपीत्यादिप्रियभाषणैर्गुणज्ञता स्वीयगुणग्राहित्ववैदग्ध्यं ज्ञापयित्वा, तथा अनिशं सर्वदा परिचर्यया चरणसंवाहनतालवृन्तचालनादिरूपया सेवया निजा भक्तता भक्तियुक्तत्वञ्च ज्ञापयित्वा । अनिशं, निशामभिव्याप्य मर्य्यादीकृत्याहोरात्रमित्यर्थः इति वा ॥ ८० ॥

परिरम्भं प्रति यदस्रजस्तया स्वस्वरस्य लघुतां दधानया । पत्युरन्वहमगृह्यत स्फुटं तत् किलाह्रियत तस्य मानसं ॥ ८१ ॥

स्वाङ्गमर्पयितुमेत्य वामतां रोपितं प्रियमयानुनीय सा । ज्ञातदीयहठसम्भ्रमक्षतां नाभ्यमन्यत पुनस्तमर्थिनं ॥ ८२ ॥

स्वाङ्गमिति । सा सम्भोगार्थिनं नलाय स्वाङ्गं स्तनादिकं निजमङ्गमर्पयितुं दातुं किञ्चिद्वामता प्रातिकूल्यमेत्य किञ्चिदङ्गमदत्त्वा अथ भर्तारं तेनैव व्यापारेण रोषितं तस्मादितरोप औदासीन्यं प्राप्तं प्रियं न

एकाशीतितमश्लोकस्य टीकादर्शपुस्तकद्वये नासीदिति लिखितम् ॥ ८१ ॥

सं चुम्बनालिङ्गनचरणपतनादिना अनुनीय प्रसाद्य अनन्तरं इय मां प्रमादयति चेत्तर्हि मदीप्सितं करिष्यतीति बुद्ध्या पुनरर्थयन्तं तदङ्ग या-चमानं तं, तदीयां नलीयां हठात् बलात्कारेण सम्भुक्ततां सम्भोगे-च्छुतां आ मर्यादीकृत्य नान्वमन्यत तावन्नानुमेने । पूर्वं याच्ञापूर्वं सम्भोगे प्रवृत्तोऽनन्तरं तदीयवामत्वाद्दोषवशाद्दौदासीन्य नलः स्वयमन्तरं प्रति गमिष्यतीति बुद्ध्या तयानन्तरमनुनीतः सन् पुनरर्थयमानोऽपि यावद्बलात्सम्भोगं करोति तावन्नानुमतोऽनन्तरं त्वनुमत इत्यर्थः । याच्ञानन्तरमेवानुमनने तादृशोऽनुरागो न वर्द्धते, तदीयमनुरागमा-त्मनि परां कोटिं प्रापयितुं हेतुरूप सम्भोगमेवैच्छदिति भाव. । अनु-नयानन्तर सम्भोगे कृतेऽपि अनुरागातिशयात् पुनः सुरताभिलाषिणा नानुमेन इति पुन अन्यार्थो वा । रोपितं । यत्नात्क्रिया । आतदीये-प्सितेति । मर्यादायामव्ययीभावो नपुंसकत्वाद्ध्रस्वत्व ॥ ८२ ॥

आद्यसङ्गमसमादरात्ययाद्न्यथात्वमुपयाय दूदती क
थञ्चन । अङ्गकानि घनमानवामताव्रीडलज्जितदुरापतानि सा ॥ ८३ ॥

आद्येति । सा अङ्गकानि दृश्य नि सौकुमार्यातिशयादनुकम्प्यानि निजाङ्गान्यङ्गा न आद्यसङ्गमेन प्रथमसम्भोगेन समस्तुल्य आदर. प्रास्यु-पायासक्तियेषु, प्रथमसम्भोगे भयलज्जात्यागपूर्वं विश्वासार्थं यावान् प्रतारणाद्युपाय. कृतस्तावानेव पाश्चात्येष्वपि सम्भोगेषु यत्प्रासये नले-नोपाय- कृतस्ताद्दर्शी प्रीति यावत् अयात् दृष्वार । यतो यद्वाभ्यामाति-प्रेयमे नलाय कथञ्चन भूयसा प्रयासेन तान्येव ददती, इत्यत्रापि हे-तुः । यतो घनैर्दृढे. मानवामताव्रीडै· मान प्रीतिकलहौदासीन्यता वामता स्व कृमसर्पणप्रातिकूल्य व्रीडा लज्जा तैः घनेन मानेन या वा मता तया लज्जया च लज्जिता प्रापिता दुरापता दुर्लभता येषां तानि । आदौ विवाहात् पूर्वं यः समागमस्तत्कालीनेनादरेण तुल्यादरायेति वा । मानादिना तदङ्गाना दुष्प्रापत्वाद्दिच्छाविवृद्धेर्नलीमोऽनुराग म-त्यन्त परां कोटिमध्यारोहदिति भावः । अङ्गकानि । दृश्ये नुपायामि-ति वा कन् । वामतायुक्ता व्रीडनि समासः ॥ ८३ ॥

पत्युरागिरिशमातरु क्रमात् स्वस्य चागिरिजमालतं वपुः । तस्य चार्हमखिलं पतिव्रता क्रीडति स्म तपसा विधाय सा ॥ ८४ ॥

पत्युरिति । सा पतिव्रता धर्म्मेण तपसा तपःफलेनेन्द्रादिवरदानेन वा पत्युर्नलस्य वपुः आगिरीशं हरमारभ्य तरुं तरुपर्यन्तं तथा स्वस्य चागिरिजं पार्वतीमारभ्य लतां लतापर्यन्तं लतामारभ्य पार्वतीपर्यन्तं वा आरोहणक्रमेण प्रथमं प्रियस्य पश्चादात्मन इत्येवं रूपेण वा, गिरिशरूपे गिरिजारूपं तरुमारभ्य गिरिजापर्यन्तं वा, तथा स्वस्य चात्मनः शरीरं गिरिशरूपे लतारूपमित्येवंरूपं क्रमेण विधाय तत्तद्रूपं विरचय्य तत्तदवलम्बितशरीरान्तरस्य सम्बन्धि अखिलं पक्षापाश्रयादि-क्रीडादि चार्हं योग्यं तदपि विधाय क्रीडति स्म । यतः पतिव्रता । न हि पतिव्रतानां किञ्चिदसाध्यमस्ति । चाऽवधारणे । अखिलं नानापायेपादि तस्यैवार्हं यथा तथा तेन इति वा ॥ ८४ ।

न स्थली न जलधिर्न काननं नाद्रिभूर्न विषयो न विष्टपम् । क्रीडिता न सह यत्र तेन सा सा त्रिधैव न यथा यथा न वा ॥ ८५ ॥

नेति । सा तेन सह यत्र न क्रीडिता सम्भोगं नाकृत सा स्थली अकृत्रिमा भूरेव नास्ति । तथा न जलधिः कूपमारभ्य समुद्रपर्यन्तः स जलाशयो नास्ति । तथा काननं तत् दुर्गमं वनं नास्ति । नाद्रिभूर्नास्ति । न विषयः कपटादिरूपो देशविशेषः एव सुखहेतुः स्रक्चन्दनादिर्वा नास्ति । तद्विष्टपं भूर्भुवः स्वराख्यं नास्ति । यस्यां यस्मिन् वा तेन सह सा न विक्रीडितेति प्रत्येकं योज्यं । वा समुच्चये । तथा सा विधैव पुरुषायितादिरूपः कामशास्त्रोक्तः प्रकार एव नास्ति यथा यथा येन येन प्रकारेण सा न क्रीडिता । उक्तान्तसम्भोगनिषेधः पूर्वश्लोके नानाकृपधारणोक्तेर्मत्स्यादिकपिरयादिवधा न, मनुष्याधिकारत्वाच्च तत्सर्वेति संयम । क्रीडिता । गत्यर्थाकर्मक (पा०३।४।७२) इति कर्तरि निष्ठा ॥८५॥

नम्रयांशुकविकर्षिणि प्रिये वक्त्रवातहतदीप्रदीपया । भर्तृमौलिमणिदीपितास्तया विस्मयेन ककुभो निभालिताः ॥ ८६ ॥

नम्रयेति । प्रियेऽंशुकविकर्षिणि सति लज्जावशादुपायप्रधानावलोकनार्थं नम्रया अतएव वक्त्रवातेन हतो निर्वापितो दीप्रः प्रकाशमानो दीपो यया तया भर्तृमौलौ मणयो मुकुटरत्नानि तैः दीपिताः प्रकाशिताः ककुभो दिशो विस्मयेन निर्वापितेऽपि दीपे कथमयं प्रकाश इति आश्चर्येण निभालिता विलोकिताः । रत्नप्रकाशाज्ञानाद्विस्मयो रत्नप्रैता तिशयाद्वा ॥ ८६ ॥

कान्तमूर्ध्नि दधती पिधित्सया तन्मणेः श्रवणपूरमुत्पलं । रन्तुमर्चनमिवाचरत् पुरः सा स्ववल्लभतनोर्मनोभुवः ॥ ८७ ॥

कान्तेति । तस्य पूर्वोक्तस्य दिव्यदीप्तस्य मुकुटमणेः पिधित्सया आच्छादितुमिच्छया श्रवणपूरं कर्णभूषणीकृतं नीलोत्पलं कान्तमूर्ध्नि दधती स्थापयन्ती सा रन्तुं स्ववल्लभ एव तनुः शरीरं यस्य नलदेहव्याजं धारयतो मनोभुवः पुरः आदौ सुरतारम्भे अर्चनमिवाचरत् चकार पुष्पपूजां शिरसि कर्तुमुचिता । रतारम्भे च स्मरः समुचिता देवतेति तत्पूजा युक्ता । प्रकाशाभावार्थं कर्णोत्पलेन मुकुटमणिं पिदधाविति भावः ॥ ८७ ॥

तं विधाय मुदिताथ पार्श्वयोर्वीक्ष्य दीपमुभयत्र सा स्वयोः । भिन्नमाप कुतुकाद्भुतत्रपातङ्कसङ्कटनिवेशितस्मरम् ॥ ८८ ॥

तमिति । सा तं नलीयं मुकुटमणिं पिधाय कर्णोत्पलेनाच्छाद्य प्रकाशाभावान्मुदिता सती, अथ पश्चात् स्वयोर्निजयोरुभयत्र द्वयोर्वामदक्षिणयोः पार्श्वयोर्दीपं वीक्ष्याथो द्वौ दीपौ दृष्ट्वा स्वचित्तमघटमानघटनात् कुतुकं तद्दर्शनजातमाः किमेतदिति चमत्करणमद्भुतमाश्चर्यं लज्जा त्रपा आकस्मिकदीपदर्शनादातङ्को भयं गोप्यान्यपि मदीयाङ्गा

नि मियेण दृष्टास्मीति शङ्कातिशयेयात् कुत्रापि संवृते मन्मर्द्दे मध्ये नि-वेशित स्मरो यत्र तत् । एवम्भूत भायाविक्षेपकविधौ तात्पर्यं । दीपौ दृष्ट्वा कौतुकादिसहिताभूदिति भाव ॥ ८८ ॥

एककस्य शमने ऽपर पुनर्जाग्रतं शमितमप्यवेक्ष्य स । जातवह्निवरसस्मृतिः शिरः सा विधूय निमिमील केवलं ॥ ८९ ॥

एककस्येति ॥ द्वयोर्दीपयोर्मध्ये एककस्य दीपस्य मुखचेलाञ्चला-दिना शमने निर्वाणे क्रियमाणे सति पूर्वंशमितमपि द्वितीय दीप न-लेच्छामात्रेण पुनरपि जाग्रत प्रदीप्यमानमवेक्ष्य जाता वह्निवरस्मृतिर्यस्या सा स्मरणाभिनयवशाद्वा शिर विधूय केवल निमिमील निमीलित-वती । लज्जाभिनय कौतुकवशात् तदीयगोप्यावयवविलोकनार्थं तस्या निरुपायस्वार्थं पुन पुन शमितानपि दीपान् इच्छामात्रेणाजिज्वल-दिति भाव । एकस्य शमने कृतेऽपर दीप जाग्रत दृष्ट्वा शमितमपि पुनर्जाग्रत दृष्ट्वेति वा व्याख्येय । एकक पूर्ववत् ॥ ८९ ॥

पश्य भीरु न मयापि दृश्यसे यन्निमीलितवती दृशावसि । इत्यनेन परिहस्य सा तमः सविधाय समभाजि लज्जिता ॥ ९० ॥

पश्येति ॥ अनेन इति परिहस्य सोपहासमुक्त्वा तदीयलज्जापाक-रणार्थं दीपाभावेच्छामात्रेण तम सविधायान्धकार निर्माय सा समभा-जि सम्भुक्ता ततो लज्जिता । इति किं । हे भीरु लज्जाभयकातरे य-द्यस्मात्त्वं दृशौ निमीलितवत्यसि तस्मात्त्वं मयापि न दृश्यसे पश्य । नेत्रनिमीलनात्त्वया यथा स्वीयमङ्गं न निरीक्ष्यते तथा मयापि त्वद-ङ्गमित्यर्थं । अथ च त्वया नेत्रे निमीलिते मयापि त्वं न दृश्यसे चित्रमे-तत् । यस्मान्मया न द्रष्टव्यमिति हेतोस्त्वया नेत्रे निमीलिते, तावतैव मया न दृश्यसे ऽपि तु दृश्यस एव । अन्यो हि गोप्यमङ्गं वस्त्रादि-नाच्छादयति त्वया तु नेत्रे एव निमीलिते । तथा च मया त्वदीय गो-प्यमपि अङ्गं काम दृष्टमेवेति किं नेत्रनिमीलनेन पश्येति । अमुना

नलेन लज्जिता सा तम सम्यग्विधायानन्तरश्चैव परिहासपूर्वं मुक्ता। भीरु। वहन्तस्वाजादीत्वाद्दूस्व:, तत्सामर्थ्यान्न गुणः ॥ ९० ॥

चुम्ब्यसेऽयमयमङ्क्यसे नखैः श्लिष्यसेऽयमयमर्प्यसे हृदि। नो पुनर्न करवाणि ते गिरं हुं त्यज त्यज तवास्मि किङ्करः ॥ ९१ ॥

इत्यलीककरतत्कातरा प्रियं विप्रलभ्य सुरते ह्रियं च सा। चुम्बनादि वितनार मायिनी किं विदग्धमनसामगोचरः ॥ ९२ ॥ युग्मम् ॥

चुम्ब्यस इति। इतीति युग्म। हे प्रिये, मयायं त्वं चुम्ब्यसे ऽयं त्वं नखैरङ्क्यसे चिह्न्यसेऽयं त्वं श्लिष्यसे आलिङ्ग्यसेऽयञ्च हृदि अर्प्यसे हृदयोपरि धार्यसे ते तव पुनरहं गिरं नो करवाणीति न अपि तु करवाण्येव यत इत्यर्थ। हुमिति सुरतसमाप्तिसूचकत्वेन पूर्यतामित्यर्थ। त्यज त्यज इति पीडानटने, मुञ्च मुञ्च मामित्यर्थ। अहं तव किङ्करास्मीति दैन्यनटने ॥

इत्येवमप्रकारेणालीककरते मिथ्यासुरते कातरा भीरु सुरते विषये बलात्कारभीता सती आत्मानं यथाकथञ्चिन्मोचयितुमेवेव वदति न तु हेलयेति। तथा यद्यपीयमप्रौढेति प्रियं विप्रलभ्य प्रतार्यैतादृशीं बुद्धिं तस्योत्पाद्य तथा ह्रियमपि प्रतार्य नायमिदानीमपि न मुञ्चति, बलात्कारभयात् चुम्बनादि करोति न तु स्वेच्छयेति लज्जात्यागमप्यप्रकटीकृत्य चुम्बनादि पूर्वोक्तं सकलमपि सुरतसम्भारं प्रौढतयैव वितस्तार प्रियाय ददौ। यतो मायिनी मायावती। उक्तप्रकारेण कपटेनाच्छादितनिजकामोन्मादप्रौढिरिति यावत्। यस्माद्विदग्धव्यवहारचतुरं मनो येषां मानवानां किं वस्तु अगोचरं विषयो न भवति अपि तु सर्वमपि साध्यमेव। चतुरा हि असाध्यमपि साधयन्ति। अलीककरकातरेति पाठे अलीककरं कातरेति समास। त्यजरे। वीप्सया द्विरुक्ति। किङ्करेति। दिवाविभा (पा०३।२।२१) इति टप्रत्ययेऽपि, किंयत्तद्बहुषु कृञोऽज्विधानम् (पा०३।२।२१।वा०१) इत्यच् ततष्टाप् ॥ ९१।९२ ॥

स्वेच्छितोद्भ्रमितमात्रलुप्तया दीपिकाचपलया त मोघने । निर्विशङ्कुरतजन्मतन्मुखाकूतदर्शनसुखान्यभुङ्क्त सः ॥ १३ ॥

स्वेति । स तमसा घने तस्मिन् सौधेऽथवा तमस्तुल्ये घने मेघे तमोरूपे मेघे स्वेच्छितेन स्वेच्छामात्रेणोद्भ्रमितमात्रा प्रकाशिता यासौ तदानीमेव लुप्ता शमिता च तया दीपिकयैव चपलया विद्युता दृष्ट-नष्टया निर्विशङ्कं रतं तस्माज्जन्म येषां तानि च तानि तस्या मुखा-कूतानि वदनेङ्गितानि तेषां दर्शनानि तज्जन्यानि सुखानि अभुङ्-क्तान्वभूत् । अन्धकारवशाङ्गीकृतस्वेच्छाविरचितमुखाकूतदर्शनसुखानु-भवार्थं यद्विरदानवशात्तदानीमेव दीपिकां प्रकाशितवान् । तदानी-मेव च लज्जावती स्यादिति भिया पुनस्तां शमितवानिति भावः । विद्युदप्येवम्भूता भवति । लुप्तेत्यन्तर्भावितण्यर्थो ज्ञेयः ॥ १३ ॥

यद्भ्रुवौ कुटिलिते तया रते मन्मथेन तदनामि कार्मुकं । यत्तु हु हुमिति सा तदा व्यधात् स्मरस्य शरमुक्तिहुङ्कृतं ॥ १४ ॥

यदिति । तया रते भ्रुवौ कुटिलिते वक्रिते इति यत् तन्मन्मथेन कार्मुकमेवानामि । यत्तु पुनः सा तदा सुरतसमये सुरतसम्मर्द्देन स-हृताधारणव्याजेन हु हुमिति रतिकूजितशब्दं व्यधात् तत् स्मरस्य शरमुक्तिहुङ्कृतं बाणमोचनकालीनं हुङ्कारमेवाकृत हुङ्कार एवाभूत् । तस्या हुङ्कारः कामस्य चापनमनमित्यर्थः । कामस्य बाणस्यात् भ्रूच-क्रादिना कामः पुनरुज्जृम्भितः तथाभूदिति भावः ॥ १४ ॥

ईदृगापदिशतीव नर्त्तितुं तरङ्गणोदितमुदं मनोभुवः । कान्तदन्तपरिपीडिताधरा पाणिधूननमियं वितन्वती ॥ १५ ॥

ईदृगिति । पुष्पमरभसात् कान्तदन्तैः परिपीडिताधरा दष्टाधरा अतएव पाणिधूननं वितन्वती इव तन्वी सुरतसमये यदिमुदं म-

ज्ञातरूपं मनोभुवे नर्तितुं उपदिशतीव तं शिक्षयन्तीव प्रियेणेदिता, यापि नृत्यं शिक्षयति सापि हस्तकाभिनयवशात् करकम्पनं करोति । उपदिशनी । आच्छीनद्योः (पा० ७ । १ । ८०) इति पाक्षिकत्वान्नुमभावः ॥ ९५ ॥

सा शशाङ्क परिरम्भदायिनी गाहितुं वृहदुरः प्रियस्य न । चक्षमे स च न भङ्गुरभ्रुवस्तुङ्गपीनकुचदूरतां गतं ॥ ९६ ॥

सेति । परिरम्भदायिनी सा प्रियस्य बृहदुरो गाहितुं सामस्त्येन स्प्रष्टु न शशाक, यतो बृहत् अतिविशाल, सा च कृशाङ्गीत्यर्थं । स च तस्योऽपि भङ्गुरे भ्रुवौ यस्यास्तस्या वक्षः सर्वैरपि स्प्रष्टु न चक्षमे, यतस्तुङ्गाभ्या पीनाभ्या कुचाभ्या दूरता व्यवहिततां गत प्राप्त । कुचमात्रमेवालिङ्गित नतु सर्वं वक्ष इत्यर्थः । उभावपि सम्पूर्णालिङ्गनाप्राप्तेर्नितरां सस्पृहत्वादुज्जृम्भितकामौ जाताविति भाव ॥ ९६ ॥

बाहुवल्लिपरिरम्भमण्डली या परस्परमपीडयत्तयोः । आस्त हेमनलिनीमृणालजः पाश एव हृदयेशयस्य सः ॥ ९७ ॥

बाह्विति । तयोर्बाहव एव दैर्घ्यकार्श्याभ्यां वल्लय लतास्तुल्यास्तासां परिरम्भे आलिङ्गनविषये या मण्डली वृत्ताकाराङ्कपाली परस्पर अपीडयत् गाढमालिङ्गत् स हृदयेशयस्य कामस्य हेमनलिनीमृणालसम्बन्धिना निर्मितः पाश एवासीत् बभूव । अतिगौरत्वात्तयोर्हेमत्वं त्वाच्च बाहूनां सौवर्णमृणालतुल्यत्वं । पाशबद्धो यथा वश्यो भवति तथाङ्कपालीपाशेन दृढ बद्धौ तौ कामवशौ जाताविति भाव. ॥ ९७ ॥

वल्लभेन परिरम्भपीडितौ प्रेयसीहृदि कुचाववापतुः । केलनीमदनयोरुपाश्रये तत्र तूर्णमिलितोपधानताम् ॥ ९८ ॥

स सन्निवशुद्याचेत्यर्थः । अश्लीलमपष्टु तन्त्रैशुनादन्यत्र निषेधात् वराङ्गदर्शनं युक्तमिति ध्येयं । नाभिमित्यादौ, अन्तरान्तरेण ( पा० २ । ३ । ४ ) इति द्वितीया । अल्पके । अल्पे ( पा० ५ । ३ । ८५ ) ह्रस्वे ( पा० ५ । ३ । ८६ ) इति वा कन् । पुराहेति, भूते, पुरिलुङ् चास्मे ( पा० ३ । २ । १२२ ) इति लट् ॥ १०० ॥

पीडनाय मृदुनी विगाह्य तौ कान्तपाणिनलिने स्पृहावती । तत्कुचौ कलशपीननिष्ठुरौ हारहासविहते वितेनतुः ॥ १०१ ॥

पीडनायेति । कलशवत् पीवरौ निष्ठुरौ कठिनौ च तौ अतिप्रसिद्धगुणौ तस्याः कुचौ कर्तृभूतौ कान्तस्य पाणिनलिने करकमले कर्मभूते हारस्य हासः प्रकाशस्तेन विहते आच्छादिते वितेनतुश्चक्रतुः । स्पृहन्तावपि नलकरौ हारदीप्त्या विहितावित्यर्थः । अथवा हार एव हासः तेन पराभूते कृतोपहासे चक्रतुः । यतो विगाह्यमानायेवाभित स्पृहा पीडनाय मर्दनाय स्पृहावती साभिलाषे धृतेच्छे यत मृदुनी मर्द्दयितुमसमर्थे । स्वयं मृदुहि मर्दने कठिनस्य च पीडनाय न प्रभवतीति मृदुभ्यां युवाभ्यां विशालौ कठिनौ चावां मर्द्दयितुमशक्यावितीयं वाञ्छा वृथा च स्पृहेत, स्वपरतारतम्यं न ज्ञायते भवद्भ्यामिति, तत्कुचाभ्यां नलकरौ हारहासेन विडम्बितावित्यर्थः । पद्मतः स्पृहावेव न तु पीडिनाविति भावः । पद्मसंकठिनौ हस्तौ इति लक्षणात् काठिन्यमेव राजकरस्य गुणस्तथापि नलिनत्वनिरूपणात् कठिनत्वेऽपि कुचापेक्षया मार्द्दवान्मृदुनीत्युक्तं । पीडनाय स्पृहावती ते मृदुनी विशेषेण ज्ञात्वा हासविहते चक्रतुरिति वा । अन्योऽपि निष्ठुरो मृदुमुपहसति ॥ १०१ ॥

या कुरङ्गमदकुङ्कुमाञ्चितौ नीललोहितरुचौ वधूस्तनौ । स प्रियोरसि तयोः स्वयम्भुवोराचचार नखकिंशुकार्चनं ॥ १०२ ॥

यायिति । यौ वधूकुचौ कुरङ्गमदेन कस्तूर्या कुङ्कुमेन चाञ्चितौ पूजितौ कृतविलेपनौ अत एव क्रमेण नीला लोहिता च रुक् कान्तिर्ययोः, अथ च नीललोहितौ हरस्तत्कान्तौ, युवभूतौ, स नलस्तयोर्यौवनारम्भे प्रियोरसि भैमीवक्षसि स्वयमेव भवतोः प्रादुर्भवतोः रक्तशुक्लतीत्क्षायत्याखरैरेव किंशुकैः पलाशपुष्पैरर्चन पूजां आचचार। कृताङ्करागयोः कुचयोर्नखपदानि रचितवानित्यर्थः । अल्पनम्रोन्नखस्य व्यापाराहित्येन शोभामात्रहेतुत्वाद्दर्शनमित्येवेत्युत्प्रेक्षा । कस्तूर्या अभ्यर्हितत्वात् पूर्वनिपात ॥ १०२ ॥

अम्बुधेः कियदनुत्थितं विधुं स्वानुबिम्बमिलितं व्यडम्बयत् । चुम्बदम्बुजमुखीमुखं तदा नैषधस्य वदनेन्दुमण्डलम् ॥ १०३ ॥

अम्बुधेरिति । सुरतावसरेऽम्बुजमुख्या भैम्या मुखं चुम्बत् मिलन्नैषधस्य वदनेन्दुमण्डलं कर्तृ प्रतिदिनमुदयसमये अम्बुधेः समुद्रात् कियत् स्तोकमनुत्थित तथा समुद्रजले जातेन स्वानुबिम्बेनात्मीयप्रतिबिम्बेन मिलित निरन्तरं सम्बद्ध विधुं चन्द्रं व्यडम्बयत् अनुचकार । भैमीमुखं कर्तृ नलमुखं कर्मीभूत चुम्बदिति वा । अनेन विपरीतरतं सूचितं बिम्बप्रतिबिम्बभावनिरूपणेनात्यन्त तन्मुखयोः सादृश्यं सूचितं । कामसुखघञ्चोदयमिकपवाद्य कामोऽन्यथा व्यज्यते १०३॥

पूगभागबहुताकषायितैर्वासितैरुदयभास्करेण तौ । चक्रतुर्निधुवनेऽधरामृतैस्तत्र साधु मधुपानविभ्रमं ॥ १०४ ॥

पूगेति । पूगफलखण्डिकाना भागेऽशस्तस्य बहुतया कषायितैस्तुवरत्वप्रापितैः, कषाय सुरभावित्यभिधानात् सुरभितैर्वा । तथा पक्वोदयभास्वरोच्चैरेण ताम्बूलमध्ये गृहीतेन कर्पूरेण वासितैः सुरभितैरन्योन्याधरामृतैरधररसैरेवामृतैः हृत्वा तौ तत्र निधुवने सुरते मधुपानस्य विभ्रम मद्यपानरूप विलास साधु सम्यगुपपाद्य तथा, अथ च मद्यपानमन्यविलास चक्रतुः । मद्यपानस्थाने ऽन्योन्याधरपानमेव

चक्रतुस्तेनैव च नितरां मोन्मादौ जाताविति भाव. । अन्यो ऽपि क-
षायरसं कर्पूरवासितं शीतलं मधु पिबति । साधु अनिषिद्धं मधि्रति
वा । सुरते मधुपानविन्नमधरामृतैः साधु यथा तथा चक्रतुः । तप-
दशस्थाने ऽधरामृतानि जातानीत्यर्थं । भोग इति पाठे अनुभवः ।
राग इति पाठे बहुनाम्यूनवर्णक्रमविरहंमानरक्तिमवाहुल्येनत्यर्थः ।
कषायितैः । तारकोति (पा०३।१।२८।१४०) इति यथास्थिष्ठा ॥ १०४॥

आह नाथवदनस्य चुम्बतः सास्म शीतकरतामनङ्गरम् । सीत्कृतानि सुदती वितन्वती सत्वदत्तपृथुवेपथुस्तदा ॥ १०५ ॥

आहेति । तदा सुरतचुम्बनावसरे सीत्कृतानि वितन्वती कुर्वती
सा सुदती, तथा कामावस्थाविकाराप्रेरेण सत्वेन दत्त पृथुवेपथु क-
म्पो यस्यास्तादृशी सती चुम्बतो नाथवदनस्यानवर वर्णविना तारका
म्पंकारित्वेन शीतकरता चन्द्रतामाह स्म । चन्द्रस्पर्शाद्यथा सत्व भव-
ति तथा नलमुखस्पर्शात्सा अभूदिति भाव । शीतेऽपि सीत्कारः
कम्पश्च भवति मुखादुत्तरञ्च न निर्गच्छति । शीत करोतु शीतलस्य शी
तकर । कृञा हेतुताच्छील्ये (पा०३।२।२०) इति ट ॥ १०५ ॥

चुम्बनाय कलितप्रियाकुचं वीरसेनसुतवक्त्रमण्डलम् । प्राप भर्तुममृतैः सुधांशुना सत्कहाटकघटेन मित्रताम् ॥ १०६ ॥

चुम्बनायेति । चुम्बनाय कलितं स्पृष्टं प्रियाकुचो येन तादृशं वी
रसेनसुतस्य वक्त्रमण्डलं, सुधांशुना चन्द्रेण मित्रता साम्य प्राप । कि
म्भूतेन चन्द्रेण । स्वैरेवामृतै आत्मानं भर्तुं पूरयितु सक्त सद्भूत.
हाटकघट सुवर्णकलशो येन । मुखं चन्द्रसमं, अमृतभरणार्थं चन्द्रम-
स्याद्भूतस्वर्णघटसमो भैमीकुचः मुखेन्दुना स्वीयममृत कुचकलशे निषि-
क्त न तु तत्रत्य गृहीतं इति अनौचितो नाशङ्कनीया मुखचुम्बनादमृ-
ताशुयोगादिव भैमीकुच शान्ततापो जात, सुखधानूदिति भावः ।

मुखनेत्रस्तनबाहुमूलकपोलौष्ठद्वयवराङ्गान्यष्टौ चुम्बनस्थानानि रागत सर्वाण्यपि चेति वात्स्यायन । नयनगण्डकपोलदन्तवासोमुखान्तस्तन-युगलललाट वा चुम्बनस्थान । स्तने चूचुक परिहर्न्ये ति विशेष । मित्रशब्दस्य तुल्यार्थत्वात् तुल्यार्थैरिति तुल्य र्थे (पा०२।३।७२) इति तृतीया ॥ १०६ ॥

वीक्ष्य वीक्ष्य पुनरैक्षि सामुना पर्य्यरम्भि परि-
रभ्य चासकृत् । चुम्बिता पुनरचुम्बि चादरा-
त्तृप्तिरापि न कथञ्च नापि च ॥ १०७ ॥

वीक्ष्येति । अमुना सा वीक्ष्य वीक्ष्य पुनरैक्षि तथाऽसकृत् वार-वार परिरभ्य च पुन पर्यरम्भि पुनरालिलिङ्गि तथा आदराद्वारंवार चुम्बितापि पुनरचुम्बि च । तथापि कथञ्चनापि केनापि प्रकारेणानेन तृप्तिकारणसङ्घावेऽपि तृप्तिर्नापि न प्राप्ता ॥ १०७ ॥

छिन्नमप्यतनु हारमण्डल मुग्धया सुरतलास्यके-
लिभि. । न व्यतर्कि सुदृशा चिरादपि स्वेदबि-
न्दुकितवक्षसा हृदि ॥ १०८ ॥

छिन्नमिति । सुदृशा निरीक्षण मिलनं [illegible] मुग्धया सन्दर्शया च मानया नैम्या सुरतलास्यकेलिभि सुरतसम्बन्धिभिर्नृत्यविलासै करधूननाद्यङ्गविक्षेपविलासविशेषै कृत्वा क्वचिच्छिन्न त्रुटितगुणमपि च्युत अतनु विशाल हारमण्डल मुक्ताहारदाम चिरादपि भूयसापि कालेन न व्यतर्कि । यत स्वेदबिन्दुकित सञ्जातस्वेद-बिन्दुवक्षो यस्यास्तया । सुरतया सञ्जातस्वेदबिन्दुमण्डलस्य हारमण्ड लस्य हारसादृश्यान्मोहात् त्रुटितोऽपि हारो नाज्ञायीत्यर्थ । स्वा-र्थकत्यमानात् स्वेदबिन्दुकशब्दाज्जातार्थे तारकादित्वादितच् ॥ १०८ ॥

यन्मदीयहृदि हारमौक्तिकैरासि तत्र गुण एव का-
रणम् । अन्यथा कथममुत्र वर्त्तितुं तैरशाकि न
तदा गुणच्युतैः ॥ १०९ ॥

यदिति । हारमौक्तिकैस्तदीये हृदि वसथ्यथ च चित्ते यदासि स्थित सात्तं तत्र गुणो दोरकस्तारस्यादिरेवकारणं हेतुः । अन्यथा न चेदेव तर्हि तदा सुरतसमये गुणच्युतैस्तत्र त्रुटितैर्मौक्तिकैरमुत्र तदीये हृदि वर्त्तितुं स्थातुं कथं कस्मान्नाशाकि समर्थनं जातं । अथ च तारत्वादिगुणहीनैर्मौक्तिकैस्तदीये हृदये न स्थीयते किन्तु नमैरेव । तस्मादुभयरूपेऽपि भैमीहृदये स्थातुं मौक्तिकानामन्वयव्यतिरेकाभ्यां द्विविधोऽपि गुणहेतुरित्यनुमानं । सुरतसमर्द्दोन्मुक्ताहारस्त्रुटित इति भङ्ग्यन्तरेणोक्तं । अन्यस्यापि विदग्धस्य हृदयगामित्वे गुण एव हेतु, गुणहीनेन तु चित्ते स्थातुं न शक्यत इति भङ्ग्या सूचितं । गुणच्युतैः पञ्चमी (पा०२।१।३७) इति योगविभागात् समास. ॥ १०९ ॥

एकवृत्तिरपि मौक्तिकावलिश्छिन्नहारविततौ तदा तयोः । छाययाऽन्यहृदयेऽपि भूषणं भ्रान्तिवारिभरभाविते ऽभवत् ॥ ११० ॥

एकेति । तदा सम्भोगसमये तयोर्द्वयोर्मध्ये एकस्मिन्नल एव वृत्तिर्यस्या एवम्भूता मौक्तिकावलिरन्यस्या भैम्या हृदये छायया भूषणमभूत् । किम्भूतेऽन्यहृदये । छिन्नहारस्य विततिर्विस्तारो यस्या । यतः भ्रान्तिवारीणि स्वेदबिन्दवस्तेषां भर पूरस्तेन भाविते व्याप्ते । द्वयोः समीपे सन्मुखस्थितयोर्मध्ये भैम्या हारे त्रुटितेऽपि स्वेदजलपूरिते हृदये प्रतिबिम्बितो नलस्य हार एवाभरणं बभूवेत्यर्थः । अन्यहृदये प्रतिबिम्बितो नलस्य हार एवाभरणं बभूवेत्यर्थः । अन्यहृदये इति सर्वनामत्वात् पुंवद्भावः ॥ ११० ॥

'वामपादतललुप्तमन्मथश्रीमदेन मुखवीक्षणाऽनिशं । भुज्यमाननवयौवनामुना पारसीमनि चचार सा मुदां ॥ १११ ॥

वामेति । वामपादतलेन लुप्तः मन्मथश्रीमदः कामसौन्दर्यगर्वो येनातिसुन्दरेणापि अनिशं भैमीमुखवीक्षणात् केवलभैम्यधीनेन अमुना

नलेन भुज्यमान नव यौवन यस्याः सा भैमी मुदा सन्तोषाणा पार-सीमनि परतीरमर्य्यादाया परमोत्कर्षं प्रचारायतंत । भावावसानसमयं प्रापेत्यर्थं । वामपादतलमुखवीक्षीतिपदद्वय लौकिकोक्ति । एवम्भू-तेन च भुज्यमानत्वान्मुदा परमोत्कर्षं प्रापेति युक्त । मुखवीक्षण दिने रात्रावपि चरद् मप्रकाशितदीपवशात ज्ञेय ॥ १११ ॥

ध्वान्तरानपि तदङ्गसङ्गमैस्तर्पितानवयवानमन्यत । नेत्रयोरमृतसारपारणां तद्विलोकनमचिन्तयन्नल ॥ ११२ ॥

ध्वान्तरानिति । नल. स्वीयानान्तराञ्छरीरमध्यवर्त्तिनोऽस्पृश्यमा-नानपि अवयवान् तदङ्गसङ्गमै सुकुमारतरैर्भैम्यवयवस्पर्शैरतिवेधकतया तर्पितान् सुखितानमन्यत । तथा तद्विलोकनञ्च स्वीयनेत्रयोः अमृ-तस्य सारेण श्रेष्ठभागेन पारणा तद्रूप तृप्तीकरणं अचिन्तयद्बुबुधे । पु-न पुन भैमीगाढालिङ्गनदर्शनाद्यैरन्तर्बहिश्च प्रीणितोऽभूदित्यर्थं । अन्-तरशब्दात् ध्वान्त शब्दाद्वा भावार्थेऽण् । तर्पितान् । ण्यन्तात् कर्मणि क्त ॥ ११२ ॥

भूषणैरनुपदाश्रिते प्रियां प्रागथ व्यपददेप भा वयन् । तैरभावि कियदङ्गदर्शने यस्य धानमय विघ्नकारिभिः ॥ ११३ ॥

भूषणैरिति । अथ नलः प्रियामाश्रिते स्वशरीर मवष्टभ्य तादृशा-दिभिर्नूपुरैः प्रागतपदस्य तैरस्या. कियतोऽङ्गस्याल्पस्याङ्गस्य दर्शने विधानमयाना आच्छादनरूपाणां विघ्नाना दर्शनान्तरायाणां कारिभि स्तद्विनूपुरैरभावि जात । अनलङ्कृत ये तर्हि सर्वं दर्शनगोचरो भ-विष्यत इति भावयस्त्ये यं तस्माद्व्यपददित्यर्थः । भैमीसौन्दर्य्यं तस्या नलानुरागातिशयश्च सूचितः । रतिसमये भूषणमोचनस्यैव युक्तत्वाद्भूषणसङ्गावयर्णन यद्यप्यनुचित तथापि यावद्भूषणानि मोचयति ताव-दपि विलम्बासहिष्णुतया हठमूरमसूचनाद्भूषणवर्णनौचित्ती न दो-षावेदि तदाप्यत्यन्तापरिहार्यभूषणाभिप्रायेण चेति ज्ञेय भूषणानि च

विदर्भसुभ्रुव इति वा पाठः सुगमः । अतुपत । पुषादित्वादङ् ॥ ११३ ॥

योजनानि परिरम्भणेऽन्तरं रोमहर्षजमपि स्म
बोधतः । तौ निमेषमपि वीक्षणे मिथो वत्स
रव्यवधिमध्यगच्छताम् ॥ ११४ ॥

योजनानीति । तौ रोमहर्षात् सात्त्विकोत्थरोमाञ्चाज्जातमल्पमप्यन्तरं परिरम्भणे आलिङ्गने विषये बहूनि योजनानि बोधतः स्म । अजानताम् । तथा मिथो वीक्षणे परस्परावलोकनेऽत्यल्पं निमेषमक्षिपक्ष्मसङ्कोचनमयमपि वत्सरेण वर्षेण व्यवधिं व्यवधानं बहुतरं दर्शनविच्छेदकालम् अध्यगच्छताम् अज्ञासिष्टाम् । अत्यल्पमपि देशकालव्यवधानेन प्रेमभरादन्योन्यविच्छेदस्ताभ्यामसहीत्यर्थः । बोधतः । बुध अवगमने भौवादिकः स्मयोगे लट् ॥ ११४ ॥

वीक्ष्य नाथमधिगन्तुमुत्सुकां पूर्वमच्छमणिकुट्टि
मे मृदु । कोऽयमित्युदितसम्भ्रमीकृतां स्वानुबि
म्बमददर्शदेष तां ॥ ११५ ॥

वीक्ष्येति । एषः नलो मृदु बालत्वात् सुरतभरासहां लघुतरां पद्मिनीमिव एव तस्मात् पूर्वमेव बिन्दुपतनरूपं नाथमधिगन्तुं प्राप्तुं नेत्रनिमीलनगाढालिङ्गनादिचिह्नेनोत्सुकां सत्वरां वीक्ष्य ज्ञात्वा तद्बिन्दुस्तम्भनार्थं कोऽयमत्रापूर्वः पुरुष इति प्रश्नेन पूर्वमज्ञातभयामपि नलरूपधारिणा अन्येनाहं भुक्तेति बुद्ध्या सुरतसमयसमागतजनान्तरदर्शनाद्वा उदितसम्भ्रमीकृतां समुत्पादितभयां विमनस्कतया प्रतिबन्धभावोदयां अनन्तरं कः कुत्र तिष्ठतीति कृतप्रश्नान्तां भैमीं अच्छमणिकुट्टिमे निर्मले मणिबद्धक्षितिभागे स्वानुबिम्बं प्रतिबिम्बमददर्शत दर्शयामास । नायमपूर्वः कश्चित् किन्तु मदीयमेवेदं प्रतिबिम्बं तत्र सम्भ्रान्त इति भ्रान्तिर्मा भूदिति स्वप्रतिबिम्बं तामदर्शयदित्यर्थः । अन्यनरस्य पूर्वं बिन्दुपतने विपरीतत्वाद्वैरस्यं स्यादिति बिन्दुस्तम्भार्थं चान्यचित्ततया सम्भ्रमजननेन च भावबन्धं कुर्यादिति कामशास्त्रात्तथा बिन्दुपातप्रतिबन्धमकरोदिति भावः । अददर्शत् । णिचश्च (पा० १।३।७४)

यद्भावजननं तस्मिन् सति वा स्वस्य भावजननसमय इति यावत्, तत्र बाहुमूल वक्षौ कुचौ नाभिश्च एतेषां चुम्बनं कृत्वा रतस्य रहसि समापनं तज्जनितं परमकाष्ठापन्नं शर्म सुखं समापनारूपा वा शर्म सारस्तस्य समस्तुल्यो य संविभागोंऽशस्तद्वतीं समरतप्रापणेन सुखि-नीं प्रियां से चकार। स्तनेत्यस्य प्रथमद्वितीयव्याख्ययो कक्षादिचुम्ब-नजाति। तृतीयपक्षे तु कक्षादेर्निरन्तरं कामाधिष्ठानत्वात्तच्चुम्बनेरु-पायैः स्वस्य भावप्राप्तिसमये तामपि भावमलम्भयदिति भाव। भाव-भजनेन त्विति पाठे स्त्रीयन भावजननेन निमित्तेन बाह्वादिचुम्बने-रिति व्याख्या॥ ११७॥

विश्लथैरवयवैर्निमीलया लोमभिर्द्रुतमितैर्विनिद्र-
ताम्। सूचितं श्वसितभीत्कृतैश्च तौ भावमक्रम-
कमभ्यगच्छताम्॥ ११८॥

पुनरपि भङ्ग्यन्तरेण तदेवाह। विश्लथैरिति। तौ भावलाभक्रम-प्रश्नात् स्वाङ्गस्पर्शेऽपि विश्लथे शिथिलीभूतैरवयवैरङ्गैस्तथा निद्राभावे-ऽपि निमीलया अगजनितनयनमुद्राघनया तथा तस्मिन् क्षणे द्रुतं शीघ्रं विनिद्रतामुल्लासं इतैर्गतैर्लोमभीरोमाञ्चैस्तथा श्वसितैः स्तनमु-खान्निकाशे सीत्कृतैश्च सर्वैः सूचितं अक्रमकं युगपत् सञ्जा-तबिन्दुच्युतिजन्यसुखरूपं भावमभ्यगच्छतां समरतं प्राप्तावित्यर्थ। भोगिनो सम्भोगान्ते श्रथावयवत्वादिजाति॥ ११८॥

आस्त भावमधिगच्छतोस्तयोः सम्मदेषु करज-
क्षतार्पणा। फाणितेषु मरिचावचूर्णना सा स्फुटं
कटुरपि स्पृहावहा॥ ११९॥

आस्तेति। एवं भावमधिगच्छतो सुरतान्तसुखमनुभवतोस्तयो करजक्षताना नखक्षतानामर्पणा दानं सम्मदेषु परमानन्देषु मध्ये आ-स्तामूत् आनन्ददायिकैवाभूदित्यर्थ। नखक्षतस्य सुखदायित्वं कथ-मित्यत आह। स्फुटं यस्मात् फाणितेषु दुग्धविकाररूपेषु खण्डवि-

कारेषु या यात्रकेषु मध्ये सा सूपशास्त्रप्रसिद्धा मरिचावचूर्णना कटुरसापि स्पृहावहा मधुररसजन्या रुचिः परिहारस्य दूरादिच्छामावहति । तथा कटु पीडाजनिकापि नखक्षतार्पणा सुखकारिण्येवाभूदित्यर्थः । सम्मर्देषु नानाप्रकारेषु सुरतेषु भाव प्राप्त यत्तास्तमास्तासि-त्व व समये कामशास्त्रप्रसिद्धा कटु पीडाजनिकापि नखक्षतार्पणा स्पृहावहाभूत् स्फुटशब्द इवार्थ । केषु केव । फाणितेषु कटुरसा मरिचावचूर्णनेव सुरतान्ते कृतापि पुन सुरतेच्छामेवोद्दीपयदिति भाव इति वा । भावमधिगच्छतोस्तयो कटुरपि सुरतेषु स्पृहावहा या नखक्षतार्पणा सा स्फुट निश्चितेषु फाणितेषु मरिचावचूर्णनाभूत्तद्रूपेवाभीभूदित्यर्थ इति वा । मत्स्यण्डी फाणित खण्डविकार* शर्करा सितेत्यमर. । चूर्णना सत्यापपाश ( पा० ३ । १ । २५ ) इति णिज-न्ताद्युच् ॥ ११९ ॥

अर्द्धमीलितविलोलतारके सा दृशौ निधुवनक्लमालसा । यन्मुहूर्तमवहन्न तत् पुनस्तृप्तिरास्त दयितस्य पश्यत: ॥ १२० ॥

अर्द्धेति । निधुवनक्लमेन सुरतश्रमेणालसा सुरतायामनि सक्तेत्यर्थ. । सा दृशौ मुहूर्त क्षणमात्र अर्द्धं मीलिते ईषत् सङ्कुचिते विलोले तारके ययोस्तादृशे यदवहद्धार तत् तादृक् भैमीनेत्रावस्थान पश्यतो दयितस्य पुनस्तृप्तिर्नास्त नाभूत् पुन पश्यत इति वा । भैमीनेत्रदर्शनाभिलापस्यानिवृत्तत्वात् पश्यन्नेवस्थित इत्यर्थ । तादृशी सा तस्य सुरतसुखायाभूदिति भाव ॥ १२० ॥

तत्क्लमस्तमदिदीक्षत क्षणं तालवृन्तचलनाय नायकं । तद्विधा हि मधदैवत प्रिया वेधसोऽपि विदधाति चापलम् ॥ १२१ ॥

तदिति ॥ तदाभीमततया क्षण सुरतश्रम नायकं भैम्यस्यामित वचनाभावपि त क्षणमात्र तालवृन्तचलनाय अदिदीक्षतादिदेश । सुरतश्रान्ता सा दृष्टा व्यजनवीजनेन श्रमापनयन चकारेत्यर्थ ।

हि यतो भयस्य सतारस्य कामसुरखर्य स्वस्य देवतमिष्टदेवता तद्विधा पैमीमदृशी अतिसुन्दरी सौभाग्यवती प्रिया येषघोऽपि प्रसन्नाऽपि स्वविषय चापलमनुरागतरलता विदधाति करोति कि पुनर्मनुष्यस्त्येत्यर्थं । पुनरपि सानुरागो जात इति भाव । व्यजन तालवृन्तकमित्यमर । छादिदीयत । नियमार्थासद्दीघतर्देतुमखिव् घञ् ॥ १२१ ॥

स्वेदबिन्दुकितनासिकाशिख तन्मुख सुखयति स्म नैषधं । प्रोषिताधरशयालुयावकं सामिलुप्त पुलक कपोलयो ॥ १२२ ॥

स्वेदेति । तस्या मुख नैषध सुखयति स्म । किम्भूत । स्वेदबिन्दुका सञ्जाता यस्यास्तादृशी नासिकाशिखा नासाग्र यस्य तथा प्रोषितो गत अधरशयालुराधरस्थितो यावकोऽलक्तको यस्य तथा परिचुम्बनवशात् कपोलयो सामि अर्ध लुप्ता पुलका रोमाञ्चा यस्य एवम्भूत मुख दृष्ट्वा स सुखी जात सञ्जातकामश्च जात इत्यर्थ । अत्र पूर्वोत्तरार्द्धे व्यत्यस्ते पठनीये । अन्यथा स ह्यपुनरासदोषापात । सुखयति । सुखवत्तात् तत् करोति (पा०३।१।२६ वा०१) इति णिचाविष्टवद्भावात् सतुलोप ॥ १२२ ॥

ह्रीणमेव पृथु स्स्मर कियत् क्लान्तमेव बहु निर्वृत मनाक् । कान्तचेतसि तदीयमानन त स्वहालभत लक्ष्मादरात् ॥ १२३ ॥

ह्रीणमिति । तदतिसुन्दर तदीयमानन मदा सुरतान्तसमये कान्तचेतसि विषये आदरातिशयाद्युक्त लक्ष्मनद्व्य द्वय अलभत । सुत्यरहितेऽप्युत्कृष्टे वस्तुनि एतल्लक्ष लभ्यते इति साकाङ्क्षा परमाकषस्या निव्यञ्जनात परमसुन्दरत्व प्रापत्यर्थ । किम्भूत । सुरतसुखानुभवयोग्य ज्ञानस्त्रीयस्वचापलस्मरणाद्धा पृथु बहुतर ह्रीण लज्जितमेव । तथा पुन सुरताञ्जिलापचारणात् कियदीयत् स्स्मर वद्दीप्तकाम । तथा स्त्री कुमारातिश्रमायासस्य तुल्याद्बहु सुतरा क्लान्त म्लानमेव । तथा प्रलया-

त्यया कामाध्यया साधनभेदाश्रमगमनादित्यादेरभावात् परस्परान-न्दानुभवादिव महासुखानुभवविषयसुखानुभवविषयसुखापगमापात् म-नाक् निवृत्तं अल्प सुरितं विस्मृतानुभूतसुखमिति यावत् । रतान्त-समये योषिन्मुखसम्पादनकारि भवतीति कामशास्त्रं । तदा तादृक् त-दाननं दृष्ट्वा पुनः समदनोऽभूदिति भावः । अथ च लघु विषयताम-लभतेत्यर्थः ॥ १२३ ॥

स्वेदवारिपरिपूरितं प्रियारोमकूपनिवहं यथा यथा । नैषधस्य दृगपात् तथा तथा चित्रमा पदपतृष्णतां न सा ॥ १२४ ॥

स्वेदेति । नैषधस्य दृक् स्वेदवारिणा सुरतश्रमजलेन परिपूर्णं प्रि-यारोमकूपनिवहं यथा यथा यावत् अपात् आदरमवलोकयत् सा न तादृक् तथा तथा तावत् तावत् अपतृष्णता तृप्ति नावदिति चित्रं पु-नः पुनरवलोकने हि तृप्तिर्भवत्यत्र तु न जातत्याश्चर्यमित्यर्थः । अप च पिपासोरञ्जलिजलेनापि पिपासा शाम्यत्यस्यास्तु स्वेदवारिपूरित-कूपसहस्रस्य पुनः पुनः पानेऽपि पिपासा न शान्तेति चित्रमित्यर्थः । एवम् तत्भैमीरोमकूपदर्शनमात्रेण पुनः सकामोऽभूदिति भाव. ॥१२४॥

कान्तमाल्यकचहन्तसंयमव्यस्तहस्तयुगया स्फुटी कृतं । बाहुमूलमनया तदुज्ज्वलं वीक्ष्य सौख्य जलधौ ममज्ज सः ॥ १२५ ॥

कान्तेति । स सुरतसमर्द्दाक्रान्तमाल्याभ्युनककुसुमा कचहस्तास्ते-षां संयमाय ग्रन्थियन्त्रनाय व्यस्तमूर्ध्वमापारितं हस्तयुग यया ऽन-या भैम्या स्फुटीकृतं तदतिरमणीयं कामधनसिरयानुज्ज्वलमतिगौरं बाहुमूलं वीक्ष्य सौख्यजलधौ ममज्ज निरवधिसुखमन्वभूदित्यर्थः । धौतेति च पाठः । कचहस्तः इति कलापः प्रशस्तवाची । सुखमेव सौख्य चातुर्वर्ण्यादित्वात्ष्यञ् ॥ १२५ ॥

धौत्य पत्युरधरं कृशोदरी बन्धुजीवमिव भृङ्ग

सद्भृतं । मञ्जुलं नयनकज्जलैर्निजैः संवरीतुम
शकत् स्मितं न सा ॥ १२६ ॥

वीक्ष्येति । सा कृशोदरी नेत्रचुम्बनवशात् सलग्नैर्निजैर्नयनकज्ज-
लैर्भिन्नवर्णं तथा मञ्जुल शोभमान पत्युरधर भृङ्गेण भ्रमरेण सद्भृत
मिलित पीयमानमकरन्द बन्धुजीवपुष्पमिव वीक्ष्य समुत्पद्यमान स्मि-
त ईषद्धास्य संवरीतुं गोपायितु उत्पद्यमानमेव निरोद्धु नाशकत् सम-
र्था नाभूत् । उत्तमस्त्रीत्वात् सलज्जत्वात् प्राणेशस्य सविधे स्मित अ-
नुचितं यद्यपि तथापि स्वीयसम्भोगसौभाग्यस्मरणवशादुत्पन्नस्य
स्मितस्य संवरीतुमशक्यत्वात् सपत्नीदर्शने च सलज्जत्वेऽपि प्रागल्भ्या-
गमनशङ्कया सिस्मिय इति भावः ॥ १२६ ॥

तां विलोक्य विमुखीं श्रितस्मितां पृच्छतो हसित
हेतुमीशितुः । ह्रीमती व्यतरदुत्तरं वधूः पाणिप
ङ्करुहदर्पणार्पणात् ॥ १२७ ॥

तामिति । वधूर्भैमी विमुख तिर्यङ्मुख यथा तथा पराङ्मुखीभूय
श्रितस्मितां कृतेषद्धास्यां, विमुखी भामी श्रितस्मिता च तादृशी या
तां विलोक्य हसितहेतुं पृच्छत ईशितुर्नलस्य पाणिरेव पङ्करुह कमल
तस्मिन् करकमले दर्पणस्यार्पणादेवोत्तर व्यतरद्ददौ । स्मितहेतुमाचष्ट,
यतो ह्रीमती । त्वन्नेत्रचुम्बनवशात्तवौष्ठे नेत्रकज्जल लग्नमिति लज्जा
वशात् साक्षादुत्तर दातुमशक्ता कज्जलाङ्कित स्वाधर पश्येति भावेन
दर्पणमेवोत्तर ददावित्यर्थः ॥ १२७ ॥

लाञ्छयात्मचरणस्य चुम्बनाल्लाभ भालमवलोक्य
तन्मुखं । सा ह्रिया नतनतानना स्मरक्षेपरा
गमुदितं पतिं निशः ॥ १२८ ॥

लाञ्छयेति । कुपितभैमी प्रसादार्थं चरणे पतनात् भैम्या पद्मि-
नीत्वात् पद्मासनबन्धेन सुरतारम्भवशाद्वा आत्मचरणस्य लाञ्छया
चुम्बनात् सम्बन्धाद्धेतो लाञ्छ भाल ललाट यस्य एवम्भूत तस्य नलस्य

पांचान्तूत् । दन्तदश नलोकेति (पा० २। ३। ६९) षष्ठी निषेध ॥१३० ॥

वीक्ष्य वीक्ष्य करजस्य विभ्रमं प्रेयसार्जितमुरो-
जयोरियं। कान्तमैक्षत हसत्स्पृशं क्वियत् कोप
सङ्कुचितलोचनाञ्चला ॥१३१॥

वीक्ष्येति । इय प्रेयसा नलेन उरोजयोरुपरि बुद्धिपूर्वमार्जितं कृतं करजस्य नखस्य विभ्रमं कोपसम्भ्रमवशाद्वीक्ष्य वार वार विलोक्यानन्तरमेव कियत् किञ्चित् कोपेन कुञ्चितौ उन्मील्य मुकुलितौ पर्यायेण गुणाधिक्यवशात् विलोचनाञ्चलौ नेत्रपक्ष्मणी यया एवम्भूता सती स्वयं कृतत्वात् सम्भोगसमये तया ज्ञातत्वाच्च हसत्स्पृशं स्मितस्मित कान्तमैक्षत कोपेन वक्रमपश्यदित्यर्थ । कोपस्याल्पत्वेन धीरत्व भैम्या सूच्यते वीक्ष्य वीक्ष्य सम्भ्रमे द्विरुक्तिः । हसत्स्पृशं स्पृशोऽनुदके (पा० ३ । २ । ५८) इति क्विन् ॥ १३१ ॥

रोषरूषितमुखीमिव प्रिया वीक्ष्य भीतिदरकम्पि
ताकुर । तां जगाद स न वेद्मि तन्वि तं ब्रूहि
शास्मि तव कोपरोपिणम् ॥ १३२ ॥

रोषेति ॥ सरोषरूषित कोपयुक्तं मुख यस्यास्तामिव दन्तदशनादि सुखकारित्वेन सरयत कोपरहितत्वेऽपि कृत्रिमकोपम नुकुटितमुखीं प्रिया वीक्ष्य भीत्या दरमीषत् कम्पितानि भगद्गदान्यक्षराणि यस्या क्रियाया तद्यथा तथा ता इति जगाद । इति किं । हे तन्वि अहं त न वेद्मि कस्तव कोपरोपणं चकार ब्रूहि शास्मि तव कोपरोपणमिति च पाठः । कोपस्य रोपिणमध्यारोपकं न वेद्मीत्यात्मन कोपरोपित्व गोपयति ॥ १३२ ॥

कोपकुङ्कुमविलेपनान्मनाग्नन्वशोचि कृशतन्व
शोचि ते । भूदयुक्तसमयैव रञ्जनामानने विधु
र्विधेयमानने ॥ १३३ ॥

कोपमिति ॥ पुनरपि इति किं । ननु कृशतनु ध्यायाचि कोपवशात्

अवाप्यभापणे तथा अवाचि नम्रीभूते तथा विधुनापि विधेया गुणा-
धिक्यशाद्विधेया कार्या मानना पूजा यस्येत्यभूतं चन्द्राधिके तयान-
ने रोपरूपेण कुङ्कुमेन विलेपनाद्वैनोर्मनागल्पीयसीय रज्जुना रञ्जितम-
स्पादना मा भूत् न कार्या । यस्मादयुक्तसमयैवाप्रस्तावसमुद्भूतेव कि
मपि मया नापराद्धमिति निर्हेतुकेयमनुचिता कोपरञ्जना त्यज्यतामि-
त्यर्थं । अथ वाऽय सम्भोगसमयो रात्रिरियं न तु कोपरञ्जनसमयः,त
स्मादन्यदा कोपः कार्योऽधुना तु त्यज्यतामित्यर्थं । अथ च चन्द्रतु-
ल्ये मुखे रञ्जना अयुक्तसमया माऽभूत् किन्तु युक्तसमयैवकार्येत्ययुक्त-
समयत्वमेव निषिध्यते । अथ च चन्द्राधिक तव मुखं इदानीं रोपस-
पितं सत्प्र न भवतीति अयुक्तसमया रञ्जना न कार्या कोपस्त्यज्यता-
मित्यर्थं । अथ च कोपकुङ्कुमविलेपनरञ्जना अयुक्तसमया यतस्तस्मा-
न्नैव कार्य्या । शीतकालप्रयोगार्थतया वदनप्रसाधनं कुङ्कुमविलेपन
युक्तं इदानीं वसन्तेन अमजेनोष्मणा शीतलद्रव्यापिण्डमेवाननप्रसाधना
यालं न कुङ्कुमरञ्जनेत्यर्थं. ॥ १३३ ॥

क्षिप्रमस्यतु रुजा नखाद्विजाः तावकीरमृतशी
करं किरन् । एतदर्थमिदमर्थितं मया कण्ठचु-
म्बि मणिदाम कामदम् ॥ १३४ ॥

क्षिप्रमिति ॥ हे भैमि कण्ठचुम्बि मम कण्ठे स्थित तथा कामदमि
च्छादायि अनर्घ्यमिदमर्थं त्वदीयकररदनक्षतजपीडापाकरणार्थं भैमी-
करजादिक्षतपीडापनोदनं कुर्वंति मयाऽर्थितं प्रार्थितं यदिदं चिन्ता-
मणिरत्नदाम माला अमृतशीकरं सुधाबिन्दुं किरत् स्रवत्सत्तावकीस्त्व
दीयाः नखाद्विजा नखक्षतादिजा रुजाः पीडाः क्षिप्रं अस्यतु शमयत्वि
त्यर्थः । तस्मात् कोपं मा कार्षीरिति भावः । अर्पितमिति पाठे पी-
डाशमनार्थं मया त्वदीयकण्ठे क्षिप्तं मत्कण्ठचुम्ब्यपीति व्याख्ये-
यं । रुजा भिदादित्वात् (पा०३।३।१०४) अङ् प्रत्ययः ॥ १३४ ॥

स्वापराधमलुपत् पयोधरे मत्करः सुरधनुः कर
स्तव । मेचका व्यजनचालनाभुवा भूय एव चर

पौं करोतु वा ॥ १२५ ॥

स्वापराधमिति ॥ हे भैमि मत्करस्तव पयोधरे स्तने सुरधनु कर स्न्द्रचापारव्यनखक्षतविशेषकारी मत्कृतनखक्षतपीडाकरणात् स्वापराधं व्यञ्जनस्य चालना तस्याः स्वहस्ताद्‌गलतीति भूतया व्यञ्जनवीजनसमुद्‌भूतया सेवया अलुपत् । वा अथवा तन्नाप्यत्यापि सेवया यदि न सन्तुष्यसि तर्हि भूय एव पुनरपि अयं करस्तव चरणौ करोतु संवाहयतु । चरणसंवाहने अपराधमार्जनं भवति । तस्मात्तच्च करोत्वित्यर्थः । अयं च चरणौ सम्भोगार्थं ऊर्ध्वीकरोत्वित्यर्थोऽपरोऽयम् । अयं च नानाविधरेखामुद्रिकायुक्तत्वात् यत्कुचे सुरधनुः करः, तथा चापराधो नास्त्येव । अयं च मेघे सुरधनुर्युक्तमेवेति पयोधरे तत्कारिणा न कोऽप्यपराधः, यद्यपि भवेत् तथापि व्यञ्जनवीजनसेवयापनोदितं चरणसंवाहनमपि करोतीत्यर्थः । भूय एव इति पाठे एष मत्करः । अलुपत् लृदित्वादङ् । धनु करः इत्यत्र विभाति (पा०३।२।२६) ट । इणुषो सामर्थ्यं इति (पा०८।३।४४) षत्वं विसर्जनीयस्य सः । करोतीति करः पचाद्यच् । सुरधनुष कर इति षष्ठी समासः । चालना ण्यन्ताद्युच् । नित्यस्य चापित्वाद्वृद्धिः ॥ १२५ ॥

आननस्य मम चेदनौचिती निर्दयं दशनदंशदायिनः । शोध्यते सुदति वैरमस्य तत् किं त्वया वद विदश्य नाधरम् ॥ १२६ ॥

आननस्येति । हे सुदति ममाननस्य चेद्यदि अनौचिती यतो निर्दयं यथा तथा दशनदंशदायिनो दन्तक्षतदानशीलस्य तस्माद्धेतोः यदधरदंशितस्तर्हि अपराधकारिणोऽस्य मन्मुखस्याधरं विदश्य खण्डितं त्वया किमिति तद्दन्तदशनरूपं वैरं न शोध्यते त्वं वद कथय, अपि तु अपराधिनोऽस्याधरमोष्ठं दन्तैः खण्डयित्वा वैरनिर्यातनं कुरु । तथा च मम समाधिरित्यर्थः ॥ १२६ ॥

दीपलोपमफलं व्यधत्त यस्त्वत्पटाहृतिषु मच्छिखामणिः । नो तदागसि परं समर्थना सोऽयं

मस्तु पदपातुकस्तव ॥ १३७ ॥

दीपेति । हे भैमि यो मौलिरत्नमणिस्त्वत्पदाहृतिषु त्वदीयचरण-कर्षणेषु सतीषु लज्जावशाग्मुखयाच्यादिना त्वया कृत दीपलोप स्व-किरणैरेव तिमिरनिराकरणादफल व्यर्थं व्यधत । तस्य ममैरागसि अ-पराध पर केवल करावलम्बनादिवरसमर्थना परिहारो नो अस्ति त-स्मादुपायान्तराभावात्सोऽय मौलिमणिस्तव पदयोः पातुको वन्दारु-रस्तु । उपायान्तराभावे हि नमस्कारेणापि अपराधमार्जनं क्रियते त-स्मादयमपि नमस्कार करोतीत्यर्थ ॥ १३७ ॥

इत्थमुक्तिमुपहृत्य कोमलां तत्पचुम्बिचिकुरश्चकार सः । आत्ममौलिमणिकान्तिभङ्गिनीं तत्पदारुणसरोजसङ्गिनीं ॥ १३८ ॥

इत्थमिति । स इत्थमुक्तप्रकारेण कोमलां सामयुक्तां उक्तिं वाचं उपहृत्य उपहारीकृत्य प्रणामकरणवशात्तत्पदचुम्बिन शय्यास्पर्शिनश्चि-कुराः केशा यस्य स आत्ममौलिमणिकान्तिर्निजशिरोमणिद्युतिस्तद्रूपा भङ्गिनी नदी सा तत्पदे भैमीचरणौ तद्रूपे अरुणसरोजे तत्सङ्गिनीं सम्बद्धां चकार । प्रणनामेत्यर्थं । नद्याश्च रक्तोत्पलसम्बन्धो युक्त एव । तत्पदचुम्बीत्यनेन शय्यापार्श्वे प्रणामः सूचित । भङ्गास्तरङ्गा. सन्त्य-स्या वेति विग्रहः ॥ १३८ ॥

तत्पदाखिलनखानुबिम्बनैः स्वैः समेत्य समतामियाय सः । रुद्रभूमविजिगीषया रतिस्वामिना पदशमूर्त्तताभृना ॥ १३९ ॥

तदिति । कृतप्रणाम स नल स्वैर्निजैस्तस्याः पादयोरखिलेषु दशस्वपि नखेषु जातैरनुबिम्बनै प्रतिबिम्बै. समेत्य मिलित्वा रुद्रस्य भूमा बहुत्वमेकादशत्व तस्यापि स्पर्द्धावशाद्विजिगीषया जेतुमिच्छया स्वपदनमूर्त्तितामेकादशमूर्त्तिता धारयता रतिस्वामिना कामेन समता साम्य मियाय गतोय. रुद्रश्चैकादशत्वं धारयति तर्हि मयापि ताव-त्तद्रूपाकृत भवितु युक्तमिति । एकादशत्वं यदि कामो धारयेत्तर्हि

भैमीदशनखमञ्जालस्वप्रतिबिम्बमस्यम्को दशमूर्त्तिधरो नलस्तेनोपमीयतेत्यभूतोपमा । रुद्रभीतीति पाठे एकादशभ्यो रुद्रेभ्यो भीत्ये विजिगीषया तदपाकरणाद्वैतोर्मद्दोकादशमूर्त्तितां मदनो धारयेद्यदि स्वप्रतिबिम्बयोगादेकादशमूर्त्तिर्नलस्तेनोपमीयतेत्यर्थः । प्रणामवशान्नखेषु प्रतिबिम्बित इति भावः । दशानां समीपे उपदशाः । सङ्ख्ययाव्ययेति (पा० २ । २ । २५) समासः । बहुव्रीहौ सङ्ख्येये (पा० ५ । ४ । ७३) इति डच् । उपदशा मूर्तयो यस्येति समासः ॥ १३९ ॥

आख्यदेष कुरु कोपलोपनं पश्य नश्यति कृशा
मधोर्निशा । एवमेव तु निशान्तरे दर रोष
शेषमनुरोत्स्यसि क्षणम् ॥ १४० ॥

आख्यदिति । एष तां इति आख्यत् अवोचत् । इति किं । हे भैमि त्वं कोपलोपनं कुरु । मधोर्वसन्तस्य कृशा दिनापेक्षया स्वभावत एवाल्पपरिमाणा अथ च प्रतिक्षणमपचीयमाना निशा नश्यतीति, पश्य कोपापरित्यागे एवम्प्रकारेणावशिष्टा रात्रिर्गमिष्यति, तस्मात् कोपं मुञ्च । तु पुनस्त्वं एवमेव रोषशेषं निशान्तरे आगामिरात्र्यन्तरे दिनापेक्षया अधिकपरिमाणाया शिशिरर्तुरात्रौ क्षणमात्रं अनुरोत्स्यसि कामयिष्यसे चरणे तन्नमावशिष्टं कोपं तदा कुरु इदानीं सम्भोगार्थं प्रसन्ना भव । यद्वा कोपमिदानीमेव चेत् करिष्यसि तर्हि तदा किं करिष्यसि तस्मादल्पं कोपं निशान्तरार्थं स्थापयेति लौकिकरीत्याधुना तावत् कोपं त्यजेति तां भैमीं प्रार्थयति स्मेत्यर्थः । आख्यत । प चिङ् ख्याञ् ( पा० २ । ४ । ५४ ) इति । अस्य तिपक्लोति (पा० ३ । १ । ५२) च्लेरङ् । ङित्वात् लङ् ॥ १४० ॥

साऽथ नायमनयत्कृतार्थतां पाणिगोपितनिजा
ङ्घ्रिपङ्कजा । तत्प्रणामधुतमानमाननं स्मेरमेव
सुदती वितन्वती ॥ १४१ ॥

सेति । अथ प्रणामसमयानन्तरं प्रणामं मा कार्षीरित्यादिवचनपूर्वं पाणिभ्यां गोपिते निजाङ्घ्रिपङ्कजे यया तथा तस्य प्रणामेन धुतो

निरस्तो मानः कोपश्चौदासीन्यं यस्यैवम्भूतं आननं प्रसादात् स्मेरं सस्मितमेव वितन्वती कुर्वाणा सती सा सुदती भाव कृतार्थतां कृतकृत्यतां अनयत् प्रापयामास तावन्मात्रेण प्रसन्नाभूदिति भावः १४१॥

तौ मिथो रतिरसायनात् पुनः सम्बुभुक्षुमनसौ बभूवतुः । चक्षमे न तु तयोर्मनोरथं दुर्जनी रजनिरल्पजीविनी ॥ १४२ ॥

ताविति । तौ मिथोऽन्योन्यं रतिरसस्यानुरागरसस्यायनात् प्राप्तेः परस्परानुरागविवृद्धेर्हेतोरथ च प्रीतिरेव रसायनं प्रशान्तसुरतेच्छाया पुनरुज्जीवनौषधं तस्माद्धेतोः पुनः सम्बुभुक्षुमनसौ सुरताभिलाषिणौ बभूवतुः । द्वितीयसुरतेच्छू जाताविर्थः । तु पुनः रजनिस्तयोर्मनोरथं द्वितीयसुरतयाच्ञां न चक्षमे विषेहे । यतः दुष्टा जनिर्जन्म यस्यास्तथा । अल्पं जीवितं यस्य यस्यास्तादृशा मुहूर्तमात्रावशिष्टत्वात् अत एवाल्पायुषा जन्म दुष्टमपि । यद्वा प्रभातस्य आसन्नत्वाद् विरहसमागमनादिना दुष्टा व्याकुला जनी वधूः यस्याः सा दुर्जनी । सम्भोगेच्छा तु तयोरत्र निद्रया पर प्रभातसमयस्य सन्निहितत्वात् सम्भोगं न चक्रतुरिति भावः । अन्योऽपि सुरतविषये यत्नमाचरन् वीर्यवृद्धयर्थमौषधं सेवमानः पुनः पुनः सुरतेच्छुर्जायते । अल्पायुषा अन्यापि दुष्टा वधूः सपत्न्यादिः स्त्रीपुरुषौ सम्भोगं न सहते । जनन जनिः । जनिघसिभ्यामिण् ( सि० कौ० । उ० ४ पा० २-२ पत्रे ) जनिवध्योरिति ( पा० ७। ३। ३५ ) न वृद्धि । कृदिकारादिति ( पा० ४। १। ४५ ) दीर्घः पक्षे ममापवादत्वेऽनित्यत्वाक्रमभावः ॥ १४२ ॥

स्वप्नमात्रशयनीयचेलयोस्तयोः स्वैरमास्यत वपुः प्रिया प्रियः । उत्सवैरधरपानजैः सान्तरा यपदमन्तरान्तरा ॥ १४३ ॥

स्वप्नमिति । स्वप्नमात्र शयनीय शय्या याभ्यां तयोर्मध्ये प्रियः प्रिया प्रति स्मेरं वदति स्मितहास्यस्वच्छन्दं यथा तथा आस्यत अर्थापत् किम् न यथ परस्परमधरविस्वस्य पान तस्मीकरणये परमानन्दकार-

ष्यते । विक्रीय मूल्येन गृहीतेषु वस्तुषु तु स्वत्वं न्याय्यमस्त्येवेति त दारोपो न प्राप्यत इत्यर्थः । यदि मयि स्नेहो नाभविष्यत तर्हि इन्द्रं परित्यज्य मां नावरिष्यः कृतवत्यसि तावत् तस्मादेवमपि मया याचितुमयुक्तमेवेति । तव किंकरोऽस्मीति भावः । दिवपतिं दयापर्णेस्त्यक्ताभ्यां इन्द्रापेक्षया त्वदपेक्षया वाहमतितरां गुणवानिति वृत इति न किन्तु मद्वरणे तव कृपैव हेतुः । मा यावज्जीव कार्येत्यर्थः॥१४७।

श्रृण्वता निभृतमालिभिर्नवद्राग्विलासमसकृन्मया किल । मेघरावविवशैर्यजानकी श्राविणी भयचलामि वीक्षिता ॥ १४८ ॥

शृण्वतामि ॥ किल कदाचित् समये आलिभिः सखीभिः सह असकृत् भवत्या वाग्विलास कथासंवाद निभृत पश्चादागत्य तत यथा तथा वरदानादहृश्यत्वेनावगुण्ठ मया तथा श्रृण्वता निभृतं रहसि स्थितत्वात् मच्छ्रवणशङ्काभावात् स्पष्ट स्वच्छन्द सखीभिः सह भवत्संवाद किल श्रुते. पश्चादागमनादङ्गीकारयादिना कपटेन श्रृण्वतामना वा मया त्वं वीक्षिता साक्षात् दृष्टासि । किम्भूता मयि वशी परीक्षार्थं प्रकारवे श्रीराघवेण विवर्ज्या त्यक्ता स्वामिन्येवानुरक्तापि जानकी शृणोतीति तद्ध्वीना सीतेव भयेन त्यागशङ्कया भीत्या च व्याकुला । तस्मात् किङ्करभूते मय्यन्यवाधीनं कार्येति भाव । मद्वा यस्माद्वीता दृष्टासि तस्मादस्य मयि तवानुरागोऽस्तीति निश्चित्य भीयत्नं मयि विवेक्तुमयुक्तमिति भावः । राघव गोत्रापत्ये विदादेराकृतिगणत्वाद् अन् । बहुत्वे तु यञञोश्चेति (पा०२।४।६४) अञोलुक् । तेन रघूणामपत्य वत्ये इति साधु ॥ १४८ ॥

क्षुप्तपत्रविनिमीलितक्षुपात् कच्छपस्य धृतचापलात् पलात् । त्वत्सखीषु सरटाच्छिरोधुतः स्वं मियोऽमिदधतीषु वैभवं ॥ १४९ ॥

त्वं मदीयविरहान्मया निजां नीतिमीरितवती

रहःश्रुता। नोज्झितास्मि भवतीं तदित्ययं व्या

हरद्वरमसत्यकातरः ॥ १५० ॥

श्रुतेति त्वमिति युग्मं। अथ नलः तां प्रति इति वरमभीष्टं व्याहरत् उवाच। अभयदानं प्रादात्। इति किं। हे भैमि कदाचित् सखीसमूहेन सह गोष्ठ्या प्रसङ्गात् कस्माद्बिभेतीति तथ्यं कथ्यतामित्यन्याभ्यं भयहेतुप्रश्ने कृते क्षुद्राणि स्पष्टानि पत्राणि यस्यैवम्भूतोऽकुश्यादिना स्पृष्टमात्रः सन् विशेषेण निमीलितः सङ्कुचितस्तस्मात् क्षुपाल्लज्जालुनामकादोषधिविशेषात् सकाशादहं सुतरां बिभेमीति कयाचिदुक्ते। चल चापलं येन स्वभावत एव चलतः कम्पस्य चलात्मानात् अहमिति अन्यया कथिते। अभिज्ञा शिरोधुतौ मूर्धानं कम्पयतः प्रतिक्षणमन्यथात् मरुतः चञ्चलतरात् सकाशादहमिति अपरयेत्येव त्वत्सखीषु स्वं निजं भियोभयस्य भैमय हेतुं अभिदधतीषु भाषमाणासु सतीषु कयाचिदस्माभिर्निर्भयहेतुरुक्तस्त्वयापि कथ्यतामिति प्रत्युक्ते सति नलवियोगाद्धेतोरहं बिभेमि क्षणमात्रमपि तेन न भाव्यमिति तस्मादेव बिभेमि न त्वन्यस्मादिति मदीयविरहाज्जिता भीति रहसि इङ्गितवती त्वं मया श्रुतासि यस्मात् तस्मात् माऽभैषीः। अहं भवतीं कदाचिदपि नोज्झितास्मीति, यतः असत्ये नानाप्रलोभनविषये कातरो भीरुः भाविनस्त्यागस्य दैवाधीनत्वान्नाम्नत्यवादित्यमिति भावः। यद्वा असत्यकातरः सतीषु विषये भीरुरेव अतस्तद्रूपमिर परमार्थमेवगमयदित्यर्थः। श्रुतेति धूपस्यैव इति तौदादिकात् अनिट्। निष्ठा। शिरोधून इति क्विबन्त ॥ १४९ ॥ १५० ॥

सङ्गमय्य भिरहेऽस्म जाद्रिका यैव यामथ रताथ

तनूरुणं। हन्त दत्य इति रुष्टयाश्रयानिद्रयाद्रु

किमु नापसद्यते ॥ १५१ ॥

सङ्गमेति। हे भैमि इत्यतो द्वयोः रुष्टया कुपितयेव निद्रया तस्यां रात्री आश्रयोऽनीपसद्यते आगत्य तयाभनूपते। किमिति वितर्के। इति किं। हे भैमीगणी येवाह निद्रा विरहे विवाहात् पूर्वं वियोगसमये

या युवा स्वप्नदर्शनादिवशात् सङ्क्रमय्य संयोग प्रापय्य युवयो जीविकास्मि प्राणधारणहेतुरभूवमित्यर्थः । तत्क्षण तस्या मम सम्बन्धिन क्षण अवसर या अथ विवाहानन्तर स्वकार्यार्थं रताय युवा दत्त । रात्रिलक्षणे मदीयसमय एव सुरतस्य क्रियमाणत्वात् हन्त कष्टमनुचित कृत उपकार न स्मरथ इत्यर्थः । आपदि कृतोपकारा हि तदीयेऽवसरे अन्यस्मै दत्ते सति कोपात् स्वामिसमीप नागच्छतीति, आपदि कृतोपकाराया मम रात्रिरूपोऽवसर सुरताय दत्तो युवाभ्या, मह्य तु मदीयावसरस्य लेशोऽपि न दत्त प्रभातपर्यन्त सुरतस्यैव करणादिति कोपवशादिति वाऽऽवयोर्निद्रा नायातीति नलस्तामवोचदित्यर्थः ।। आप्रभात ताभ्या कामकेलय कृता इति भाव । न क्षणमिति पाठे यैव जीविका तस्या मम रताय प्रीताय क्षणमल्पमपि समय न दत्थ इति रुष्यन्तीति व्याख्येय । सङ्क्रमय्य ल्यपि लघुपूर्वादिति (पा०६।४।५६) णेरयादेश । जीविका कर्त्तरिण्वुल् या षष्ठी द्वितीया द्विवचने वाम्-आदेश ॥ १५१ ।

इदृशं निगदति प्रिये दृशौ सम्मदात् कियदिव न्यमीलयत् । प्रातरालपति कोकिले कल जागरादिव निशः कुमुद्वती ॥ १५२ ॥

ईदृशमिति । इय प्रिये ईदृशमेवप्रकारमन्यदपि निगदति सत्येव सम्मदाद्धर्षात् सुरतानन्दजश्रमादिति यावत् । तस्माद्धेतो दृशौ नेत्रे कियत् न्यमीलयत् किञ्चित् निमीलितवती श्रमसञ्जातया निद्रया प्रयोजिकयेति शेष । निद्रद्रावित्यथ । श्रान्तो हि निद्राति सम्मदादेव न दति सतीति वा दृशौ न्यमीलयत् । सम्मदादिव प्रियप्रियोक्तिश्रवण-सञ्जातहर्षवशादिवेत्यर्थः । आनन्दातिशयसुखमनुभवन् हि निमीलितदृग्भवतीति मतोयमानोत्प्रेक्षा वा । कियदित्यनेन दृशोर्निमीलनस्य सूचितत्वाद्धन्यत्व तस्या सूचित । केव । प्रात कोकिले कल मधुरा स्फुटध्वनि श्रोत्रसुख आलपति सति कुमुदिनी इव यथा निमीलितो त्पला भवति सर्वथमपि । कस्मादिव निशारात्रिसम्बन्धिनो जागरादिव । रात्रावनिद्रा हि प्रातदृशौ पूर्ववेण निमीलयति कुमुदिन्यपि रा-

प्रायनिद्रावशादिव मातर्निमीलयति, तस्मादियमपि प्रतीयमानोत्प्रे-क्षा । न्यमीमिलत् इति पाठे णौ चङि भ्राजभासेति (पा०७।४।३) पाक्षिक उपधा ह्रस्व । जागरात् भायेषभि आगो विचिचालङ्किरित्यति (पा०७।३।८५) वृद्ध्यपवादो गुण ॥ १५२ ॥

मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपर
स्परक्रियं । तौ ततोऽनु परिरम्भसम्पुटे पीडनां
विदधतौ निदद्रतुः ॥ १५३ ॥

मिश्रितेति । ततोऽनु तादृक्प्रियभाषणमध्य एव भैमीनिद्रानन्तर परिरम्भरूपे सम्पुटे संश्लेषपेटिकायामिति यावत् । तदत्र पुनरपि पीडना गाढालिङ्गन विदधतौ कुर्वाणौ तौ, मिश्रितौ परस्परामन्तरालघटितौ ऊरू यस्यां क्रियायां तद्यथा भवति तथा मिथ पानवशादन्योन्यमिलिताधरौ यस्यां क्रियायां तद्यथा भवति तथा, स्वप्ने वीक्षिता. परस्परक्रिया अन्योन्यचुम्बनादिव्यापारा यस्यां तद्यथा तथा निदद्रतु । गाढमालिङ्गन कृत्वा निद्रितावित्यर्थ । पीडना । ण्यन्तत्वाद्युच् ॥ १५३ ॥

तद्यातायातरंहश्छलकलितरतिश्रान्तिनिश्वासधारा
राजन्व्यामिश्रभावस्फुटकथितमिथः प्राणभेद
व्युदासः । वालावक्षोजपत्राङ्कुरकरिमकरीमुद्रि
तावीन्द्रवक्षःश्लिष्टाख्यातैकभावोभयहृदयमयाद्द्व
न्द्वमानन्दनिद्रां ॥ १५४ ॥

तदिति । तत् द्वन्द्व स्त्रीपुंसमिथुन आनन्देन सम्भोगसुखभरेण निद्रां लयात् प्राप । किम्भूता निद्राभ्यन्तरश्वासानां यातायातयोर्निर्गमप्रवेशयो रहस्विनोरंहसो वेगस्य छलेन व्याजेन कलिता अङ्गीकृता या रतिश्रान्तिनिश्वासधारा सुरतश्रमसञ्जातनिश्वासपरम्परास्ताभिरन्योन्यगजन्त्रगमयाते मुहुर या व्यामिश्रभाव. निद्रावशभैमीनासानिर्गतश्वासपरम्परासु निद्रावशनलनासान्तर्गतनिश्वासपरम्परा प्रविष्टा ए

च वैपरीत्ये । इति मिश्रीभावापर्यमिव यातायाते,तया च सतं सम्प्र-वेशवदन्योन्यनिश्वासपरम्पराणां यो नितरामभेदापन्नम इति यावत् । तेन कर्तृभूतेन स्फुट स्पष्ट कथितो मिथोऽन्योन्यस्य प्राणानां भेदशुदा वा भेदनाश ऐक्यं यस्य तत् । तथा बालाया वक्षोजौ स्तनौ तत्र पत्राङ्कुराः पत्रवल्लीभूता- स्तत्पत्रवल्लीषु वर्तमानाः कस्तूर्या- दिरचिता इति मकर्यस्तामिर्मुद्रितं चिह्नितं निद्रासमयकृतगाढा लि-ङ्गनवशात्सङ्क्रान्तप्रतिरूपकं कृतं उरोऽन्ययवस्यद्रूप चिह्नं तेनाप्यासौ नि-तरां स्पष्टं कथितं एकभाज एकत्वमभेदो ययोरेवम्भूतममवाभिन्नमनसयो हृदयं वक्षः स्पन्दनं च चित्तं च । यातेत्यादिबालत्यादि च द्वयं क्रि-याविशेषणत्वेन वा योज्यम् । आत्मैक्य शरीरैक्यस्य क्रमेण सूचितमिति ज्ञेयं । तयोरपि मिश्रितत्वमस्त्वाद्देकवाक्यसम्बन्ध दुर्बोधम् ॥ १५४ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् । यातोऽस्मिन् शिवशक्तिसिद्धिभगिनीसौ-भ्रात्रभव्ये महाकाव्ये तस्य कृतौ नलीयचरिते सर्गोऽयमष्टादशः । १८५ ॥

श्रीहर्षमिति । पूर्वार्द्धं पूर्ववत् । शिवस्य शक्तेश्च सिद्धिर्यत्र शिव-शक्तिसाधनं यत्र कृतं शिवशक्तिसाधननामा ग्रन्थ । शिवभक्तीति पा-ठे शिवस्य भक्तिः सिद्धिर्यत्र शिवभक्तिप्रतिपादको ग्रन्थविशेष तस्य भगिनी एककर्तृकत्वात्तस्य विषय सौभ्रात्रेण शोभनभ्रातृभावेन भव्ये प्रशस्ते तत्तुल्यमरसत्वात्परस्याम नलीयचरिते अष्टादशसंख्या पूरणः सर्गः समाप्त । शिवशक्तिसिद्धिरपि मया कृतेति सूचितं । सौभ्रात्रमित्यत्र भाव युवादित्वादण् । अष्टादश । तस्य पूरणे डट् (पा०५।२।४८) ॥१५५॥

इति श्रीवेदरकरोपनामश्रीनारायणपण्डितकृते नैषधीयप्रकाशे अष्टादश सर्गः समाप्तः ॥

# उत्तरनैषधचरिते ।

## एकोनविंशः सर्गः ।

श्रीलक्ष्मीनृसिंहो जयति ।

निशि दशमितामालिङ्ग्यात्या विबोधविधित्सुभि
र्निषधवसुधामीनाङ्कस्य प्रियाङ्कमुपेयुषः । श्रुति
मधुपदस्रग्वैदर्भीविभावितजागरिकस्फुटरसभृता
भ्यक्तावैतालिकैर्जगिरे गिरः ॥ १ ॥

निशीति ॥ सर्गसङ्गतिः स्पष्टा । वैतालिकैर्बन्दिभिर्गिरो जगिरे, ऊचिरे । किम्भूते । निशि रात्रौ । बाल्यं वृद्धिर्वपुः पुष्टिः प्रज्ञाऽऽत्माद्रो बलं मदः दशकेन निवर्तन्ते मनः पञ्चेन्द्रियाणि चेति वचनाद्दशधास्य शतायुषः पुरुषस्यावस्थाभेदाः दशका अवस्था विशेषा दशमाः स विद्यते येषां ते दशमिनो वृद्धास्तेषां भावो दशमिता तामालिङ्ग्यात्या अयमानं प्राप्तया सञ्जातप्रायप्रभातया यामिन्या प्रियाङ्कं भैमीसमीपमुपेयुषः प्राप्तवतस्तया सह निद्रितस्य निषधदेशवसुधायाः मीनाङ्कस्य कामस्य नलस्य विबोधार्थं गिरः विधित्सुभिः कर्तुमिच्छुभिः । कीदृश्यो गिरः श्रोतृणां श्रुत्योः श्रवणयोर्मधु अमृतरूपा अतिमधुराः पदस्रक् सुश्लिष्टानि पदमाला तस्या वैदर्भ्या वक्रोक्त्यादिरचनाचातुर्येण विभाविता ध्वनिवृत्त्या व्यञ्जनाव्यापारेण प्रकाशिता भाविका रत्यादिस्थायिव्यभिचारिभावैर्युक्ताः, ज्ञापिता इति यावत् । तादृशाः स्फुटाः प्रसन्नतरत्वेन बालिशैरपि प्रतीता ये रसाः शृङ्गारादयस्तैर्भृशं नितरामभ्यक्ताः सम्पूर्णाः सिक्ताः एकपदमपि नीरसं यासु नास्ति अतिरसिका नलप्रबोधार्थं मागधैर्मधुरं प्रातर्वर्णनमारब्धमित्यर्थः । रत्यादयः स्थायिभावाः निर्वेदादयस्त्रयस्त्रिंशद्व्यभिचारिणः । वैतालिका

बोधकरा इत्यमरः। दशमोऽवस्थाविशेषो विद्यते यस्यामौ दशमी, अस्ति वृद्ध इति योगरूढोऽयं शब्दः। दशमिन्या वृद्धाया भावो दाश-मितेति वा। विशिष्टस्तालो वितालः शिल्पं येषां ते वैतालिकाः शिल्पमिति (पा० ४। ४। ५५) ठक्। सौखशायिका इत्यर्थः। तदुक्तं वैतालिकास्तु कथ्यन्ते कविभिः सौखशायिकाः। राज्ञः प्रबोधसमयं घण्टाशिल्पास्तु घाण्टिकाः। जगिरे गैशब्दे कर्मणि लङ्। अस्मिन् सर्गे प्रायेण हरिणी वृत्तं छन्दः ॥ १ ॥

जय जय महाराज प्राभातिकी सुषमामिमां
सफलयतमां दाराक्ष्णोर्दरालसपक्ष्मणोः ।
प्रथमशकुनं शय्योत्थाय त्वास्तु विदर्भजापि
प्रियजनमुखाम्भोजात्तुङ्ग यदङ्ग न मङ्गलं ॥ २ ॥

जयेति। भो महाराज त्वं जय जय सर्वोत्कर्षेण वर्तस्व। त्वं इमां प्रत्यक्षदृश्यां प्राभातिकीं प्रातःकालसम्भवां सन्ध्यादिजनितां सुषमां परमां शोभां दरमीषत् अलसे तत्कालमेव निद्रात्यागादीषद्घूर्णनयुतेऽर्द्धोन्मिषितपक्ष्मणी ययोस्तयोरक्ष्णोर्नेत्रयोस्तयोर्दानात् विषयीकरणाद्धेतोः सफलयतमां, अतितमां सफलां कुरु। त्वत्कृतदर्शनेनैव धन्या भविष्यति तस्माच्छीघ्रमुत्तिष्ठस्वेति भावः। विदर्भजा शय्योत्थाय शय्यायाः सकाशाच्छीघ्रमुत्थाय तव प्रथमं पूर्वं प्रातःकालभवं च शकुनं शुभसूचकं प्रशस्तमस्तु तत्स्थाने भैम्येव भूयात्। उत्थितः सन् प्रथमोत्थितभैमीमुखमेव प्रथमं पश्येत्यर्थः। यद्यस्मात् हे अङ्ग स्वामिन् प्रियजनस्य मुखाम्भोजादन्यत् तुङ्गमुत्कृष्टं मङ्गलं शुभावहं वस्तु नास्ति। प्रातरुत्थाय प्रथमं प्रियजनमुखदर्शनं कर्तव्यमिति लौकिकी स्थितिः। त्वत्तः पूर्वं भैम्युत्तिष्ठत्विति भावः। दरालसपक्ष्मत्व सत्वाक्षाणामुद्बुद्धस्य जातिः। पश्चात्त्वमपि पूर्वं मुत्थानमित्युत्तमकुलस्त्रीजातिश्च। जय जयेति वीप्सायां द्विरुक्तिः। प्राभातिकीं प्रभाते भवेति, कालाट्ठञ्। सफलयतमां सफलशब्दात् तत् करोतीति (पा० ३। १। २१। वा० १) णिजन्ताल्लोटि तमपि किमेत्तिङव्ययादामुः (पा० ५।४।११) शय्योत्थायं अपादाने परीप्सायामिति (पा० ३।४। ५२) णमुल् ॥ २ ॥

वरुणगृहिणीमाशामासादयन्तममुं रुचीनिचय सिचयांशांशभ्रंशक्रमेण निरंशुकं। तुहिनमहसं पश्यन्तीव प्रसादमिषादसौ निजमुखमितः स्मेरं धत्ते हरेर्महिषी हरित् ॥ ३ ॥

वरुणेति। हे राजन् हरेरिन्द्रस्य महिषी राज्ञी असौ प्राची हरित् दिक् इतः प्रागभागे अन्तः प्रारम्भभागा एव निजमुखं तत् तिमिर-त्यागे प्रसादमिषान्निर्मलत्वव्याजात् स्मेरं सहासं धत्ते बिभर्ति, उत्प्रेक्षते। कथम्भूतेव। वरुणस्य महिषीं भार्यां प्रतीचीमाशामासादयन्तं प्र-तिगच्छन्तमत एव रुचीनिचयस्य कान्तिसमूहरूपस्य सिचयस्य वस्त्रस्यांशा भागास्तेषामपि अंशेन लेशेन भ्रंशस्तस्य क्रमेणैकैकभागापगमक्रमेण निर्गता अंशवो यस्य निरंशुकं, अथ च विवस्त्रं अमुं तुहिनमहसं प-श्यन्तीव। मय्यनुरक्तस्त्वयं चन्द्रः पराङ्गनाऽनुरक्तस्सिदानीमेतस्यामनुरक्त इत्यामापन्नोऽयमितीव हसतीत्यर्थः। अन्यापि नारी अनुरागातिवि-ह्वलं गलद्वस्त्रं परस्त्रीसेवमानं विटं दृष्ट्वा मुखं स्मेरं करोति। प्राच्या-मरुणोदयोऽभूत्। प्रतीच्यां स्वल्पकिरणप्रसरणावशिष्टश्चन्द्रो निःप्रभोऽ-स्तं जिगमिषुरस्ति। तस्माच्छीघ्रं बुध्यस्वेति। अंशेन अंश तृतीयेति (पा० २। १। ३०) योगविभागात् समासः। तत षष्ठीसमासः। इत समन्वयैतसिः। एवम्भूतं चन्द्रं पश्यन्ती इतो ऽस्माद्धेतोरिवेति इतो दृश्यमानादस्मात् प्रसादमिषादिति वा। सम्बन्ध पञ्चम्येव ॥ ३ ॥

अमहतितरास्तादृक् तारा न लोचनगोचरास्तरणिकिरणा द्यामञ्चन्ति क्रमादपरम्पराः। कथयति परिम्लानिं रात्रीतमः सहयुद्धनामपि दरिद्राणप्राणस्तमीदयितस्त्विषां ॥ ४ ॥

अमहतीति। भो राजन अमहतितरा स्वरूपेणैव सूक्ष्मतरा ध-यार्कपत्यादयस्तारा इदानीं तादृक् पूर्ववल्लोचनगोचरा न भवन्ति स्वरूपेण सूक्ष्मत्वात्। पूर्वं मापि यद्यप्यतापि महता यत्नेन वा दृश्य न्ते ता इदानीं यद्यपि न दृश्यन्त एव इत्यर्थः। सादृश्यो बहुमहत्त्वाः

पूर्वं स्थूलाः प्रकाशमानाश्च यास्तारकाः स्वात्यार्द्रादयस्ताः सम्प्रति सुतरामल्पाः सूक्ष्माश्च सत्यो नेत्रगोचरा न भवन्तीति वा । यस्मात् तरणेः सूर्यस्य किरणाः अपरस्पराः अहमहमिकया सततमविच्छेदेन प्रसृताः सन्तः क्रमात् द्यां गगनं अञ्चन्ति गच्छन्ति । सूर्यकरस्पर्शवशान्निःप्रभत्वात् तारा न दृश्यन्ते इत्यर्थः । तथा दरिद्राणाः क्षीणाः प्राणाः असवो यस्यैव भूतोऽस्त जिगमिषुः । अयं समोदयिनो निशान्तायचन्द्रो ऽपि रात्रितमसा सह युद्ध्वना सङ्ग्राम कुर्वतीमा निजास्त्विषां परिश्रान्तिं साकल्येन ग्लानिं रणपातं च कथयति । न केवलं त्विष एव दरिद्राणप्राणाः किन्तु चन्द्रोऽपि इत्यपि शब्दार्थः । अतिशयेन महत्यो महतितराः । घरूपेति (पा० ६।३।४३) ह्रस्व । ततो न समासः । गोचरः पुमान् । अपरे च परे च अपरस्पराः अपरस्पराः क्रियासातत्य इति (पा० ६।१।१४४) सुट । द्यां सततमविच्छेदेनाञ्चन्तीत्यर्थः । सह युद्ध्वनां सहे चेति (पा० ३।२।९६) युधे क्वनिपि वनोर चेति (पा० ४।१।७) ङीप् रेफान्तादेशश्च प्राप्तौ वनोमहश्च (पा० ४।१।७। वा० १) इति निषेधान्नभवतः । दरिद्राणा इति दरिद्रातेरार्धधातुक इत्यादिना (पा० ६।४।११४। वा० १) प्राप्तोप्यालोपो, न दरिद्रायके लोपो दरिद्राणे च नेष्यत इत्यादि (पा० ६।४।११४। कारिका) निषेधान्न भवति ॥ ४ ॥

स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः पुरु
सितगरुच्चञ्चच्चञ्चूपुटस्फुटचुम्बितः । अपि मधु
करी कालिंमन्या विराजति धूमलच्छविरिव र
वेर्लाक्षालक्ष्मी करैरतिपातुकैः ॥ ५ ॥

स्फुरतीति ॥ भो राजन् तिमिरस्य स्तोमः समूहः लाक्षालक्ष्मी अतिपातुकैः अतिक्रामद्भिः ततोऽप्यधिकं रक्तवर्णैः रवेः करैः कृत्वा पुरूणां बहूनां सितगरुतां श्वेतपक्षाणां हंसानां चञ्चद्भिश्चपलैः अस्थिरैर्वा विलसद्भिर्वा चञ्चूपुटैः स्फुटं यथा तथा चुम्बितः स्पृष्टः पङ्कस्य प्रपञ्चः समूह इव उच्चकैः अतितरां स्फुरति शोभते । तिमिरस्तोम अविस्पष्टमू-

यैः किरणास्तान् विमलननार्थं पङ्कमध्यप्रविष्टं मालवमधपत्रपुटगम लपङ्कयच्छाभतेतरामित्यर्थः । सया आत्मान कार्णी मन्यते कालिमन्या अतिकृष्णा च जमव्यपि छफपातरैः सूर्यकिरणैः धूमलच्छविरिव कृष्णा रुणाकान्तिरिव शोभततरा । सूर्यकरा प्रसृताः तिमिर चाऽपरीभूतमिति भावः । धूमलो कृष्णलोहिताविल्यमरः । उपकैरव्ययत्वादकच् । मधुकरी जातिवाचित्वान्ङीप् । कालिमन्या आत्ममानेरवश्चेति (पा०३।२।८३) खश् । दिवादित्वत् श्यन् खित्यनव्ययस्येति (पा०६।३।६६) ह्रस्वः अरुर्द्विषदिति (पा०६।३।६७) मुम् । लाघालक्ष्मी नलोकेति (पा०२।३।६९) षष्ठीनिषेधः ॥ ५ ॥

रजनिवमथुप्रालेयाम्भःकणक्रमसंभृतैः कुशकिस
लयस्याग्रैरग्रेशयैरुदबिन्दुभिः । सुषिरकुशलेनायः
सूचीशिखाङ्कुरसङ्कुरं किमपि गमितान्यन्तर्मुक्ता
फलान्यवमेनिरे ॥ ६ ॥

रजनीति ॥ रजन्या वमथुना करिणीमुखान्निर्गतजलवत् प्रालेयाम्भसो हिमजलस्य कणा लेशास्तेषां गमनक्रमेण संभृते सञ्चिते कुशकिसलयस्याग्रेशयैरग्रस्थितैः सूचीतीक्ष्णाग्रभागस्थितैरच्छैर्निर्मलैरुदबिन्दुभिर्जलकणैः कर्तृभिः मुक्ताफलान्यवमेनिरे अवगणितानि, मौक्तिकतुल्यशोभानीत्यर्थः । किंभूतानि मुक्ताफलानि सुषिरे विवरकरणे कुशलेन शल्यकारेण मध्ये किमपि लोकोत्तरं स्तोकं वा अयःसूच्या लोहमय्याः शिखैव सूक्ष्मत्वादङ्कुरस्तेन सङ्कुरं सर्वाङ्ग गमितानि प्रापितान्यन्तर्विद्धानीत्यर्थः । वमथुः करिशीकर इत्यमरः । ट्वितोऽथुच् (पा०३।३।८९) अग्रेशयैः अधिकरणे शेते (पा०३।२।१५) इत्यजन्ते शयवासवासिष्वकालादिति (पा०६।३।१८) सप्तम्या अलुक् । सूची कृदिकारात् ङीष् । सङ्कुर अव्ययीभावः (पा०२।१।५७) ॥ ६ ॥

रविरुचिचञ्चामिङ्गारेषु स्फुटामलबिन्दुतां गम-
यितुममूर्च्छ्यन्ते विहायसि तारकाः । स्वरवि

रचना यासामुच्चैरुदात्ततया हृताः शिशिरमहसो
विम्बादस्मादमंत्र्यमंत्रुचः ॥ ७ ॥

रवीति ॥ रवेः पौर्वाह्णिक्यो रुचय एव ऋचः तासां प्रातःकाले रविकिरणानामृग्रूपत्वात् ऋग्भिः "पूर्वाह्ने दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः" इत्यादि श्रुतेः । ऋग्वेदवाक्यानामोङ्कारेषु प्रारम्भप्रणवेषु अ च तदवयवः प्रारम्भेषु नदयममर्थेषु स्फुटां प्रकटां अमलां स्वरोच्चारणादिदोषरहितां अनुस्वाररूपां विन्दुतां गमयितुं प्रापयितु मगविंश्लि यसि स्थितास्तारका केनाप्युच्चीयन्तेऽवयवेन समुत्थान्त इव । वृत्तामलत्वाद्योग्यत्वात् ऋक्प्रणवा विन्दुनिर्माणार्थं एता गृह्यन्त इव ततो न दृश्यन्त इत्यर्थः । प्रत्यृचमोङ्कारसद्भावात्तद्बाहुल्यात्तारा विन्दूनामिति यदुक्तं । अथच कर्तुं चीयन्ते नीयन्त इति यावत् । सूर्यप्रभोदय एव तारका नश्यन्तीति भावः । तथास्तमयोन्मुखादस्माच्छिशिरमहसश्चन्द्रस्य विम्बात् मन्त्रभागार्थयोऽप्यासामृचामुच्चैर्नितरां बदूर्ध्वं आयततया गृहीततयाऽथच लक्षणयाऽभिधालतया उपरिस्थिततया च अथचोच्चैरुदात्त इति उदात्तलक्षणयोगादुच्चैरुदात्तत्वेन योग्यत्वादुत्तमस्वरस्य विरचनाय निर्माणायाऽसंशय निश्चित केनापि हृता नीता इव । उदात्तस्य शिरसि उपलभ्यमानाव्यञ्जकोर्द्धं रेखा लिख्यते । यजुर्वेदवरकशाखायामुपनिषदि उच्चैरुदात्तः समाहारः स्वरित इति लक्षणं द्रष्टव्यं । चन्द्रकिरणानामप्यस्तमनये उपरिवासित्वात् सूक्ष्मोपरितनरेखातुल्यत्वादेवमुत्प्रेक्षित । सूर्यप्रभोद्गमक्रमेण चन्द्रकिरणा अपि कृशीभूता इति भावः । हृता इति पाठे स्वीकृताः । असंशय उभयत्रापि योज्य । रुचि ऋचः । ऋत्वक इति (पा०६।१।१२८) प्रकृति भावः ॥ ७ ॥

व्रजति कुमुदे दृष्ट्वा मोहं दृशोरपिधायके भवति च नले दूरं तारापतौ च हतौजसि । लघु रघुपतेर्जायां मायामयीमिव रावणस्तिमिरचिकुरग्राहं रात्रिं हिनस्ति गभस्तिराट् ॥ ८ ॥

व्रजतीति ॥ गभस्तिराट् सूर्यः तिमिरमेव चिकुरास्तिमिरतुल्याः के

भ्रान्तस्वर्णाचलभ्रमविभ्रमः ॥ ११ ॥

नयतीति । अम्भोजस्य कमलकुलस्य अनिदम्प्रथमबान्धवः अकारणमित्रं तदानन्दकारी भगवान् षड्गुणैश्वर्यसम्पन्नः सूर्यो मघवत इन्द्रस्य वैजयन्ताख्यस्य प्रासादस्य प्रघाणम् अलिन्दं किमपि स्तोकं यथा तथा उपघ्नतां आश्रयतां नयति प्रापयति आश्रयति, तावत्पर्यन्तमूर्ध्वं गत इत्यर्थः । अथ च तं क्षिपति । पराङ्मुखशत्रोः शूरस्य परम्पराश्लेषो युक्तः । किम्भूतः, अपसरत् पुरः पलायमानमन्धकाररूपं ध्वान्तं तस्य प्रतीपः पश्चिमाशायाः सम्बन्धिनि विपरीतं गगनमार्गे मघवत्या सधीभावेन यद्गमनं तदेव प्रत्यग्दिगन्तगामित्वं, लयमनीति पाठे संघीभावेन यत् तिरोधानं सामस्त्येनादर्शनं तेन फलन् सफलो भवन् भ्रान्तो निरन्तरं स्वर्णाचलस्य मेरोः प्रदक्षिणलक्षणो भ्रमः स एव विभ्रमो विलासो यस्य । सद्वस्तुपरिपालनाय रात्रौ भ्रमतीयामिकस्य चौरपलायनेन यथा साफल्यं भवति तथा स्वर्णाचलरक्षणाय सूर्यस्य भ्रमणविलाससाफल्यं युक्तमित्यर्थः । अतएव स्वर्णाचलपदं प्रायोजि । अत्रापि पूर्वोत्तरार्द्धविपर्यासो द्रष्टव्यः । प्रघाणप्रघणालिन्दा इत्यमरः । बान्धवः प्रज्ञादित्वात् स्वार्थेऽण् । मघवत्प्रासादस्य प्रातिपदिकान्तस्यात्वलोपः । अगारैकदेशे प्रघणः प्रघाणश्च । उपघ्न आश्रये ( पा०३।३।७९--८५ ) इति च प्रघाणोपघ्नशब्दौ साधू । प्रत्यक् दिक्शब्देभ्य ( पा०५।३।२७ ) इत्यस्तातेः अञ्चेर्लुगिति ( पा०५।३।३० ) लुक् । तसिलादयस्तद्धिता ( पा०१।१।३७अ० ) इत्यव्ययत्वं ॥ ११ ॥

नभसि महसां ध्वान्तध्वंसप्रमः पतपत्रिणामि
हविहरणैः श्येनम्पातां रविरव्यधारयत् । अशि
शिशमनत्रामात्राभासामथाश्रुगमां शशी तदविगम
नात्रागात्राराततैरुदहीयत ॥ १२ ॥

नभसीति । रवी निजाङ्कवर्त्तिश्यामव्यपगुविशेषस्य विधमनं मारणं तस्मादुपजातो भय तस्मादुदासमानानां पक्षिणां दिक्षयात्, यथौ । तथा तारा नक्षत्राणि तद्रूपैः पारावतैः तस्य चन्द्रपलायनयुक्तत्वस्य

सूर्यमृगयारम्भवृत्तान्तस्य वा अधिगमनात पश्चिमनात उड्डीयत पला-यितं । किं विधः शशी । नभसि गगने ध्वान्तमन्धकारस्तद्रूपध्वांक्षाणां काकानां प्रमापणे मारणे विषये पत्त्रिणा श्येनात्स्यपक्षिरूपाणां सहमानं सूर्यतेजसां इह प्राग्भागे विहरणैः क्रीडनैः रवेः सूर्यस्य श्येनम्पातां मृगयामवधारयन निर्धारयन् । अन्यस्मिन्नपि रात्रि मृगयायां श्येन-पातेन काकादीन् हिनस्ति सति शशयुक्तः पुरुषः मदीयं शशमपि मांसार्थमेतदीयाः श्येना हनिष्यन्तीति भिया पलाय्य गच्छति । पा-रावता अप्युड्डीय यान्ति । सूर्यकिरणा गगने खेलन्ति चन्द्रः प्रतीचीं गतः । ताराश्च न दृश्यन्त इति भावः । इह नभसीति वा । शशेन नित्यं युक्तः शशी । श्यामादित्व तदधिगमादिर्वेति च प्रतीयमानार्थं-वा । अथ शशादनः । पत्त्री श्येन इत्यमरः । श्यैनम्पाता च मृगया । पारावत. कलरव इत्यमरः । पतन पात. आक्षेपश्च श्येनानां पात. श्येनपातः सोऽस्यां क्रियायां वर्तते श्यैनम्पाता मृगयेति । घञः सा-स्यां क्रियेतिञ (पा०४।२।५८) इति ञः । श्येनतिलस्येति मुम् ॥ १२ ॥

भ्रष्टामयिमहस्तारा हाराच्च्युता इव मौक्तिकाः

सुरसुरतजकेलिलूनाद्द्यामिन्यद्य यद्भ्रमं । अहस्कर

कृतःप्रातःसम्मार्जनादधुना पुनर्निरुपधिर्निजा

वस्थालक्ष्मीविलक्षणगर्भंस्यते ॥ १३ ॥

भ्रष्टामिति । सुरसुरतं देवमिथुनरतं तस्माज्जाता क्रीडा विलासप-रम्परा. अथ च सुरतुल्यराजादिरतिक्रीडासम्मर्दस्तेन लूनात्त्रुटितात् हा-रात् च्युता मुक्ता इव वृत्तताराकाराः शुभ्रद्युतयः सुराणामजिरभूत यद्गगनं निशि नितरां व्याप्य पूरम्, तद्गगनं अधुना पुनः अहस्तः सहस्रं करा यस्य स सूर्यस्तेन अथच रजःशोधकेन खलत्वा कृतात् प्रातः सम्मार्जनात् प्राभातिकात् सम्यङ्मार्जनात्तिमिरनिराकरणद्वारा शोधना-दथच शोधन्या रजोऽपनयनेन शोधनात्तिरुपधिरुपाधिरहिता स्वाभा-विकी निजावस्था सहजदशा तस्याः श्रिया कृत्वा तमीसम्बन्धिशोभा-त्यागादथच रजःपुष्पमालामुक्ताद्युपाधित्याजनात् सहजश्रिया विलक्ष-

असुराहितमप्यदितेस्तयां विपत्तिमनुगतं दि-
तिसुतगुरुः प्राणैर्योक्तुं न किं कचवन्नमः । प-
ठति लुठतीं कण्ठे विद्यामयं मृतजीवनीं यदि
न वहते सन्ध्यामौनव्रतव्ययभीरुता ॥ १५ ॥

असुरेति । दितिसुता दैत्यास्तेषां गुरुः शुक्रः आदित्येभ्यो देवेभ्यो हेतुभ्यः तथा जाता अय च सूर्यात् सञ्जाता विपत्तिं मरणं नाशञ्च कचवद्बृहस्पतिपुत्रवत् समागतं प्राप्तं । असुरेभ्यो हितमपि तेषां रात्रिचरत्वादनुकूलामपि तम प्राणैर्योक्तुं संयोजयितुं कण्ठे लुठतीं जागरूपां मृतानां जीवनीमित्यनुगतार्थां विद्यां किं न पठति । अपि तु स्पष्टं पठेदेव । परं यद्यं शुक्राचार्यः प्रातःकालीनसन्ध्यायाः मौनव्रतं मौनलक्षणो नियमस्तस्य व्ययो भङ्गस्तस्माद्भीरुता भयशीलत्वं यदि न वहते न धारयेदहीति सम्बन्धः । मौनव्रतात्मृतजीवनीजपाभावात् कचमिव तमो न जीवयतीत्यर्थः । कचस्य जीवनादि भारतादिभ्योऽवगन्तव्यं । तम सूर्येणात्यन्तं नाशितमिति भावः । असुरहित चतुर्थी तदर्थेति ( पा० २। १। ३६ ) समासः । कचवत् तेन तुल्यमिति ( पा० ५। १। ११५ ) वतिः । पठति वहते कालसामान्ये लट् । लुठती वैकल्पिकत्वान्नुमभावः ॥ १५ ॥

उदयशिखरिप्रस्थान्यह्ना रणेऽत्र निशः क्षणे द-
धति विहरत्पूषाश्युष्माद्रुताश्मजनुस्रवान् ।
उदयदरुणप्रक्षीभावादराद्रणतूर्ये मिलति विमु-
खत्वगङ्गाच्छङ्का नवेष्टकवेष्टना ॥ १६ ॥

उदयेति । अह्ना दिनेन सह निशि रात्रे रणे सङ्ग्रामरूपेऽस्मिन् क्षणे प्रातःकाल इत्यर्थः । तत्र उदयशिखरी उदयाचलस्तस्य प्रस्थानि शिखराणि कर्तॄणि तपनभिः प्रातःकालीनाः पतन्तः पैः द्रुतानां विलीनानां अश्मजतूनां शिलाजतूनां स्रवान् प्रवाहान् दधति । यद्वा रणे उत्सवतुल्ये रात्रिविनाशकारित्वात् सङ्ग्राम इव, सङ्ग्रामे

विद्रंस्तयोर्यद् हकीलुकदर्शनेन परिक्रीडमाना एवा सूर्य्यः प्रहरार्णोप-
न्नैषम्भूतान्युदयाचलमानूनि मातातपसन्तापविलीनशिलाजतुप्रवाहप्रवा-
ह्यानेव चिरकालविलम्बधूमलीभूतरुधिरप्रवाहान् धारयन्ति । रणभू-
मिषु हि कालविलम्बेन धूमलाः रुधिरप्रवाहा भवन्ति । अत एवोद-
यन् उदयं प्राप्नुवन् अरुणो अपजसारम्भयाम्भिमि प्रतीभावं नमस्कारे
विषये च आदरो जस्त्यक्षिप्रयस्तस्माद्धेतोः अरुणानुजं गरुडं मिलति
सङ्गम प्राप्नुवति सति तयोरुरुणगरुडयोः सङ्गान्मिलनाद्धेतो रत्नप्रदी-
प्त्या नवास्तकालमायाकादाकृष्टा इष्टका यत्र तादृशी नूतनेष्टकानि-
र्मिता वेष्टना । नवा इष्टका यत्र शिल्पे तन्नवेष्टक तेन वेष्टना प्राकार
इति वा । किमु न चाट्वा ? तथ्यां अपि नु सैव तर्कयत्यर्थः । परिचा-
रभूते दिनपक्षे पुच्छमाने तद्दाशना लीलाश्चित्रविचित्रा भग्नरागस्य स्वा
मिनो महारजोचितगैरिकसुवर्णभूपितप्राकाराध्वं स्थिति रचिता स-
म्भाव्यते । अथच दिनराज्या संनामीद्भूतयोः सङ्ग्रामे उदयाचलतट-
नूनि तद्भटतुल्यानि रुधिर धारयन्ति । भटाः प्रहारवशात् रक्तसिक्ता
भवन्ति । तत्र च दिनपक्षीयप्रस्थानां जयित्वात् सुवर्णमयगरुडस्तम्भ-
कोष्ठा इष्टकस्य वेष्टना सुवर्णपट्टिकाया धारया न तथा किं, अपि तु
जयिना तया जवितव्यमेवति, गरुडस्तया सुवर्णमयविरुदपट्टिकास्थानी-
यात इत्युचितमित्यर्थः । नवष्टकवेष्टनेति क्रियायां पुवदिति ( पा० ६।-
३।३४ ) पुंवत । वेष्टक । कर्तरि ल्युट् ॥ १६ ॥

रविरथहयानश्वस्यन्ते ध्रुवं वडवा बलप्रतिबल
बलान्तःस्थायिन्यः समीक्ष्य समीपगान् । निजप
रिवृढ गाढप्रेमा रथाङ्गविहङ्गमी स्मरशरपराधीन
स्वान्ता नृपस्य तु सम्प्रति ॥ १७ ॥

रवीति । भो राजन् सम्प्रति प्रातःकाले बलस्य प्रतिबल शत्रु प्रा
चीपर्शीन्द्रस्तस्य बलं सैन्य तत्राधस्थायिन्यो मध्यवर्तिन्यो वडवास्तुरग्या
गाढप्रेमा सूर्यांश्च दृढानुरागा सर्वः रविरथहयान् समीपगान् स-
मीक्ष्य मैथुनार्थं आत्मनोऽश्वामिच्छन्ति ध्रुवमुत्प्रेक्षायां निश्चित वा ए

घ्नन्तीत्यर्थः । यतः स्मरशरपराधीनं स्वान्तं चित्तं यासां ताः । तथा रथाङ्गः चक्रवाकः चक्रवाक्यपि निजं स्वीयं परिवृढं चक्रवाकं इदानीं प्रातः समीपमागमनं दृष्ट्वा कामबाणवशंवदा अतएव रात्रिवियोगेन दृढानुरागा सती मैथुनवाञ्छया वृषस्यति आत्मनो वृषमिच्छति । वृषशब्दस्य रतिरायत्तः स मैथुनार्थं कामयतेत्यर्थः । सूर्योदयात् पूर्वं समागताश्चक्रवाकपाश्च मङ्गमो जात इति भावः । अश्वस्यन्ति वृषस्यन्तीति आत्मनोऽश्वमिच्छन्ति वृषमिच्छन्तीति च सुप आत्मनः (पा०३।१।८) इति क्यचि अश्ववृषयोर्मैथुनेच्छायामिति (पा०७।१।५१ वा० १) मैथुनेच्छायामसुगागमः । व्युत्पत्तिमात्रमेतत् । रूढ्या तु मैथुनार्थमिच्छन्तीत्यर्थः । वृषस्यन्ती तु कामुकेत्यमरः । तथा कति रामा वृषस्यतीमिति च कालिदासः । प्रभौ परिवृढः (पा०७।२।२१) इति निपातः । गाढप्रेमेति डाबुभाभ्यामिति (पा०४।१।१३) पक्षद्वयेऽपि डाप् । श्रेयैकल्पिकत्वादिव चक्रवाक । विहङ्गमी जातित्वान् ङीप् । रथाङ्गचासौ विहङ्गमी चेति च नाम ॥ १७ ॥

निशि निरशनाः क्षीरस्यन्तः क्षुधाश्वकिशोरका
मधुरमधुरं हेषन्त्येते विलोलितवालधि । तुर
गममजः स्थानोत्थाय क्षणं मणिमन्थभूधरभव
शिलालेहायैषां क्षणो लवणस्यति ॥ १८ ॥

निशीति । भो राजन् निशि रात्रौ निरशनाः निराहाराः अतएव क्षुधा क्षीरस्यन्तः आत्मनोऽत्यर्थं क्षीरं दुग्धमिच्छन्तः एते अश्वकिशोरकाः अश्वशिशवः मधुरमधुरं अतिकलशब्दं यथा तथा विलोलिताः पुनः पुनश्चालिताः वालधयः पुच्छानि यस्यां क्रियायां तद्यथा तथा हेषन्ते । हेषारवं कुर्वन्ति । तथा तव मन्दुरायां स्थितस्तुरगाणां गणः समूहः स्थानात् स्थानात् शय्यास्थानात् उत्थाय क्षणं हेषन् गमनमनसः मणिमन्थनामकभूधरे भवानां जातानां शिलानां सैन्धवशिलानां लेहाय आस्वादनाय इहया इच्छया यन् पुच्छादिचालनचेष्टया एषां क्षणः स्वस्य लवणमिच्छति । आत्मना लौल्यत्वेन लवणमिच्छ

ति । अश्वकिशोरकाः प्रातः क्षीरपानार्थं ह्रेषन्ते । अश्वास्तु प्रात. सै-न्धवास्वादनाय ह्रेषन्त इति ख्यातिः । सूर्योदयो जात इत्यर्थः । क्षीरं स्यन्तो लवणस्यतीत्यत्र चात्मेच्छायां क्यचि अश्वक्षीरेत्यादिना क्षीरलवयोर्लालसायामिति (पा०७।१।५१।वा०८२) वचनात् लालसायामसुक् । किशोरकाः अल्प इति (पा०५।३।८५) कः । ह्रेषन्ति ह्रेषृ अव्यक्ते शब्दे । सम ज. पशुविषयस्वात् समुदोरज (पा०३।३।६९) इत्यप् । स्यानोत्थापं अप-पादाने परीप्सायामिति (पा०३।४।५२) णमुल् । लिहः भावेघञ् ॥ १८ ॥

उडुपरिषदः किं नार्हत्वं निशः किमु नौचिती
पतिरिह न यद्राभ्यां दृष्टो गणेयरुचीगणः ।
स्फुटमुडुपतेराश्मं वक्षः स्फुरन्मलिनाश्मनच्छवि
यदनयोर्विच्छेदेऽपि द्रुतं बत न द्रुतं ॥ १९ ॥

उडुिति । हे राजन् उडुपरिषद. नक्षत्रपरम्परायाः अर्हत्वं किं न अपि तु औचित्यमेवैतत् तथा निशोरात्रेः औचिती न किमु अपि त्वौचित्यमेव यद्यस्मात्ताभ्यां तारापङ्क्तिविभावरीभ्यां गणेयोऽल्पो रुची गणो दीप्तिसमूहः क्षीणतेजाः पति. स्वामी चन्द्रः इहास्मिन् समये न दृष्टः । तस्य तयोरौचित्यमेवेत्यर्थः । धन्यास्ता या न पश्यन्ति पति भङ्गं कुलक्षयमिति वचनात् पतिविपद्दर्शनादृष्टैव द्वयोरपि अस्तत्वादौचित्येव जातेत्यर्थः । स्फुरन्ती प्रकाशमाना कलङ्कव्याजेन मलिना कृष्णा आश्मनी पाषाणसम्बन्धिनी छवि. कान्तिर्यस्यैवम्भूतं उडुपतेर्यच्चो मध्यं अथ च हृदयं स्फुटं निश्चितं आश्मं पाषाणविकाररूपं पाषाणघटितमिवातिकठिनं मलिनं चेत्यर्थः । यद्यस्मादनयोस्ताराराज्योर्विच्छेदे वियोगे ऽपच विनाशे सत्यपि द्रुत शीघ्रं द्रुतं स्फुटितं पाषाणनिर्मितमेवेत्यर्थः । बत खेदे । मत् । यद्वोविशेषणं वा । तस्यापि विनये निकटे सत्यपि तत्वतिना चन्द्रेण स्वप्रेयस्याः प्रेम न दर्शितमिति मस्यानौचित्येत्यर्थः । तारापरम्परा रात्रिश्च विनष्टा । चन्द्रोपि क्षीणतेजा आमम्नाशो जात इत्यर्थः । आर्हन्तीति पाठे अर्हः प्रशंसायामिति (पा०३।२।१३३) शतरि अर्हतीभाव इत्यर्थ आसनपादित्वात् (पा०

५।१।१२४) ष्यञिति ष्यञ्लोपः । अर्हतो नुम् चेति (पा०५।१।१२४।वा०२) नुम् । आश्मं विकारेऽपि अश्मनो विकारे टिलोपः (पा०६।४।१४४।वा०१) इति टिलोपः । आश्मनेति सम्बन्धेऽपि विकाराभावाट्टिलोपाभावे, अश्मनो चासौ छविश्चेति समासे तुंवत् कर्मधारयेति (पा०६।३।४२) पुंवत् ॥ १९ ॥

अरुणकिरणे वह्नौ लाजानुडूनि जुहोति या प
रिणयति तां सन्ध्यामेतामवैमि मणिर्दिवः ।
इयमिव स एवाग्निभ्रान्तिं करोति पुरा यतः
करमपि न कस्तस्यैवोत्कः सकौतुकमीक्षितुं २०

अरुणेति । भो राजन् या सन्ध्या अरुणस्य किरणरूपे वह्नौ उडूनि नक्षत्राण्येव लाजान् जुहोति । दिवो मणिः सूर्यस्तामेतां प्रातःसन्ध्यां परिणयति प्रापयति विवाहयतीति अहं अवैमि मन्ये । यतः इयमिव सन्ध्या यथा रक्तवर्णत्वादग्निभ्रान्तिं वह्निविपर्ययज्ञानं पुरा करोति अकरोत् । यद्वा यथैव करोति तथा स एव सूर्योऽपि रक्तत्वात् उष्णत्वाच्च वह्निबुद्धिं पुरा करोति उदितमात्र एव करिष्यति । अथचैवं सन्ध्या पुरा प्रथमं वह्निप्रदक्षिणं परिक्रमणं यथा करोति तथैवास्या अनन्तरमेव सूर्योऽपि वह्निप्रदक्षिणं परिक्रमणमिदानीमेव करिष्यति । एवकारोऽप्यर्थः । यतश्च सकौतुकं यथा तथा तस्य सूर्यस्यैव करं किरणमपीक्षितुं कः पुरुषो न उत्कः नोत्कण्ठितः, अपि तु सन्देहापनिराकरणद्वारा अस्य किरणमीक्षितुं सर्वोऽप्युत्कण्ठितो भवतीत्यर्थः । अथ च सकौतुकं माङ्गलिकसूत्रकङ्कणेन सह तस्य विवोढुः सूर्यस्यैव हस्तमपि वीक्षितुं कः पुरुषो नोत्सुकः, अपि तु सकङ्कणं च रक्तं सर्वोऽपि द्रष्टुमुत्कण्ठित एव । या च वधूः परिणीयते सा प्रदीप्ते वह्नौ लाजान् जुहोति, सा च वह्निं पूर्वं प्रदक्षिणीकरोति । वरोऽपि तया सह पश्चात्प्रदक्षिणीकरोतीति सन्ध्यासूर्ययोर्वधूवरत्वमुक्तं । अरुणोदयो जातस्तत्प्रभया च तारा न दृश्यन्ते, अधुना रविरुदेतीति भावः । कौतुकं कुतुके स्यात् हस्तसूत्रेऽपि कथ्यत इति विश्वः । कि-

वा विरचितो विग्रोऽपि निद्दितमकोपाय केवलं वदेत् इति न किन्तु मदेऽप्युदेतु । सदाश्रोपजीविना अभिहितेऽपि परुषं रोषो न भवति किन्तु हर्ष एव भवतीत्यर्थ इति वा। किञ्च प्रियवचःप्रवीणा अपि व यं यतो नग्नाचार्या जितलज्जा अत स्वच्छन्दं वदाम इति भावः । नग्नो बन्दिक्षपणयोरिति विश्वः । वदाम्नमां प्रैषातिसर्गेति (पा०३।३। १६३) प्राप्तकाले लोट् तिङश्चेति (पा०५।३।५६) अतिशये तमप् । पूर्ण- दुहः सत्सूद्विषेति (पा०३।२।६१) क्विप् । उदेतीति पाठे वर्तमानसामी प्य इति (पा०३।३।१३१) भविष्यति लट् । युक्तस्यै तादर्थ्य मात्रविवक्ष- या चतुर्थी ॥ २१ ॥

भव लघु युताकान्तः सन्ध्यामुपास्व तपे मय
त्वरयति कथं सन्ध्येयं त्वां न नाम निशानु
जा । द्युतिपतिरथावश्यङ्कारी दिनोदयमासि
ता हरिपतिहरित्पूर्णभ्रूणायितः कियतः क्षणात् २२

भवेति । हे राजन् त्वं तस्मात् लघु शीघ्रं युता पृथग्भूता कान्ता यस्मादेवम्भूतो भव । इदानीं भैम्या सह क्रीडां त्यज । ततः सन्ध्या नित्यकृत्योपासनामुपास्व कुरु । हे तपोमय नित्यकर्माद्यनुष्ठानरूपेण धर्मेणामलीकृत निर्दोष निशानुजा रात्र्यनन्तरजाता प्राजातिकी इय सन्ध्या त्वां कथं नाम न त्वरयति अपि तु त्वरयत्येव । अथ मुहूर्ता- नन्तरक्षणे द्युतिपतिः सूर्यः दिनोदयं दिवसप्रारम्भमवश्य कारी अ- वश्यं करिष्यति उदेष्यतीत्यर्थः । यतो हरिरिन्द्रः पतिर्यस्यास्तस्या ह रितो दिशः प्राच्याः पूर्णभ्रूणायितः दशमासगर्भ इवाचरितो रक्तवर्णः कियतस्त्रिचतुरानेव क्षणान् आसिता स्थाता । अतः सन्ध्यामुपास्वेत्य- र्थः । युतेति युमिश्रणामिश्रणयोरिति अस्मादमिश्रणे क्तः स्यक्त्वादिप- दत्यागेन अमङ्गलप्रतीतिपरिहारार्थं युतेति श्लिष्टपदं प्रायोजि । सन्ध्या पदेन कर्मानुष्ठानपर्यन्तमेव कान्तारहितो भव तदनन्तरं पुनरपि युता संयुक्ता कान्ता येनेति मिश्रणमपि विवक्षितं एतदर्थमेतत्प्रायोजि वा । कान्तशब्दस्य प्रियादित्वाद्युतेत्यत्र न पुंवत् । त्वरयति हेतुमण्णिच् ।

कारीति भविष्यत्यावश्यके णिनि तद्योगे अकेनोरिति (पा०२।३।७०) निषेधात् दिनोदयमिति षष्ठ्यभावः। आसिता णुट्। चूर्णायित आ घारक्यङन्तात् क्तः। क्षणान् कालावाचित्वाद्द्वितीया। २२॥

मुषितमनसश्चित्रं भैमि त्वयाद्य कलागृहैर्नि-
षधवसुधानाथस्यापि श्लथश्लथता विधौ। अज-
गणदयं सन्ध्यां वन्ध्यां विधाय न दूषणं नम-
सितुमना यन्नाम स्यान्न सम्प्रति पूषणम्॥२३॥

मुषितेति। हे भैमि चतुःषष्टिकलानां गृहैर्निधानभूतया त्वया अद्य मुषितं चोरितं मनो यस्यापहृतचित्तस्य त्वाजितस्वभावस्य वा निषधवसुधानाथस्य नलस्यापि विधौ श्रुतिविहितसन्ध्यादिनित्यकर्मणि विषये श्लथश्लथता श्लथप्रकारता आदरस्यातिशयोऽनादरातिशयो वा यत्तत इति चित्रम्। परमधार्मिकोऽप्यनेककलाभिज्ञया त्वया स्ववशीकारेण धर्मविमुखः कृत इत्याश्चर्यं अनुचितमेतदित्यर्थः। अथ च कलानिधिभूतया त्वया मुषितमनस्कस्य कलानिधौ विधावपि अनादर इति चित्रम्। कथं शैथिल्यमित्यत आह। यद्यस्मादयं परमधार्मिकोऽप्ययं सन्ध्यां वन्ध्यां सन्ध्योपलक्षितप्रातःकृत्यरहितां विधाय कृत्वा विहिताकरणजन्यं दूषणं नाजगणत्। यच्च सम्प्रति पूषणं सूर्यं नमसितुं मनागपि नमस्कर्तुकामोऽपि न स्याद्भवति। नामेत्याश्चर्ये। परित्यक्तनित्यकर्मा सूर्यस्य नमस्कारमपि न करोतीत्युपालम्भः। अन्योऽपि कामी कस्याञ्चिदासक्तो निजधर्मपत्नीमनभुञ्जानो वन्ध्यां विधत्ते दोषञ्च न गणयति सम्भोगविघ्नभूतत्वाद्दिनकरमपि नाद्रियते। तथा अयमपि सन्ध्यादिनित्यकर्मानुष्ठानार्थं क्षणमपि न मुमोचेति भावः। गृहशब्दस्य पुंस्त्वाद्बहुवचनान्तत्वेऽपि त्वयेत्यनेन सामानाधिकरण्यं युक्तम्। स्यात् सम्भावने लिङ्॥२३॥

न विधिपितरः कश्चिद्यत्नस्ततो नियतक्रियाप-
तनदुरितं हेतुर्मन्तुर्मनस्विनि मा स्म भूः। आनि

भवदत्यागादेनं जनः खलु कामुकीसुभगमानि
धास्यत्यहो मा पराङ्मुखवदावदः ॥ २४ ॥

नेति ॥ भो मनस्विन्यतिधैर्ययुक्ते सावधाने वा त्वत्प्रकाशाद्विदुषितरा नितरां पण्डिता सर्वलोकशास्त्ररहस्यविदुषी काप्यन्या मद्व्यस्तान्नास्ति ततस्तस्मादूर्ध्वं नलस्य नियतक्रियापतनान्नित्यसन्ध्यादिकर्मलोपाद्भयङ्करि तत्र त्वं हेतुः मा स्म भूः सन्ध्याद्यनुष्ठानार्थं शीघ्रमेनं मुञ्चेत्यर्थः । किञ्च खलु यस्मात् उद्दामा निरङ्कुशाऽमर्त्य पराङ्मुखवदावदः अस्मदीयकलङ्कभाषणशीलो जनः अभिज्ञो भवत्या अत्यागात् भवत्या कर्तृभूतया वाऽमोचनात् हेतोरेनं नलं कामुक्यामतितरां मैथुनेच्छावत्यां सुभग तत्परवशं कामुकी पूर्वं च सुभगा सौभाग्यवती भर्तृदृष्टा स्त्री यस्य स तत्प्रभृति वाऽभिधास्यति वदिष्यति । स्त्रीपरवशत्वादेव नित्यकर्माणि त्यजतीति निन्दां करिष्यति तस्माद्विहिताकरणप्रत्यवायलोकगर्हादिपरिहारार्थं एनं मुञ्चेति भावः । विदुषितरा उगित्वात् ङीपि तरपि उगितश्चेति (पा०६।३।४५) पक्षे ह्रस्वः । भवदत्यागात् सर्वनामत्वात् पुंवत् । पूर्वं च महत्सूत्रस्य मकारादित्वात् समास । सुभगाशब्दस्य प्रियादित्वात् पूर्वस्य न पुंवत् । वदतीति वदावदः पचाद्यच् । चरिचलीत्यादिना (पा०६।१।१२ वा०५) द्वित्वमभ्यासस्यागागमश्च ॥ २४ ॥

रह सहचरीमेतां राजन्नपि स्त्रितमां क्षणं तर-
णिकिरणैः स्तोकोन्मुक्तैः समालभते नभः । उ-
दधिनिरयद्भास्वत्स्वर्णोदकुम्भदिदृक्षुतां दधति
नलिनं प्रस्थायिन्यः श्रियः कुमुदान्मुदा ॥२५॥

रहेति ॥ हे राजन् त्वं सहचरीं सदा सहचरणशीलां तथा स्त्रितमां स्त्रीषु श्रेष्ठां प्रियभूतामप्येनां क्षणमात्रं रह मुञ्च । यतः नभः स्तोकोन्मुक्तैः ईषन्निर्गतैर्बालैस्तरणेः सूर्यस्य किरणैः करैः समालभते आत्मानं कुङ्कुमानुलेपनं करोति । तथा सङ्कुचत् कुमुदात् सकाशाद्विकाशोन्मुखं नलिनं कमलवनं प्रति मुदा प्रस्थायिन्यः प्रस्थास्यन्त्यो लक्ष्मी

गाः श्रियः दधे. सकाशान्निरयन्निर्गच्छन् भास्वान् सूर्यं यथोदकुम्भो जलपूर्णः जलशक्त दिदृक्षुना दर्शनेच्छुना दधति धारयन्ति । कुमुदान्निर्गताः सत्य कमलवनं प्रविशन्तु सूर्योदय प्रतीक्षन्त इत्यर्थः । शकुनपरो हि जलपूर्णं कुम्भं विप्रतीक्षन्ते । प्रभातं जातमित्यर्थः । सन्ध्यानित्यकर्मानुष्ठानार्थमत्यजनीयासन्ना क्षणमात्र मुञ्चेति भाव । रह रहत्यागे, क्तितमां पूर्ववत् । स्तोकान्मुक्तैः स्तोकान्तिकेति (पा० २।१।३९) पञ्चमी समास पञ्चम्याः स्तोकादिभ्य (पा०६।३।२) इत्यलुक् । कुमुदान्निर्गता इत्यस्मात्तु न उदकुम्भः एकहलादौ पूरयितव्य (पा०६।३।५९) इत्युदकस्योदादेशः । दिदृक्षुरित्यप्रत्ययान्तत्वान्न लोकेति (पा०२।३।६९) षष्ठीनिषेधाद्द्वितीयेति योगविभागात् समासः ॥ २५ ॥

प्रथमककुभः पान्थत्वेन स्फुटेक्षितवृत्रहालयन
पदमिह द्रक्ष्यन्ति त्वां महांसि महःपतेः । पटिम
वहनादूहापोहक्षमाणि वितन्वतामहह युवयो
स्तावल्लक्ष्मीविवेचनचातुरीं ॥ २६ ॥

प्रथमेति ॥ हे राजन् महःपतेः सूर्यस्य महांसि तेजांसि प्रथमककुभः प्राच्याः पान्थत्वेन पथिकतया तेनैव मार्गेणागमनवशात् स्फुटं समीक्षितो वृत्रहा यैस्तादृशानि सन्ति अनुपदमनन्तर सविधमागत्य इह प्रासादे वर्तमानं त्वां द्रक्ष्यन्ति विलोकयिष्यन्ति । अनन्तर पटिम्नोऽतिशयस्याथ च प्राविण्यस्य वहनाद्धारणात् उभयतः प्रकाशादेः प्रकटीकरण ऊह समय तिमिरादेरपोहो निराकरण तयोः क्षमाणि समर्थानि शक्तान्यथ च प्रावण्याद्वहनपट ऊहा या वस्तुन्यपि दोषान्तरायणाद्वर्जनपरास्तत्र समर्थानि सामान्यविशेषभावादिनिर्णयनिपुणानि तानि रवितेजांसि युवयोर्भैमीनलयोस्तावदनेक प्रकाराणां शोभासम्पद्रूपाणां लक्ष्मीनां विवेचनचातुरीं तारतम्यविचार कौशलं वितन्वतां विस्तारयतु अहह चित्र । अत्यन्तमविधस्य चतुर्थस्याद्दर्शनादाश्चर्यं । इन्द्रादिशोभितशोभासम्पत्तिस्तवायं चेति संशये प्रथमदर्शनादिन्द्रशोभासम्पत्तिस्तवन्नालप्सुद्धिः । अनन्तरं च नल-

दर्शनान्तले शोभासम्पत्तिमत्त्वविशेषबुद्धिरिति सामान्यापेक्षया विशेषस्य बलवत्त्वात्, उभयदर्शिभिः सूर्यकिरणैरिन्द्रापेक्षया शोभासम्पत्तिभ्यां नम एवाधिक इति निर्णीतमिति भावः । अन्योऽपि प्राज्ञः कदापाह्वयम् सामान्यविशेषभावाद्विचातुरीं तनोति । अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययमित्यमरः । पटिमा पृथ्वादि. । ऊहा स्त्रीत्वविवक्षायां गुरोश्च हलः (पा०३।३।१०३) इत्यप्रत्ययः ॥ २६ ॥

अनतिशिथिले पुंभावेन प्रगल्भबलाः खलु
प्रसभमलयः पाथोजास्ये निविश्य निरित्वराः।
किमपि मुखतः कृत्वा नीतं वितीर्य सरोजिनी
मधुरसमुपायोगे जायां नवान्नमचीकरन् ॥२७॥

अनतीति ॥ हे राजन् खलु यस्मात् पुंभावेन पौरुषेण प्रगल्भबलाः उत्कटशक्तयोऽतिधृष्टाः अतएवानतिशिथिले विकासोन्मुखे अत्यक्तकलिकाविधकाठिन्येऽपि पाथोजास्ये कमलमुखे मकरन्दग्रहणार्थं प्रसभं हठान्निविश्य प्रविश्य निरित्वराः निर्गमशीलाः एवम्भूताः अलयः भ्रमराः किमपि कियदंशं मुखतः मुखे कृत्वा आनीय किमप्यपूर्वरसं स्वादुतरं सरोजिनीमधुरसं कमलिनीमकरन्दरूपं रसं आस्वाद्य वस्तु उपायोगे प्रभातकाले वितीर्य दत्त्वा नवान्नं नूतनमपूर्वं मधु च प्रेमभरात् स्वयमभुक्तमनुच्छिष्टमेव जायाः मधुकर्यो इत्यर्थः । अचीकरन् कारयामासुः । अविकसितेऽतिकठिने कमले अबलत्वात् प्रवेष्टुमशक्ता एता इति कृत्वा पौरुषेण स्वयं तत्र प्रविश्य मकरन्दं मुखे धृत्वा समानीय मधुकरीभ्यो दत्त्वा ताभिस्तद्भोजयामासुरित्यर्थः । किञ्चिदासन्नसौरभकाशत्वात् कमलानि विकासोन्मुखानि जातानीति भावः । अन्येनापि प्रातः शुभयोगेऽन्नप्राशनं कार्यते । उषायोग इति पाठो विभावनीयः । नक्तमुषाचशर्वरीति चेति हलायुधः । उषायोगे अर्थाद्दिनेन सहयोगे प्रातरित्यर्थः । निरित्वराः इण्नशजि (पा०३।२।१६३) तिक्वरप् । मुखतः कृत्वेति स्वाङ्गे तस्प्रत्यय इति (पा०३।४।६१) कृञः क्त्वा । जायां हृक्रोरिति (पा०१।४।५३) कर्मत्वं । जायाः इत्यपि पाठः ॥ २७ ॥

मिहिरकिरणाभोगम्भोक्तुं प्रवृत्ततया पुरः कलितचुलुकापोशानस्य ग्रहार्थमियं किमु । इति विकसितैकेन प्राग्दलेन सरोजिनी जनयति मतिं साक्षात्कर्तुर्जनस्य दिनोदये ॥ २८ ॥

मिहिरेति ॥ सरोजिनी कमलिनी दिनोदये प्रातःकाले प्राक् अन्यदलापेक्षया पूर्वं विकसितेनैकेन दलेन पत्रेणोपलक्षिता साक्षात्कर्तुरात्मनः पश्यतो जनस्य इति मतिं जनयति । इति किं इव मिहिरस्य सूर्यस्य किरणानाम् आभोगं परिपूर्णतां भोक्तुम् अनुभवितुमथ च भक्षयितुं प्रवृत्ततया कृतप्रारम्भतया हेतुभूतया पुनर्भोजनादावक्रियामृतकरणार्थस्यापोशानस्योपस्तरणमन्त्रोदकस्य ग्रहार्थं कलितो धृतश्चुलुकः प्रकृतिविशेषो यया एवम्भूता किमु । भोजने प्रवृत्तमापोशनक्रियापूर्वमादावन्ते च भोक्तव्यमिति स्मृतेः । अनाभ्यामनुगृहीता करकमले एका कनिष्ठामङ्गुलिं प्रसारयति अन्याश्च संकोचयतीति संप्रदायः । कमलविकाससमयो जातस्तस्मादुत्तिष्ठध्वमिति भावः ॥ २८ ॥

तटतरुखगश्रेणीसाराविणैरिव साम्प्रतं सरसि विगलन्निद्रामुद्राऽजनिष्ट सरोजिनी । अधरसुधया मध्ये मध्ये वधूमुखलब्धया धयति मधुपः स्वादुङ्कारं मधूनि सरोरुहां ॥ २९ ॥

तटेति । साम्प्रतं सरसि सरोजिनी सरस्तटे तरुषु वर्तमानानां खगश्रेणीनां साराविणैर्मिलितैः कलकलशब्दैरिव विगलन्ती त्यजन्ती निद्रैव मुद्रा कोरकयन्त्री यस्याः, यद्वा विगलन्ती निद्रायाः सङ्कोचस्य मुद्रा भङ्गो यस्याः सा त्यक्तनिद्रोन्मीलितकमललोचनेवाजनिष्ट जाता । कलकलेन च निद्रितस्य निद्रा अपयाति । तथा मधुपो भ्रमरः सरोरुहां मधूनि कमलमकरन्दान् वध्वाः भ्रमर्याः मुखात् लब्धयाऽधरसुधया ओष्ठगतपीयूषेण मध्ये मध्ये स्वादुङ्कारं स्वादूनि माधुर्यातिशययुक्तानि कृत्वा धयति पिबति । कमलानि विकसितानि भ्रमराश्च

तन्मधूनि क्रमशश्चरण्व पिबन्तीत्यर्थः । मधुप इति साभिप्राय मद्यपा अप्येतादृशा भवन्ति । समन्ताद्रावाः साराविणानि आभिविधौ प्राय ( पा० ३।३।४४ ) इनितीनुणतात् स्वार्थे अणिनुण इत्यण् ( पा० ५।४।१५ ) । स्वादुङ्कारं स्वादुमिणमुल् ( पा० ३।४।२६ ) । मान्तत्वञ्च पूर्वस्य स्वादुमीति निर्देशात् ॥ २९ ॥

गतचरदिनस्यायुर्भ्रंशे दयोदयसङ्कुचत्कमलमुकुलक्रोडाक्रोडप्रवेशमुपेयुषां । इह मधुलिहां भिन्नेष्वम्भोरुहेषु समायतां सह सहचरैरालोक्यन्त्यधुना मधुपारणाः ॥ ३० ॥

गतेति । गतचरदिनस्यातीतचरदिनस्यायुर्भ्रंशेऽवसानकाले सायंसमये दयाया उदयादिव सङ्कुचतां स्वामानां कमलानां मुकुलानि कलिका. तेषां क्रोडान्मध्यात् नीडेषु प्रवेशं उपेयुषां प्राप्तानां मकरन्दास्वादलाम्पट्यात् सायं सन्ध्यासमयेऽपि कमलेषु स्थितानामनन्तरञ्च तेषु सङ्कुचितेषु बहिर्निर्गन्तुमशक्तत्वात् सङ्कुचत्कमलसंरूपेषु नीडेषु स्थितानामिति यावत् । क्रोडमिति पाठे मुकुलविशिष्टकमलक्रोडमेव नीडप्रवेशं गताना । अनन्तरञ्च रात्रावतीतायां इह प्रात सन्ध्यासमये भिन्नेष ईषद्विकसितेषु अम्भोरुहेषु समायता पूर्वं दिनान्तसङ्कुचितेषु ईषदुन्मिषितेषु सरःसु सुखेन निर्गन्तु शक्तत्वात्तेभ्य. सकाशाद्दर्शनीनकमलानि उद्दिश्य समागच्छतां मधुलिहां अधुना सहचरै. पूर्वं दिनान्ते कमलसङ्कोचात् पूर्वमेव कमलक्रोडान्निर्गतै सहचरै. सहचरीभिश्च मित्रकलत्रादिभि. सह मधुना मकरन्देन कृत्वा पारणाः उपोषितसम्बन्धीनि भोजनानि आलोक्यन्ते लोकैरिति शेष. । ये रात्रौ कमलबद्धास्ते तत्र मकरन्दाभावान्निर्बन्धवशाच्च कृतोपवासा । अनिबद्धा. सहचरास्तु रात्रौ निद्रावशात् तद्वियोगाच्च कृतोपवासाः अतः सर्वेऽपि प्रातर्मिलित्वा विकसितकमलमधुना पारणां कुर्वन्तीत्यर्थ । पूर्वं दिनान्ते सङ्कुचितानि कमलानि प्रात पुनः किञ्चिद्विकसितानीति प्रसिद्धिः । भूयान् समयो जात तस्मादुद्बुध्यस्वेत्यर्थः । अन्येऽपि कस्मिंश्चिन्महीयसि मृते बन्ध्यादौ वा निबद्धे कृपया सङ्कुचितहृदा

भवन्ति । केचिद्य महत्सु परले सति उपयामङ्कुर्याणां गृहमध्यं प्रविश्य दिनान्तरे ज्ञातिभिः सह भुञ्जते । ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभमिति शास्त्रार्थः सहचरपदेन सूचितः । निगडयुक्तोऽपि कारागृहेषु चिरं पुन्मोचितः समागच्छन् सन् स्वस्य बन्धनग्रन्थिराहरितिर्ज्ञातिभिः सह मधुरैरन्नैः पारणां करोति । क्रोडादीनि यथायथं हेतौ ल्यब्लोपे पञ्चमी । समायता क्षणः शता । सहचरैः पुमान् स्त्रियेत्येकशेषः ( पा० १।२।६७ ) ॥ ३० ॥

तिमिरविरहात्पाण्डूयन्ते दिशः कृशतारकाः
कमलहसितैः श्येनीवोन्नीयते सरसी न का ।
शरणमिलितध्वान्तध्वंसिप्रभादरधारणाद्गगन
शिखरं नीलत्येकं निजैर्यशोभरैः ॥ ३१ ॥

तिमिरेति । प्राच्यादयो दिशस्तिमिरस्य विरहान्नाशात् पाण्डूयन्ते शुभ्रा इवाचरन्ति, अतएव कृशाः अप्रकाशाः किञ्चिद्दृश्यास्तारकाः कतिपयनक्षत्राणि यासु एवं विधाः । अन्यापि प्रियवियोगात् पाण्डुरनिमग्नातिकृशनेत्रकनीनिका भवति । तथा का सरसी कमलानां हसितैर्विकासैः कृत्वा श्येनीव नोन्नीयते न तर्क्यते, अपि तु सर्वा अपि सरस्यतः शुभ्रायते । अन्यापि प्रियप्राप्तेः कमलतुल्यमुखहसितैः श्वेता भवति । एकं गगनशिखरं गगनमध्यभागः शरणार्थं स्वपरित्राणार्थं गगनं प्रति मिलितस्य प्रत्यागतस्य ध्वान्तस्य ध्वंसिनी विनाशिनी या सूर्यप्रभा तस्यादादरधारणाद्धेतोः निजैर्यशोभरैः स्वीयैरकीर्तिसमूहैः नीलति श्याम इवाचरति, अन्योऽपि शरणागतं परित्यज्य तद्वैरिणामादरेणाङ्गीकुर्वन् दुर्यशसा श्यामो भवति । दिशः सरांसि च प्रसेदुः । गगनञ्च नक्षत्राद्याहार्यशोभापगमात् निजं नीलिमानं प्राप्तमिति भावः । पाण्डूयन्त उपमानादाचारेऽर्थे कर्तुः क्यङिति ( पा० ३।१।११ ) क्यङ् । अकृत् सार्वधातुकयोरिति ( पा० ७।४।२५ ) दीर्घः । वर्णादनुदात्तादिति (पा०४।१।३९) ङीप् तस्य नश्च । नीलति नीलवर्णे इति धातुः । आचारक्विबन्तान्नीलशब्दाद्विधिः ॥ ३१ ॥

सरसिजवनान्युद्यत्पक्षार्यमाणि हसन्तु न क्व-
चिदुदितचन्द्रं तन्द्रामुपैतु न कैरवम्। हिमगि-
रिदृषद्दायादश्रीः प्रतीतमदः स्मितं कुमुदविपि-
नस्याथो पाथोरुहैर्निजनिद्रया ॥ ३२ ॥

सरसिजेति। सरसिजवनानि न हसन्तु अपि तु विकसन्त्वेव। यस्मादुद्यन् दिवि वर्तमान पक्षः सहायभूतः अर्यमा सूर्यो येषां विकस्वराणीत्यर्थः। यस्य च यदीयमित्रस्योदयो भवति स सर्वोऽपि स्वपक्षवशाद्विकसत्येव। तथा कैरवं कुमुदं तन्द्रां सङ्कोचं नापैतु अपि तु प्राप्नोत्वेव। यतः क्वचित् गतलक्ष्मीकः सुहृच्चन्द्रो यस्य तादृशम्। चन्द्रोदये विकसतः कुमुदस्य चन्द्रक्षये सङ्कोचो युक्त एवेत्यर्थः। अन्योऽपि सुहृत्क्षये मूर्च्छावशान्निमीलति। अथो अथवा पाथोरुहैर्विकसितकमलैः रात्रिसम्बन्धिन्या निजनिद्रया कृत्वा कुमुदवनस्यादः प्रत्यक्षदृश्यं स्मितं विकसितं प्रतीतं विनिमयेन गृहीतम्। हिमगिरेर्हिमाचलस्य दृषदां शिलानां दायादा अंशभागिनी सदृशी श्रीः शोभा यस्य शुभ्रतरमित्यर्थः। कमलानां रात्रौ निद्रा कुमुदानां च विकासः प्रातस्तु कमलानां विकासः कुमुदानां च सङ्कोचो दृश्यते ततः स्वीया निद्रा कुमुदेभ्यो दत्त्वा कमलैस्तद्विकासः परिवृत्य गृहीत इति सम्भाव्यत इत्यर्थः। सूर्ये उदिते कमलानि विकसितानि कुमुदानि च सङ्कुचितानीति भावः। प्रतीतम् प्रतिपूर्वादिणो निष्ठा। प्रतीष्टमिति च पाठः अर्थः पूर्वोक्त एव ॥ ३२ ॥

धयतु नलिने माध्वीकं वा न वाऽभिनवागतः
कुमुदमकरन्दौघैः कुक्षिम्भरिर्भ्रमरोत्करः। इह
तु लिहते रात्रीतर्पं रथाङ्गविहङ्गमा मधु निजवधू-
वक्त्राम्भोजेऽधनाऽधरनामकम् ॥ ३३ ॥

धयत्विति। अभिनवो नूतनः प्रभाते आगतः भ्रमरोत्करः नलिनैर्वर्त्तमानं माध्वीकं मकरन्दं धयतु पिबतु वा न वा। यतः रात्रौ कुमुदमकरन्दौघैः कुक्षिम्भरिः आकण्ठतृप्तः परिपूर्णोदरः रात्रौ कुमुद-

मकरन्दवृन्दे. पूरितोदरत्वात् प्रातर्मधु पिबन्तु वा मा पिबन्तु वा न तत्रास्माकमाग्रह इत्यर्थः । अन्योऽप्याकण्ठतृप्तोऽतिथिर्भुक्ता न वा न तत्रादर. । रथाङ्गविहङ्गमास्तु रात्रीतर्पं सकलां रात्रिं तर्पित्वा वियुक्तत्वात् कुमुदमकरन्दं परित्यज्य पिपासयैव स्थित्वा 'इह' प्रत्यक्षदृश्ये निजवधूवक्त्राम्भोजे वर्तमानमधरनामकमोष्ठमंशं मधु अधुना प्रातःसमये लिहते आस्वादयन्ति, एतद्युक्तं । तावतैव चाम्भोजस्यापि कृतार्थत्वं जातमित्यर्थः । अन्यत्रापि तृप्त्यर्थं इच्छया उपार्पितस्य भोजनं युक्ततरं भवति । भ्रमरा मकरन्दमास्वादयन्ति चक्रवाकाश्च प्रातर्वियोगापगमात् कमलमकरन्दमनादृत्य निजसहचरीमुखमदन्तीति भावः । फलेग्रहिरात्मम्भरिश्चेति ( पा० ३ । २ । २६ ) चात्कुक्षिम्भरिः । रात्रीतर्पं कस्वतितृपोरिति (पा० ३ । ४ । ५३) णमुल् । तृतीया प्रभृतीति (पा० २ । २ । २१) समासः ॥ ३३ ॥

जगति मिथुने चक्रावेव स्मरागमपारगौ नव
मिव मिथः सम्भुञ्जाते वियुज्य वियुज्य यौ ।
सततममृतादेवाहारादपदरेऽचक तदमृतभुजां
भर्ता शम्भुर्विषं बुभुजे विभुः ॥ ३४ ॥

जगतीति । जगति त्रैलोक्यमध्ये चक्रावेव मिथुने स्त्रीपुंसौ स्मरागमपारगौ कामशास्त्रपारगामिनौ तावेवास्य वेदिनौ नान्यौ । यद्वा स्मरागमपारगौ चक्रवाकावेव जगति मिथुने नान्ये एतादृशे चतुरे मिथुने स्त इत्यर्थः । कुत एतज्ज्ञातमित्यत आह । यौ चक्रवाकस्त्रीपुंसौ वियुज्य वियुज्य पुनरन्योन्येन सह रात्रौ वियोगं प्राप्य मिथोऽन्योन्यं नवमिव अतिपरिचयजन्यावज्ञाशून्यं सातिस्पृहमिव सम्भुञ्जाते सुरतसुखमनुभवतः । अजस्रकामसेवनाद्विरागो भवेदिति वियुज्य सम्भोगः प्रत्यग्रसम्भोगवद्रसातिशयचमत्कारकारी जायतीति कामशास्त्ररहस्यं ज्ञात्वैव तावेव कुरुत इत्यर्थः । अत्र दृष्टान्तः । यद्यस्मात् अमृतभुजां केवलपीयूषाहाराणां सुराणां भर्ता स्वामी सुलभतरामृत एव इति यावत् । विभुर्व्यापकः समर्थो विषभक्षणेऽप्यसम्भावितोपद्रव इति यावत् । स शम्भुः नीरोगकरणद्वारा सर्वेषामारोग्यसुखकारी असम्भा-

चितरोगोऽपि सुरः सततममृतभक्षणादेवाहाराद्रूत्यादरोचकं अमृताश-नानभिलाषरूप रोगमापत् प्राप । तत् तस्मात्परिहारार्थं विष बुभु-जे । सततमधुररसास्वादजन्यारुचिपरिहारार्थमेव स कालकूट जग्धि-तवान्, अनन्तरञ्च पुनरमृतभक्षणे सत्यपैव रुचिस्तस्य यथा जायते तथा वियोग एव सम्भोगे नितरा रुचिमुत्पादयतीति बुद्ध्वा चक्रवा-काभ्या क्रियत इति तावेव कामशास्त्ररहस्यज्ञावीति भावः । पारगौ अन्तात्यन्तेति ( पा० ३ । २ । ४८ ) ड । सम्भुञ्जाते भुजोनवन इति ( प० १ । ३ । ६६ ) तङ् । अनेन सम्भोगस्य वियोगादेव नूतनत्व भवतीति सूच्यते ॥ ३४ ॥

विशति युवतिल्यागे रात्रीमुचं मिहिकारुचं दि

नमणिमणिं तापे चित्तान्निजाञ्च यियासति ।

विरहतरलजिह्वा बह्वाह्वयन्त्यतिविह्वला

मिह सहचरीनामग्राहं रथाङ्गविहङ्गमाः ३५॥

विशतीति । युवतित्यागे चक्रवाकस्त्रीवियोगे निहिकरुचि शीतांशु विशति सति रात्रीमुच रात्रिलक्षणप्रियात्यागिन तथा दिन-मणिमणौ तापे परितापे औष्ण्ये च निजात् चित्ताच्चक्रवाकहृदयात् सका-शात् दिननायमपि सूर्यकान्तं यियासति जिगमिषति सति विरहेण तरलन्तो तरलेवाचरन्तो विह्वलीभवन्तो स्खलन्तो जिह्वा येषां ते र-थाङ्गविहङ्गमा विरहेणातिविह्वला सहचरीं चक्रवाकीं नामग्राह स्व-सङ्केतेन नाम गृहीत्वा इह प्रभाते क्रोडासरसि वा बहुवार आह्वय-न्ति आकारयन्ति । अन्योऽप्यतिविह्वलो बहुवार आकार्यते अपि-ति न वेत्ति सन्देहात् । प्रतिचक्रवाकानां संयोगः परितापत्यागः पर-स्पराह्वानं चन्द्रधूसरत्व सूर्यकान्तसन्तापश्च । प्रालेय मिहिकेत्यमर । रात्रीमुचं क्विप । रुगिति सम्पदादित्वात् । मिहिका रुगस्येति स-मासः । तरलजिह्वा तरलेवाचरतीति आचारक्विबन्ताच्छतरि पुम्वत् आह्वयन्ति स्वह्वोजाबाह्वभावः ॥ [illegible] ॥

स्वमुकुलमयैर्नेत्रैरन्धम्भविष्णुतया जनः किम्

कुमुदिनीं दुर्व्याचष्टे रवेरनवेक्षिकां । लिखितप
ठिता राज्ञो दाराः कविप्रतिभासु ये शृणुत शृ
णुतासूर्यंपश्या न सा किल भाविनी ॥ ३६ ॥

रवेति । जनो लोकः स्वमुकुलमयैः आत्मीयकलिकानेत्ररूपैः कृत्वा अन्धम्भविष्णुतया अनन्धाया अप्यन्धत्वाङ्गीकारात् रवेः अनवेक्षिकां अनवलोकिकां कुमुदिनीं किम् किमर्थं दुर्व्याचष्टे दुष्टां कथयति । अवश्यदर्शनीयपवित्रसूर्यादर्शननियमादियं निशादय न पश्यति इति लोकः किमिति निन्दति, अपि त्वयुक्तैव निन्देत्याशेय । उ अहो किं निन्दतीति वा । अन्धम्भविष्णुतयाऽविचारतया रहस्यमज्ञात्वैव किमिति निन्दतीति जनविशेषण वा । कथमयुक्तमित्यत आह । हे श्रोतारः यूयं शृणुत शृणुत तस्याः सूर्यादर्शने हेतुमाकर्णयत । ये राज्ञो नृपस्य दाराः कवीनां पाणिन्यादीनां प्रतिभामत्स्वपि व्याकरणादिग्रन्थेषु विषये लिखितास्तत्स्थैर्ये पठिताश्चातः अवश्यदर्शनीयं सूर्यमपि न पश्यन्तीत्यसूर्यंपश्या राजदारा इत्येव लिखितास्तच्छिष्यैश्च तथैव पठिताः । ननु प्रकृते किमित्याशङ्क्याह सा कुमुदिनी किल प्रसिद्धं न भाविनी भविष्यति अपि तु राज्ञश्चन्द्रस्य चायच नृपस्य दारा भवन्त्येव । राजमहिष्यो हि असिद्धुरक्षितत्वादसूर्यंपश्या, इयमपि तथा तस्य देवस्य अपि असूर्यंपश्यता युक्तेति रहस्यानभिज्ञो जनो वृथैवैतां निन्दतीत्यर्थः । किलशब्दः किमर्थो वा । अत्र य इति कुमुदिनीपरामर्शेऽपि दारैः सामानाधिकरण्याद्बहुवचन । येति पाठ समीचीन । लिखितपठिता एकवचन बहुवचन वा । सूर्योदयवशात् कुमुदिनी सङ्कुचतीति भाव । अन्धम्भविष्णुतया कर्तरि भुव खिष्णुजिति (पा०३।२।५७) अन्धशब्दे उपपदे भुव. खिष्णुच खित्यनव्ययस्येति (पा०६।३।६७) मुम् । अवेक्षिका ण्वुलि प्रत्ययस्थादिति (पा०७।३।४४) कात्पूर्वस्येत्त्व । लिखितपठिता कर्मधारयो द्वन्द्वो वा । असूर्यंपश्याः असूर्यललाटयोरिति (पा०३।२।३६) खश् प्रत्ययो मुम् । अत एव ज्ञापकात् क्रियायोगिनापि नञ समास ॥३६॥

चुलुकिततमसिन्धोर्भृङ्गैः करादिव शुम्भते नभ
सि बिसिनीबन्धोरन्ध्रच्युतैरुदबिन्दुभिः । शतद
लमधुस्रोतःकच्छद्वयीपरिरम्भणादनुपदमदः प
ङ्कं शङ्कममी मम तन्वते ॥ ३७ ॥

चुलुकितेति । गगने गच्छद्भिर्भृङ्गैः उदबिन्दुभिरिव नभसि शुम्भते दीप्यते । किम्भूतैरुदबिन्दुभिः चुलुकः कृतश्चुलुके धृत्वा पीतं तमःसिन्धुस्तिमिरसमुद्रो येन तस्य बिसिनीबन्धोः पद्मिनीमित्रस्य सूर्यस्य करात् किरणादेव हस्तात् रन्ध्रेभ्योऽङ्गुल्यन्तरालविवरेभ्यश्च्युतैर्गलितैः, चुलुकेन पीततमःसिन्धोरूपरिवर्तमानस्य रवेः कराङ्गुलीविवरेभ्योऽधोगलिताः स्वच्छजलबिन्दव इव भृङ्गा गगने शोभन्त इत्यर्थः । चुलुकितेति करविशेषणं वा । अनुपदं गगनात् सकाशात् कमलानि प्रति पातानन्तरं शतदलानि अत्यतिस्थूलानि कमलानि तथा मधुस्रोतसः मकरन्दप्रवाहस्य कच्छद्वयी मकरन्दार्द्रभागद्वयं यत्तटद्वयं तस्याः परिरम्भणात् सश्लेषाद्धेतोस्तत्र लग्नाद्धेतोरमी भृङ्गा अदः पङ्कशङ्कां अमुष्य पीतस्य तमःसिन्धोरधः स्थितावशिष्टकर्दमसम्भावनां वैतालिकस्य मम तन्वते विस्तारयन्ति । सकलेऽपि तमोजले पीतेऽवशिष्टतया पङ्क इव भृङ्गाः शोभन्त इत्यर्थः । अमुष्या मकरन्दप्रवाहकच्छद्वय्याः पङ्क इति वा । प्रवाहस्तटद्वये पङ्कोऽयुक्तः । भृङ्गाश्च मकरन्दस्योपरि नोपविशन्ति किन्तु अभित इति तथा जातिः । प्रातःकालो जातोऽन्धकारः सांकस्येन विनष्टः भ्रमरास्तरुणीभ्यो निर्गत्य गगने उड्डीय मधुपानार्थं कमलान्युद्दिश्य यान्तीति भावः । चुलुकित इति तत्करोतीति (पा०३।१।२६।वा०१) णयन्तात्क्त शुम्भते शुभ्र दीप्तौ भावे यक ॥ ३७ ॥

घुसृणसुमनःश्रेणिश्रीणामनादरिभिः सरःपरिस
रचरैर्जातं मन्ये कुमारतरैः करैः । भुजनि ज
लजामोदानन्दोत्पतिष्णुमधुव्रतावलिशबलनाद्
गुञ्जापुञ्जप्रियं ग्रहयालुभिः ॥ ३८ ॥

घुसृणेति । घुसृणसुमनसः कुङ्कुमकुसुमानि तासां श्रेणिस्तस्याः श्रीः शोभा कान्तीनां घनादरिभिः घनादरवशालिभिः साम्योऽपि रक्ततरैः सदा परिसरचरैस्तीरसञ्चरणशीलैः कुमारतरैरतिशयलैर्भासा भर्तुं करैः सूर्यकिरणै जलजामोद गगनावगाहिकमलबहुलपरिमलस्तद्विषय आनन्दस्तेनोत्पत्तिष्णुरुत्पतनशीला मधुव्रतावलिस्तया शबलनात् मिश्रणाद्धेतोः गुञ्जापुञ्जश्रिय अर्द्धरक्तपरकृष्णगुञ्जाराजिशोभा ग्रहयालुभिर्ग्रहणशीलैः अजनि तरसद्धीर्जातमित्यर्थः । बाला अपि सुमनसां पीराबाभ्यनादरिणो भवन्ति । बाला अपि रक्तकरा भवन्तीति केचित् । अजनि भावे चिण् । उत्पतिष्णु अलङ्कृञ् (पा०३।२।१३६) इति इष्णुच् । शबलन तत्करोतीति (पा०३।१।२६ वा०१)ण्यन्तान्नपुंसके भावे ल्युट् ॥ ३८ ॥

रचयति रुचिः शोणीमेतां कुमारितमा रवेर्यद्
लिपटली नीलीकर्तुं व्यवस्यति पातुका । अ
जनि सरसी कल्माषी तद्ध्रुवं धवलस्फुटत्कमल
कलिकाखण्डैः पाण्डूकृतोदरमण्डला ॥ ३९ ॥

रचयतीति । यद्यस्मात् रवे कुमारितमा अतिबाला रुचि सरसीं शोणीं रक्तवर्णां रचयति । यस्माच्च कमले मकरन्दास्वादार्थं पातुका अलिपटली भृङ्गश्रेणी स्वसम्बन्धादेतां नीलीकर्तुं व्यवस्यति । यतश्चैव धवलानां स्फुटन्तीनां कमलकलिकानां खण्डे समूहे पाण्डूकृत उदरमण्डलमध्यदेशो यस्याः सैतादृशी तस्मात् ध्रुवं निश्चितं इयं सरसी कल्माषी कर्बुरैवाजनि जाता । रक्तकृष्णश्वेतवर्णमिश्रणात् कर्बुरत्वोत्प्रेक्षा । ध्रुवमुत्प्रेक्षायां वा । बालातपे जातः भ्रमराः परितो भ्रमन्ति कमलानि विकसितानीति भावः । चित्रं किर्मीरकल्माषेत्यमरः । शोणी शोणादिभ्यश्चेति (पा०४।१।४३) ङीष् । कुमारितमा घरूपेति (पा० ६।३।४३) ह्रस्वः । पटलकल्माषी गौरादी ॥ ३९ ॥

कमलकुशलाधाने भानोरहो पुरुपक्षतं यदुपक्रुरुते नेत्राणि भृङ्गहत्य चक्षुभिः । कथिमिरुपमा

दानादम्भोजतां गमितान्यपि यत्तथाभा
वानमुञ्चत्युलूकविलोचने ॥ ५० ॥

कमलेति । कमलमात्रस्य कुशलाधाने आनुकूल्याचरणे भानोः अहो इत्याश्चर्यरूपं पुरुषस्यास्ति व्रतं नियमः, अङ्गीकृतपरिपालनशीलत्वमिति यावत्, यं दृष्ट्वाऽहो आश्चर्यरूपः पुरुष इति महान्तो वदन्ति । कुतो व्रतमत आह । यद्यस्मात्सविकाशानि कमलानि विकासयतीति किं वाच्यं किन्तु श्रियः कान्तिलक्ष्म्याः गृहस्य स्थानता विवक्षुभिः वक्तुमिच्छुभिः व्यासवाल्मीकिकालिदासादिभिः कविभिः उपमादानात् किञ्चिच्छ्रीगृहत्वादिगुणसादृश्यादपि अम्भोजतां कमलत्वं गमितानि प्रापितान्यारोपितकमलत्वान्यपि नेत्रकमलानीति निर्दिष्टानि लोकनेत्राणि यथासौ रविः उपकुरुते उन्मीलयति । उदित्वरे हि सूर्ये लोकनेत्राण्युन्मीलन्ति । अपि च पदार्थग्रहणसमर्थानि करोति । यत आलोकसहकृतमेव चक्षुः पदार्थग्रहणसमर्थं । यदपि अन्यथाभावात् श्रीगृहत्वाभावात् कविभिः कमलत्वेनाननुरक्तान्युलूकविलोचने मुञ्चति नोन्मीलयति । न च पदार्थानापादयति । अत्रोलूकस्य दृष्टिस्तत्रालक्ष्मीरिति लोकप्रसिद्धिस्तन्नेत्रयोः श्रीगृहत्वं दूरनिरस्तं । सूर्येण कमलानि कमलतुल्यानि च लोकनेत्राणि विकास्य उलूकनेत्राणि कमलगुणयोगाभावादविकास्यान्वयव्यतिरेकाभ्यां स्वप्रतिज्ञा सत्या कृता । एवंविध सत्यप्रतिज्ञः कोऽपि नास्तीत्यर्थः । कमलानि विकसितानि सर्वोऽपि लोकः प्रबुद्धः कौशिकनेत्रे च निमीलिते प्रातःकालो जात इति भावः । श्रीगृहत्वविवक्षुभिः द्वितीयेति योगविभागात् समासः । उपमितिरुपमानं नपुंसके भावे ल्युट् । उपमीयतेऽनेनेति उपमानं सादृश्यमिति भावः ॥ ५० ॥

यदतिमहती भक्तिर्भानौ तदेनमुदित्वरं त्वरित
मुपतिष्ठस्वाध्वन्य त्वमध्वरपद्धतेः । इह हि स
मये मन्देहेषु व्रजन्त्युदवज्रतामभिरविमुपस्थानो
त्क्षिप्ता जलाञ्जलयः किल ॥ ५१ ॥

र्यो तिरित्याद्यग्निहोत्रमन्त्रादिप्रामाण्यात् ददहनविज्ञान्। सैषा दीप्तिः अपरभुवनात् पातालात् सकाशात् हठ त् बलात्कारेणार्थादरुणिमैवोद्भूत्योदयं प्रापय्य तरणेरयं कृतापरपतिपुरस्य स्वर्गस्य प्रथ्या वा प्राप्तियैया स्वयम्भुना सभी तीव्रतया तीक्ष्णतया सह वर्तमाना मूर्तिर्यस्यास्तनां धत्ते। क्रमेण सूर्यं ऊर्ध्वदेशं प्राप्ते दीप्तिः खरतरा जातेति भाव.। या नारी भर्तरि विनाशमनयप्राप्ते विनष्टे सति तस्मिन्ननुरागिणी सती जन्मान्तरेऽपि तत्प्राप्त्यर्थमग्निप्रवेशं कुरुते, सा दुष्कृतैः पातालप्राप्तमपि निरयपतितं, व्यालग्राही यथा व्यालमित्यादिवचनप्रामाण्यान्निरयाद्बलादुद्धृत्य तस्य कृतस्वर्गप्राप्तिः सतीनां पतिव्रतानां व्रतमेव मूर्तिः शरीरं यस्याः, सती गौरी तस्या वा प्रत्युक्ता मूर्तिर्यस्यास्तनां धत्ते। गौरीवद्दिव्यमयीत्यर्थः। अनयप्राप्ते प्राप्तापन्न इति (पा० २।२।४) समासः ॥ ४४ ॥

बुधजनकथा तथ्यैवेयं तनौ तनुजन्मनः पितृ
श्रितिहरिरपर्णाद्याहारजः किल कालिमा। शम
नयमुनाक्रोडैः कालैरितस्तमनां पिबादपि यद्
मलच्छायात् कायादभूयत भास्वतः ॥ ४५ ॥

बुधेति। तनुजन्मनोऽपत्यस्य तनौ वर्तमानः कालिमा श्यामत्वं किल प्रसिद्धं निश्चितं वा, पितुः पित्रोर्वा श्रितिहरिद्रुणादीनां कल्याणीलवणपत्रफलशाकादीनां च आहारो तज्जन्यं श्रितिहरिद्रुणं यदाद्यमदनीयं पत्रशाकादि वा तस्माज्जातः सश्यामो मैत्राननपत्यादिरित्यादि बुधानामुदयनाचार्यादीनां इयं कथा गोष्ठी तथ्यैव सत्यैव। यद्यस्मा हेतोः भास्वतः इतः प्रत्यक्षदृश्यादमलच्छायादुज्ज्वलकान्तेः शुक्लभास्वरादपि तमसां पिबात् तमिस्रैकहारात् कायात् शमनयमुनाक्रोडैः यमयमुनाशनैश्चरैः कालैः श्यामैरभूयतोत्पन्नं। सूर्यकायस्योज्ज्वलत्वेऽपि श्यामतमिस्राहारपरिणतिवशात् यमादिभिरपत्यैः श्यामैर्जातं तस्मादियं पण्डितकथा सत्यैवेत्यर्थः। तत्र मपि तम सूर्येण नाशितमिति भावः। पाघ्रा ध्मेति शः प्रत्ययदिति (पा०३।१।१३४) पचत्। कालीय का

रुचिरेति । सुजनैरेवम्भूतो या भास्वानिति संस्तुतः दुर्जनैर्यस्मादेवं उपहसितः तस्मादतितुच्छान्परवर्णनोपजीविनः कोनाम खलोनापहसिष्यति, अपि तु सर्वानप्युपहसिष्यत्येव । यथा उदिते सूर्ये सद्भिः सूर्यस्य श्लाघा क्रियते तथा खलैर्न, एवं तुच्छा एते स्वोदरभरणार्थं यत्किञ्चिद्वदन्तीत्यस्माकं खलैर्निन्दायां कृतायां भवादृशी राजशिरोमणिभिरस्माकमश्लाघा क्रियत एवेति खलानां प्रयासो वृथा एवेत्यर्थः । एवं कथं स्तुतः कथमुपहसितइत्यत आह । सूर्यं रुचिराम्बरया. ललितलक्षणया किरणा यस्य तथा सूतस्यारुणस्य ऊर्ध्वां महत्या श्रिया सुता सूर्येणैव प्रसूता उर्वी श्रीस्तया सनाथो ऽलङ्कृतो रथो यस्य स । तथा शनिं शमनं यमं च शरदण्डधरौ सुतौ लोकान् त्रातुं असूत । शनिर्हि स्तुत्यादिभिर्निग्रहहेतुर्लोकपालतया लोकान् रक्षति । यमोऽपि दुष्टादुष्टयोर्निग्रहानुग्रहौ कुर्वन् धर्माधर्माचरणप्रवृत्तिजननद्वारा रक्षति । एतादृशौ परोपकारपरौ पुत्रौ असूत । तथा रथपदातानसनाथानां चक्रवाकानां कृपासिन्धुर्दयासमुद्र रथस्य पदेन अग्रभावेन गत्या जगतां दयासमुद्रो वा । तथा सकलपदार्थग्रहणसहकार्यालोकसम्पादनद्वारा दृशां सर्वजननेत्राणां बन्धुः मित्र एवम्भूतः सुन्दर. परोपकारकरणैकस्वभावोऽपि इति स्तुतिपक्ष । रुचिस्तेजोरूपस्तापकर इति वायत । तथा अम्बराद्वस्त्रादरहितः यद्वा विपरीतलक्षणया रुचिरौ चरणौ यस्य । पुराणादौ चरणाङ्गुल्यादिध्याने कुष्ठादिदुष्फलश्रवणात् ध्याने ऽप्यचरणएव सूर्यः । विश्वकर्मणा यन्त्रे आरोपितस्य सूर्यस्य तेजसा दुःसहस्याम्बराकारो न निर्मित इति वा । अन्य प्रति सुमेरुवर्णनदरचरणस्यापि रुचिरचरणस्योक्तोपहासः । तथा सूतस्य अनूरोः सारथेरूरुशोभया सनाथो रथो यस्य स इत्यपि विरुद्धलक्षणा । तथा शनेः क्रूरग्रहत्याच्चिरकालभोग्यदशदन्याद्यमस्यापि जगत्प्राणहरणशीलत्वात् परपीडाकरणैकस्वभावौ शनिशमनौ पुत्रौ लोकान् त्रातुमसूतेत्यपि विरुद्धलक्षणा । तथा तिर्यग्योनिपक्षिविशेषचक्रवाकाणामेव दयासिन्धुर्नान्येषां तापकत्वात् तादृशानामेव बन्धुर्नान्येषां । यद्वा तेजोभरेण दृष्टिप्रतिघातकारित्वाद्बन्धुरपि दृशां च-

स्युरित्यपि विरुद्धलक्षणेति सपत्नाक्षपक्ष । एवम्भूत सूर्यं समुदेतीति भाव ॥ ४७ ॥

शिशिरजरुजां घर्मं शर्मोदयाय तनूभृतामथ
खरकराश्यानास्यानां प्रयच्छति यः पयः । ज
लभयजुषां तापं तापस्पृशां हिममित्ययम्परहि
तरतिस्तुल्यावृत्तिः स भानुरुदञ्चति ॥ ४८ ॥

शिशिरेति । स भानुरुदञ्चति उदेति । स कः, यः शिशिरजां शिशिरं हिमं तस्माज्जाता रुक् पीडा येषां तेषां तनूभृतां जनानां शर्मणः सुखस्योदयाय प्रकर्षे वसन्तनिदाघसम्बन्धिनं घर्ममुष्णं क्लेशं प्रयच्छति । अथानन्तरं वसन्तनिदाघसम्बन्धिनः खरास्तीव्रतराः कराः सूर्यकिरणास्तैः आश्यानं शुष्कं म्लानं आस्यं मुखं येषां तेषां देहिनां सुखाय पयः वर्षासम्बन्ध्युदकं प्रयच्छति दत्ते । ततो जलभयजुषां जलभीतानां तापं दत्ते । ततस्तापस्पृशां शारदतापवतां देहिनां हेमन्ते हिमं दत्ते एवम्प्रकारेण परेभ्यो यद्धितं तस्मिन् विषये निरता पौनःपुन्येन घटमानानां क्लृप्ते शीततापजलदानरूपपुरुषव्यापारस्यावृत्तिरावर्त्तना यस्य । यद्वा कृत्यानां शीतादिदानरूपाणां कार्याणां आवृत्तिः पौनःपुन्यं यस्य स परोपकारपरः सूर्य उदेतीत्यर्थः । श्यानेति द्रवमूर्त्तिस्पर्शयोश्श्य इत्याकारवत्त्वात् सम्प्रसारणाभावः । निष्ठानत्वम् । परहितेति चतुर्थी तदर्थार्थेति (पा० २। १। ३६) समासः । कृत्या कृञ् शचेति (पा० ३। ३। १००) योगविभागात् क्तिनि कृतिः । चकारात् क्यपि तुकि च कृत्या । पक्षे भ्रवार्थे विभाषा कृवृषोरिति (पा० ३। १। १२०) क्यपि तुक् ॥ ४८ ॥

इह न कतरश्चित्रं धत्ते तमिस्रततीर्दिशामपि
चतनृणामुत्सङ्गेषु स्थिता वयसा क्षणात् । तरु
शरणतामेत्य च्छायामथ निवसन्नमं शमयितु
ममूदानैश्वर्यं यदर्यमरोचिषां ॥ ४९ ॥

इहेति । पूर्वादीनां चतसृणामपि दिशां उपमन्तेषु प्रान्तदेशेषु स्थिता वर्त्तमानाल्लमिलन्तीऽस्तिमिरपरम्परा. प्रकाशयतां विनाशयतामपि अयंस्थः सूर्यस्य रोचिषा तेजसां, रविः शरणं यस्य तद्भावं वृक्षतलवासित्वादेत्य प्राप्य निवसद्वर्त्तमानं छायारूप तमः शमयितुं विनाशयितुं अनैश्वर्यं सामर्थ्यमभूदिति यत् इहाश्चर्यासामर्थ्यविषये कः तम को नाम जनस्त्रि विस्मयं न धत्ते, अपि तु सर्वोऽप्याश्चर्यं प्राप्नोत्येव । दिगन्तगताया अपि तिमिरपरम्परायाः संहारे येषां शक्ति तेषां रवितेजसां तरुतलमात्रस्थितं छायारूप समीपवर्त्यपि तमः शमयितुं शक्तिर्नाभूदित्याश्चर्यमित्यर्थः । तनु इति पाठे तनु स्वरूप शरीर वा शरण यस्य तद्भाव प्राप्य निवसदित्यर्थः । महदाश्रयेण स्थितमपि यो विनाशयितुं शक्नोति सोऽल्पाश्रयेण वर्त्तमानं शमयितुमपि न शक्नोतीत्याश्चर्यमेव । तरुच्छायात्वयं देहच्छायात्वय वा तमो विहाय सर्वमपि तम सूर्येण विनाशितमिति भाव. । अनैश्वर्यं अनीश्वरस्य भाव इत्यर्थे न नञ् पूर्वादिति ( पा० ५। १। १२१ ) भावप्रत्ययनिषेधेऽपि ब्राह्मणादित्वनीश्वरशब्दस्य पाठात् ष्यञि नञः शुचीश्वरेति ( पा० ७। ३। ३० ) पक्षे उभयपदवृद्धिः ॥ ४९ ॥

जगति तिमिरं मूर्च्छामब्जव्रजेऽपि चिकित्सतः
पितुरिव निजाद्दस्राद्दस्रावधीत्य भिषज्यतः ।
अपि च शमनस्यासौ तातस्ततः किमनौचिती
यदुपनमयः कह्लाराणामुदेत्यपमृत्यवे ॥ ५० ॥

जगतीति । दस्रौ नासत्यौ निजात् स्वीयात् अस्मात्पितुः सूर्यादधीत्यैवायुर्वेदं पठित्वैव भिषज्यतः । लोके चिकित्सां कुरुतः । किम्भूतात् पितुः, जगति वर्त्तमानं तिमिरं अपच वस्तुदर्शनासामर्थ्यजनक नेत्ररोगविशेषं चिकित्सतो नाशयतः । आयुर्वेदोक्तप्रतीकारेण नाशयतः । तथा ऽब्जव्रजे कमलसमूहे वर्त्तमानां मूर्च्छां सङ्कोचमपि नाशयतः, अथ च राय ममन्तादायिति वचनादपां मूलभूतत्वादब्जवृन्दे लोकसमूहे वर्त्तमाना मूर्च्छां वैचित्त्यप्रसक्तेनान्यनाशरूप मोह-

मपाकुर्वन् । उपचारचतुरात् कल्याणपाणेवद्याद्धीत्यैव हि राजवैद्या भवति तस्माद्द्वैद्य स्वपितुरेव वैद्यकमधीत्य ताभ्यामिन्द्रवैद्यत्व माप्तमित्यर्थ । अपि च शिष्य सर्वभूतानि शमयति नाशयतीति शमना यमस्तस्यासौ सूर्यो तात पिता सतस्तस्मात कह्लराणा कुमुदानाममृत्यवे सङ्कोचायाप्यकालमरणायादेति । यत यतोऽयं सूर्योऽदयो निष्कप सोऽस्य सूर्यस्य किमनौचिती अपि त्वौचित्यमेव । कर्मगुणप्रक्रमेणैव कार्यं गुणारम्भाद्दयतोऽपमृत्युदायिता च यमेनाप्य स्मात् स्वपितुरेव सकाशात पठितत्यर्थ । उदयता मृर्येण सता नाशित, कमलान्युन्मीलितानि, कुमुदानि मुकुलितानीति भाव । पितु आख्यातोपयोग ( पा० १ । ४ । २९ ) इत्यपादानत्व । भिषक्त्व । कह्लादि ॥ ५० ॥

उडुपरिवृढ पत्या मुक्तामय यदपीडयद्यदपि विजिनौ भानोर्जाया जहास कुमुद्वती । तदुभय मत. शङ्कं सङ्कोचित निजशङ्कया प्रसरति नवार्के यर्केन्धूकणारुणरोचिषि ॥ ५१ ॥

उडुपेति । अयमिदानीमस्त जिगमिषु उडुपरिवृढश्चन्द्र भाव उदित मन मस्त गतन पत्या सूर्येण मुक्ता त्यक्ता वियोगिनीं भार्यां पद्मिनीं यद्यस्मादुडुराजो अपीडयत सङ्कोचितवान् अयच करैदूषितवान् । यदपि चन्द्रे पद्मिनी पीडयति सति कुमुद्वती कुमुदयिनास्य पीन रात्री जहास अतएव हेता तदुभय चन्द्रकुमुदिन्यौ कर्कन्धूफलवत् पक्वयदरवत कणारुणरोचिषि इयद्रक्तकिरण नवार्के तरुणादित्ये प्रसरति प्रकर्षेण गच्छत्युदयति सति निजशङ्कया स्वकृतानाचारनिमित्तभयेनेव प्रयोजकेन सङ्कोचित सङ्कोच प्रापित नि प्रभीकृतमित्यर्थ । इत्यहं शङ्के मन्ये । सूर्य उदिते पद्मिनी च विकासिता चन्द्रा नि प्र भाऽस्तमेति कुमुदिनी सङ्कुचितेति भाव । अन्यत्राप्युक्त प्रमेय था:- त्य । कर्कन्धूर्बदरी कोलीत्यमर । सङ्कोचितमिति यन्तात कर्मणि निष्ठा, अन्यथा व्याख्याने सङ्कुचितमित्येव स्यात् । तदुभय निजशङ्कया

तमचिर जालप्रान्तप्रवेशिभिरायतैः किरणदण्डैः
वैरेषामालिङ्गिताङ्गुलिलिङ्गिमा ॥ ५३ ॥

यदिति । येषां कराणां खरता तीक्ष्णताऽग्रे पूर्वाह्णसमये बहु अ-
तितरां न प्रतिभासते स्फुरति सर्वथा नोपलभ्यत इत्यर्थः । बहु न-
ञ्समासेन नखरताऽतीक्ष्णता । पूर्वाह्णे यथा अतितरां तीक्ष्णत्वाभाव
उपलभ्यते खलु निश्चित । अथ च येषामुपरिभागे महती नखरा नखा
येषां तत्ता उपलभ्यते ऽसौ प्रत्यक्षदृश्या विकासहेतुत्वात् कमलानां
सुहृदो बन्धुभानोः कमलबन्धोर्वा करा किरणा एव पाणय प्रवाल-
रुच विद्रुमवद्रक्तकान्तय, अथ च प्रकृष्टबालकान्तय अतिबाला अ-
थच बालपल्लववद्रक्तकान्तयो दृश्यन्त इति भाव । तथा जालप्रान्तप्रवे
शिभि गवाक्षादिविवरमध्यप्रविष्टै अतएवायतै तद्वशाद्दृश्यदीर्घीभू-
तैः किरणदण्डै किरणै तथा किरणानां पाणीनाञ्च च आलिङ्गित
सम्यक् अङ्गुलिलिङ्गिमा अङ्गुलिवल्लिङ्गिमा सादृश्याऽथवाऽङ्गुलिभिर्लिं
ङ्गिमा तत उचितमुचितमियमतितरां शोभिता । गवाक्षविवरप्रविष्टै
किरणावयवै किरणानामङ्गुलीतुल्यत्वादाश्लिष्टाङ्गुलिसदृशरूपा युक्तैव
पाणीनामपि दीर्घैः कतिपयैरवयवैरङ्गुलिकृता चारुता भवतीत्यपि यु-
क्तमेवेत्यर्थ । अङ्गुलिषाऽअन्यापिपाठ । नखाऽस्त्री नखर इत्यमर ।
उचित वीप्सायां द्विरुक्ति । प्रवेशिभिरित्यावश्यके वा णिनि-
नि । आलिङ्गिता लिङ्गिधातो पक्ष कर्म्मणि लट पक्ष निष्ठा । लिङ्ग
ति रमणीयतया चित्तं प्राप्नोतीति गत्यर्थात् धातोः पचाद्यच्पृथ्वादि
राकृतिगणत्व दिमनिच् कल्पनीय ॥ ५३ ॥

नय नयनयोर्द्वाक् पेयत्व प्रविष्टवतीरमूर्भवनग
लन्तीज लान्त ला इवार्ककराङ्गुलीः । भ्रमदणु
गणक्रान्ता जन्ति भ्रमन्त्य इवाशु या पुनरपि
धृता कुन्दे किं वा न वर्द्धकिना दिव ॥५४॥

नयेति । भो राजन् त्व भवनस्य गवाक्षोपरि वर्त्तमानानां वलभी-
नां गृहविशेषाणां जालाद्गत्वा सविवराद्वैतावलभीमेवार्थात् प्रविष्टव-

तीरमूर्धं करस्पार्शाङ्गुलीजालप्रवेशादङ्गुलीतुल्यान् मयूखान् अथच दरेखाङ्गुलीना युक्तत्वादर्ककराणामङ्गुलीजाला इव कमलदण्डसदृशीर्नय-नयाङ्‌क्षि शीघ्र पेयत्व गोचरत्व नय प्रापय सादर पश्य, त्वत्र अयोः कमलत्वाज्जालकार्गप्रविष्टास्त्वया विलोक्यमाना एता. स्वनेत्रकमलना-ला एव जनैर्दृश्यन्त इत्यर्थ. । जालानां कमलतुल्यत्वाज्जाला इव त्व पश्येति वा । अमू: का । या: भ्रमन्त: जालप्र विष्टकिरणमध्ये परित भ्रमता शाणेन भ्रमरेणयादिरूपरज कणानां गणेन समूहेन आक्रान्ता व्याप्ता अत एव दिवो वर्द्धकिना त्वष्ट्रा कर्तव्यया प्रभुरेव विश्वकर्मणा पुनरपि कुन्दे शाणचक्रे पुना आरोपिता. सत्य आशु भ्रमन्त्य इव किन्तु न भान्ति अपि तु तथैव शोभन्ते । यद्वा भ्रमन्तः शाणघर्षणाय-शात् पतित पतन्त येऽणवः शाणतेजस. कणास्तेषा गणेराक्रान्तास्य यु क्तं । विश्वकर्मणा नूनं शाणमारोपित इति पुराण । नयनयोरपेय-त्यमिति पाठे स एवार्थ । गुणति पाठे गुणेन मत्रोनेत्यर्थ. । जालात् जातावेकवचन ॥ ५४ ॥

दिनमिव दिवाकीर्तिस्तीक्ष्णै: क्षुरैः सवितुः करै स्तिमिरकबरीलूनां कृत्वा निशां निरद्धीधरत् । स्फुरत परित. केशास्तैस्तत: पतयालुभि: ध्रु वमधचलं तन्नच्छायच्छलादवनीतल ॥ ५५ ॥

दिनमिति । दिवाकीर्त्तिरिव नापित इव दिवस. तीक्ष्णै सवितु करैरेव क्षुरैर्निशा तिमिरकबरीलूना तमारूपा वेणी छिन्नमूला कृत्वा निरद्धीधरत् निर्द्धारितवान् । मुण्डयित्वा क्वापि कश्चित् केशोऽवशिष्ट. स्यादिति गवेषितवानित्यर्थः । अथवा बहिर्निष्कासयामास । नापितो ऽपि व्यभिचारादिदुष्टा स्वीया परकीयां वा स्त्रियं क्षुरैर्मुण्डयित्वा दे-शाद्बहिर्निष्कासयति । ततोऽनन्तर तस्मात् मुण्डनाद्धा परितस्तत्र पत याल्भिरधःपतनशीलै केशलोमैः एत्या अवनीतल तेषां वृक्षादिपदा र्थानां छाया प्रतिबिम्बं तस्य छल व्याजेन ध्रुव निश्चित श्यामत्व यथा न स्फुरति शोभते । वृक्षाद्यधोभागे छायत्व मुण्डितकबरीपतयालुके-

शकुन्दमप्यस्यकृतं न तु प्रतिबिम्बकृतं इत्यर्थः। छायाव्यतिरिक्तं गवं मपि तमो दिवसे सूर्यकरैर्नाशितमिति भाव। दिवाकीर्त्तिस्तु नापित इत्यमरः। कबरी जानपदेति (पा०४।१।४२) ङीप् सूना स्नात्दिभ्य (पा० ८।२।४४) निष्ठानत्वं। निरदीधरत् धारेर्णिङि चौचङो (पा०७।४।१) त्यु पधाह्रस्वत्वे अभ्यासस्य सन्वद्भावात् दीर्घो लघोरिति पा०७।४।९४) दीर्घः। तत्र क्वायंत्रि विभाषासेने से (पा०७।२।४।२५) था नपुंसकत्व ॥ ५५॥

ब्रूमः शङ्खं तव नल यशः श्रावसे सृष्टशब्दं य
स्योदर्यः स दिवि लिखितः स्पष्टमस्ति द्विजे
न्द्रः। श्रद्धा श्रद्धाकरमिह करच्छेदमप्यस्य पश्य
म्लानिस्थानं तदपि नितरां हारिणो यः कलङ्कः॥५६

इदानीं शाङ्खिकाना शब्दं श्रुत्वा तद्व्याजेन नलयशोवर्णनं कुर्वन्ति। ब्रूम इति ॥ हे नल तव श्रेयसे मङ्गलाय सृष्ट कृत शब्दो यस्य त श ङ्खं तव यश एव ब्रूम, त्वत्कीर्तिमेव शङ्खरूपतया वर्णयाम। शाङ्खि कैर्यं शङ्खो वाद्यते त्वद्यश एव, तद्वदुज्ज्वलतर तव यश इत्यर्थ। शङ्खस्वनो हि मङ्गलदीपकः। त्वद्यशोऽपि लोकाना शुभाय तव श्रवा श्रोकत्वाद्भवति। यस्य शङ्खस्य यशसश्च समुद्रप्रभवत्वाच्छुक्लतरत्वाच्च। दर्यः समानोदर्यः। भ्राता स प्रसिद्धा द्विजेन्द्रश्चन्द्र दिवि स्पष्ट लि खितोऽस्ति नि प्रभत्वा चित्रलिखित इव निर्व्यापारः स्फुटोऽत्र दृश्यत इत्यर्थः। त्वमिह गगने प्रत्यूषसमये वाऽस्य चन्द्रस्य श्रद्धा निखिल श्र द्धाकर शङ्खसोदरत्वात्तिप्यबुद्धिजनक करच्छेद किरणविनाशमपि प श्य, शङ्खेऽपि किरणा न सन्ति अस्यापीदानीं न सन्ति। किञ्चास्य ह रिणसम्बन्धी धारिणो य कलङ्कस्तद्रूप नितरां अतिशयित म्लाने श्या मतायाः स्थानमपि पश्य शङ्खस्याप्युदरभागे नितरा श्यामतास्ति सा चन्द्रेऽपि तस्मादपि चन्द्रस्य शङ्खसोदर्यत्व निश्चित तथा चन्द्रमपि त व यशो ब्रूम इत्यर्थं। उक्तप्रकारेण शङ्खसोदर्यं च चन्द्रस्य यद्यप्य स्ति तदपि तथा च हरिणसम्बन्धो य कलङ्कस्तदस्य नुनरा म्लानिस्था न पश्य। चन्द्रस्य शङ्खशङ्खत्वात्तत्वेऽपि निष्कलङ्क शङ्खमेव तव यशो

ब्रूम । न तु सकलङ्कं चन्द्रमिति भाव इति वा । अथच हे राजन् तव यश श्रेयस यशोविशुद्धये सृष्टशङ्ख विरचितस्मृतिवाक्य शङ्खनाम्न मुनि ब्रूम । शङ्खस्तत्र यशोऽङ्कये स्मृति चकारेत्यर्थं । यस्य शङ्ख मुने भादृश्ये ज्याता स लिखितनामा द्विजेन्द्रो ब्राह्मणश्रेष्ठो दिवि स्वप्नमस्ति । इह लिखिते अङ्काकर सत्यविश्वासकारक छद्मा साक्षान्निदित वा करया पापये छेद कर्तनमपि पश्य । तथा हरतीति हारीतस्तस्य शङ्खस्य भ्रातुरुद्यानफलहर्त्तुरस्य लिखितो य स्वकलङ्क च च तदेव ग्लानिस्थान पश्य । अथच श्रेयसे लोकाना कल्याणाय उपलाभो सृष्ट मल इति शङ्का यस्मिन् यथाभूत तव यश शङ्खनाम्नमपि ब्रूम समानधर्मत्वात् न तु तद्भ्रातर कलङ्कित्वात् सोऽपि धर्मार्थं स्मृतिवाक्यानि सृष्टवान् । यस्य भ्रातेति पूर्ववत । लिखितस्य चौर्य्यं हस्तच्छेदश्च भारते प्रसिद्ध । शाङ्खिकास्त्वप्रबाधार्थं शङ्खाद्यन्ति तस्माच्छाप्रमुत्तिष्ठति भाव । लिखितमुनिरेव दिविताराय-ङ्को जात इति केचित् । समानोदरे शयित इ-र्थे सोदराद्य इति (पा०४।४ १०९) य । अस्मादेव निर्देशाद्यत्प्रत्ययविषयतायामेव विभाषोदर इति (पा ६।३।८८) वात्तिक समानस्य स । हारिवा सम्बन्धे-ऽण् । चते आवश्यके णिनि ॥ ५६ ॥

ताराशङ्खविलोपकस्य जलजं तीक्ष्णत्विषो निन्दतः सारम्भं चलता करेण निविडां निष्पीडनां लम्भितः । छेदार्थोपहृताम्बुसम्भुजरजोजम्बालपाण्डूभवच्छ्रक्रकचपत्रतामिह वहत्यस्तंगतार्द्धो विधुः ॥ ५७ ॥

तारेति । विशालतारात्मरूपस्य शाङ्खमयशमन्तस्य शङ्खाकारशङ्ख्य विनाशक स्वप्रभया नाशकस्तस्य तथा जलज कमलानि निन्दता वि-नाशयतोऽथच पतन्त्या शङ्खविनाशकस्यातएव जलज शङ्ख तद्वद-तीक्ष्णत्विष सूर्यस्येव शङ्खिकशिल्पिन सारम्भ सोद्योग चलता समस्ता अथच पर्यन्तगत् भागेष गमनागमने कुर्वता च[illegible] र-

ङ्गिमना पाशिना च निविडा निष्पीडना दाधा दृढा यन्त्रवाञ्च राक्षित प्रापित स्सन् गतमद्गे यस्य एतादृशो विधुश्चन्द्र शशच्छेदमौकर्य्यार्थसुपहृतमानीत यदम्बु जलं तस्य फल्गुरजोजम्बाल छिद्यमानशश- मज्जातरजश्चयकर्दम तद्सम्बन्धाद्गज कर्दमोभवति तेन पाण्डुत्वश्लोहमयत्वाद्धवलमपि धवलपङ्कवशात् धवल भवत्, यश्च खण्डित् शशच्छेदकारि करपत्र तद्भाव इह भास समये वहति चन्द्र इत्यर्थ । शाणिकशिल्पिनो हि छेदसौकर्य्यार्थं छिद्यमानशस्त्रादिदेशे जल क्षिपन्ति । दृढतरग्रन्थिसंदंशादौ च करपत्र करेण निविड पीडयति शाणादिच्छेदकरपत्रच्छादृ चन्द्राकार सज्जातरज पङ्कपाण्डुरश्च भवति । अस्तमितार्धचन्द्रस्तादृक्करपत्रतुल्यो दृश्यत इत्यर्थं । सूर्योदयो जातस्तारा लुप्ता कमलानि विकसितानि चन्द्रोऽर्धमस्तमित इति भाव । अत्र पङ्क मात्रैकवचन पाण्डुभवदिति क्विः ॥ ५५ ॥

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमान्कृष्टी पूरयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः। साजात्यं सरसीरुहामपि दृशामप्यस्ति तद्वास्तवं यन्मूलाद्ध्रियतेतरां कविनृभिः पद्मोपमा चक्षुषः ॥ ५८ ॥

यदिति ॥ अंशुमान् पाथोजाना कमलाना विमुद्रणप्रकरणे उन्मीलनप्रस्तावे एव यद्यस्मात् दृष्टीलीकनेत्राणि निर्निद्रयति विगतनिद्रा करोति उन्मीलयतीत्यर्थ । यस्माच्च हरि श्रीविष्णु शिवपूजासमये एककमलन्यून जलरुहा कमलाना सहस्र स्वीयेनाक्ष्णा पूरयति स्म । तत्तस्मात् सरसीरुहा दृशामपि वास्तव अबाधित साजात्य तुल्यजातीयत्व अस्ति । यत साजात्य मूलमारोपकारण यस्यास्तादृशी यन्निबन्धना चक्षुष पद्मेन सहोपमा सादृश्य कविनृभि कालिदासादिभि कविभिराद्रियतेतरा अत्यादरेणोपनिबध्यते । यदि नेत्राणि कमलसजातीयानि नाभविष्यन् तर्हि रवि कमलोन्मीलनप्रस्तावे तानि नोदमीलयिष्यत् श्रीविष्णुश्च कमलसहस्रं नेत्रेण नापूरयिष्यत् नह्य-

न्यप्रस्तावेऽन्यस्य योग्यताऽस्ति, तस्मात् दृशां कमलानाञ्च साम्राज्यं वास्तवमस्त्येवेत्यर्थः । उदितः सूर्यः कमलानि विकसितानि सर्वोऽपि जनः प्रबुद्धः, तस्मात् त्वमपि प्रबुध्यस्वेति भावः । विष्णुः स्वचक्षुषा कमलसहस्रं पूरितवानिति लिङ्गपुराणादौ द्रष्टव्यं । विमुद्रणेति विगतमुद्रं करोतीत्यर्थे णयन्ताद्भावे ल्युट् । निर्निद्रयतीति तत्करोतीति णिच्, पूरयतीत्यत्रापि । समाना जातिः साजात्यमिति विग्रहे चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् समानस्येति योगविभागात् समानस्य सः । वास्तवं आगमार्थे सम्बन्धे वा अण् । तत्पर्य्यायात् वस्तुशब्दात् प्रज्ञादित्वात् स्वार्थे वा । षट्कोपमा षष्ठीसमास. ॥ ५८ ॥

अवैमि कमलाकरे निखिलयामिनीयामिकश्रियं
श्रयति यत् पुरा विततपत्रनेत्रोदरं । तदेव कु
मुदं पुनर्दिनमवाप्य गर्भभ्रमद्द्विरेफरवघोरणा
घनमुपैति निद्रामुदं ॥ ५९ ॥

अवैमीति । यत्कुमुद कमलानामाकरे देवखातसरसि वा अथ च कमलायाः लक्ष्म्याः आकरे गृहे कोशागारे विततं विस्तारितं पत्ररूपनेत्राणामुदरं येन विततानि पत्राण्येव नेत्रमध्यानि येन तत् । विधान्तरं अथ च प्रसारितपत्रनेत्रोदरं उन्मीलितनेत्रं सत् निखिलयामिन्याः सकलायाः रात्र्याः सम्बन्धिनो यामिकस्य रात्रिचतुःप्रहरप्राहरिकस्य सकलरात्रिजागरूकस्य श्रियं शोभां पुरा श्रयति आश्रयत् । वा यमारभ्य सूर्योदयावधि यद्विकसितमभूत् । अथ च सकलां रात्रिं जजागार, तदेव कैरवं पुनरिदानीं दिनमवाप्य गर्भे अन्तः सूर्यकिरणदूनमधुलवलोभप्रविष्टानिर्गन्तुमशक्तैरन्तःसञ्चारिणो द्विरेफास्तेषां निर्बन्धमनादी रवस्तद्रूपा या घोरणा प्रसुप्तघर्घरा स्वापध्वनिस्तया घनं निविडं यथा तथा निद्रामुदं निद्रासम्बन्धिसुखं उपैति, अन्तर्गतभ्रमरगम् गद्गदमीत्यर्थः । अथ च यः कोशागारे सकलां रात्रिं जागर्ति स दिवसे घोरणापरं यथा तथा निद्रातीत्यर्थः । इत्यहमवैमि मन्ये । श्रयतीति पुरि लुङ् चास्मे (पा०३।२।१२२) इति भूते लट् । घोरणेति घुरेर्धातोर्णिजन्तात् युच् ॥ ५९ ॥

इह किमुपसि पृच्छाशंसिकिंशब्दरूपप्रतिनियमितवाचा वायसेनैष पृष्टः। भण फणिभवशास्त्रे तातङः स्थानिनौ काविति विहिततुहीवागुत्तरः कोकिलोऽभूत् ॥ ६० ॥

इहेति। इह प्रभाते पृच्छाशंसिनि प्रश्नवाचिनि किंशब्दस्य प्रथमान्तरूपे तत्रैव प्रतिनियमिता प्रतिक्षणं शब्दान्तराभावाद् व्यवस्थिता वाग्येन कौ कौ इति नियतवाचेत्यर्थः वायसेन काकेन फणिनः शेषावतारस्य पतञ्जलेर्महाभाष्यलक्षणं शास्त्रं पाणिनीयमिति यावत्। तत्र तातङ्लक्षणस्यादेशस्य स्थानिनौ आदेशिनौ कौ भण कथयेति पृष्टः कृतप्रश्न एष कोकिलः विहिता कृता या तुहीति वाक् सैवोत्तरं यस्यैवंभूतोऽभूत्। किं काकः प्रातः स्वभावत एव कौ काविति वदति कोकिलश्च तुही तुहीति। काकः स्वभावात् कौ काविति प्रथमाद्वितीयाद्विवचनान्तं प्रश्नशब्दं ब्रूते। कोकिलश्च तुही तुही इति तत्रोत्तरं तुश्च हिश्च तुही तुह्योस्तातङाशिष्यन्यतरस्यामिति पाणिनिसूत्रस्यारब्धत्वात् तु हि स्थाने तातङो विधानात् तुहीति तातङः स्थानिनावित्युत्तरं कोकिलो दत्तवान् किं। प्रभाते जाते काकादयः शब्दायन्त इति भावः। सूत्रवार्त्तिकयोर्महाभाष्येणैव दाढ्यापादनात् फणिभवत्युक्तम्। स्थानं प्रसङ्गः सोऽस्त्यनयोरिति स्थानिनौ अत इनिठनाविति इनिप्रत्ययः (पा० ५। २। ११५) ॥ ६० ॥

दाक्षीपुत्रस्य तन्त्रे ध्रुवमयमभवत् कोऽप्यधीती कपोतः कण्ठे शब्दौघसिद्धिक्षतबहुकठिनीशेषभूपानुयातः। सर्वं विस्मृत्य दैवात् स्मृतिमुपसि गता घोषयन्त्या घुसंज्ञा प्राक्संस्कारेण सम्प्रत्यपि घुवति शिरः पट्टिकापाठनेन ॥ ६१ ॥

दाक्षीति। अयमाकर्ण्यमानः कोऽपि शब्दं कुर्वन् कश्चित् कपोतः घुकलक्षणः पक्षी दाक्षीपुत्रस्य दाक्षागोत्रसञ्जातमातृकस्य पाणिनेस्तन्त्रे

स्यात्क्षीरप्रवृत्तिरिति भावः । चित्रभानुर्विभावसुरित्यमरः । दूरारूढः ग-
त्यादिदर्शनात्समासः । वैहासिक इति विहासे नियुक्त सप्रयोजन
शिल्पमस्यास्येति । तत्र नियुक्त (पा०४।४।६९) इति वा शिल्पमिति (पा०
४।४।५५) ठक् । प्रयोजनमिति (पा०५।१।१०९) ठञ् । स्वात्मीयं वृद्धाच्छ
(पा०४।२।११४) । दधते दधधारणे इत्यस्यैकवचनं ना धातुश्च बहुवच-
नान्तश्चेति । श्वैतिमा पृथ्व्यादिः । शोणं कुर्वन्तीति तत्करोतीति णय
न्तात्क्विप्यल्लाव. पुयल्लाव. णिलोपो वा । ६४ ॥

प्रातर्वर्णनयाऽनया निजवपुर्भूषाप्रसादानदाद्देवी
वः परितोषितेति निहितामान्तःपुरीभिः पुरः ।
नूनं मण्डनमण्डलीं परिदधुर्माणिक्यरोचिर्मय
क्रोधावेगसरागलोचनरुचा दारिद्र्यविद्राविणीं ॥६५

प्रातरिति । सूता मण्डनमण्डलीं भूषणश्रेणीं परिदधुः तत्तदङ्गसुव-
र्णाद्यवयवेषु धारयामासुः । किम्भूतां आन्तःपुरीभिरवरोधसङ्घारिणी-
भिः सखीभिरित्युक्ताः पुरो मागधानामग्रे निहिता स्थापिता । इति
किं । हे मागधाः अनया प्रातर्वर्णनया प्रबोधिकया परितोषिता नि-
तरां सन्तोषं प्रापिता देवी कृताभिषेका राज्ञी भैमी निजवपुर्भूषाः
स्वीयशरीरालङ्कारजूनानेकविधसुवर्णमणिप्रभृतीनि भूषणान्येव प्रसादा-
न् पारितोषिकाणि वो युष्मभ्यं अदादिति । पुनः किम्भूतां माणिक्य-
रोचिर्मयां पद्मरागप्रभारूपया क्रोधस्य आवेगः आडम्बरस्तेन सराग
लोचनरुचा अरुणनेत्ररुचा कृत्वा दारिद्र्यस्य विद्राविणीं पलायनकारि-
णीं मयि स्थितायामप्यत्र त्वं कथं नाम स्थातुमिच्छसि इति क्रुद्धयाऽ-
रुणया माणिक्यप्रभारूपनेत्रारुणकान्त्या कृत्वा दारिद्र्यं दूरादपसारितं ।
एवं प्रभातवर्णने क्रियमाणे भैम्या निजशरीरभूषणैस्ते सम्मानिता इ-
त्यर्थः । अन्योऽपि रोषारुणलोचनरुचा किञ्चिद्विद्रावयति । आन्तःपु-
रीभिरिति बहुत्वेन माणिक्येत्यादिना भूषणानां भूयस्त्वममूल्यत्वञ्च
सूचितं । देवी अदादित्यनेन च नलः स्नानार्थं गतः प्रासादे नास्ती-
ति सूचितं । प्रातर्लुप्तषष्ठीकमव्ययं । परितोषिता ण्यन्तान्निष्ठा । आ-
न्तःपुरीभिः सम्बन्धेऽण् । अन्तःपुरिकेति पाठे अन्तःपुरशब्दात् अन्त·

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री
हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
एकां न त्यजतो नवार्थघटनामेकान्नविंशो महा
काव्ये तस्य कृतौ नलीयचरिते सर्गो निसर्गो
ज्ज्वलः ॥ ६७ ॥

श्रीहर्षमिति। पूर्वार्धं पूर्ववत्॥ नूत्या नवार्थघटना नवार्थनिर्मितिमत्यजतोऽमुष्य नूतनमेव प्रमेयं सर्वत्र यस्य श्रीहर्षस्य। एकान्नविंशः विंशतेः पूरण इत्यर्थे डटि 'तिविंशतेर्डिति' (पा० ६।४।१४२) लोपे च विंशः। तत एकोनविंश इति तृतीयेति योगविभागात् समासे एकादिश्चैकस्य चादुगिति (पा० ६।३।७६) नञ्प्रकृतिभावः एकशब्दस्यादुगागमश्च॥ ६७॥

इति श्रीवेदरकरोपनामकश्रीनरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे एकान्नविंशः सर्गः॥ १९॥

## उत्तरनैषधचरितं ।

### विंशः सर्गः ।

श्रीलक्ष्मीनृसिंहौ जयतः ।

सौधाद्रिकुट्टिमानेकधातुकाधित्यकातटम् । स
प्राप रथपाथोभृद्वातजातजवो दिवः ॥ १ ॥

सौधेति । सर्गमङ्गलिकत्वेव । स, रथ एव पाथोभृत् मेघः दिवः स्वर्गात् गगनाद्वा सौधो राजसदनमेवाद्रिस्तस्य कुट्टिमः नानावर्णानेकमणिबद्धभूमिः सैवानेकधातुका नानाविधगैरिकादिधातुयुक्ताऽधित्यकोर्ध्वभूमिस्तस्यास्तटं पर्यन्तप्रदेशं प्राप । किम्भूतः वातात् सकाशादधिको जातो जवो वेगो यस्य । यद्वा जातो जवो यस्य स जातजवः वातो जातजवो यस्माद्धेतोः तेनापि यस्माद्रथात् सकाशाद्वेगः शिक्षितः, अथवा तेन जातवेगः मेघोऽपि उक्तविशेषणविशिष्टो पर्वतोर्ध्वदेशं गगनात् पतति । धातुकेति शेषाद्विभाषेति ( पा० ५ । ४ । १५४ ) कप् ॥ १ ॥

ततः प्रत्युदगाद्भैमी कान्तमायान्तमन्तिकं ।
प्रतीची सिन्धुवीचीव दिनोद्गारे सुधाकरम् ॥ २ ॥

ततेति । ततः सौधोर्ध्वभूमिप्राप्त्यनन्तरं दिनोद्गारे दिनप्रारम्भे प्रभाते अन्तिकं आयान्तं सुधाकरं चन्द्रं प्रतीचीसिन्धुवीचीव पश्चिमदिक्समुद्रलहरीव भैमी रथादवतीर्यान्तिकं गृहपरिसरप्रदेशमागच्छन्तं कान्तं नलं प्रति लक्षीकृत्योदगात् प्रत्युज्जगाम । एतेन भैम्याः नले आदरातिशयः सूचितः । अन्तिक इत्यपि पाठः । अधिकरणे चेति चकारग्रहणात् दूरान्तिकार्थेभ्योऽपि सप्तमीविधानात् सप्तमी । वीचीति कृदिकारादितिङीष् ( पा० ४ । १ । ४५ । वा० ) दिनोद्गारे ओमाङोश्चेति ( पा० ६ । १ । ९५ ) पररूपम् ॥ २ ॥

स दूरमादरं तस्या वदने मदनैकदृक् । दृष्टमन्दाकिनीहेमारविन्दश्रीरविन्दत ॥ ३ ॥

स इति । दृष्टा मन्दाकिन्या हेमारविन्दश्रीर्येन एवम्भूतः स नलः तस्या वदने दूरं स्वर्णकमलादपि नितरामादरं प्रेमाविन्दत लेभे, अतएव मदनः एका केवला मुख्या वा दृक् यस्य सः स्वर्णकमलादप्यधिकं तत् दृष्ट्वा स सम्भोगवासनया अपश्यदित्यर्थः । एका दृग्यस्येति एकदृक् मदने एकदृक् सप्तमीति योगविभागात् समासः । माद्यति सहर्षो भवतीति मदनः नन्द्यादित्वात् ल्युः सन् समानाधिकरणो वा बहुव्रीहिः ॥ ३ ॥

तेन स्वदेशसन्देशमर्पितं सा करोदरे । बभ्राजे बिभ्रती पद्मं पद्मेवोन्निद्रपद्मदृक् ॥ ४ ॥

तेनेति । सा पद्मेव श्रीरिव बभ्राजे, किम्भूता स्वदेशस्यागमनसमये मन्दाकिनीस्वर्णकमलं मम क्रीडार्थमानेयमिति सन्देशरूपं पद्मं तेन नलेनार्पितं दत्तं करोदरे बिभ्रती, तथा हर्षादुन्निद्रपद्मदृक् विकसितकमलतुल्यनेत्रा लक्ष्मीरपि करे पद्मं धारयति प्रभाताह्विकविकसपद्मदृक् भवति । सन्देशः कर्मणि घञ् ॥ ४ ॥

प्रियेणाल्पमपि प्रत्तं बहु मेनेतरामसौ । एकलक्षतया दध्यौ पद्ममेकवराटकम् ॥ ५ ॥

प्रियेति । असौ भैमी प्रियेण प्रेम्णा दत्तं एककमलरूपत्वात् अल्पमपि बहु मेनेतरां नितरां बहु मेने । यद्यस्माद्धेतोरेका मुख्या वराटको बीजकोशो यस्य तत् पद्मं एकमेव लक्षं नयनविषयो यस्य यस्या वा तद्भावेन वस्तुविलोकनपरित्यागेन तदेकपरतया अत्यादरेण दध्यौ, अचिन्तयत्, आत्मा पुनः पुनरपश्यदित्यर्थः । अथ च यद्यल्पमपि दत्तं बहुतरं न मन्येत तदेकशासौ वराटकश्च तमेककपर्दकमपि एकलक्षसंख्यापरिमितद्रव्यत्वेन न ध्यायेदिति श्लेषप्रतिभोत्थापत्तिः । तेन प्रेम्णा स्वर्णकमलदानात् वसन्ति हि प्रेम्णि गुणा न वस्तुनि इति न्यायेन तत् स्वर्णकमलं लक्षकोटिपरार्द्धद्रव्यादपि नितरामधिकं मेने

इति भावः । प्रियपदेन प्रेमभरः सूचितः । पटलस्य पुंलिङ्गत्वात्तमिति पुंनिर्देशः ॥ ५ ॥

प्रेयसाऽवादि सा तन्वी त्वदालिङ्गनविघ्नकृत् ।
समाप्यतां विधिः शेषः क्लेशश्चेन्नासि चेन्न ते ६

प्रेयसेति । प्रेयसा नलेन सा भैमी इत्यवादि उक्ता । इति किं । हे तन्वि कृशाङ्गि तवालिङ्गनविघ्नं करोतीति कृत् स शेषः स्नानसन्ध्यानन्तरकरणीयस्य नावशिष्टः श्रुतिस्मृत्युक्तोऽनतिक्रमणीयो नित्याग्निहोत्रादिरूपो विधिर्मया समाप्यतां परिपूर्णीक्रियतां तदेव वदेति सामप्रश्नः । परं यदि ते चेतसि आश्लेषविलम्बवशात् क्लेशः खेदश्चेन्न भवेत् समागतेनाश्लेषलोलुपेन मया भवदाश्लेषः कर्तव्यः । परं अन्तरा यस्तपःशेषो विधिरस्ति स पुनः प्रसक्तविरत्येव यद्यनुजानासि तर्ह्येव समाप्तिं नेष्यते नान्यथेत्यर्थः । भैमीकर्मकालिङ्गनविघ्नमेतत्, भैमीकर्तृकालिङ्गनविषये अनालिङ्गनशीला सा प्रत्येव तेन प्रार्थना कृतेति भावः । विधेः शेष इत्यपि पाठः ॥ ६ ॥

क्वैतावान्नर्ममर्मावित्ते विधिरद्य ते । इति
तं मनसा रोषादवोचद्वचसा न सा ॥ ७ ॥

क्वेति । अमी भैमी इति रोषात् ईर्ष्यया तं मनसैवावोचत् मनसैवाचिन्तयत्, न वचसा साक्षादुवाचेत्यर्थः । इति किं । हे प्रिय नर्ममर्मवित् आलिङ्गनादिकेलिरहस्यभेदी एतावान् अतिबहुलः अद्यापि ते तव विधिः क्व कुतः, कियति वा काले, विद्यते, अपि तु नास्त्येव । सर्वोऽपि विधिस्त्वयाचरित एव केवलं ममालिङ्गनाये गात्युत्तरमावगेतम् । यद्वा अद्यैतावान् क्वापि विद्यते, अपि तु नास्त्येव । पूर्वं कदाप्येतावतो विधेरदर्शनात् । इदमपि नात्युत्तरमेवेत्यर्थः । रोषार्थः रोषवशात् लज्जावशाद्वा न साक्षात् बभाषे इत्यर्थः । प्रतारणामेव मम करोषीति रुष्टाऽभूदिति भावः । नर्ममर्म विध्यति इति व्यधः क्विपि सम्प्रसारणे च नहि वृतीति ( पा० ६ । ३ । ११६ ) पूर्वपदस्य दीर्घः ॥ ७ ॥

क्षणविच्छेदकादेव विधेर्मुग्धे विरज्यसि । वि च्छेत्ताहं चिरं न त्वा हृष्टाऽऽह स्म तदा कलिः ॥ ८ ॥

क्षणेति । तदा भैमीचिन्तावसरे गृहारामस्थविभीतकनिवासी कलिः हृष्टः मनसा इति प्राह स्म अवोचत् । इति किं । हे मुग्धे मूढे भैमि क्षणविच्छेदकात् क्षणमात्रवियोगकात् विधेर्नित्यकर्मण एव हेतोरत्र विरज्यसे उद्विग्ना भवसीति काकुप्रश्नः । एतावता उद्वेगो न कार्य इत्यर्थः । यतोऽहं कलिस्त्वा त्वां चिरं बहुकालं न विच्छेत्ता त्वां विच्छेदभाजां न करिष्यामि, अपितु वियोजयिष्याम्येवेति । एवमहं करिष्यामि न जानासीति सप्रतिभ मनोरथमकरोदित्यर्थः । भावी वियोगः सूचितः । विच्छेत्ता ताच्छील्ये तृन् । त्वेति त्वमावि त (पा० ७।२।९७) त्व देश' ॥ ८ ॥

सावज्ञेवाथ सा नाथः सखीं पद्ममुखीमगात् । लक्ष्मीः कुमुदकेदाराद्दाराद्म्भोजिनीमिव ॥ ९ ॥

सावज्ञेति । अथ एव कलवाक्यश्रवणोद्वेगानन्तरं सा भैमी नलेन अनालिङ्गनात् स्वयमारब्धालिङ्गनानङ्गीकाराद्वा सावज्ञेव सापमानेव सती पद्ममुखीं नलात् सकाशाद्भैम्यागमनमज्ञात्वा हर्षव्याप्तिविकसितकमलतुल्यवदना सखीं कलानाम्नीं अगात् प्रतिजगाम । का कस्मात् कामिव । लक्ष्मी कुमुदानां केदारात् क्षेत्रात् आराक्षिकटे पद्मरूपपदमां अम्भोजिनी कमलिनीमिवेत्युपमा । लक्ष्मीनिर्गमे च कुमुदक्षेत्रस्य यथा म्लानत्वं तथा भैमीनिर्गमे नलस्य, अम्भोजिन्याश्च लक्ष्म्यागमनानन्तरं यथा हर्षस्तथा भैम्यागमनानन्तरं सख्या इति सूचितमुपमया ॥ ९ ॥

ममासावपि मा सम्भूत् कलिद्वापरवत्परः । इतीव नित्यमत्रे तां स त्रेतां पर्य्यतूतुपत् ॥ १० ॥

ममेति । स नलः इतीव हेतोर्नित्यसत्रे नित्याग्निहोत्रे विषये तां आहवनीयगार्हपत्यदक्षिणाग्निरूपेण प्रसिद्धां त्रेता, अथ च त्रेतारूपं द्वितीयं युगं आज्यादिना पर्य्यतूतुपत् परितोषितवान् पूजितवांश्च । इति किं । असौ त्रेताऽपि कलिद्वापरवत् मम परः शत्रुर्मा सम्भूत्,

स्पर्शाद्विलक्षणो नलस्पर्श इति यथा ज्ञातस्पर्शानन्तरं चेतो यस्या इति वा । सा मौनमानर्द्धं प्राप । यतो मानसंयिनी मानिनी । स्पर्शेन नलं ज्ञात्वा मामवज्ञाय प्रेतायामनुरक्तोऽधुना वृथैव किमित्यागत इत्यभिमानात् किमपि नावददित्यर्थः । वामोकेति नद्यन्तत्वात् नद्यृतश्चेति ( पा० ५ । ४ । १५३ ) कप् ॥ १३ ॥

भ्याद्यादि सुतनुस्तेन कोपस्ते नायमौचिती । त्वां प्रापं यत्प्रसादेन प्रिये तन्नाद्रियै तपः ॥ १४ ॥

सेति । तेन नलेन सुतनु शुभाङ्गी सा इति ध्यवादि उक्ता । अयि प्रिये भैमि ते तवाय मयि कोपो नौचिती । औचिती शब्दस्याविधिष्टलिङ्गत्वादुचितोऽयं नेत्यर्थः । अहं यस्य प्रसादेन त्वां प्राप प्राप्तवानस्मि तत्तपः ऽग्निष्टोमादि नाद्रिये आदरेण न कुर्यामित्याशंसे काकु प्रश्न । एवंविधमहाफलस्य तपसोऽत्यादरो युक्त एवेत्यर्थः । त्वत्प्रापकत्वादेवास्यादरः क्रियते न त्वन्यथा तस्मात् कोपं माकार्षीरिति भाव ॥ १४ ॥

निशि दास्यङ्गतोऽपि त्वां स्नात्वा यन्नाभ्यवी वदं । न प्रवृत्ताऽसि मन्तुं चेन्मन्तुं तद्द्वद वन्द्यसे॥१५

निशेति । हे भैमि अहं निशि तव दास्यं आलिङ्गनादिचुम्बनादिचरणपर्यन्तं सेवाकारित्वं गतोऽपि सन् प्रातः स्नात्वा त्वां नाभ्यवीवद् न नमस्कृतवानिति यत् तं मन्तुं अपराधं मन्तुं अङ्गीकर्तुं त्वं प्रवृत्ताऽसि चेत्तर्हि वद तवापराधमार्जनायेदानीमेव वन्द्यसे नमस्क्रियसे । रात्रौ दास्यं प्राप्त इत्यनेन सखीषु भैमीरात्रिवृत्तमपि सूचितम् । अभ्यवीवदं अभि पूर्वान्नमस्कारार्थाच्चौरादिकाल्लुङ् स्वार्थे णिचि चङि णौ चङ्यु (पा०७।४।१) इत्युपधा ह्रस्वः ॥ १५ ॥

इत्येतस्याः पदासत्त्यै पत्यैषा प्रेरितौ करौ । रुद्ध्वा सकोपं सातङ्कं तद्दृष्टाश्चैरमूमुहत् ॥ १६ ॥

इतीति । एवं इत्येवमुक्तप्रकारेणैतस्या भैम्या पदासत्त्यै चरणनिकटीभावाय प्रणामार्थं पत्या प्रेरितौ करौ नमस्कारारम्भानौचित्या-

द्वात्रिंशत्तत्त्वप्रकटनेन वा मदीय, पतित्वात् स्वीयचरणयोः पतिकरस्य स्पर्शस्यानौचित्याद्वा आतङ्को भय तेन च सह यथा तथा, चरणस्पर्शात् पूर्वमेव रुध्वा स्वकराभ्या निवार्य्य त कटाक्षैरमूमुहत् कामाधीन चकार । एव तया विलोकित एव कामवशो जात इति भावः । पद्दासत्यै तादर्थ्यमात्रे चतुर्थी । मुहेरकर्म्मकत्वाद्गतिबुद्धीत्यादिना (पा०१।४।५२) अणौ कर्त्तुर्णौ कर्मत्वात्तमिति द्वितीया । अमूमुहत् हेतुमति णिचि चङि उपधा ह्रस्वादि ॥ १६ ॥

अवोचत ततस्तन्वीं निषधानामधीश्वरः । तदपाङ्गचलत्तारझलत्कारवशीकृतः ॥ १७ ॥

अवोचतेति । ततस्तस्यास्तद्दृक्कटाक्षविलोकनानन्तरं निषधानामधीश्वरः तन्वीं वक्ष्यमाणमवोचत । किंभूत तारशब्दस्य कनीनिकावाचित्वे नपुंसकलिङ्गत्वात्तस्यापाङ्गे चलतस्तारस्य कनीनिकाया किरणाझलत्कारो दर्शनचमत्कारझलत्कारचमत्कारस्तेन वशीकृतः, यद्वा चलन्ती तरला तारा यत्र तादृशश्चासौ झलत्कारश्च तेन पूर्ववत् षष्ठीसमास । झलत्कार इति देश्य पद ॥ १७ ॥

कटाक्षकपटारब्धदूरलङ्घनरंहसा । दृशा भीत्या निवृत्त तं कर्णकूप निरूप्य किं ॥ १८ ॥

कटाक्षेति । हे प्रिये कटाक्षकपटेन नेत्रप्रान्तवक्रविलोकनव्याजेनारब्ध कर्तुं व्यवसित दूरलङ्घने अतिदूरदेशातिक्रमणे रहो वेगो यया, तथाभूतया ते दृशा कर्णरूप कूप अग्र निरूप्य विलोक्य भीत्या पुनर्निवृत्त परावृत्त किमित्युत्प्रेक्षा । दूर गन्तुमुपक्रान्ता हि गच्छन्तः कूप पुरो दृष्ट्वा भयेन शीघ्र परावर्तन्त एव । दृशः स्त्रीत्वेन भीरुत्वं युज्यते, स्त्रियो हि भीतियुक्ता ॥ १८ ॥

सरोपाऽपि सरोजाक्षि त्वमुदेषि मुदे मम । तप्ताऽपि शतपत्रस्य सौरभायैव सौरभा ॥ १९ ॥

सरोपेति । हे सरोजाक्षि सरोपाऽपि त्व मम मुदे हर्षायैवोदेषि भवसि, सङ्गानामालिङ्गनादीनां दुरापत्वेन स्पृहणीयतरस्याः सौन्दर्या-

तिशयाच्चेत्यर्थः । यस्मात्तस्मादपि तव्यस्यगापि सूरः सूर्यस्तत्सम्बन्धिनी सौरी भा दीप्तिः शतपत्रस्य कमलस्य विकासपूर्वं सौरभायैवेति न तु स्वान्यै । सौरनेत्यत्र पुंवत्कर्मधारयेति (पा०६।३।४२) पुवत् भावः ॥१९॥

छेत्तुमिन्दौ भवद्वक्त्रबिम्बभ्रान्तिभ्रमभ्रमं । शङ्के श शाङ्कमानङ्क्षे भिन्नभिन्नविधिर्विधिः ॥ २० ॥

छेत्तुमिति । हे भैमि विधिर्ब्रह्मा पूर्वं निष्कलङ्केऽपीन्दौ विषये वा तिसादृश्यात् प्रतिक्षणं भवत चन्द्रमसोर्जयतो वा वक्त्रबिम्बस्य विभ्रम विशिष्टा भ्रान्तिस्तस्य विभ्रम विलास छेत्तु शशाङ्क आनङ्क्षे श शरूपेण कलङ्केन चिह्नितवानित्यहं शङ्के । यतो भिन्नभिन्नप्रकारं किञ्चित्किञ्चिद्भेदयुक्तो विधिर्घटपटादिविधानं यस्य तादृशः । तस्माद्भ-वन्मुखमृगाङ्कयोरुत्पद्यमानसादृश्यभ्रान्तिनिरासाय चन्द्रं कलङ्केन चि-ह्नितवानित्यर्थः । इत्यहं मन्ये । निष्कलङ्कं भवन्मुखं चन्द्रादप्यधिक-मिति भावः । आनङ्क्षे, चौरादिकाङ्कधातोर्लिट् । भिन्नभिन्नेति प्रकारे द्विरुक्तिः ॥ २० ॥

ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिन्दुकुक्षिजैः । बद्ध-स्पर्द्धतरा वर्णाः प्रसन्नाः स्वादवस्तव ॥ २१ ॥

ताम्रपर्णीति । तव वदनाद्भवद्वदननिर्गता वर्णाः प्रसन्नाः स्पष्टतराः, निर्दोषत्वाद्वा श्लाघ्याः, तथा स्वादवो मधुराः श्राव्याः क्रमेण मलयनि-र्गतमलयदक्षिणसमुद्रगामिताम्रपर्ण्याख्यनद्यास्तटे उत्पन्नैः, तथा अ-मृतमयस्य इन्दोः कुक्षौ जातैर्मौक्तिकैः सह यद्वा धृता स्पर्धा सादृश्य-दर्पो यैस्ते, अतिशयेन बद्धस्पर्धा बद्धस्पर्धतराः, इक्षुकुक्षिजैरिति पाठे इ-क्षुकाण्डजातैर्मौक्तिकैः । ताम्रपर्णीजातस्य मौक्तिकस्य सौन्दर्यं न तु मा-धुर्यं । इन्दुकुक्षौ मौक्तिकानि यदि जायेरन् तदा माधुर्यातिशयात् तैः सह बद्धस्पर्धतरा इत्युपमा । इक्षुवंशविशेषतत्रोत्पन्नस्य मौक्ति-कस्य वैद्यकनिघण्टे शैत्य माधुर्यं पित्तोपशमकत्वञ्चोक्तं यंशान्मौक्ति-कोत्पत्तिः प्रसिद्धा पूर्वमुक्ता च ॥ २१ ॥

त्वद्गिरः क्षीरपाथोधेः सुधयैव सहोत्थिताः ।

ह्यद्य यावदहो धावद्दुग्धलेपलवस्मिताः ॥ २२ ॥

त्वदिति । तव गिरः क्षीरपाथोधेः क्षीरसमुद्रात् सकाशात् सुधयैव सहोत्थिता उत्पन्नाः । यस्मादद्य यावत् अद्यतनदिनमवधीकृत्य अ-द्यापि अहो चित्रं धावत्प्रसरत् दुग्धलेपलवरूपं स्मितं हास्यं यासां तादृश्यः । अमृतेन सह निर्गतत्वादमृतवन्मधुराः क्षीरसमुद्राच्च निर्गत-त्वात् स्मितव्याजेन दुग्धलेपलेशः एतास्वद्यापि अनुवर्त्तते, तद्वद्धवलस्मि-ताश्चेति भावः । धावत् धावु गतिशुद्ध्योरित्यस्माच्छता ॥ २२ ॥

पूर्वपर्वतमाश्लिष्टचन्द्रिकश्चन्द्रमा इव । नलो
ऽलञ्चक्रे स पर्यङ्कमङ्कसङ्क्रमितप्रियः ॥ २३ ॥

पूर्वेति । स नलः पर्यङ्कमलञ्चक्रे । किम्भूतः, अङ्के सङ्क्रमिता स-मारोपिता प्रिया येन सः । क इव, आश्लिष्टा चन्द्रिका कौमुदी येन स चन्द्रमाः पूर्वपर्वतमिव ॥ २३ ॥

प्रावृडारम्भणाम्भोदः स्निग्धो द्यामिव स प्रियां ।
परिरभ्य चिरायास विश्लेषायासमुक्तये ॥ २४ ॥

प्रावृडिति । सः प्रियां विश्लेषः प्रातः स्नानादिनित्यकर्मानुष्ठानव-शेन तावन्मात्रभिन्नदेशावस्थायितया यो वियोगस्तज्जनितो य आया-सः खेदस्तस्य मुक्तये निवृत्तये परिरभ्य चिराय आस तस्थौ शुशुभे वा । क इव प्रावृडारम्भणो वर्षारम्भे अम्भोदो मेघो द्यामिव । किम्भूतः स्निग्धः सजलत्वात् श्यामः । मेघो यथा ग्रीष्मे शेषे याते शरदादौ सदा गगने क्रीडद्भिः पतिभिर्मेघैः शेषे सम्भवत्तज्जनित-दुःखपरिहाराय आलिङ्गिता प्रियया नीडनिर्विशेषत्वात्संयोगक्लेशमुक्तये दिवमालिङ्ग्य चिरं तिष्ठति । किम्भूतः स्निग्धोऽतिप्रीतिमान् । आस गतिदीप्त्यादानेषु ॥ २४ ॥

चुचुम्बास्यमसौ तस्याः रसमग्नः स्मितस्मितं ।
नभोमणिरिवाम्भोजं मधुमध्यानुविम्बितः ॥ २५ ॥

चुचुम्बेति । असौ रसमग्नः प्रेमभरपरवशः सन् तस्याः नतरोपत्या-दालिङ्गनसुखाच्च स्मितस्मितं आस्यं चुचुम्ब । क इव मधुमध्ये म-

करन्दमध्ये अनुबिम्बितं प्रतिफलितं अत एव रसमग्नं नभोमणिं सूर्यं अम्भोजमिव श्रितविकासः । सूर्यस्यात्यन्तदूरदेशत्वात् कथं चुम्बनमिति प्रश्ने मधुमध्यानुबिम्बित इत्युत्तरं ॥ २५ ॥

अथाहूय कलां नाम पाणिना स प्रियासखीम् ।
पुरस्ताद्वेशितामूचे कर्तुं नर्माणि साक्षिणीम् ॥२६॥

अथेति । अथ चुम्बनानन्तरं स पाणिना हस्तसंज्ञया कलां नाम प्रियायाः सखीमाहूय ऊचे । किम्भूतां नर्माणि अन्योन्यरहः क्रीडाहास्ये साक्षिणीं कर्तुं पुरस्तादग्रे वेशितां स्थापितां । वेशिता उपविष्टा ॥ २६ ॥

कस्मादस्मानम्बुजास्या वयस्या दयते न ते ।
आसक्ता भवतीष्वन्यं मन्ये न बहु मन्यते ॥२७॥

कस्मादिति । हे कले अम्बुजास्या पद्ममुखी ते वयस्या भैमी कस्मात् कारणादस्मान् न दयते कृपां न करोति कथय पृच्छेति शेषः । स्वयमेव कारणमाशङ्कते भवतीषु भवादृशीषु भूयसीषु सखीषु आसक्ता सामस्त्येन अनुरक्ता सती हितकारिणमप्यन्यं मादृशं बहु यथा तथा नितरां न मन्यते, इत्यहं मन्ये, तेन मयि कृपां न करोतीत्यर्थः । रात्रावस्मान् मम हस्तेन स्प्रष्टुमपि नादादिति तां प्रति सूच्यते । भवदासक्त रत्नाकरमिव दया अनया कृतेति कलां प्रत्यपि सोल्लुण्ठनं । अथ च मद्विषयेऽप्यसौ न दयते चिरपरिचयेऽपि ते तुभ्यं दयते । कुतः भवतीषु आसक्ता सती अन्यं मल्लक्षणं बहु मन्यते । एतदुत्तरानुरोधेन व्याख्येयं । 'अधीगर्थेति' (पा० २।३।५२) षष्ठी अस्मदो द्वयोश्चेति (पा० १।२।५९) एकत्वेऽपि बहुवचनं ॥ २७ ॥

अन्वग्राहि मया प्रेयान्निशि स्वोपनयादिति ।
न विप्रलभते तावदालीरियमलीकवाक् ॥ २८ ॥

अन्विति । अलीका असत्या वाक् यस्याः सेयमित्युक्ता विदग्धास्यानुभूता भवादृशीराली सखीस्तावद्विप्रलभते प्रतारयति । हसितं कला । मया निशि आलिङ्गनचुम्बनादिना स्वस्यात्मशरीरस्योपनयाद्दानादनु-

मूल्येन रसनात् यथा प्रेयानलोऽन्यग्राहीति विप्रलभते प्रतारयति । मादृशान् यद्यपि वञ्चयति तथापि जयाद्दृशो कथं वञ्चयेदिति तावच्छब्दार्थः । अलीकवाक् न प्रतारयतीति विपरीतलक्षणया साधुवर्त्मपायपाद्विप्रलम्भन एवेत्यर्थः । आलीस्तावत् विप्रलभते अपि तु ता अपि वञ्चयत्येवास्मादृशानां का कथेति काकुर्वा । तस्मादियमस्माकं न दयते इत्येव सत्यं जानीत सर्वं या याऽस्या वचसि भवतीभिर्न विश्वसनीयमिति भावः । एतेन महापापप्रयोगः कृत इति सूचितम् ॥ २८ ॥

आह स्मैषा नलादन्यं न जुषे मनसेति यत् ।
यौवनानुमितेनास्यास्तन्मृषाभून्मनोभुवा ॥ २९ ॥

पुनरप्यलीकतामेवाह । आहेति । एषा भवादृशानां पुर इति यत् आह स्म । इति किं । अहं नलादन्यं मनसाऽपि न जुषे भजे इति तदेतस्याः प्रतिवाक्यं, यौवनं प्रस्तुतं सति अनुमितेन प्रकटीभूतेन मन एव नूः स्थानं यस्य तेन कामेन कृत्वा मृषा मिथ्याऽभूत । यदन्यस्य कामस्य मनसि धारणादसत्यप्रतिज्ञेयमिति निन्दा । वस्तुतस्तु तारुण्यमारभ्य सर्वेषामुत्कण्ठाऽसि स्तुतिरेवास्याः कृतेति व्याजस्तुतिः २९

आस्यसौन्दर्यमेतस्याः शृणुमो यदि भाषसे ।
तर्हि लज्जानमन्मौलेः परोक्षमधुनाऽपि न ३०

आस्येति । हे सखि त्वं एतस्या आस्यसौन्दर्यं चिरपरिणामलक्षणं नाशोपविशेषत्वाद्यदि भाषसे तर्हि वयं शृणुमः । आदर्शे हस्तकङ्कणादर्शनवदप्रकृतमेतदित्याशङ्क्य हेतुमाह, हि यस्मादेतस्या आस्यसौन्दर्यं अधुनाऽपि विवाहमारभ्याद्यतनक्षणपर्यन्तं नोऽस्माकं परोक्षमप्रत्यक्षं नेत्रविषयो न जातमित्यर्थः । यत लज्जया नमन्मौलेर्नम्रमस्तकाया मस्तकोन्नत्याऽदेतन्मुखं कदाऽपि न मया दृष्टं तस्मादेतदास्यसौन्दर्यं त्वं कथयेत्यर्थः । एतस्या मुखमपि न दृष्टं सम्भागकथा तु दूरापास्ता । यस्मादेतद्वर्णनं मत्तः पा न विश्वसनीयं इति भावः । अधुनेत्यस्य वर्तमानाधर्मत्वात् परोक्षस्य भूतार्थस्य दुर्वाराद्य भूतार्थविरोधात् परोक्षाधुनात्वयोरर्थान्तरपरिग्रहाद्विरोधाभास इति ॥ ३० ॥

पूर्णयैव द्विलोचन्या सैपालीरवलोकते । द्रागद्रष्टुमन्तुमान्तु मन्तुमन्तविवेक्षते ॥ ३१ ॥

पूर्णयेति । सैषा, आलीभवादृशी सखीः पूर्णयैव द्विलोचन्या नेत्रद्वयेनावलोकते मान्तु पुनः मन्तुमन्तमिव सापराधमिव प्रकस्यापि दृशः अन्त प्रान्तदेशस्तस्यापि अणुलेशस्तेनापि द्राक् झटिति नपालान्नैव ईक्षते । पूर्णद्विलोचन्या चिरकालविलोकनस्य का कथा इत्यर्थः । सापराधोऽपि सखीयथा दृशा विलोक्यते । प्रियया च प्रियाम् दूरगतं नैव विलोक्यते, सख्यादिद्वाप्यजनस्तु सखीः सकले मैत्रे । द्विलोचन्या समाहारद्विगोर्द्विगोरिति ( पा० ४।१।२१ ) ङीप ॥ ३१ ॥

नालोकते यथेदानीं मामियन्तेन कल्पये । योऽहं दूत्येऽनया दृष्टः नाऽपि व्यस्मारिषीदृशा ॥ ३२

नेति । हे सखि यथा येन प्रकारेण यत इति यावत्, मत्सादिदानीं इयं मां नालोकते, तेन हेतुना योऽहं दूत्यावसरे अनया दृष्टोऽप्यकमीदृशा सर्वथा ऽनवलोकिन्याऽनयैव व्यस्मारिषि विस्मृत इति कल्पये सम्भावयामि च । मत्प्रति चिन्ताभिताङ्गविशेषं मा दृश्यतीति तु कथादूरेऽस्तु, किन्तु सर्वथा नावलोकयत्यपीत्यर्थः । स एवायमिति प्रत्यभिज्ञाय यद्यभविष्यत्तर्हि तादृगेव व्यलोकयिष्यत्, नत्वेवं, तस्माद्विस्मृत एवाहमनयेति कल्पना युक्तेति श्लोकपठनपूर्वं कवयोक्ति । कल्पये । चिन्तायांचौरादिकात्कृपेः णिचश्चेति ( पा०१।३।७४ ) तङ् । व्यस्मारिषि विस्मरतेः कर्मणि लुङ्उत्तमैकवचने, इटि, स्यसिच्सीयुडित्यादिना ( पा० ६ । ४ । ६२ ) चिण् सीयुडागमे, तस्य चिण्वद्भावे, अचोञ्णितीति ( पा० ७ । २ । ११५ ) वृद्धि ॥ ३२ ॥

रागं दर्शयते सैषा वयस्याः सूनृतामृतैः । मम त्वमिति यक्तुं मां मानिनी मौनिनी पुनः ॥३३॥

रागमिति । हे कल सैषा वयस्या भवादृशी । सूनृतानि प्रियाणि सत्यानि च वचनानि तद्रूपैरमृतैः कृत्वा राग निजा प्रीति दर्शयते बोधयति, भवतीषु तिलमा मम प्रीतिरिति ज्ञापयतीत्यर्थः । मा पुन त्व

ममेति एतावन्मात्रमपि वक्तुं मौनिनी तूष्णीम्भवतीत्यर्थः। यतो वृथैव मानिनी धृताभिमाना, न हि मया किमप्यपराद्धमित्यर्थः। त्वं मदीय इत्येतावतैव वचनेनाहं सनाथः, परं तावदपि न वदतीति मय्यस्याः कृपा नास्त्येवेति सोल्लुण्ठनं, लज्जावशान्न वदतीति व्याजेन स्तुतिर्वा। दर्शयतं चित्रयेति (पा०१।३।७४) लङ्। वचसा ·दूरीबुध्य-र्थत्वाद्गतिबुद्धीति (पा०१।४।५२) अणौ कर्तुर्णौ कर्मत्वं ॥ ३३ ॥

कां नामन्त्रयते नाम नामग्राहमियं सखी। क
ले नलेति नास्माकं स्पृशत्याह्वां तु जिह्वया॥ ३४॥

कामिति। हे कले इयं कां नाम सखीं नामग्राहं नाम गृहीत्वा नामन्त्रयते सम्बोधनपूर्वं नाह्वयति, अपि तु सर्वामपि। नाम प्रिर-ख्याने। अस्माकमस्मत्सम्बन्धिनी तु पुनर्नलेति सम्बुध्यन्तामाह्वां स-ञ्ज्ञां जिह्वया न स्पृशति नोच्चारयति रहस्यभाषणं तु दूरापास्तमित्यर्थः। स्त्रीणां भर्तुर्नामग्रहणस्य निषिद्धत्वादनौचित्यारोपेणोपालम्भो व्याज-स्तुतिः। आह्वामनाह्वा, आतश्चोपसर्गे (पा०३।३।१०६) इत्यङ् ॥ ३४॥

अस्याः पीनस्तनव्याप्ते हृदयेऽस्मासु निर्दये।
अवकाशलवोऽप्यस्ति नात्र कुत्र बिभर्तु नः॥ ३५॥

अस्या इति। अस्याः परिदृश्यमानेऽत्र हृदये अवकाशलव स्थान-लेशोऽपि नास्ति तस्मात्कोऽस्मान् कुत्र कस्मिन् स्थाने बिभर्तु धारयतु। अवकाशलेशाभावे हेतुमाह। यस्मात् पीनाभ्यामाबाहुमूलमूलाभ्यां स्तनाभ्यां व्याप्ते समन्तादावृतेऽतिसङ्कटेऽपि दयया समावेशो भवति, इत्याशङ्क्य साऽपि नास्तीत्याह, अस्मासु निर्दयेऽस्मद्विषये कृपारहिते। एतेन नास्याः कश्चिदपराध इति सोल्लुण्ठं। उच्चकुचाभ्यामङ्गमपर्य्येव प्रिये न तु मम हृदयस्पर्शः कदाऽपि दीयत इत्यौचित्येऽप्यनौचित्या-रोपाद्वक्रोक्तिर्व्याजस्तुतिर्वा ॥ ३५ ॥

अधिगत्य दृगेतस्या हृदयं मृदुनामुना। प्रतीम
एव वैमुख्यं कुचयोर्युक्तकर्कशयोः॥ ३६॥

अधिगत्येति। हे कले वयं दृङ्गतं पूर्वोक्तप्रकारेण कठिनं तस्या

हृदयमधिगत्य प्राप्य ज्ञात्वा वा मृदुमामुचो कठिनाश्रयवशात् काठिन्य भजता कदाप्यनालिङ्गन मयि विषय निर्दययारिति भावत् । तथा युक्तमुचित वृत्तमाचरण ययो, कदाचिदप्यालिङ्गनकारणाद्विरुद्धलक्षणयाऽनाचारशीलयारिति भावत् । एवम्भूतयारस्यास्तनयो कदाचिदप्यालिङ्गनादावाद्विमुखत्व पराङ्मुखत्वमेव मतीना जानीम । आलिङ्गने कुची मम मुखी भवत । निर्दयहृदयत्वादेव तस्या पराङ्मुखत्वादेवमभूताविमतकुचावपि सदा मम पराङ्मुखावेव जाताविर्त्यर्थ । अथ च स्त्राणा हृदयस्यातिमृदुत्वादेतस्या हृदयमीदृगतिमृदु च त्याऽपि स र्वस्य तस्याचरणान्निर्दयत्व भजतो, अत एव विपरीतलक्षणया युक्तवृत्तयोरनाचारशीलया । मृदु प्रति हि मृदुनैव भवितव्य । विशेषतस्तु प्रियप्रति, तदा च विपरीताचरणादनाचारशीलयोरत एव चैतृत्य पराङ्मुखत्व, अथच विरुद्धमुखत्व जानीम एव । अनाचारशीला हि कस्मैचिदपि स्व मुख न दर्शयति मलिनमुखश्च भवति । एतयारप्युक्तप्रकारेण पराङ्मुखत्व चूचुकयो श्यामत्वान्मलिनमुखत्व जानीम इति सोल्लुण्ठ । अथचैतस्या हृदय कठिन ज्ञात्वा आर्जव हि कुटिलेषु न नीतिरिति न्यायेन निष्ठुरत्वमङ्गीकुर्वतो । यस्मादुचित वृत्त स्थितिर्ययोरथ च मुक्ताचारयो पराङ्मुखत्व मतीम एव । हृदयव्योपर्यूर्ध्वमुखेन वर्तमानत्वात् हृदय प्रति कुचौ सदा पराङ्मुख यथेत्यर्थ । युक्ताचारा हि कठिनहृदय प्रति निर्दयो भूत्वा तस्मात् पराङ्मुख एव भवति न तु पश्यति, अथ च ईदृक्सुन्दरमत्तरपरित्यागेनाभ्या हृदय प्राप्य कठिनतरत्वगुण भजतो तथा पीवरत्वादन्योन्यश्लिष्टयावर्तुलयाश्च विततमुखत्व निमग्नचूचुकत्वगौरत्वविरुद्धश्यामुखत्वश्च जानीम एव । अथ चेदृगतिकोमलमेनदाय हृदय ज्ञात्वा प्राप्य वा मूढानाममृदुतारालिङ्गनादीनामपि विषये सकृपयोरत एव युक्ताचारयोर्विशिष्टमत्युद्धत मुखमत्र ययोस्ताद्दक् प्रसन्नमुखत्वञ्च जानीम एवेति इत्यादि ज्ञातव्य ॥ ३६ ॥

इति मुद्रितकण्ठेऽस्मिन् सोल्लुण्ठमभिधाय ताम् ।
दमयन्तीमुखाचीर्णस्मितयाऽसौ तया जगे ॥ ३७ ॥

हसतीति। अस्मिन्नले इत्यन्तरेण सोल्लुण्ठं वक्रोक्त्यादिसहितं यथा तथा तां भैमीं कलां वा अभिधायोक्त्वा मुद्रितकण्ठे सीमिति सति दमयन्तीमुखादधीत स्मितं यया नलवक्रोक्तिमाकर्ण्य हसन्तीं मुखं दृष्ट्वा सञ्जातहासया भैमीमुखेनाधीत स्मितं यस्याः, नलोपमोऽप्युपहासवचनात् स्वयं हसन्ती भैमीमपि हासयति स्मेत्यर्थः। सादृश्यं वा तया कलया अमी नलो जगौ, अजापि। सोल्लुण्ठनं तु कोऽप्युपहासमित्यमरः। उल्लुण्ठनमुल्लुण्ठः, भावे घञ्, तेन सह यथा स्यादिति क्रियाविशेषणम्। मुखाधीतेति पञ्चमीति योगविभागात् समासः। यद्वा कर्तृकरणे कृतेति (पा०२।१।३२) तृतीयासमासः। अस्मै तयेति पाठे क्रियया यमभिप्रैतीति (पा०१।४।३२वा०१) सम्प्रदानत्वं ॥ ३७ ॥

भावितेयं त्वया साधु नवरागा खलु त्वयि ।
चिरन्तनानुरागाहं वर्त्ते नः सखीः प्रति॥३८॥

कस्मादस्मानित्यस्योत्तरमाह॥ भावितेति। हे राजन् त्वयेयं साधु सम्यक् भाविता सम्यक् तर्किता यत्त्वयि विषये खलु निश्चितं नवरागा नवप्रीतिर्वर्त्तते नवोढत्वादधाष्ट्यॆन सलज्जा वर्त्तत इत्यर्थः। त्वयि नवरागा सती नः सखीः प्रति चिरन्तनोऽनुरागस्तस्याहं योग्यं यथा तथा वर्त्ते बहुकालीनस्नेहवशान्निःशङ्कवदित्यर्थः। त्वयि नवरागा सती नः प्रति चिरन्तनानुरागाऽहमतिदृढप्रीतिर्यथा तथा वर्त्तते न तु त्वयीत्यकथ्यपता वा। तस्माल्लज्जावशादधाष्ट्यान्मय्युदासीना भवतीषु तु प्रीतिमती तव बुद्धिरुपक्षेत्यर्थः। अथ च त्वयेयं साधु तर्किता साध्वीति काक्वा विपरीतलक्षणया वा साध्वेव विपरीतमेव तर्कितेत्यर्थः। यद्वा आकारप्रश्लेषेणासाधुतर्किता, खलु यस्मात् त्वयीय नूतनानुरागा अतिदृढप्रीतिर्वर्त्तते, अस्मासु तु जीर्णानुरागयोग्य यथा तथा अतिशिथिलप्रीतिर्वर्त्तते न तु त्वयि। अतिपरिचयादवज्ञा इत्यादि न्यायादित्यर्थः। यतोऽस्मभ्य दयते तुभ्य न दयत इति पूर्वोक्तवचनात् त्वया सत्यमुक्तं इत्यर्थः। यद्वा सम्यक् भाविता भावं प्रापिता द्रावितेत्यर्थः यस्मात् त्वयि नवरागत्वादृढप्रीतिः सती अस्मास्वपि पुराणप्रीतिसदृशमतिशिथिलप्रीतिर्वर्त्तते न तु त्वयि। तथा सम्यग्भा-

विना यया त्वय्येव दृढप्रीतिः सती अस्मान् सर्वथा न गणयतीत्यर्थः । तस्मादस्मान् वृथैव उपहससीति भाव इति साधु पठ ॥ ३८ ॥

स्मरशास्त्रविदा सेयं नवोढा नस्त्वया सखी ।
कथं सम्भुज्यते बाला कथमस्मासु त्रापता ॥ ३९ ॥

अन्यथाहीत्यादेरुत्तरमाह ॥ स्मरेति ।

बाला बलान्न भुञ्जीत विरागोत्पत्तिशङ्कया ।
भुञ्जीत चेत्तपाभीतित्याजनक्रमसङ्कुला ॥

इत्यादि स्मरशास्त्रविदा कामशास्त्ररहस्यज्ञेन त्वया नवोढा नवपरिणीता सेयं बाला नोऽस्माकं सखी कथं सम्भुज्यते, अपि तु विरागोत्पत्तिभिया बलादुपमर्दनम् कथं विद्रम्यते, अत एव त्वया सम्भुक्तत्वादेवास्मासु कथं केन प्रकारेण भापता कथयतु, अपि तु त्वत्कृतरतत्वादेव किञ्चिदपि न कथयतीति स्पष्टोऽर्थः । अथ चैव वक्रोक्तिः कामशास्त्रज्ञेन त्वयैव नवोढा बाला कथं किया सम्भुज्यते, अपि तु सामस्त्येन भोगो न क्रियत एव, किन्तु स्मरशास्त्रवित्वात् स्वल्पमेव भुक्ता मुच्यत इत्यर्थः । अत एवास्मासु किं भापता, अपि तु अति पीडनाभावान्न किञ्चिदप्यस्मासु भाषते । या हि बाला सुरते नितरां पीड्यते सैव सखीषु ममातिपीडा भवति मया सोढुं न शक्यत इत्यादि वदति, न तु साभिभुक्तमुक्तेत्यर्थः । अथ च कामशास्त्रज्ञेन त्वया बालापीयमेतन्मनोऽनुकूलमेव भुक्ता, अत कथमस्मासु भाषता अपि तु न कथञ्चिद्भाषते कस्याप्यग्रे न कथयतीत्यर्थः । बाला हि कामशास्त्रकौशलवशाद्यथानुरागं भुक्ता यद्यपि भोगं वदति तथाप्यतीव लज्जालुत्वात् सम्भोगरहस्यं कस्याप्यग्रे न कथयतीत्यर्थः । तस्मादुभावपि वञ्चकौ युवामस्मान् वञ्चयथ इति भावः । अथ च सामर्थ्याच्छास्त्रविदा कामशास्त्रज्ञेन त्वया नवोढेयं बाला केन प्रकारेण सम्भुज्यते स्मर चिन्तय तं प्रकारमित्यर्थात् रात्रौ कृतमेव सम्भोगमकृतमेव कथयसि, सम्भोगमियेव स विस्मृतोऽत्र स्मरेति काक्वूक्तिः । कथञ्चिदप्यस्मासु भाषतामपि तु नास्मासु कथयतीत्यर्थः । अथ च विपरीतलक्षणया त्वयैव भुक्ता अनया रहस्यमस्मासु कथितं किमिति न प्रतार-

यतीत्यर्थः । अथ च त्वयेयं बाला परिणीता यथं समन्ताद्धुज्यते, अपि तु अनुचितमेतत् विदुषाऽपि त्वया क्रियते, अस्मासु कथं न भापतां अपि तु प्रापत एवेत्यादि ज्ञातव्यं ॥ ३९ ॥

**नासत्यवदनं देव त्वा गायन्ति जगन्ति यं।**
**प्रिया तस्य सरूपा स्यादन्यथाऽऽलपना न ते॥४०**

आलीरियमलीकवागित्यंशस्य, आह स्मेत्यत्र तन्नृपाभूदित्यस्यांशस्योत्तरमाह ॥ नासत्येति । हे देव राजन् जगन्ति त्रयोऽपि लोका यं त्वा त्वां असत्यं वचनं भाषणं यस्य तादृशं न गायन्ति किन्तु सत्यवादिनमेव वदन्ति । यद्वा न असत्यं नासत्यं सत्यमेव भाषणं यस्य तं तस्य तादृशस्य सत्यभाषिणस्ते तव प्रिया अन्यथा विपरीतार्थमलीकमालपनं भाषणं यस्यास्तादृश्यसत्यवादिनी सरूपा तुल्यस्वभावा योग्या न स्यात् किन्तु सत्यवादिन्येव प्रिया तव योग्या स्यादित्यर्थः । तस्मादस्मासु यदनया कथितं सत्यमेवेति भावः । अथ च वक्रोक्तिः, त्रयो लोका यं त्वामसत्यभाषिणं न गायन्ति, अपि तु असत्यभाषिणमेव गायन्ति । यद्वा त्वा ईषदपि सत्यभाषणं यस्य तं सदाऽनृतवादिनं त्वां वदन्ति तस्मादनृतवादिनस्तवान्यथालपनात् सत्यवादिनी सदृशी योग्या न स्यात् किन्तु असत्यवादिन्येवोचिता । कृतमपि सम्भोगमहं न कृतवानिति वदसि तथैवमपि रात्रौ कृतमपि सम्भोगं नेति वदति योग्यं योग्येन सम्बध्यत इति न्यायो युक्त, इति द्वावपि प्रति योल्लुण्ठं । भो राजन् त्रयोऽपि लोका नासत्ययदश्विनीकुमारवन्मुखं यस्य तमतिसुन्दरमुखं वदन्ति तस्य तव प्रिया अन्यथाऽनुरूपं लपनं मुखं यस्यास्तादृशी तुल्यरूपा न स्यात किन्तु सुन्दरतरवदनैव योग्या स्यात्, तथा च त्वन्मुखवदेवैतस्या अपि मुखं सुन्दरमिति जानीहीति भावः ॥ ४० ॥

**मनोभूरस्ति चित्तेऽस्याः किं नु देव त्वमेव सः।**
**त्वदध्यास्यातिभूर्यस्मान्मनः सख्या दिवानिशम्॥४१**

आह स्मेत्यादेः श्लोकत्रयेणोत्तरमाह ॥ मनोभूरिति । अस्याश्चित्ते मनोभूः कामोऽस्तीति सत्यं, हे देव किन्तु त्वमेव स मनोभूः न तु

त्वदन्यः कश्चिदित्यर्थः । कुतः, यस्मात् कारणात् तस्या भैम्या मनः दिवानिशं तवावस्थितेर्भूः स्थानम् । कामपरत्वे मनसि भवति, नलपरत्वे मनोभूः स्थानं यस्य, यस्माच्चेतसि सुन्दरतरो मनोभूस्त्वमेव यत्तं मे नान्य इति ॥ ४१ ॥

सतस्तेऽथ सखीचित्ते प्रतिच्छाया स मन्मथः ।
त्वयास्य समरूपत्वमतनोरन्यथा कथम् ॥ ४२ ॥

यद्यहमेव कामस्तर्हि मद्विषयेऽस्याः कामो नास्तीति नलीयावान्तरच्छलनाशङ्कानिराकरणव्याजेन प्रकारान्तरेण सखीवोत्तरमाह ॥ सत इति । अथाथवा स मन्मथो तस्या भैम्याश्चित्ते सतो वर्तमानस्य तव प्रतिच्छाया प्रतिबिम्ब एव न तु स्वतन्त्रो बिम्बरूपः, प्रतिबिम्बश्च स्वच्छ एव मुकुरादौ जायतेति भैमीमनसः स्वच्छतरत्वं द्योतितम् । कुत एतदित्याशङ्क्यान्यथानुपपत्तिं प्रमाणयति । अन्यथा यदि प्रतिच्छाया न भवेत्तर्ह्यतनोरशरीरस्यास्य कामस्य त्वया सह समरूपत्वं कथं स्यादपि तु न कथञ्चित्, ऐलनासत्यादीनां सशरीरत्वात् त्वया सह सारूप्यं युज्यते, अयं त्वतनुस्तस्मादस्य प्रतिबिम्बत्व एव त्वत्सारूप्यं युज्यते । प्रतिबिम्बोऽपि ह्यशरीरमपि तुल्यरूपं जायते । तस्मात् प्रतिबिम्बस्य बिम्बं विना स्थातुमशक्यत्वान्मनसि तव धारणात् सारूप्यं त्वत्प्रतिबिम्बभूतं त्वदेकविषयं कामं नान्तरीयकतया धारयतीत्यर्थः । बिम्बत्वे अनङ्गत्वेन सारूप्यानुपपत्तेः प्रतिबिम्ब एवायमित्यनुमानं ॥ ४२ ॥

कः स्मरः कस्त्वमत्रेति संदेहे शोभयोस्तयोः ।
त्वय्येवार्थितया सेयं धत्ते चित्ते यथा युवां ॥ ४३ ॥

क इति । अथ यामयोर्द्वयोर्भवतोस्तुल्यया शोभया कृत्वाऽत्र द्वयोर्मध्ये स्मरः कः त्वं नलश्च क इति सादृश्यात् सन्देहे सति अत्रास्मिन् सन्देहे सति वा त्वय्येव विषये अर्थितया साभिलाषतया सेयं भैमी युवां द्वावपि स्मरनलौ चित्ते धत्ते । सख्यौ ह्यतिसदृशयोः काचमण्यादिपदार्थयोः सन्देहे एकतरपरित्यागे मणिरेव परित्यक्तः स्यात्तन्मा

भूदिति तथ्यपिंहित्वेनैव चायचिणंव घाचमपि न मुञ्चति । तथा तुल्य शोभत्वेन निश्चेतुमशक्यत्वात स्मरपरित्यागे भयानेव परित्यक्त स्मात्त्ना भूदिति त्वय्येव साञ्जिलापतया ह्वयापि न मुञ्चतीत्यर्थं । त्व- दर्थमेव धारयति न तु कामार्थं त्वामिति भाव । त्वयंति पाठे त्वया हेतुना याऽर्पिता तयेत्यर्थं ॥ ४३ ॥

त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वदर्शनात् ।
शङ्कया पङ्कजाक्षी त्वां दृगग्रेण स्पृशत्यसौ॥४४॥

पूर्णयेत्यादेरुत्तरमाह । त्वयीति । पङ्कजाक्षी असौ त्वयि न्यस्तस्य चित्तस्य दुराकर्षत्वस्याप्रत्यावर्तमानत्वस्य दर्शनाद्धेतो शङ्कया चित्तवत् पुनरप्रत्यावृत्तिभिया त्वा दृगग्रेण नेत्रप्रान्तेन स्पृशति पश्यति । न तु पूर्णया द्विलोचन्या, त्वयि न्यस्तेति अनुरागातिशय., पङ्कजाक्षीति दृशोरतिसौन्दर्यंञ्च सूचित । सुन्दरवस्तुन पुनरप्रत्यावृत्ती न- ष्टत्व इति च सूचित । शङ्कयेवेति प्रतीयमानोत्प्रेक्षा ॥ ४४ ॥

विलोकनात् प्रभृत्यस्या लग्न एवासि चक्षुषो ।
स्वेनालोकय शङ्का चेत् प्रत्यय. परवाचि क ४५

'नालोकते इत्यादेरुत्तरमाह ॥ विलोकनादिति । विलोकनात् प्र- भृति अनया प्रथम त्व यदा दृष्टोऽसि तदारभ्य त्व अस्याश्चक्षुषो लग्न एवासि । त्वामेव सदा पश्यति नान्यत् किञ्चिदपीति । अ- स्यास्त्वयि महती नेत्रप्रीतिरित्यर्थ. । एव सति मद्वचने इय मिथ्या वदतीति शङ्का अविश्वासश्चेत्तर्हि एतदीयचक्षुषोर्मध्ये अह वर्त्ते न वेति निश्चेतु स्वेनात्मनैवावलोकय एतदीयचक्षुषो पश्य अहमत्र वर्त्ते इत्यनुभवेनैव निर्द्धारयिष्यसीत्यर्थं । स्वेनालोकने हेतुमाह । परवाचि को नाम प्रत्ययो विश्वास:, अपि त्वनुभवयोग्येऽर्थे परवचनमप्रमाण- मेवेत्यर्थं । दृश्यकनीनिकाया सम्मुख द्रष्टुमवश्य प्रतिबिम्बो भवत्ये- वेति दर्शोक्ति । अपर्थं नेत्रलग्नत्वादेव नेत्रकज्जलवदीप्सितुमसाम- र्थ्यादिति गोपन इति त्वया सत्यमेवोक्तमित्यर्थं । अत्र चेच्छङ्का तर्हि स्वनेत्रलग्नमेव गोलकादि स्वयमालोकय तदा ज्ञास्यसि, यत परवा- चि च प्रत्यय: । विलोकनात् आरभ्यार्थयोगे पञ्चमी ॥ ४५ ॥

परीरम्भेऽनयाऽभ्य कुचकुङ्कुमसङ्क्रमं । त्वयि मे हृदयस्यैवं राग इत्युदितैव वाक् ॥ ४६ ॥

राग दर्शयत इत्यादेरुत्तरमाह ॥ परीति । अनया परीरम्भे गाढालिङ्गने क्रियमाणे तव हृदये कुचकुङ्कुमस्य सङ्क्रममारभ्याधक्रम्य तद्व्याजेन मे हृदयस्य मनसोऽथ च वक्षसस्त्वय्येव अनेन प्रकारेण रागोऽनुरागोऽथ च रक्तिमा, एतादृशी वागुदितैव, साक्षात् यद्यपि नोक्ता तथाप्युक्तप्रायमेवेत्यर्थः । गाढालिङ्गनं ह्यनुरागं विना न घटत इति गाढालिङ्गने कुचकुङ्कुमाङ्कुरागलेपकव्याजेन मम त्वय्येवानुरागो वर्तत इत्यन्तगतोऽनुरागभर एव प्रकटीकृत इतिभावः । हृदयस्यैवेति पाठे त्वय्येवेति योजना । त्वयि मे हृदयस्यैव रागो न तु वाचिक । सख्यादौ तु वाङ्मात्रेणैव रागो न तु हृदयस्येति वा । उदितैवेति पाठ उत्प्रेक्षा । अनया गाढालिङ्गनेन तव हृदये लग्नमिदं परिदृश्यमानं कुचकुङ्कुमादिकमेव सर्वं त्वयि रात्रिवृत्तान्तमस्मान् बोधयतीति वृथैव वञ्चयसीति सूचितं ॥ ४६ ॥

मनसाऽद्य भवन्नामकामसूक्तजपव्रती । शुद्धसूत्र सखीकण्ठश्लुम्बत्येकावलिच्छलात् ॥ ४७ ॥

का नामन्त्रयत इत्यादेरुत्तरमाह ॥ मनसेति । अद्य मत्सखी भैम्या कण्ठी मनसैव भवतो नलेति ते नाम तदेव कामसूक्तं स्मरस्य प्रकाशको मन्त्रस्तस्य जपः स एव व्रतं यस्यास्तीति तादृशं सन् एकावलिच्छलात् एकयष्टिकमुक्ताहारविशेषव्याजात् शुद्धसूत्रं पवित्रादिरचिता जपमालिका चुम्बति । भर्तृनामग्रहणनिषेधात् वाह्यत्र मानसो जप इति मानसजपे फलविशेषश्रवणाच्च मुक्ताहारजपमालिकया त्वन्नामैव मनसा जपतीति भावः । नलेति स्मरणमात्रेणैव कामोद्रेकात्तस्य कामसूक्तत्व ॥ ४७ ॥

अध्यासिते वयस्याया भवता महता हृदि । स्तनावन्तरसम्भ्रान्तौ निष्क्रान्तौ ब्रूमहे बहिः ४८

अस्या पीनस्तनेत्यादेरुत्तरमाह ॥ अधीति । महता नितरां गौरवयुक्तेनाथ च महापरिमाणेन भवता त्वया वयस्यायाः भैम्या हृदि अध्यासिते ऽधिष्ठिते सति अन्तर्हृदयमध्येऽमान्तौ स्थातुमशक्तौ स्तनौ हृदयात् बहिर्देशे निष्क्रान्तौ, इति वयं ब्रूमहे सम्भावयामः । यदाप्रभृति त्वं चित्ते लग्नस्तदाप्रभृत्यैवैतौ बहिर्दृश्येते तस्मात् पूर्वमन्तराऽवस्थितत्वाद्बहिर्न दृश्येते त्वदधिष्ठानानन्तरं तु बहिर्निर्गतौ इति सर्वेषामवकाशोऽभूत् न तु कुचयोस्तस्मादस्मानेवं प्रतारयसीति भावः । अन्योऽपि महताऽधिष्ठिते स्थाने स्थातुमशक्तो बहिर्निर्गच्छत्येव । बहिरपि यदादि त्वया हृदयं स्पृष्टं तदादि साटोपं निर्गताविति भावः । अध्यासिते हृद्यन्तरसमान्ताविति वान्वयः ॥ ४८ ॥

कुचौ दोषोज्झितावस्याः पीडितौ ग्रथितौ त्वया।

कथं दर्शयतामास्यं बृहन्तावावृतौ ह्रिया ॥४९॥

अधिगत्येत्यादेरुत्तरमाह ॥ कुचाविति । दोषेणोज्झितौ निर्दोषावथ च दोषायां रात्र्यां कूर्पासेन त्यक्तौ, तथा बृहन्तावतिपीवरौ, अत एव त्वया पाणिभ्यां पीडितौ नाहिंसौ ग्रथितौ नखैश्च क्षतयुक्तौ कृतावस्याः कुचौ दिने ह्रिया हेतुना आवृतौ वस्त्रेणाच्छादितौ सन्तौ आस्यं चूचुकाग्रं कथं दर्शयतां अपि तु न कथञ्चित् । रात्रौ हि सम्भोगसमये निर्विघ्नं स्तनदर्शनं भवेत् दिवा तु ह्रिया नखक्षतादिसम्भोगचिह्नदर्शनभिया च वस्त्रावृतत्वात् कथं नाम चूचुकाग्रस्यापि दर्शनं स्यादपि तु न कथञ्चिदित्यर्थः । दोषया रात्र्या त्यक्तौ रात्रेर्गतत्वात् हिमप्रकाशसम्बद्धौ अत एव ह्रिया वस्त्राच्छन्नत्वाद्दिवा वैमुख्यमेव तयोर्युक्तमित्यर्थः, इति वा । बहिःस्थितौ त्वामपि वैमुख्यासम्भवात् हृदयस्थितस्य तव स्वमुखं कथं दर्शयतामिति ह्रिया पराङ्मुखत्वाद्वा भैम्या कुचौ स्वमुखं न दर्शयतः । स्वाश्रयभूतस्य भैमीहृदयस्य वा कुचौ स्वमुखं न दर्शयतः । न हि कुचौ हृदयस्य सम्मुखौ भवतः । अन्योऽपि दोषोज्झितो निरपराधो लब्धप्रतिष्ठो धनादिग्रहणेन पीडितो नामादिकसंनेन शृङ्खलया लज्जितः कस्याप्यये मुखं न दर्शयति । ग्रथितौ नारकाद्रिवत्यादितम् ॥ ४९ ॥

इत्यसौ कलया सूक्तेः सिक्तः पीयूषवर्षिभिः ।
ईदृगेवेति पप्रच्छ प्रियामुल्लमितानना ॥ ५० ॥

इतीति । कलया पीयूषवर्षिभिरमृत क्षरद्भिरतिमधुरैः सूक्तेः शोभनवक्रोक्त्यादिरूपैर्योक्यैः सिक्तः सञ्जातगाढप्रेमभरोऽसौ नल उल्लमित पाणिना कर्ध्वीकृतमानन यस्यास्ता प्रिया भैमीं हे भैमि इद कलाधिपनमीदृगेवमेवेति सत्यमिति पप्रच्छ । उल्लमितेति ष्वलह्वलेति ( सि० कौ० धा० १२५ पत्रे ) मित्यपङ्ग पूर्वः ॥ ५० ॥

यमौ च प्रेयसीवक्त्रं पत्युरुन्नमयन् करः । चिरेण लब्धसन्धानमरविन्दमिवेन्दुना ॥ ५१ ॥

यमाविति । पत्यु करोऽरविन्दमिव यमौ । किङ्कुर्वन् प्रेयसीवक्त्रमुन्नमयन् । किम्भूतमरविन्द चिरेण बहुकालेन वैर विस्मृत्य निश्चयेरतया इन्दुना सह लब्ध सन्धान येन, अद्भुतोपमा । चन्द्रकमलयो सदा वैरित्व ॥ ५१ ॥

ह्रीणा च स्मयमाना च नमयन्ती पुनर्मुखं ।
दमयन्ती मुदे पत्युरत्युच्चैरभवत्तदा ॥ ५२ ॥

ह्रीणेति । नलोक्तिकलोक्तिवक्रोक्तिप्रत्युक्तिपरिहासेन ह्रीणा स्मयमाना चातएव लज्जाधर्षेन स्मितञ्च मलेन द्रष्टव्यमिति बुध्या वा अत्युच्चैर्नितरामुन्नमितमपि मुखं पुनर्नमयन्ती दमयन्ती तदा तस्मिन्नुन्नमनसमये पत्युर्मुदेऽभवत् । अत्युच्चैर्मुदेऽभूदिति वा । तादृशीं ता दृष्ट्वा नितरा हृष्टोऽभूदिति भाव ॥ ५२ ॥

भूयोऽपि भूपतिस्तस्याः सखीमाह स्म सस्मित ।
परिहासविलासाय स्पृहयालुः सहप्रियः ॥ ५३ ॥

भूय इति । प्रियया सह वर्तमानो भूयोऽपि पुनरपि वक्रोक्त्यादि परिहासविलासाय स्पृहयालुरभिलाषुको भूपतिस्तस्याः सखीं कला सस्मित यथा तथा आ हस्म । विलासाय स्पृहेरीप्सितः ( पा० १।४।३६ ) सम्प्रदानत्व । सहप्रिय वोपसर्जनस्येति ( पा० ६।३।८२ ) पाक्षिकत्वात् सादेशाभाव ॥ ५३ ॥

क्षन्तुं मन्तुं दिनस्यास्य वयस्येयं व्यवस्यतात्।
निशीव निशि यात्वर्थं यदाचरति नात्र नः ॥५४॥

क्षन्तुमिति। हे कले इयं तव वयस्या अस्य वर्तमानस्य दिनस्य मन्तुमपराधं क्षन्तुं सोढुं व्यवस्यतात् प्रयतताम्। कोऽपराधो दिनस्येत्यत आह। यद्यस्मादियं भैमी निशीव रात्राविव नोऽस्माकं निशि चुम्बन इति पठितस्य धातोरर्थमत्र दिने नाचरति, रात्रौ यथा मां निःशङ्कं चुम्बति तथा भयलोभ्यो लज्जया दिने नेति दिनस्यापराधस्तस्माद- स्यापराधं क्षमस्वेति प्रार्थित इत्यर्थः। व्यवस्यतामिति पाठे आत्मनेपदं चिन्त्यं ॥ ५४ ॥

दिनेनास्या मुखस्येन्दुः सखा यदि तिरस्कृतः।
तत्कृताः शतपत्राणां तन्मित्राणामपि श्रियः ॥५५॥

दिनेनेति। दिनेनास्या मुखस्य सखा इन्दुर्यदि तिरस्कृतः निष्प्रभीकृत्य पराभूतः, एवमपराधश्चेन्मन्यते तर्हि तस्य भैमीमुखस्य सादृश्यान्मित्रभूतानां बहूनां शतपत्राणां कमलानां श्रियो विकासलक्ष्म्योऽथ च सम्पदोऽपि तेन कृताः। अनेकोपकारकारिण्येकस्मिन् पराभूते यदि बहूनां क्षेम भवति तदा महानुपकार एवेति त्वन्मुखमित्रभूतानां कमलानां प्रकाशकत्वाद्दिनेनोपकार एव कृतो नापकारस्तस्माद्दिनस्यापराधो नास्तीति त्वन्मुखचुम्बनं दिनेऽपि कुर्विति भावः। एकस्मिन् धर्षितेऽपाये बहूनामपकारिणि बहूनां भवति क्षेमं तस्य पुण्यप्रदो वध इत्याद्युक्तेः। तत्कृता इति पाठे दिनस्य मित्रभूतानां सूर्यत्वात् मित्र स्योकानां कमलानां, अथ च शतसङ्ख्यानि बहूनि पत्राणि वाहनानि येषां मित्राणां श्रियोऽपि तेन चन्द्रेण कृतास्छिन्नाः। रात्रौ सङ्कोचकरत्वात् दिनेन तु त्वन्मुखमित्रं चन्द्रो धर्षितश्चन्द्रेण तु दिनमित्राणि च तानि कमलानि धर्षितानीति चन्द्रस्य स्वयं वैरनिर्यातनं कृतमेवेति दिनस्यापराधोऽन्यथा न गणनीय इत्यर्थः। त्वन्मुखमित्राणां कमलानां श्रियोऽपि छिन्ना अपि तु न, किन्त्वतिवृद्धिमेव प्रापितास्तस्मात् पूर्णं यदेवापराधो नास्तीति काकुर्वा। त्वन्मुखमित्रं चन्द्रो यदि दिनेन ति

रक्तत्तर्हि दिनमित्राणां कमलानामपि श्रियस्तैन त्वन्मुखेन छिन्ना, स्वकान्त्या तेषां निःश्रीकरणात् वैरं निर्य्यातितमेवेति दिनस्यापराधो न गणनीय इति भाव इति वा ॥ ५५ ॥

लज्जितानि जितान्येव मयि क्रीडितयाऽनया ।
प्रत्यावृत्तानि तान्येव पृच्छ सम्प्रति कम्प्रति ५६

लज्जितानीति । हे कान्ते अनया मयि विषये नावल्लज्जितानि लज्जाविशेषा जितान्येव निरस्तान्येव । यतो रात्रौ क्रीडितया कृतसुरतक्रीडया मयि प्रदर्शितबहुविधसुरतचातुर्य्यया, तस्मात् सम्प्रति तानि लज्जितानि यत् पुनः प्रत्यावृत्तानि तत् कं प्रति तद्दिश्येति त्वमेनां पृच्छ, मयाऽस्याः सुरतचातुर्य्यधाष्ट्यं बहुवार दृष्टमेव । त्वामेव प्रति इयं लज्जत इति जानीहीति भावः ॥ ५६ ॥

निशि दष्टाधरायापि सैषा मह्यं न कुप्यतु ।
क्व फलं दश्यते बिम्बीलता कीराय कुप्यति ५७

इदानीं प्राकृतनृपेन स्वापराधमाशङ्क्य परिहरति ॥ निशीति । सैषा निशि दष्टः अधरो येन तस्मादपि मह्यं न कुप्यतु न कुप्यतु, यस्मात् पक्वबिम्बी फलं दश्यते आस्वाद्यते, कीराय शुकाय बिम्बीलता क्व कुप्यति, अपि तु न कुतोऽपि । किन्तु स्वमस्यमेव शोभाहेतवे तस्मै स्निह्यत्येवेत्यर्थः । दन्तक्षते कृतेऽपि प्रत्युतस्वप्रत्युज्जीवितरागाधरशाजाकारित्वेन मह्यं प्रसाद एव युक्तो न तु कोप इति भावः । कुप्यतीति पाठ मिद्धपरकारेणोक्तिः । मह्यं कीराय च क्रुधद्रुहेति (पा० १।४।३७) चतुर्थी ॥ ५७ ॥

शृणीपदसुचिह्ना श्रीश्चारिता कुम्भिकुम्भयोः ।
एतयैतस्याः कुचाभ्यां सन्तप्तस्तौ पीडयामि न ५८

शृणीति । एतस्याः कुचाभ्यां शृणीपदं अङ्कुशाघातक्षतमेव शोभनं चिह्नं यस्याः, अथ चाङ्कुशाकारनखपदविशेष एव शोभनं चिह्नं ययोः सा कुम्भिनः करिणः कुम्भयोः श्रीः शोभासम्पद् यस्माच्चारिता, पश्य, एतत्कुचयोरङ्कुशाकारं नखं यदि नास्ति तर्हि त्वमेव विलोकय ।

तत्तस्मान्नृपो दण्ड्यदण्डकरणाधिकारी अहं तौ स्तेयकारिणावेतौ कुचौ न पीडयामि, अपि तु पीडयाम्येव । तयोः पीडनं दण्डरूपनखक्षतादिरूपं चोचितमित्यर्थः । राज्ञा हि चोरस्य दण्डः क्रियते । ममापराधो नास्तीति भावः । अङ्कुशोऽस्त्री शृणिर्द्वयोरित्यमरः । शृणी कृदिकारादिति (पा०४।१।४५वा०) ङीप् ॥ ५८ ॥

अधरामृतपानेन ममास्यमपराध्यतु । मूर्द्धा कि-
मपराद्धं यन् पादौ नाप्नोति चुम्बितुं ॥ ५९ ॥

अधरेति । ममास्य मुखमेतस्या अधरामृतस्य पानेन कृत्वाऽपराध्यतु, मम मुखस्यापराधोऽङ्गीकृत इत्यर्थः । मम मूर्द्धा पुनः किमपराद्धं यो मस्तकं प्रणामहेतुनाऽस्या पादौ चुम्बितुं स्प्रष्टुमपि नाप्नोति, नमस्कर्तुमपि न ददाति कोऽपराधो तेन कृत इति पृच्छेत्यर्थः ५९॥

अपराद्धं भवद्वाणीभ्राजिना पृच्छ किं मया ।
वीणायाः परुषं यन्मां कलकण्ठी च निष्ठुरं ६०

अपराद्धमिति । भवद्वाणीभ्राजिना त्वद्वचनाकर्णनशीलेन मया वीणायाः कोकिलायाश्च तव वा किमपराद्धं कोवाऽपराधः कृत इति कले त्वं भैमीमनेन किमपराद्धमिति पृच्छ । यद्यस्माद्वीणा साम्प्रतं परुषमाह, कलकण्ठी कोकिला च मां प्रति निष्ठुरं ब्रूते तस्मादपराधं न्मा ब्यतें । येन हि यस्याः कश्चिदपराधः क्रियते तं प्रति सा तदीयो वा तस्मै कश्चित्परुषं भाषते । अथच वीणाकोकिलयोः स्वरे यस्मान्माधुर्यं नास्ति तस्मात् पश्चादागत्य निभृतं मयाऽमरछभाषमाणाया भवत्या भारती श्रुता न त्वन्येन केनाप्याशयेनेति । सोऽप्यपराधो न भवतीत्यर्थः । वीणाकोकिलानापापेनया भैमीवाणी मधुरतरा त्वत्तद्वाणीमाधुर्यं मया यद्नुभूतं, इदानीन्तु त्वां दृष्ट्वा मां प्रति तूष्णी मास्ति इति । परुषं निष्ठुरं च क्रियाविशेषणं । परुषं निस्नेहं निष्ठुरं सतिरस्कारं । कलकण्ठी अङ्गगात्रेति (पा०४।१।५४।वा०) ङीप् ॥ ६० ॥

सेयमालिजने स्वस्य त्वयि विश्वस्य भाषता ।
ममतानुमतास्मासु पुनः प्रसमय्यं ते कुतः ६१

येति । हे कले सेय स्वस्याः आगमे त्वयि विषये विश्वस्य भापता कथं यतु । अस्मासु विषये अनुमताऽङ्गीकृता ममता स्वीयतामति पुन स्तुत प्रसज्यते विस्मर्यते इति त्वं पृच्छ । इयं च त्वयि विश्वस्य कथं यत्वित्यर्थः । रात्रौ रतानुकूल्यमाचरितमनया इदानीं तु तव समक्ष प्रातिकूल्यं किमित्याचर्यं त इति भाव इत्युपालम्भनभङ्गिः । प्रशब्दस्य गतार्थतया विस्मरणार्थता ॥ ६१ ॥

अथोपवदने भैम्याः स्वकर्णोपनयच्छलात् । स
न्निधाप्य श्रुतौ तस्या निजास्यं सा जगाद ताः ॥ ६२ ॥

अथेति । अथ नलोक्त्यनन्तरं सा कला भैम्या उपवदने वदनस-मीपे स्वकर्णस्य उपनयच्छलात् समीपनयनव्याजात् तस्या भैम्याः श्रुतौ कर्णे निजास्यं सन्निधाप्य सन्निहितं कृत्वा सा जगाद । अवदन्त्या अपि भैम्या वचनं शृण्वतीव कर्णं भैमीमुखसमीपे कृत्वा अनन्तरञ्च तद्वच प्रतिवचनमेकान्ते वितरन्तीव भैमीकर्णसमीपे निजमुखं कृत्वा भैमीं जगादेत्यर्थः । इयकानुकथकजातिः । उपवदनेऽव्ययीभावे सप्तम्या अम्भावाभाव । सन्निधाप्य हेतुमण्यन्तात्ल्यप् ॥ ६२ ॥

अहो मयि रहोवृत्तं धूर्त्ते किमपि नान्यथा ।
आस्व सत्यमिमं तत्ते भूपमेवाभिधापये ॥ ६३ ॥

अहो इति । हे धूर्त्ते वचनचतुरे त्वं मयि विषये रहोवृत्तम् एकान्ते निष्पन्नमालिङ्गनादि किमप्येकमपि अल्पमपि च नान्यथा, अहो आश्चर्यं एतादृशी धूर्ता काऽपि न दृष्टेत्यर्थः । त्वं आस्व तिष्ठ तिष्ठ, यद्यपि त्वं नाचकथाः, तथापि ते तव तद्रहोवृत्तं सत्यं सत्यवादिनमिमं भूपं नलमेवाभिधापय वादयामि । अहमपि त्वया यतो वञ्चिता तथा किञ्चिद्रचयिष्यामि यथा नल एव स्वयं त्वदीयसुरतप्रागल्भं प्रकटयति मा वञ्चयित्वा कथङ्कार स्थास्यसि क्वयास्यसि क्षणमात्र स्थिरा भवति सरोषोक्तिः । सत्यमिति पाठे आभिधापये नलं सत्यं जानीहीत्यर्थः । आस्वसत्यमिति पाठे इमं भूपमेव तमेवेदंसमक्ष सभाया जनसमक्षं वञ्चनाहं तद्रहोवृत्तमास्विदानीमेवाभिधापये तिष्ठ तिष्ठ-

त्यर्थं । भुव उकविनश्चेति ( पा० १ । ४ । ५१ ) कर्मत्वं अभिधा- पये अभिपूर्वाद्धापनार्थाद्धातोर्हेतुमण्णिचि णिचश्चेति ( पा० १ । ३ । ७४ ) तङ् ॥ ६३ ॥

स्मरशास्त्रमधीयाना शिक्षिताऽसि मयैव यं । अ-
गोपि सोऽपि कृत्वा किं दाम्पत्यव्यत्ययस्त्वया ॥६४॥

स्मरेति । स्मरशास्त्रं वात्स्यायनादिप्रणीतं शास्त्रं अधीयाना पठन्ती त्वं तत्र प्रतिपादितं यं दाम्पत्यव्यत्ययं विपरीतसम्भोगं मयैव शिक्षिताऽसि । स दाम्पत्यव्यत्ययः त्वया कृत्वाऽपि निष्पाद्यापि मम पुरस्तात् किमगोपि गोपितः कथयेति प्रश्नः । नितरां धाष्ट्यंकथनमस्य मया शिक्षितं विपरीतसुरतं कृत्वाऽपि ममैव पुरस्तादकृतमेव कथयसीति नितरां चतुरचतुराऽसीति भावः । स्मरशास्त्रं नलोकेति ( पा० २ । ३ । ६९ ) षष्ठीनिषेधः । दम्पत्योर्भावः सम्भोग इति यावत् । प- त्यन्तपुरोहितादिभ्य इति ( पा० ५ । १ । १२८ ) यक् ॥ ६४ ॥

मौनिन्यामेव सा तस्यां तदुक्तीरिव शृण्वती ।
वादं वादं मुहुश्चक्रे हुं हुमित्यन्तरान्तरा ॥६५॥

मौनिन्यामिति । सा कला तस्यां भैम्यां मौनिन्यामवदन्त्यामेव स- त्यां तदुक्तीर्भैमीवचनानि शृण्वतीव भैम्यामवदन्त्यामपि भैमी मां प्र- ति किमपि वदतीत्यहं शृणोमीति नलस्मृति प्रकटयन्ती वादं वादं भैमीवचनप्रतिवचनव्याजेन स्वयमेव किञ्चिदुक्त्वोक्त्वा अन्तराऽन्तरा मध्ये मध्ये मुहुर्मुहुः हुं हुं इति शब्दं चक्रे । यदत्यविपरीत्यादियं- त्यमासस्य सत्यत्वबुद्धिजननार्थं पूर्वं रहस्यकल्पितमेव श्रवणादरदान- रीतिप्रकटनपरत्वादिति भावः । वादं वादं आभीक्ष्ण्ये णमुल् चेति ( पा० ३ । ४ । २२ ) द्विर्वचनञ्च ॥ ६५ ॥

अथासावभिसृत्यास्या रतिप्रागल्भ्यशंसिनी ।
सख्या लीलाम्बुजाघातमनुभूयालपन्नृपं ॥६६॥

अथेति । अथ अयणप्रकारप्रकटनानन्तरं असौ कला नृपं अभिसृत्य भैम्याः सकाशात् नलं प्रति गत्वा वक्ष्यमाणमेव अवोचत् । किम्भूता,

अस्या भैम्या रतिप्रागल्भ्यं हसति वर्णयति तच्छीला विपरीतसुरतमपि करोषि साम्प्रतं नितरां धृष्टा जातासीति भैमीकर्णे प्रेमभाषणं कुर्वा-णा, अत एव तस्या भैम्या लीलाम्बुजेनाघातमनुभूय प्राप्य रतिप्रा-गल्भ्यं नलेन ग्रामयति तच्छीलंति च । अभिनी केवलाईतुमत्यन्ताद्वा हसेत्ताच्छील्ये णिनिः ॥ ६६ ॥

दृष्टं दृष्टं महाराज त्वदर्थाभ्यर्थना क्रुधा । य
त्ताडयति मामेष यद्वा तर्जयति भ्रुवा ॥ ६७ ॥

दृष्टमिति । हे महाराज सार्वभौम इय नलाय कस्मात् विवरीति त्वदर्थं त्वत्सम्भोगमभ्यर्थितया क्रियमाणमभ्यर्थनं तस्माज्जातया क्रुधा कोपेन हेतुना मामेव लीलाकमलाघातप्रकारेण यत्ताडयति यद्वा मम भ्रुवा कटाक्षेण तर्जयति भीषयते तत्त्वया दृष्टं दृष्टं त्वं पश्य पश्ये-त्यर्थं । त्वयि परपुरुषबुद्धिं कृत्वा तत्र मा कथ प्रजल्पसि यथा मां ता-डयति ज्ञापेव चेत पर मा ताडीरिति तर्जयती च तत्त्वं पश्येति भाव दृष्टं दृष्टं सम्भ्रमे द्विरुक्तिः ॥ ६७ ॥

वदत्यचिह्नं चिह्नेन त्वया केनैष नैषधः । शक्रे
शक्रः स्वयं कृत्वा मायामायातवानयम् ॥ ६७ ॥

वदतीति । हे राजन् इयं वदति वदति । इति किं हे कले यदर्थ-मर्थना त्वं करोषि एष नैषध त्वया केन चिह्नेन अचिह्नं निर्द्धारि-त, तादृक् अयं शक्रः स्वयंवरकाल इव माया नलरूपं कृत्वा स्व-यमायातवान् इति अहं शङ्के त्वदर्थमर्थना कुर्वन्त्या मम कर्णे इति वदति ॥ ६८ ॥

स्वर्णदीस्वर्णपद्मिन्याः पद्मदानं निदानताम् । न
यतीयं त्वदिन्द्रत्वे दिवश्चागमनं च ते ॥ ६९ ॥

भैमी त्वदिन्द्रत्वे इन्द्रप्रमाणमाह ॥ स्वर्णदीति । इयं स्वर्णद्यां म-न्दाकिन्यां स्वर्णपद्मिन्याः पद्मस्यात्मनो दानं, दिव स्वर्गात्ते भूमिं प्रति आगमनञ्च तवेन्द्रत्वे निदानता प्रथमकारणता नयति प्रापयति। न हि मनुष्यस्य स्वर्णदीस्वर्णपद्मिनीसुवर्णकमलानयनं स्वर्गादागमने

च सामर्थ्यं दृष्टं । तस्मान्नलरूपं धृत्वा पूर्वं इन्द्र एवायमागत इति । एतदर्थं मत्प्रत्ययेन त्वया कर्तुमयुक्ता इतीयं मत्कथाँ कथयतीति, भावः । स्वर्णदीति पूर्वपदात्संज्ञायामग इति ( पा०८।४।३ ) णत्वं ॥६९॥

भापते नैषधच्छायामायाऽसापि मया हरिः ।
ग्राह चाहमहल्यायां तस्याकर्णिततुर्नयः ॥७०॥

भापत इति । हरिरिन्द्रस्य नैषधस्य छ याया कान्तिं माया कापट्य मया स्वयंवरकाले अमापि ज्ञातेति इय भापते । स्वयंवरकाले तव परस्त्रीत्वाभावात् नलरूपं धृत, इदानीन्तु परस्त्रीत्वमिदैव न करिष्यतीति मया प्रत्युक्ता सती इय भैमी अहल्यायां गौतमपत्न्यां तस्येन्द्रस्याकर्णितो व्यभिचारलक्षणो दुष्टो नयो यया एवंविधाऽयमिति माह ब्रूते । परस्त्रीत्वभीतिरपि तस्य नास्ति तस्मादिन्द्र एवायमिति त्वया ऽप्यर्थना न कार्येति मां प्रति भापत इति भावः । नैषधस्येव छाया यस्यामिति मायाविशेषणेन पृथग्वा ॥ ७० ॥

सम्भावयति वैदर्भी दर्भाग्राभमतिस्तव । जम्भा - रित्वं कराम्भोजाद्दम्भोलिपरिरम्भिणः ॥ ७१ ॥

मतिरिति । कुशाग्राभा मतिर्यस्याः सा वैदर्भी दम्भोलि साग्रं भीमस्यसूचकं वज्र तत्परिरम्भिणो युक्तात् कराम्भोजाद्धेतोस्तव जम्भारित्वमिन्द्रत्वं सम्भावयति, तर्कयति न त्वमिन्द्रो वज्रहस्तः । रेखारूपादपि वज्रादेवमनुमानात् कुशाग्रबुद्धित्वमस्याः ॥ ७१ ॥

अनन्यसाक्षिकाः साक्षात्तदाख्याय रहःक्रियाः ।
शङ्कातङ्कं नुदैतस्या यदि त्वं तत्त्वनैषध ॥७२॥

अनन्येति । तस्मात्त्वं राजन् त्वं यदि तत्त्वेन नैषधो भवसि न तु छद्मना, तर्हि न विद्यतेऽन्यो भैमीनलव्यतिरिक्तः साक्षी यासु युवाभ्यामेव ज्ञायन्त इत्यर्थः । तादृशी रहः क्रिया एकान्तक्रीडाः साक्षात् स्वयमेवाख्य च स्वदूत्यपूर्ति विना आख्याय प्रकटं कथयित्वा एतस्याः शङ्कातङ्कमिन्द्रशापाशङ्कनजनितं त्वं नुद निराकुरु एतत्प्रत्यायिको क्रो-

ह्यासमयचेष्टानुक्ता ह्यस्माकमेतस्याः सन्देहमपनुदेत्यर्थः । सत्यमेवेष इति वा पाठः ॥ ७२ ॥

इति तत्सुप्रयुक्तार्थं निह्नुतीकृतकैतवां । वाच
माकर्ण्य तद्भावे संशयालुः शशंस सः ॥ ७३ ॥

इतीति । इत्युक्तप्रकारेण तया कलया सुप्रयुक्तत्वेन कैतवद्योतकहास्यादिविकारव्यतिरेकेण सुवर्णकमलदानादिकृत्वनिश्चायकोपपत्तिमत्तया च सम्यक् प्रयुक्तत्वेन निन्हुतीकृत आच्छन्न कैतव छद्म यस्यास्ता कलायाचमाकर्ण्य तद्भावे नयीन्द्रस्यान्यैवेव युक्तत्वादि न करोति किमिति भैम्याः संशयालुः सन्दिहानः स नलः भैमीत्वाल्लिनिरासार्थं शशंस स्वोपकृतमित्यर्थः ॥ ७३ ॥

• स्मरसि च्छद्मनिद्रालुर्मया नाभौ ग्रुयार्पणात् ।
यदानन्दोल्लसल्लोमा पद्मनाभीभविष्यसि ॥ ७४ ॥

स्मरसीति । हे भैमि छद्मना निद्रालुर्निद्रायाः अलीकमेवाङ्गीकृतनिद्रास्त्व मया नाभौ शयस्य करकमलस्यार्पणाद्धेतोः आनन्देन सात्त्विकभावेनोल्लसन्ति लोमानि यस्याः मत्करनाभिस्पर्शेन जातरोमाञ्चा सती पद्मयुक्तनाभिर्यस्यास्तादृशी भविष्यसि सञ्जाता, तत् स्मरसि । पाणिरोमाञ्चसम्बन्धात् सकण्टककमलसम्बन्धसम्भावनया पद्मनाभीत्वं तव यज्जातं तत्स्मरेत्यर्थः । नलपाणिः पद्मस्यानीय रोमाञ्चश्च ताकण्टकस्यानीयः । अथ च विकसितकमलरसतुल्यरोमाञ्चोद्गमात् पद्ममिव नाभिर्यस्यास्तादृशा जाताऽसि तत्स्मर । ग्रयार्पण रोमाञ्चोद्गमे हेतुः । अथ च नाभौ ग्रुयार्पणाद्पद्मनाभः पद्मनाभः श्रीविष्णुर्भविष्यसि । पद्मनाभी भविष्यसीति च्विः । तत् स्मरसि मत्तो करकमलधारणाच्छ्रीविष्णुर्जाताऽसि । न हि विष्णु विनाऽन्यस्य नाभौ कमलमस्तीत्यर्थः । निद्रिताऽसीति बुद्ध्या वसनस्रसनार्थं नाभिसमीपे मया करेऽर्पिते तत्स्पर्शाज्जातसात्त्विकरोमाञ्चा जाताऽसि तत् स्मरसि भावः । आनन्दोल्लासि लोमेति निद्राया अलीकत्वं द्योतितं । न हि निद्रायाः सत्यत्वे करस्पर्शाद्रोमाञ्चोद्गमो भवति । भैमीपक्षेऽपि पद्म-

तृप्तोऽधरपानेषु रसनामपि वञ्चयन्नव ॥ ७८ ॥

प्रस्मृतमिति । हे भैमि मोहनेन सुरतेन विशेषेण मोहितः सुरतपरवश. मोहनकारिणा कामबाणेन मोहितो निरस्तविवेकोऽहं तवाधरपानेषु ध्यतृप्त सन् तव रसना जिह्वामपि तत्त्वया तावत् खादत्वे न प्रस्मृत । जिह्वाखण्डनमपि कामशास्त्रोक्तमिति ॥ ७८ ॥

त्वत्कुचार्द्रनखाङ्कस्य मुद्रामालिङ्गनोत्थिता ।

स्मरेः स्वहृदि यन्स्मेरमखी. शिल्पं तवाङ्गतं ७९

त्वदिति । अह स्वहृदयं तयालिङ्गनात्थिता तव कुचे तात्कालिकत्वादार्द्रस्याशुक्तरुधिरस्य मया कृतस्य नखाङ्कस्य मुद्रा नखक्षतदर्शनादेव स्मेरमुखी हास्यपरास्तव सखी. प्रति तव शिल्प भवत्सख्या मेदं नखक्षत कृत पश्यतेति स्वशिल्पाणां यदद्भुत तत्स्मरे चिन्तये । स्मेर इति पाठे स्मेर मन्नहमित्यर्थ, सखी मुख्य कर्म । शिल्पमिति शाकपिनश्चेति (पा०१।४।५१) कर्मत्व ॥ ७९ ॥

त्वयाऽन्य : क्रीडयन्मध्ये मधुगोष्ठि रुषेङ्गित. । वेत्सि तासा पुरा मूढ्वा त्वत्पादे यत्किलास्खलम् ८०

त्वयेति । मधुगोष्ठ्या मद्यशालाया मध्ये मद्यसहपानावसरे अन्या सपत्नी क्रीडयन् त्वया रुषा रोषकृपितया दृशा इंगितो ऽह तासा स पत्नीना पुर मत्तत्वेन किल मद्यमत्तत्वात् स्खलनव्याजेन त्वत्पादे मूर्ध्ना यदस्खल यदपत तद्वेत्सि जानासि । स्खलनव्याजेन प्रणामेन त्वा प्रसादितवान् अस्मि तत्स्मरेत्यर्थइति भाव. । मध्येमधुगोष्टि पारे मध्या षष्ठ्या वेति (पा०२।१।१८) समास. ॥ ८० ॥

त्वरथ मय्यागते प्रोष्य यदन्यां पश्यति ह्रार्दिनि ।

अचुम्बीरालिमालिङ्ग्य तस्यां केलिमुदा किल८१

त्वयेति । मयि प्रोष्य विजययात्रा कृत्वा आगते सय हार्दिनि मे मन्मथरत्ने त्वा पश्यति सति आलि सखी आलिङ्ग्य अन्या प्रति तस्या केलिमुदा हर्षेण किल विलासप्रकारव्याजेन यत्त्वया अचुम्बी त

इत्य स्मरसि । कामशास्त्राभ्यासकौशलवशादमस्यालिङ्गनचुम्बनव्याजे न मा प्रत्यालिङ्गनचुम्बनद्वारा स्वप्नेमजर यत् सूचितवत्यसि तत्स्मरेति भाव. । हे हार्दिनि इति मैमीसम्बुद्धिर्वा । प्रोष्य प्रपूर्वादृरो क्तोल्य-पि यजादित्वात् सम्प्रसारण । हार्दिनि हृदयस्य हृल्लेखेति (पा०६।३। ५०) हृद्भाव ॥ ८१ ॥

जागर्त्ति तत्र संस्कारः स्वमुखाद्भवदानने । नि
क्षिप्यायाचिपं यत्त्वां न्यायात्ताम्बूलफालिका ८२

जागर्तीति । मह ताम्बूलस्य चर्वितपूगफलनागवल्लीदलस्य फालिका शकलानि स्वमुखात् सकाशाद्भवत्या आनने निक्षिप्य निधाय य-दीयां निक्षेप स तस्मै दातव्याऽन्यथा दण्ड्य इति न्यायाच्छास्त्रोक्त-युक्तेयता ताम्बूलफालिका मदीया पुनर्मह्य देहीति याचितवान् तत्र विषये स्मरणकारणभूतो भावनाख्य संस्कारो जागर्त्ति स्फुरद्रूपो वर्तते स्मरसि किमित्यर्थ इति प्रश्न ॥ ८२ ॥

चित्ते तदस्ति कच्चिन्मे नखज मयि यत् क्रुधा ।
प्रागभाग्राधिगमागःस्थे त्वया शम्याकृत कृत ८३

चित्त इति । मयि प्राक् त्वत्प्राप्तसुरतान्तसुखायामेव सत्या यो भायाधिगम सुरतान्तसुखप्राप्तिं तद्रूपे आगस्यापराधे तिष्ठतीति एव-म्भूते सति मयि विषये वा समरतस्यैव सुराऽन्तस्याद्विपमरतस्यासुरहे तुत्वात् क्रुधा मध्य एव सुराजन्याद्रोषाद्धेतो नखज क्षत त्वया यत् श म्याकृत । प्रथम कालदृष्टे क्षेत्रे पुनरपि सीताद्वदारणप्रथमकृष्टभूम्या पुन· कर्षणवत् प्रथमकृतनखक्षतमध्य एव पुनरपि गाढतर नखक्षत य द्दारोपित तत्ते चित्ते अस्ति कच्चित् तत्स्मरेत्यर्थ । शम्याकृत द्वितीये-स्यादित्यगरः शम्याकृत कृषो द्वितीयेति (पा०५।४।५८) डाच् तत्तथा प्रयोग· ॥ ८३ ॥

त्वद्दिशि नियमेनैव निशि पार्श्वविवर्त्तिनीः ।
स्वप्नप्रत्यस्तमैयुष्यं सख्ये भौख्यं स्मराग्रयोः ८४

स्वेति । स्वीयस्वीयदिशो विनिमयेनैव परिवर्त्तनेनैव निशि पार्श्वयिपरिवर्तिनोर्यामदक्षिणकुक्षिपरिवर्त्तनशीलयोर्न तु यथावस्थितयो सम्मुखयोरेवैवम्भूतयो ध्यायवोस्तव मम च स्वप्नेऽपि निद्रास्वपि मध्ये ध्वस्तं त्यक्तवैमुख्यं पराङ्मुखत्वं यत्र तादृशो मत्ये मैत्रे यत्सौख्यं सुखमुखित्वं वा तत्स्मर । सम्मुखयोर्हि यथावस्थितयोरेव पार्श्वपरिवर्त्तिनोर्द्वयोरपि पृष्ठभागघटनापराङ्मुखत्वमेव स्यादिति स्वस्वदिग्विनिमयपूर्वकमेव पार्श्वपरिवर्त्तनेनैव वैमुख्याभावान्निद्रासमयेऽपि साम्मुख्येन यदावयोर्मैत्र्यं तत्स्मरेत्यर्थः । स्वदिग्विनिमयेन पार्श्वपरिवर्त्तनं वाऽन्योन्यमाम्मुख्यमेव भवतीति सर्वं सात्विकं । सौख्य स्वार्थे प्राये वा ष्यञ् ॥ ८४ ॥

क्षणं प्राप्य सदस्येव नृणां विमनितेक्षणं । दर्शिताधरमङ्गुष्ठा ध्याय यन्मामतर्जयः ॥ ८५ ॥

क्षणमिति । सदस्येव सभायामेव वर्त्तमानाऽपि त्व सभास्थाना नृणां विमनितानि कार्यान्तरदर्शनपराणि कृतानि ईक्षणानि यत्र येन वा तादृशं क्षणं अवसरं नृत्ताद्युत्सवं वा प्राप्य सद्य अङ्गुल्यादिना दर्शितोऽधरे वर्त्तमानो मङ्गुष्ठो मत्कृतो दन्तव्रणो यया एवम्भूता सती तर्जन्यादिना मां यदतर्जयः ध्याय स्मर । विमनितति तत्करोतीति ( पा० ३ । १ । २६ । वा० ) णिचि प्रातिपदिकेति सि० कौ० चु० १५१ इष्टवद्भावाट्टिलोपः ॥ ८५ ॥

तथाऽवलोक्य नीलाब्जनालभ्रमणविभ्रमात् । करौ योजयताऽध्येहि यन्मयाऽसि प्रसादिता ॥ ८६ ॥

तथेति । तथाऽधरदन्तक्षतदर्शनपूर्वं तर्जनप्रकारमालोक्य लीलाब्जनालस्य कराभ्यां भ्रमणरूपाद्विभ्रमात् सद्व्याजात् प्रणामभ्रमाद्वाञ्जलिबन्धनरूपेण करौ योजयता संयुक्तौ कुर्वता मया क्षापत्याजनपूर्वं यत्प्रसादिताऽसि तदध्येहि स्मरेत्यर्थः । इक् स्मरणे ॥ ८६ ॥

ताम्बूलदानमन्यस्तकरजं करपङ्कजे । न मम स्मरसि प्रायस्तव नैव स्मरामि तत् ॥ ८७ ॥

ताम्बूलेति । त्वं त्वदीयकरपङ्कजे मम ताम्बूलदानं अन्यस्तकरज गाढक्षतनखक्षतं प्रायो बाहुल्येन न स्मरसि । अहमपि मदीयपाणिपद्मे त्वत्कृतं तृषाच्छेदकं तत्ताम्बूलदानं अक्षिप्तनखक्षतं यथा तथा बाहुल्येन नैव स्मरामि किन्त्वन्योन्यवीटिकादानक्षणे प्रेमभरादत्याणिपद्मयोरारोपितनखक्षतमेव सदा ताम्बूलदानमावयोस्तत्स्मरेति भावः ॥ ८७ ॥

तदध्येहि मृषोद्य मां हित्वा यत्र गता सखी ।
तत्रापि मे गतस्याग्रे लीलयैवाच्छिनस्तृणं ॥८८॥

तदिति । कमप्यपराधं कृत्वाप्यहमेतन्नाकार्षमित्यादि मृषोद्य अलीकजल्पिनं मां कोपेन हित्वा सखीं प्रति गता त्वं तत्रापि सखीसमीपे त्वदीयपृष्ठदेशानुवर्तित्वेन गतस्य मे अग्रे लीलयैव स्वभावेनैव यत्तृणं अच्छिनः चिच्छेद तदध्येहीति पूर्ववत् । अथ मत्कृत्यलीकभाषिणस्त्वयाह न काऽपि त्वं मम न कोऽपि इति मैत्रीविच्छेदसूचकं तृणच्छेदं यथा बालकाः कुर्वन्ति तद्वदत्र त्वयाऽपि कृतमिति स्मरेत्यर्थः । मृषोद्य राजसूयेति ( पा० ३ । १ । ११४ ) निपातः ॥ ८८ ॥

स्मरसि प्रेयसि प्रायो यद्द्वितीयरतासहा । शु-
चिरात्रीत्युपालब्धा त्वं मया पिकनादिनी ८९

स्मरसीति । हे प्रेयसि बालत्वात्सौकुमार्यविशेषाच्च यत् द्वितीयरताभिलाषिणोऽपि मम द्वितीयस्य रतस्यासहा तथा पिकवन्नदति तच्छीला कोकिलतुल्यकूजना त्वं मया शुचिरात्री ग्रीष्मर्तुसम्बन्धिनी रात्रीति उपालब्धा सोपालम्भमाभाषिताऽसि तत्प्रायः स्मरसि कथयेत्यर्थः । शुचिरात्रिरपि स्वल्पप्रमाणत्वादेकवारसुरतेनैव जातप्रभातत्वात्, द्वितीयसुरतासहा । वसन्तनैकट्याच्च पिकनादोऽस्यां वर्तत इति । तत्रापि प्रभाते कोकिलालापो भवतीत्यर्थः । यद्वा वसन्तस्यातीतत्वात्कोकिलानामभावतः पिकव्यतिरिक्ता पक्षिण अपिकास्तस्मादमुकाः ॥ ८९ ॥

भुञ्जानस्य तव निम्बं परिवेविषती मयी ।

सपत्नीष्वपि मे राग सम्भाव्य स्वरुषः स्मरः॥१०

भुञ्जानस्येति । मधौ वसन्ते नव नूतनसमागतपत्रपुष्पादिक निम्ब भुञ्जानस्य मे सपत्नीष्वपि राग प्रीति सम्भाव्य अनुमाय कोपवशात् पुन निम्बमेव मम भोजनार्थं परिवेविषती पात्रे परित क्षिपन्ती त्व स्वरुषः स्वीयात् कोपात् स्वकोपस्य वा स्मरे, मधुरतरशर्करादिपरित्यागेनातिकटुरसेऽपि चेदस्यैव रुचिस्तर्हि मदीयापेक्षयातिहीनासु सपत्नीष्वप्यस्य रुचि स्यादिति सम्भाव्य बहुतरनिम्बमेव भुङ्क्ष्वेति वारवार अतिकटुनिम्बात्निदानेन यत्कोपात्मा प्रति व्यञ्जितवत्यसि तत्स्मरेति भाव । वसन्ते च जना निम्ब भुञ्जते । परिवेविषती परिवेषणार्थो विपूर्वाद्विषे शता । श्लाविति ( पा०६।१।१० ) द्विर्वचन, स्वरुष अधीगर्थेति । षष्ठी (पा०२।३।५२) कर्मत्वविवक्षया द्वितीयाया ८०

स्मर शार्करमास्वाद्य त्वया राद्धमिति स्तुवन् ।
स्वनिन्दारोपरक्ताग्रु यदभैषं तवाधरात् ॥११॥

स्मरेति । शार्कर शर्कराविकारभूत शर्करासस्कृत वा किमपि भक्ष्यमास्वाद्य एतत् सर्वातिशायिरस अमृततुल्यविहस्त्या त्वया साधित किमिति स्वादातिशयात् अतिस्तुवन् वारवार तदेव वर्णयन्, अद्य सर्वातिशायिरसमेतच्छार्करमिति स्तुतौ अधरस्यापि सर्वमधुरवर्गोत्तमतया निन्दापर्यवसानात्मदपक्षया ऽप्येतदधिकरसमिति अय वर्णयति । ननु तद्दिनप्रभृति अयमेतदेव रसयतु मम तु कयाऽप्यनेन न कार्यमिति स्वनिन्दया रोषस्तेन रक्तात्तवाधरात् पुनयदभैष भीतवानस्मि तत् स्मर । कोपेन लोहित्य युक्त त्वदधरकल्पशार्करवर्णनया कुपितया त्वया अधरस्फुरणादिना व्यञ्जितात्कोपाद्यदभैष तत्स्मरेति भाव । शार्कर विकारे सस्कृतार्थे वा अण्, अधरात् भीत्रेत्यपादानत्वम् ( पा० १।४।२५ ) ॥११॥

मुखादारभ्य नाभ्यन्त चुम्ब चुम्ब न तृप्तवान् ।
न प्राप चुम्बितु यत्ते धन्या तच्चुम्बतु स्मृति १२

मुखादिति । मुखादारभ्य नाभ्यन्त नाभिपर्यन्त त्वदङ्ग चुम्ब

स्मर तन्नखमन्त्रोरौ कस्त्योधाटिलि तन्मृषा । ह्री
दैवतमलुम्प यद्व्रतं रतपरीक्षण ॥ ९५ ॥

स्मरेति । अहमत्र स्थिते तवोरौ को नखमघाट्टितवानिति मृषाऽ-
सत्यभाषी सन् ह्रीरेव दैवतं यस्य तत्, अत एव रतस्य परीक्षण परी-
क्षाकरणं ब्रह्मचर्यरूपं रतिप्रतिबन्धकं व्रतं नियमं यदलुम्प निवर्ति-
तवान्, तत्स्मर । परपुरुषसम्बन्धशङ्कोत्पादनार्थं मृषाभाषणेन लज्जा-
मुत्पाद्य लज्जाकृतं सुरतप्रतिबन्धकमनुयोगं यन्निवर्तितवान् तत् स्म-
रेत्यर्थः । व्रतं सदैवतं भवतीति ह्रीदैवतमित्युक्तं ॥ ९५ ॥

वनकेलौ स्मराश्वत्थदलं भूपतितं प्रति । देहि म
ह्यमुदस्येति मद्गिरा व्रीडितासि यत् ॥ ९६ ॥

वनेति । त्वं इति मद्गिरा यद् व्रीडिताऽसि तत्स्मर । इति किं ।
हे भैमि त्वं वनकेलौ आरामविहारसमये भुवि पतितं अश्वत्थदलं उ-
दस्य पाणिना उत्क्षिप्य मह्यं प्रतिदेहीति अश्वत्थपत्रसदृशं विपुलञ्च
गुह्यमिति कामशास्त्रवचनात् भूपतिताश्वत्थदलयाचनेन वराङ्गयाचनस्य
सूचितत्वाद् व्रीडिताऽसि तत् स्मरेति भावः ॥ ९६ ॥

इति तस्या रहस्यानि प्रिये शंसति सान्तरा ।
पाणिभ्यां पिदधे तस्याः श्रवसी ह्रीवशीकृता ९७

इतीति । सा भैमी प्रिये इति पूर्वोक्तप्रकारेण तस्याः रहस्यानि ए-
कान्तरसवृत्तानि शंसति सति ह्रिया वशीकृता लज्जिता सती सान्तरा
मध्ये एवासमाप्त एव वचने पाणिभ्यां तस्याः कलायाः श्रवसी कर्णौ
पिदधे आच्छादितवती । इत परमयं सङ्कुलमपि रहस्यमस्यै कथयिष्य-
ति तदनया स्वनाकर्णनीयमिति बुध्वाऽस्याः कर्णौ पिधत्तेत्यर्थः ॥ ९७ ॥

कर्णौ पीडयती सख्या वीक्ष्य नेत्रासितोत्पले ।
अप्यपीडयतां भैमीकरकोकनदे नु तौ ॥ ९८ ॥

कर्णपिधानमेवोत्प्रेक्षते ॥ कर्णाविति । भैम्याः करावेव कोकनदे रक्तो-
त्पले अपि कर्तारौ सख्याः कलायाः नेत्रे एवासितोत्पले तस्याः एव क

र्णौ पीडयती यन्त्रयती वीक्ष्य तौ कर्णाकर्णौ कर्णसंपृक्तौ चापीडयतानु । कलानेत्रनीलोत्पलयोराकर्णपूर्णतया कर्णाक्रमणात् पीडाकरी इव भैमीकररक्तोत्पले अपि मात्सर्यात्तन्नीलोत्पलमाहात्म्यकाधरणबुध्येव स्पर्धयेव वा भैमीकरकोकनदे अपि तत्कर्णौ पीडयामासतुः किमिति भावः । मत्वर्थयोः साह्याभ्यक स्पर्द्धा च युक्ता । पीडयती या नपुंसकस्येति (पा०७ १।७९) नुमभावः ॥ ९८ ॥

तत्प्रविष्टं सखीकर्णं पत्युरालपितं ह्रिया । पिदधाविव वैदर्भी स्वरहस्याभिसन्धिना ॥ ९९ ॥

पुनरन्यथोत्प्रेक्षते ॥ तदिति वैदर्भी सखीकर्णं प्रविष्टं तत्पूर्वोक्तं रहस्यरूपं पत्युरालपितं स्वरहस्य एतत्कर्णाभ्यां सकाशात् बहिर्मा गादिति अभिसन्धिना अभिप्रायेणेव ह्रिया पिदधौ आच्छादितवती । अन्यदपि गोप्यवस्तु भाण्डे निक्षिप्यान्या मा यासीदिति तद्द्वारं पिधीयते॥९९॥

तमालोक्य प्रियाकेलिं नले सोत्प्रासहासिनि । आराद्वस्त्रमप्सरसोऽपि तत्रुः सिस्मियिरेऽपराः १००

तमिति । आराद्दूरे स्थिता अप्सरसः मध्यस्तत्वं नलाह्लासकारणमबुध्वाऽपि सिस्मियिरे जहसुः । कस्मिन् सति । नले तं पूर्वोक्तं प्रियाकेलिं आलोक्य सोत्प्रासहासिनि सत्प्रासेनोच्चैस्त्वेन सह यथा तथा हसति सति । नलाट्टहासश्रवणमात्रेण सिस्मियिर इत्यर्थः ॥ १०० ॥

दम्पत्योरुपरि प्रीत्या ताः धरासुरमस्तयेः । ववृषुः स्मितपुष्पाणि सुरभीणि मुखानिलैः ॥१०१॥

दम्पत्योरिति । ताः नभ्य एव धरायां वहन्त्याश्चाप्सरसः तयोर्दम्पत्योरुपरि प्रीत्या प्रेमातिशयेन सुरभिनिलैः सुरभीणि स्मितान्येव पुष्पाणि ववृषुः सत्रां अपि मध्ये आगमी क्रीडावशाज्जहसुरित्यर्थः । मुखानिलसुरभित्वेन तासां पद्मिनीत्वं सूचितं तयोः पद्यसमर्पेति (पा० २।३।३०) षष्ठी ॥ १०१ ॥

नटास्यहसिताज्जातं स्मितमासामभागत । आलोकादिव गीतांशाः कुमुदश्रेणिजृम्भणं ॥१०२॥

तदेति । अस्य नलस्यास्यहसिताज्जातमासां सखीनां स्मितं शीता-
शोरालोकात् सकाशाज्जातं कुमुदश्रेण्यां जृम्भणं विकासनमिवाभासत ।
तदस्येति क्वचित् पाठः ॥ १०२ ॥

प्रत्यभिज्ञाय विज्ञाऽथ स्वरं हासविकस्वरं । स

ख्यास्तासु स्वपक्षायाः कला जातबलाऽजनि ॥ १०३ ॥

प्रतीति । अथ सखीसमूहहास्यानन्तरं विज्ञा अतिचतुरा कला ता
सु सखीषु मध्ये स्वपक्षायाः निजमित्रभूतायाः कस्याश्चित् सख्याः स्वरं
हास्येन विकस्वरं सुव्यक्तं, अत एव साऽपि नरसख्या एव स्वर इति
प्रत्यभिज्ञाय परोक्षप्रत्यक्षोभयात्मकज्ञानविषयं कृत्वा, जातं बलं यस्याः
सा दृष्टा जैमीप्रतारणार्थं सहायोत्साहयुक्ता चाऽजनि । मत् प
क्षीयाऽत्र विद्यतेऽतोऽस्याः सकाशात्त्वां मोचयिष्यति, अथवा स्वच्छन्दाक-
र्षयिष्यतीति साऽऽश्वस्ताऽभूदिति भावः । अन्योऽपि केनचित् प्रति-
बद्धः स्वपक्षीयं दृष्ट्वा जातबलो भवति । सखीस्वरश्रवणन्तु कर्णपिधा-
नात् पूर्वमेव ज्ञातव्यं अन्यथा स्वरश्रवणानुपपत्तेः । जैमीकरयोः को
मलतरतया कर्णनिविडपीडनसामर्थ्याभावेन वा स्वरश्रवणोपपत्तेः ।
सख्येत्या इति च पाठः ॥ १०३ ॥

साऽऽहूयोच्चैरथोचे तामेहि स्वर्गेण वञ्चिते । पिब

वाणीः सुधावेणीर्नृपचन्द्रस्य सुन्दरि ॥ १०४ ॥

सेति । अथ स्वपक्षीयस्वरप्रत्यभिज्ञानानन्तरं सा कला तां स्वपक्षी
यामुच्चैस्तारस्वरं यथा तथा आहूय इति ऊचे । इति किं दूरस्थत्वात् हे
स्वर्गसुखेन वञ्चिते सुन्दरि एहि समीपमागच्छ । आगत्य च नृप ए-
वाह्लादकत्वाच्चन्द्रस्तस्य सुधावेणीः अमृतप्रवाहरूपा वाणीः पिब सादरमाकर्णयेति । स्वर्गेऽपीन्द्रामृतपानमेव, नलपरिहासाकर्णनसुखं स्वर्ग-
सुखमेव तदनुभवेत्यर्थः ॥ १०४ ॥

साऽऽस्तृणोत्तस्य वाग्भागमनत्यासन्नमत्यपि । क

लपग्रामाल्पनिर्घोषं वदन्तीव कृशोदरी ॥ १०५ ॥

संति । कलयाऽऽहूता ऽनत्यासन्निमत्यपि अत्यन्तनैकट्यरहिताऽपि यत्र स्थितौ किञ्चित् श्रूयते किञ्चिन्नेति तत्र स्थिता कृशोदरी सा क लासखी तस्य वचोभागमवशिष्टमश अशृणोत् कलाकर्णयोर्भैम्या पिहित- त्वादाहूता सखी नलकथ्यमानरहस्यकथांशमशृणोदित्यर्थः । का क मिव । कृशोदरी कृशमध्या अल्पज्ञेति यावत् । एवम्भूता बदरी क ल्पग्रामनाम्नो ग्रामस्याल्पनिर्घोषं लोककलकलं तत्र पठतां वेदध्वनिम्वा तमिव, बदरिकाश्रमस्थो लोक मुनिजनस्तावद्भूत. कल्पग्रामनिवासि- नो जनस्य कोलाहलं शृणोतीति तैर्थिकप्रसिद्धि ॥ १०५ ॥

अथ स्वपृष्ठनिष्ठाया. शृण्वन्त्या नैषधाभिधाः ।
नलमौलिमणौ तस्या भावमाकलयत् कला १०६

अथेति । अथ कलासख्या नलवाक्यशेषश्रवणानन्तर स्वपृष्ठे निष्ठा स्थितिर्यस्याः कर्णपिधानपरतया कलापश्चाद्भागे स्थितायास्तथा कला सखीं प्रति रहस्यं ब्रुवतो नैषधस्याभिधा वचनानि शृण्वन्त्याः तस्या भैम्या भावं रहस्यकथनाद्धासकोपाभिव्यञ्जकमुखचेष्टाविशेष नलस्य मौ- लिमणौ शिरोरत्ने प्रतिबिम्बवशादाकलयद्दृष्टासीत् ददर्शेत्यर्थः । नले न कलासखीं प्रति रहस्ये उक्ते भैम्या हासकोपादिचेष्टां नलमौलिरत्ने प्रतिबिम्बितां सा कला ददर्श न त्वशृणोदित्यर्थः ॥ १०६ ॥

प्रतिबिम्बेङ्गितैः सख्या मुखाकूतकृतानुमा । तद्
व्रीडाद्यनुकुर्वाणा शृण्वती चान्वमायि सा १०७

प्रतिबिम्बेति । प्रतिबिम्बे इङ्गितैः सख्या पृष्ठस्थिताया भैम्याः स्वपक्षसख्या या मुखाकूतिः व्रीडाहास्यादिसूचकमुखभङ्गोचविकारादि- चेष्टिते. तस्या कृता अनुमाऽनुमितिर्यया सा दृशा सविकारदर्शनात् प्रा येण मन्नैवमुक्तं स्यादित्येवं कृता नलवाक्यार्थसम्भावना यया सा, त था तस्या भैम्याः स्वपक्षसख्या या नलवाक्यानुरूपव्रीडाद्यनुकुर्वती प्र तिबिम्बदर्शनादेवाङ्गभङ्गोचाद्यभिनयेनानुकुर्वाणा दर्शयन्ती सती सा कला भैमीपार्श्वविहितकर्णाऽपि तत् व्रीडाद्यनुकरणादेव भैमीपक्षसखी यद्वा नलवचनं शृण्वतीत्यन्यथानि भैमीनलाभ्यां सम्भाविता । व्रीडा-

दि न लाकेति (पा०२।३।६९) षष्ठीनिषेधाद्द्वितीया । अनुकुर्वाणा अनु-
पराभ्यां कृञ इति (पा०१।३।७९) परस्मैपदविधानाच्छानजभावे ताच्छी
ल्ये शत्री वा चानश् ॥ १०७ ॥

कारङ्कारं तथाकारमूचे साऽऽशृणवन्तमां । मिथ्या
वेत्थ गिरश्चेत्तद्व्यर्थाः स्युर्मम देवताः ॥ १०८ ॥

कारमिति । सा कला तथा पूर्वोक्तभैम्याः स्वपक्षमरया वा नलमी
लिमविदृष्टं मुखश्रोडादृर्योद्याकार कृत्वा कृत्वा अनया सर्वं श्रुतमिति
यथा प्रतीतिर्भवति तथाऽभिनयं कृत्वा इत्यूचे । इति किं । अह भय
दीप यदं नृत्तान्त सर्वंतगुणवन्तमां नितरां आकर्णितवत्यसि, हे भैमि
त्वं भयद्वचनश्रवणमूषिका मम गिर मिथ्या वेद्धुत्य आमीपे अनाक-
र्णितमप्याकर्णितमिव वदसीति मन्यसे चेत्तर्हि अभीष्टमिच्छार्थं प्रत्यह
पूज्यमाना मम गौर्यादीष्टदेवता व्यर्था निष्फलाः सुरिष्टदायिन्यो
ना भूयन्निति मया शपथ क्रियते इति मत्त प्रत्यवाचद्वा । अशृणव-
न्तमा तिङश्चेति (पा०५।३।५६) तमप ॥ १०८ ॥

मत्कर्णभूषणानां तु राजन्निग्रहपीडनात् । ध्रि
यमाणपाणिस्त्वे निषेद्धुमुचिता प्रिय॥१०९॥
इति सा मोचयाञ्चक्रे कर्णौ सख्याः करग्रहात् ।
पत्युराज्ञावतां यान्त्या मुधायासनिषेधिन॥११०॥

मदिति । इतीति युग्मम ॥ सा कला इति पूर्वोक्तं नलं प्रति उ
क्त्वा सख्या भैम्या करग्रहात् पाणिभ्यां पीडनात् सकाशात् कर्णौ मो-
चयाञ्चक्रे अर्थाद्भैम्यैव प्रयोज्यया । तृतीयान्तस्तु स्पष्टार्थं । किम्भू-
ताया- । कर्णपिधानरूपान्मुधायासात् वृथाप्रयासात् निषेधिनो निवा
रयितु- पत्युराज्ञवतां वचनकारित्व यान्त्या गच्छन्त्यास्तद्वचनकारिण्या
इत्यर्थं । शपथरूपकलावचनमाकर्ण्य कर्णपिधानप्रयासो व्यर्थ इति
निग्रहपीडनात् तव पाणिपीडैव जनिष्यतीति तत्कर्णौ मुञ्चति । न
लवचनाद्भैमी तत्कर्णावमुञ्चदित्यर्थं । इति कि । हे राजन् मत्कर्ण-

पिधानवशात् कर्णभूषणानां निबिडपीडनाद्धेतोस्तु पुन सौकुमार्यंाति शयादित परमपि व्यथिष्यमाणी पीडा प्राप्स्यन्ती याणी यस्यास्तादृशी ते तव प्रिया निषेद्धुमुचितेति कर्णपिधानफल नास्ति, पिधानप्रयासो व्यर्थं, प्रत्युतास्या पीडा भविष्यति इय मया निरुध्यत्यर्थ १०९ ११०

श्रुतिस राघजध्वानमन्ततिच्छेदतालता । जगाम झटितिस्यागस्वनस्तत्कर्णयोस्तन: ॥ १११ ॥

श्रुतीति । ततः कर्णमोचनानन्तर, तौ विस्तृतौ या तस्या कला या कर्णया झटिति शीघ्रं त्यागस्तस्माच्छीघ्रहस्तमोचनाज्जातो यो य:श्रुतिस्वन स श्रुत्वा सरोधान्निबिडपीडनाज्जातो यो ध्वान शब्दस्तस्य सन्ततिरविच्छिन्नता निरन्तर समुत्पन्नो गुमगुमारव इति यावत् । तस्य छेदे विरतौ तालता हस्ततालद्वयजन्यपरिच्छेद्यगीतादिक्रियाकालमभूतकालता जगाम । झटितिमुद्रितकर्णमोचनादनुभूयमानयन्त्रादिशब्द कर्णपिधानसमये ऽनुभूयमानगुमगुमारवविरामव्यापकोऽभूदित्यर्थं । एतच्च प्रत्यक्षसिद्ध ॥ १११ ॥

साऽपसृत्य कियद्दूरमुमुदे सिस्मिये ततः । इदञ्च तां ससीमेत्य ययाच काकुभि कला ॥ ११२ ॥

सेति । सा कला ततोऽनन्तर तस्माद्भैम्युपवेशनस्थानाद्वा सकाशात् कियत्किञ्चिद्दूरमपसृत्य गत्वा मुमुदे सिस्मिये प्रतारणकौशलवशाज्जहास च तां स्वसखीं नुतनरावचना मत्य इद वक्ष्यम या काकुभिरर्थविशेषप्रयुक्तैरुक्तिविधैश्च निविकारे. कुपथभावपर्यवसाय, ययाचदिति यावत् ॥ ११२ ॥

अभिधास्ये रहस्य तद्यदस्याश्रि मयाऽनयो: । यदीदाकर्णितं सख्यामेह्या लि विनिमीयता ॥११३

अभिधास्य इति । हे सखि मया धारयोर्वद्रहस्यमस्त्रीत्रि यत् तद्रहस्य तुभ्यमभिधास्ये । मत्कर्णपिधानानन्तर अनयो रहस्य त्वया आकर्णितं नन्ग सखि यदैव कथयसि गोप्रमाणञ्च विनिमीयता परिवृति क्रियतां । मह्यं प्रियवाचमित्रिप्रैतीति (वा०१।४।३२वा०१) सम्प्रदानत्व जिज्ञासायत्यादन्यादेशोनायाञ्च सयादेश ॥ ११३ ॥

वयस्याभ्यर्थनेनास्याः प्राक्कूटस्तुतिनाटने । वि
स्मितौ कुरुत स्मैतौ दम्पती कम्पितं शिरः ॥११४॥

वयस्येति । अश्रुतरहस्यश्रवणार्थमाहूताया वयस्याया अभ्यर्थनेन श्राश्रुतश्रवणप्रार्थनेन हेतुनाऽस्याः कलायाः प्रश्नसमनन्तरमित्या-दिना कूटस्तुति पूर्व कृतमिथ्याशिरःकम्पादिपूर्वं श्रवणे तस्या नाटने ऽभिनये विस्मितौ अनया कथमाया प्रतारितौ स्व दुष्ट दुष्ट इति नि षावचनपूर्वकं साश्चर्यौ तौ दम्पती शिरः कम्पितं कुरुत स्म । नाटने चौरादिकान्नटेर्नपुंसके भावे ल्युट् ॥ ११४ ॥

तथाऽऽलिमालपन्तीं तामभ्यधान्निषधाधिपः ।
आस्व नद्धविचतौ स्वर्गे मिथ्या शपथमाहरात् ॥११५॥

तथेति । निषधाधिपः तथा रहस्यविनिमयकथनप्रापनरूपेण या स्वपक्षभूता आलि प्रत्यालपती तां कलामभ्यधात् अवोचत् । हे कले निषधानुपक्षरूपान् साहसादविचारकारित्वाद्धेतोः चेद्यद्यावां कथामो चनार्थं स्वयाऽलीकवचनात्त्वया वञ्चितौ प्रतारितौ स्वो भवाव त र्हि आस्व तिष्ठ तिष्ठ । तर्हि आस्वेति निन्दा वा प्रतारनिमित्ता त-र्जनोक्तिसूचे इत्यर्थः ॥ ११५ ॥

प्रत्यालापीत् कलाऽपीमं कलङ्कं शङ्कितं कुतः ।
प्रियापरिजनोक्तस्य त्वय्येवाऽद्य मृषोद्यता ॥११६॥

प्रतीति । कलाऽपि इमं नलं प्रति उद्दिश्य आलापीत् अभाषत् हे राजन् त्वया प्रियाया भैम्याः परिजनस्य सेवकभूताया ममोक्तस्य वचनस्य सत्यत्वमु दिनषु मध्ये अद्यैव मृषोद्यता मिथ्याभाषणरूप कलङ्को दोष कुतः कस्माद्धेतोः शङ्कितः सम्भावितः तत्कारणं कथयेति सत्यवादित्वाद्भैम्याः परिचारिकाया ममालीकवादित्वं सम्भावयि-तुमप्ययुक्तमित्यर्थः । भैमी रात्रौ वृत्तमपि सुरतमस्मदग्रे अवृत्तमिति कथयति परिजनश्च प्रभुसदृशो युक्तः । तथाचालीकभाषणं मम गुण एव न तु कलङ्क इत्यर्थः । परिजनस्योक्ताविति वा पाठः ॥ ११६ ॥

सत्यं खलु तदाश्रौषं परं गुमगुमारवम् । शृणो-
मीत्येव चावोचं न तु त्वद्वाचमित्यपि ॥ ११७ ॥

स्ववचनस्य सत्यतां प्रतिपादयति । सत्यमिति । अहं तदा श्रवणा-पिधानकाले खलु निश्चितम् अश्रौषमिति सत्यं, परं केवलं गुमगुमारवं न तु त्वद्वचनं तथा च श्रवणमात्रं सत्यमेवेत्यर्थः । शपथकरणसमये शृ-ण्वाता सकर्मकत्वेऽपि कर्माविवक्षया अहं शृणोमीत्येव अवोचं न तु त्वद्वाचमिति विशेषणमप्यवोचम् । शपथोऽपि साधारणश्रवणमात्र-विषयत्वात् सत्य एवेति । न कथञ्चिदपि ममालीकभाषित्वं त्वया श-ङ्कनीयमित्यर्थः । अशृण्वन्तमामिति तत्प्रकृतत्वादत्र शृणोमीति श्रवण-मात्रोपलक्षणपरं न तु भूतवर्तमानपरमिति ज्ञातव्यम् ॥ ११७ ॥

आमन्त्र्य देव तेन त्वां मद्वैयर्थ्यं समर्थये । श-
पथः कर्कशोदर्कः सत्ये रुत्येऽपि दैवतः ॥ ११८ ॥

व्यर्थाः स्युर्मेनेति देवताशब्दस्यान्वयार्थत्वेन शपथो मया न कृत ए-वेति समर्थयते । आमन्त्र्येति । हे राजन् अहं तेन व्यर्थाः स्युरित्यादि-ना वाक्येन देवेति त्वामामन्त्र्य सम्बोध्य ताः अशृण्वतीरूपादिका अशृ-ण्वन्तमामित्यादयो मम गिरो व्यर्था अलीकाः स्युः यथा त्वं मिथ्या-भूता वेत्थ तादृश्य एव काम स्युरिति अशृण्वन्तमामित्यादीनां त्वद्व-चनश्रवणप्रतिपादिकानामपि गिरां वैयर्थ्यमेव समर्थये सिद्धान्तत्वेन प्रतिपादयामि । अयं च या गुमगुमारवरूपा अश्रौषं यां त्वं मिथ्या वेत्थ तासां गिरामनुकरणशब्दत्वात् अर्थशून्यत्वात् निरर्थकत्वाद्वैय-र्थ्यं समर्थये पूर्वकृतस्य शपथस्यान्यमर्थं कृत्वा कथमपलापमित्यत आह ॥

सत्येनापि शपेद्यस्तु देवाग्निगुरुसन्निधौ ।
तस्य वैवस्वतो राजा धर्मस्यार्धं निकृन्तति ॥

इत्यादि मन्वादिवचनप्रामाण्याद्दैवतान्वयात् सत्योऽपि शपथो सत्य निहितः यस्मात् कर्कशोदर्कं दारुणपरिणामं किं पुनरसत्य त-स्मादिति ज्ञात्वा मया शपथो न कृत एव । परं दैवस्यैव शपथत्वान्नास्ती-त्यर्थः । अत एव त्वां देवेत्यामन्त्रयतो दैवते सत्योऽपि शपथः

कर्कंगोदर्क इति यन्मन्वादिभिरुक्तं सम्मत्य । यस्माच्छपथत्यागेत्या स-म्मत्येव त्वया मयि कलङ्क आरोपित इत्यर्थ इति वा ॥ ११८ ॥

घ्नसम्भोगकथारम्भैर्वञ्चयेथे कथं नु मां । हन्त सेयमनर्हन्ती यत्तु विप्रलभे युवां ॥ ११९ ॥

इदानीं शाठ्यं हि कुटिलेषु न नीतिरिति न्यायादलीकभाषणेऽपि अदोषत्वमाह । अघ्नसम्भोगेति । हे भैमीनलौ युवां भैमी मह्य स्वमुख मपि न ददाति नलेनाह कदाचिदपि न स्पृष्टा ऽपि इत्यसम्भोगकथार-म्भैरन्योन्यसम्भोगाभावविषयवृत्तान्तारम्भैः मिथ्याऽनुकूलसुरतभरनिह्नवैः कृत्वा मां कथं नु कथमिव वञ्चयेथे प्रतारयथ । यत्तु पुनः अहं क-र्मीभूतौ युवां विप्रलभे प्रतारयामि सेयमहं अनर्हन्ती अयोग्या अ-नुचितकारिणी हन्त कष्टं चित्रं वेति काकुः । युवाभ्यामहं वञ्चनीया मया तु भवन्तौ न वञ्चनीयौ का वा रीतिरियं वञ्चनकरणाभ्यां स-मदोषगुणौ युवामहं चेति भावः । अर्हन्तीति अर्ह प्रशंसायामिति श तरि इनित्यान्डीप नुम युवां कर्तस्यम चावृत्या योज्य ॥ ११९ ॥

कर्णे कर्णे ततः सख्यौ स्वनमाचख्यतुर्मिथः । मुहुर्विस्मयमाने च स्मयमाने च ते बहु ॥१२०॥

कर्णे इति । ततः स्ववञ्चकत्वदोषपरिहारानन्तरं भैमीसुरतप्रागल्भ्ये मुहुर्विस्मयमाने आश्चर्यं कुर्वाणे च बहु नितरां स्मयमाने हसन्त्यौ च ते कलासखीलक्षणे सख्यौ भैम्या वा सहचर्यौ मिथोऽन्योन्यस्य क-र्णे कर्णे स्वस्वश्रुतं स्वरहस्यं आचख्यतुः । चावन्योन्यसमुच्चये । अन्या-न्यकर्णार्पणया वीप्सायां द्विरुक्तिः ॥ १२० ॥

अथाख्यायि कलासख्या कुप्य मे दमयन्ति मा। कर्णाद्वितीयतोऽप्यस्याः सद्वोप्यैव यदभ्रुव१२१

अथेति । अथान्यान्यकर्णे तत्तद्रहस्यकथनानन्तरं कलाया सख्या क लयैव सख्या वा भैमी आख्यायि इति उक्ता हे दमयन्ति त्वं मे मह्य मा कुप्य अहं यदश्रुवं तदस्याः द्वितीयस्याऽपि कर्णात् सद्वोप्यैवाश्रुवं,

चाचरणेऽपि चेत्यभिधानादूर्द्ध्वं कर्म्मत्वाभावात् नदोऽनूर्द्ध्वकर्मयोरिति (पा० १ । ३ । २४) तङ् । व्युत्पित्सुमानाया विरोधाचरणे कृतोद्यमाया वा ॥ १२४ ॥

शिरःकम्पानुमत्याथ सुदत्या प्रीणितः प्रियः ।
चुलुकं तुच्छमुत्क्षिप्य सख्याः सलिलमक्षिपत् ॥१२५

शिर इति । अथानन्तरमेतद्वाक्यानन्तरं सुदत्या भैम्या शिरःकम्पेन या मर्षां निष्कासनस्यानुमतिरनुज्ञा तया हृत्वा प्रीणितो जनितानन्दः प्रियः सख्योर्विषये तुच्छं रिक्तं चुलुकमुत्क्षिप्य उद्यम्य वरुणवरेण प्राप्तं सलिलं तन्निष्कासनार्थं अक्षिपत् । सख्यास्तु एतस्माच्छिरःकम्पेन भैम्या सद्वहिष्करणमङ्गीकृतं, नलस्तु स्वाशयानुसारेण भैम्यपि सम्भोगेच्छयैवैतं बहिष्कर्त्तुमिच्छति अतस्सम्भोगोऽनुमतोऽस्या इति सन्तुष्टोऽत एव तन्निर्गमनार्थं जलं क्षिप्तवानिति भावः । शिरःकम्प एवानुमतिर्यस्यास्तया सुदत्येति वा ॥ १२५ ॥

तच्छिद्रदत्तचित्राङ्गणमुच्चैः सिञ्चयसेचनं । ताभ्यां
मलम्भि दूरेऽपि नलेच्छापूरिभिर्जलैः ॥ १२६ ॥

तदिति । तुच्छचुलुकसेचनमात्रेण जलसेचनात् तज्जलेन चित्रे आश्चर्ये दत्तं स्थापितं चित्तं यथास्ताभ्यां दूरेऽपि स्थिताभ्यां सखीभ्यां तुच्छ चुलुकं नलेच्छामात्रेण पूरयन्ति सर्वमाप्लावयन्ति तच्छीलैः परिपूर्णतरैर्जलैः कृत्वा सर्वान्तरा सिञ्चयस्य वस्त्रस्य सेचनमार्द्रीभावोऽलम्भि प्रापि ॥ १२६ ॥

वरेण वरुणस्यायं सुलभैरम्भसां भरैः । एतयो-
स्तिमितीचक्रे हृदयं विस्मयैरपि ॥ १२७ ॥

वरेणेति । अथ नलो वरुणवरेण सुलभैरनायासलभ्यैरम्भसां भरैः पूरैः तथा ऽऽकस्मिकदर्शनप्रभवैर्विस्मयैराश्चर्यैरपि कृत्वा एतयोः सख्योः क्रमेण हृदयं उरः स्थलमन्तरञ्च स्तिमितीचक्रे पूर्वं मनागार्द्रमप्यार्द्रीचक्रे तथाऽनिश्चलमपि निश्चलीचक्रे वारिपूरसेकेनातितरां आश्चर्यं जातमित्यर्थः । तिमस्तिम आर्द्रीभावे ॥ १२७ ॥

तेनापि नापसर्पन्त्यौ दमयन्तीमयं ततः । ह्रेपणादर्शयत् पश्य नन्विमे तन्वि मे पुरः ॥१२८॥

क्लिन्नीकृत्याम्भसा वस्त्रं जैनप्रव्रजितीकृते । सख्यौ सक्षौमभावेऽपि निर्विघ्नस्तनदर्शने ॥१२९॥

तेनेति ॥ क्लिन्नीकृत्येति ॥ युग्मं ॥ ततो जलसेकानन्तरं अयं नलः तेन तावता जलसेकेनापि गृहाद्बहिरनपसर्पन्त्यौ अनिर्गच्छन्त्यौ ते सख्यौ कुचदर्शनाज्जातेन ह्रेपेण दमयन्तीं अदर्शयत् । ह्रस्तेनेति पाठे कुचदर्शनोपलक्षकपाणिचेष्टाभिनयेन, ननु तन्वि त्वं मे पुर इमे सख्यौ पश्य । किम्भूते सख्यौ । अम्भसा कर्तृभूतेन करणेन कर्तृभूतेन मया वा वसनं क्लिन्नीकृत्यार्द्रीकृत्य जैनप्रव्रजितीकृते दिगम्बरपरिव्राजिकात्वं प्रापिते । अत सक्षौमभावे दुकूलसाहित्ये सत्यपि निर्विघ्नमन्तरायरहितं स्तनदर्शनं ययोस्ते सूक्ष्मतरे वस्त्रे जलसिक्ते निरन्तरमङ्गदर्शनं भवति तथा च नग्नप्राये एते सख्यौ ममाग्रे विलोकयेति तयोर्लज्जात्यागद्वारा बहिर्निर्गमनार्थं कुचदर्शनोपलक्षकपाणिचेष्टाभिनयेनादर्शयदित्यर्थः । दृशोर्बुध्यर्थत्वात् दमयन्तीमित्यत्र, अणौ कर्तणौ कर्मत्वं । जैनानां दिगम्बराणां प्रव्रजिता परिव्राजिकाः अतादृश्यौ तादृश्यौ कृते, अभूततद्भावे ( पा० ५ । ४ । ५० ) इति च्वि ॥ १२८ ॥ १२९ ॥

अम्बुनः शम्बरत्वेन मायेवाविरभूदियं । तत्पटावृतमप्यङ्गमनयोः कथयत्यदः ॥ १३० ॥

अम्बुन इति । अदः जलं कर्तृ, अनयोः सख्योः पटावृतमप्यङ्गं स्तनजघनादिकमङ्गं यत्कथयति प्रकटयति सेव अम्बुनः नीरस्याम्बु-शम्बरमित्यभिधानाच्छम्बरत्वेनाप च शम्बरात्वदित्यभावेन मायेवाविरभूत् प्रकटाऽजनि । शाम्बरी हि माया अविद्यमानमपि वस्तु प्रकाशयति । अत्रापि जलेऽस्मिन् जलदर्शनात् अमन्ये गम्भीकरणाद्येव शाम्बरी मायेव प्रकटाऽभूदित्युच्छलेन नलवचः कविवचो वा । एवमुत्तरश्लोकेऽपि ज्ञेयम् ॥ १३० ॥

वासो बाऽम्बरत्वेन दृश्यतेयमुपानमत्। चारु हारमणिश्रेणितारश्रीकृणलक्ष्णा ॥ १३१ ॥

अत्रैव पक्षान्तरमाह। वास इति। या अथवा स्तनाद्यङ्गानां द्वयं दृश्यता प्रत्यक्षगोचरता वाससोऽम्बरत्वेनातिसूक्ष्मवस्त्रविशेषत्वेनाथ-चाम्बरशब्दवाच्यत्वमादृश्यादाकाशत्वेनोपानमत समागता जाता। निरावरणमम्बरे स्थितं वस्तु यथा प्रकटं दृश्यते तथैव वस्त्रावृतमपि च दृश्यते तत्र तदाम्बरत्वमेव हेतुरित्यर्थः। किम्भूता। चारवः स्थूलतरनिर्मलमनोहरा मणयः मौक्तिकानि तेषां श्रेणयः पङ्क्तय एव ताराणि नक्षत्राणि तेषां शोभयैव लक्षणं स्वरूपं चिह्नं या यस्याः सा। अम्बरे हि नक्षत्रदर्शनं भवति तदेव च तस्य लक्षणं तद्वदत्रापि वस्त्रावृतत्वेऽपि जलबिन्दुहारमुक्ताफलानि स्फुटानि दृश्यन्ते तस्मादम्बरत्वमेव हेतुर्युक्त इत्यर्थः। ताराशब्दस्य नक्षत्रवाचित्वं बहुधा दर्शितं ॥ १३१ ॥

ते निरीक्ष्य निजावस्थां ह्रीणे निर्यतुस्ततः। तयोश्चीत्कारमात्रं सख्यः सर्वा निश्चक्रमुः क्रमात् ॥१३२

ते इति। ते सख्यौ नितरां जलसेकाद्दोष्याङ्गदर्शनरूपां निजावस्थां निरीक्ष्य ह्रीणे लज्जिते सख्यौ ततस्तद्वाजगृहात् निर्यतुः, बहिर्निर्जग्मतुः। अन्या अपि सर्वाः सख्यः तयोर्जलार्द्रीकृतवस्त्रयोः सख्योर्यीत्कारमात् दर्शनकौतुकातिशयात् तयोः पश्चात् क्रमान्निश्चक्रमुः ॥ १३२ ॥

ता बहिर्भूय वैदर्भीमूचुर्नीतावधीतिनि। उपेक्ष्येते पुनः सख्यौ मर्मज्ञे नाधुनाप्यमू ॥ १३३ ॥

ता इति। ताः सख्यो बहिर्भूय गृहाद्बहिःस्थिताः वैदर्भीमूचुः हे नीतौ नीतिशास्त्रे अधीतिनि सुतरां कृताभ्यासे भैमि ते त्वया मर्मज्ञे त्वद्रहस्यवेदिन्यावमू सख्यौ अधुनाऽपि पूर्वं यत्कृतं तत् कृतमेवेतः परमपि यावद् दूरं न गमिष्यतस्तावत् पुनर्नोपेक्ष्ये "विरोधयेत सर्वज्ञ

लङ्कु मिखिलु की जना शिल्पिनश्चतुरा न भवन्ति अपि तु सर्वे ऽप्य- नीकदोषारोप कुर्वन्त्यवेति मद्विराधितयोर्वचसि न विश्वसनीयमित्य- र्थः । अन्येऽपि शिल्पिनो जलधाराताडिते स्मरणीये कुड्यादौ मस्या- दिवर्णकैश्चित्र लिखन्ति केचिद्दुद्विप शिल्पिनो.वा ॥ १३८ ॥

ते सख्यावाचचक्षाते न किञ्चिदूचुमहे वहु ।
वक्ष्यावस्तत्परं यस्मै सद्मा निर्वासिता वयं १३७

ते इति । ततस्ते सख्यौ इति आचचक्षाते ऊचतुः । इति किं । आ- वा अन्यत्किञ्चित् बहुधिकं न ब्रूमहे किन्तु यस्मै प्रयोजनाय सद्मो वय युवाभ्या गृहाद्बहिर्निर्वासिता निष्कासिता तदेव पर केवलमावा वक्ष्यावो वदिष्याव सद्मैपानमे सुरतार्थं वय निष्कासिता इति कथ- यिष्यावो न चान्यत्किञ्चिदिति ॥ १३७ ॥

स्थापत्यैनं स्म त्रिन्नस्ते वर्षीयस्त्वचलत्करैः ।
कृतामपि तथावाचि करकम्पेन वारणां ।१३८॥

स्थापत्यैरिति । ते सख्यौ तथावाचि सुरतार्थं वय निष्कासिता इति वचनं विषय स्थापत्यैः सौविदल्लैः करकम्पेन कृतामपि वारणां नि- षेध न विद्म स्म जानीत स्म यस्माद्वर्षीयस्त्वेन वाहुकेन चलन्त करा येषां तैः । वार्द्धकातिशयकनिलदोषवशेन स्वाभाविककरकम्पनत्वान्त्या कृतमपि निषेध न विद्म स्मेत्यर्थः । सौविदल्लाः कञ्चुकिनः स्थाप- त्याः सौविदाश्चेति, इत्यमर । अतिशयेन वृद्धो वर्षीयान्, इयसुनि प्रियस्थिरेति ( पा० ६ । ४ । १५७ ) वर्षादेश ॥ १३८ ॥

अपयातमितो धृष्टे धिग्ग्रामश्लीलशीलता । इ
त्युक्ते चोक्तवन्तश्च व्यतिद्राते स्म ते भिया १३९

अपेति । हे धृष्टे अतिनिर्लज्जे सख्यौ युवामितो गृहात् अपयात निर्गच्छत यस्माद्वा युवयोरश्लीलशीलता ग्राम्यभाषणस्वभावत्व धिक् धिक् इति तैः स्थापत्यैरुक्ते गदिते सति ते सख्यौ तेभ्यो मारणभिया व्यतिद्राते स्म पलायाञ्चक्रतुः, एवं उक्तवन्तस्ते कञ्चुकिनश्च पलायां- चक्रुः । तयोः पलायमानयोः पश्चाद्गच्छन्ति स्म तयोर्भिगेच्छुता ज्ञात्वा

सखीतर्जनव्याजेन तेऽपि निर्गता इति भावः । ते इति - व्यतिद्राते इति द्विवचनबहुवचनश्लेषः । इत्युक्ते मनीति वा । व्यतिद्राते इति वचनत्रयेऽपि तुल्य रूप । द्राति- परस्मैपदस्यादात्मनेपद चिन्त्यं । व्यतिद्राति स्मेति पठनीय इत्युक्तं मे उक्तचन्त्र सर्वं व्यतिद्राति स्मेत्यर्थः ॥ १३९ ॥

आह स्म तद्गिरा ह्रीणां प्रियां नतमुखीं नलः ।
ईदृग्भवादृसखी काऽपि निस्त्रपा न मनागपि॥१४०

आहेति । नलरतार्थं मद्धे निर्वासिता इति तयोः सख्योर्गिरा ह्रीणा लज्जिता अत एव नतमुखी प्रिया इति आह स्म । इति किं । ईदृग्वयस्यीसभापणशीला अथवा निर्लज्जाः सख्यो यस्यास्तादृशी काऽपि मनागपि निस्त्रपा निर्लज्जा न । अपि तु सखीयुक्तत्वमेव समानशीलव्यसनेषु सख्यमिति न्यायादनुरूपयार्हि सख्य युक्तमिति त्वमपि लज्जां मुञ्चेति सकामस्य नलस्य वच । भवादृग्सखी कापि ईदृक् कला तादृशी न दृष्टा ॥ १४० ॥

अहो नापत्रपाक्रन्ते जातरूपमिदं मुखं । नाति
तापाऽर्जनेऽपि स्याद्दितो दुर्वर्णनिर्गमः ॥ १४१ ॥

अहो इति । अहो भैमि ते इद मुख जात रूप सौन्दर्यं यस्यैवंविध मदपत्रपाक गतलज्ज न भवति किन्तु सलज्जमेव, स्त्रीणां तु लज्जैव मण्डनमित्यर्थ. । नापत्रपाकमिति समासेनैकपदं वा । अप च पत्राणां नागवल्लीदलानां पाक फलभूत: पूगादियोगमञ्जातो राग स नास्ति यस्य तदपत्रपाकं तादृश न भवति ताम्बूलरागसहितमिति यावत्, अत एव नितरां मासलावण्य । अथ च सुन्दरमपि नापत्रपाक मलज्ज । अहो चित्रम्, असुन्दर हि सलज्ज भवति स्व न दर्शयति । इदन्तु सुन्दरमपि स्वं न दर्शयतीत्याश्चर्यं । अतिनम्रत्वान्मुख किञ्चिदपि न दृश्यत इत्यर्थं । अय च अपेशाक दुःखमपगतं अपाक यस्मादपत्रपाक तादृक्न भवति लज्जाकृपदु:खमहितमत एव न जात रूपं यस्य सुरतार्थं मदर्थमिमन्त्रने ताभ्यामुक्त लज्जातिशयान्मुख नि-

तदा मलिनं जातं चित्रमेतदित्यर्थः । अथ च पत्रयोर्मूल्पुटयोर्मध्ये य पाकः स नास्ति यस्य तादृशमपि न भवति यत्तदपत्रपाकं कृतपुटपाक मिति यावत्, एवम्भूत सुवर्णमेव तव मुखमहो चित्रं भृशस्य सुवर्ण-स्वमाधुर्य्यकारीत्यर्थः, यतः सलज्जमत एव नितरां तापस्य क्रोधस्य र्जनमे सम्पादने सत्यपि समसमशीलस्नापणादिना सखीकोपे समुत्पादिते सत्यपि, इतो मुखात् सकाशात् दुर्वर्णानां परुषाक्षराणां निर्गमो न स्यात् कोपे सत्यपि लज्जाबाहुल्यात सखीः प्रत्युत्तरमपि परुषं न भाषसे एतदपि चित्रमित्यर्थः । अथच कृतपुटपाकसुवर्णस्वरूप यतो ऽतएव पुटरहितं नितरामग्निदाहे सत्यप्यस्मात् सुवर्णाद्दुर्वर्णस्य रजतस्य निर्गमो न स्यात् पुटपाकादेव मिश्रितरजतनिर्गमे सति निर्दुष्टस्य शुद्धरजतस्य पश्चात सुतरामग्निदाहे कृतेऽपि दुष्टाश्रयस्य पूर्वमेव गतत्वादस्माद्रजतनिर्गमो न भवत्येव । तथा सति तापार्जनेऽप्यस्मान्मुखादपि दुर्वर्णनिर्गमो न स्यात् सपत्रपाकजातरूप ते मुखमित्यर्थः । अथच वर्णसाम्येन सुवर्णसदृशं ते मुखं यद्यपि तथापि नितरामग्निदाहे तस्य दुर्वर्णनिर्गच्छन्त्येव । अतितापार्जनेऽपि ते मुखाद् दुर्वर्णनिर्गमो नास्त्येवेत्याश्चर्य्यमित्यर्थः । अत्युत्तमषोडशवर्णसुवर्णं यथोपरूपभाषिणी चासीति भावः । अपत्रपाक यस्ति न कपीति (पा०७।४।१४) ह्रस्वनिषेधः ॥ १४१ ॥

तामथैष हृदि न्यस्य ददौ तल्पतले तनुं । नि
मिष्य च तदीयाङ्गसौकुमार्य्यमसिस्वदत् ॥ १४२ ॥

तामिति । अथैष नलस्तां हृदि न्यस्य तल्पतले शय्यायां तनुं शरीरं ददौ पृष्ठेन, शय्यां पस्पर्शेत्यर्थः । तदालिङ्गनसुखवशादेव निमिष्य नेत्रे निमील्य तदीयाङ्गसौकुमार्य्यमसिस्वदत्, अनुबभूव च ॥ १४२ ॥

न्यस्य तस्याः कुचद्वन्द्वे मध्येनीवि निवेश्य च ।
स पाणेः सफलं चक्रे तत्करग्रहणश्रमं ॥ १४३ ॥

न्यस्येति । स तस्याः कुचद्वन्द्वे स्वकरं न्यस्य निक्षिप्य तथा नीवो-

ना मध्ये च नाभिमूलं निवेश्य स्थापयित्वा यांः स्वकरस्य तस्याः क रग्रहणं पाणिविवाहने विषये आत्मश्रमं सफलं चक्रे । स्तनजघनादि-स्पर्शसुखानुभवादित्यर्थः । एतदेव विवाहफलं यत् स्तनादिस्पर्शसुखानुभवनं । अथवा तस्यामिह करस्य राजोपदायां ग्रहणं तज्जनितस्वपाणि श्रमं सफलं चक्रे स्तनादिमर्दनमेव राजदण्ड इत्यर्थः । अथवा स्वपाणेर्भैम्याः करे यद्ग्रहणं निरोधनं तज्जनितं तस्याः श्रमं सफलं चक्रे । कृतमेवास्पर्शमात्रेण निरुद्धा न स्वकुचान्तरे करं निवेशितवान् न च सम्भुक्त इत्यर्थः । यतश्चानन्तरमस्मान्निषेधाल्लभ्यते ॥ १४३ ॥

स्थापितामुपरि स्वस्य तां मुदा मुमुदे वहन् ।
तदुद्वहनकर्तृत्वमाचख्यौ स्पष्टमात्मनः ॥ १४४ ॥

स्थापितामिति । स मुदा कामाज्ञिलापेन स्वस्योपरि स्थापितां च सति निवेशितां तां वहन् मुमुदे सुरतविशेषाज्जहर्ष । स्पष्टं प्रकटं । आत्मनस्तस्या भैम्या उद्वहनं विवाहं प्रति अथवोर्ध्वधारणं प्रति कर्तृत्वमाचख्यौ चेति शब्दच्छलेनोक्तं ॥ १४४ ॥

स्विद्यत्कराङ्गुलीलुप्तकस्तूरीलेपमुद्रया । फूत्का
र्यं पीडनौ चक्रे स सखीषु प्रियास्तनौ ॥१४५॥

स्विद्यदिति । स प्रियास्तनौ स्विद्यन्तीभिः सञ्जातसात्त्विकस्वेदाभिः करांगुलीभिः लुप्तया कस्तूरीलेपस्य भिन्नया मुद्रया पत्रभङ्गरचनाविशेषेण कृत्वा सखीषु विषये फूत्कार्यौ सह फूत्कारेण वर्तनाय पीडनं मर्दनं ययोस्ताभ्यां यौ तौ चक्रे । भैमी कुचयुगले स्वरचिता कस्तूरीपत्रश्रीरचना भ्रंशितेन दृष्ट्वा प्रियेण गाढमतौ पीडितावित्यन्योन्यमुखी कलकलं सख्यो यथा फूत्कारं कुर्वन्ति पूर्व कुचमर्दनं स्वयमेव यथा जानन्ति तथा तत्कुचौ ममर्देति भावः । सख्योऽपि स्वरचिता मुद्रा लु-प्ता दृष्ट्वा अन्यथाभावशङ्कया सद्यः फूत्कारं कुर्वन्तीति ॥ १४५ ॥

तत्कुचे नखमारोप्य चमत्कृत्यैनमन्वयेक्षित । सा
ऽस्याद्धीशा हृदि स्यन्ने किं मामभिनदेष न॥१४६॥

तदिति । तस्या कुचे नखमारोप्य निखाय स्वयमेव चमत्कृत्वं(?) नह्र सङ्कोचाभिनयपूर्वं शङ्कमानो नखक्षतपीडाविशेषादेव तया किञ्चित्को पेनेक्षितः, हे भैमि एष नखस्ते हृदिस्थं मां किं नाभिनदपि तु मामपि व्यदारयदेव । अन्यथा कथं त्वदीये हृदि नखे क्षिप्ते ममाद्भुतचमत्कार इति ॥ १५६ ॥

अहो अनौचिती यन्मे हृदि शुद्धेऽप्यशुद्धवत् । अङ्कः
खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम ॥ १५७ ॥

अहो इति । हे भैमि तीक्ष्णमुखैर्नारोपितकल्पितशिताग्रैर्मम नखैः शुद्धे निष्कपटेऽपि हृदि अशुद्धे रुधिरं वर्तते कल्पते यत्र तद्यथा तथाऽङ्को मयूरपदादिचिह्नमकल्पि आकारीति यत्सा इयं महती अनौचिती अहो चित्रम् । कैरिव । दोषारोपरूपपरुषभाषणवशात् तीक्ष्णमुखैर्दुर्मुखवदनैः खलैरिव । यथा खलैः शुद्धेऽपि पुरुषे अशुद्धवत् सदोषपुरुष इव अङ्को दोषारोपः कल्प्यते सा यथाऽनौचिती, नखक्षतेन कष्टाया त्वं नैव नखानामनौचित्यप्रकटनव्याजेन प्रमादं नाकरोदित्यर्थः । अशुद्धवदिति षष्ठी सप्तमीसामर्थ्याद्वति ॥ १५७ ॥

यज्जुम्बति नितम्बोरु यदालिङ्गति च स्तनौ । भु
ङ्क्ते गुणमयं तन्मे वासः शुभदशोचितम् ॥ १५८ ॥

यदिति । हे भैमि गुणमयं सूक्ष्मं शुक्लतरतन्तुकं ते वासः नितम्बोरु जघनमूरू च यद्यस्माच्चुम्बति स्पृशति तथा यस्माच्च ते स्तनौ आलिङ्गति तत्तस्मात् कारणाच्छुभानां रमणीयानां दशानां प्रान्ततन्तूनां यद्योग्यमुचितं तद्भुङ्क्ते तादृशं भोगमनुभवतीत्यर्थः । यतदी वा सोविशेषणे वा । अथच यो गुणमयः शौर्यौदार्यादिगुणपरिपूर्णो निर्दोषश्च शुभाया दशाया पूर्वाचरितपुण्यपरिपाकोपनतशुभग्रहयोगानुकूलसमयविशेषस्योचितं भोगं लभते स एव सुन्दरतररमणीयनितम्बोरुचुम्बनं तत्कुचालिङ्गनञ्च लभते नान्य इति स्वनितम्बादिचुम्बनकारिणो मत्तोऽपि वसनमेव धन्यमिति भावः । नितम्बोरु प्राण्यङ्गत्वादेकवद्भाव इति ॥ १५८ ॥

लीनचीनांशुकं स्वेदि दरालोक्य विलोकयन्।
तल्लितम्बं स निश्वस्य निनिन्द दिनदीर्घतां॥१४९

लीनेति। सात्त्विकस्वेदवशादतिसूक्ष्मत्वात् समच्छयीभूय लीनं सलग्नं चीनाख्यं अंशुकं यत्र, तथा स्वेदि सात्त्विकस्वेदयुक्तं अत एव च दरालोक्य ईषद्दृश्यं नितम्बं विलोकयन् स कामोन्मत्तो भूत्वा निश्वस्य दिने सुरतनिषेधान्निराशतया निश्वासमोचनेन तु समभिव्यज्य दिनस्य दीर्घतां कथं वा दिनं शीघ्रं गमिष्यतीत्यादिना निनिन्द। सुरतार्थं दिनावसानमभिललाषेत्यर्थः। कामपरवशत्वात् सम्भोगेच्छुरभूत्, दिवा तन्निषेधाच्च सुरते सहसा न प्रवृत्त इति भावः॥१४९॥

देशमेव ददर्शासौ प्रियादन्तच्छदान्तिकं। चकार
चाधरपानस्य तत्रैवालीकचापलं॥१५०॥

देशमिति। असौ प्रियादन्तच्छदोऽधरस्तस्यान्तिकं समीपवर्तिनं देशं कपोलचिबुकादिभागमेव पूर्वं दर्शनेददर्श, अनन्तरं तत्रैवाधरसमीपदेश एव अधरोपान्तस्यापि मुख एवाधरपानस्यालीकमेव चापलं पुनरोष्ठचालनं चुम्बनादित्वरा चकार। चापलस्यालीकत्वञ्च तादृगभिनयमात्रकरणात् सात्त्विकचापलकरणेऽपि अधरस्पर्शाभावाच्च ज्ञेयं। मा भूदतिशयात् यावता तत्क्षणमधरं चुम्बितुं प्राप्यते तावत्तमपि विलम्ब्य मा भूदसौ मन्मथमधरं वशेति भ्रान्त्या वाऽधरोपान्तदेशादि चकारेति भावः। अतिरिरंसोरिय जातिः॥१५०॥

न क्षमे चपलापाङ्गि सोढुं स्मरशरव्यथां। तत्प्र
सीद प्रसीदेति स तां प्रीतामकोपयत्॥१५१॥

नेति। स परिहासादिवशादालिङ्गनादिवशाच्च पूर्वं प्रीतां प्रसन्नामपि तां इत्युक्त्वाऽकोपयत्। इति किं। हे चपलापाङ्गि अहं स्मरशरव्यथां सोढुं न क्षमे शक्तोऽस्मि यतस्तस्मात् त्वं मम प्रमोद प्रसीद माद्य सुरतं देहि देहीति दिने रत्यनुचितत्वात् कोपयोग्यमपि दिने नर्मवित् तामकोपयदित्यर्थं। प्रसादमपि कोपं विना न सम्भवतीति कोपनम्पादनं। सरव्यथामिति च पाठः। चपलापाङ्गि अङ्ग-

गान्त्रेति (पा० ४।१।५४ वा० १) ङीष् ॥ १५१ ॥

नेत्रे निपततुर्यस्य प्रियाया वदनाम्बुजं । तत
स्तनतटौ ताभ्यां जघनं घनमीयतुः ॥ १५२ ॥

नेत्रे इति । निषधनाथस्य नेत्रे पूर्वं प्रियाया वदनाम्बुजं ततो-ऽनन्तरं स्तनतटौ, अनन्तरं च ताभ्यां स्तनतटाभ्यां सकाशाद् घनं पीवरं जघनं ईयतुः प्रापतुः सुरतौत्सुक्यात् सादरं वदनादिक्रमेणालोकयदिति भावः । अम्बुजतटजघनपदैः सादरालोकनार्हत्वं सूचितं । घनपदं सादरालोकनद्योतनार्थं । क्रियाविशेषणत्वेन सर्वत्र वा योज्यं ॥ १५२ ॥

इत्यधीरतया तस्य हठवृत्तिविशङ्किनी । झटि
त्युत्थाय सोत्कण्ठमसावन्वसरत्सखीः ॥ १५३ ॥

इतीति । इत्येवं वदनादिविलोकनपूर्वं जघने चिरकालं सादरदृष्टिस्थापनद्वारा धीरतया रसोत्सुकतयाऽस्य हठवृत्तौ बलात् सुरतारम्भे विशङ्किनी विशेषतः शङ्कमाना सम्भावयन्ती असौ झटिति सहसोत्थाय चिरनिर्गतसखीगवेषणाय सोत्कण्ठं यथा तथा कलाद्याः सखीरन्वसरत् । सख्यनुसरणोत्कण्ठाव्याजेन प्रियसुरतारम्भं पर्यहार्षीदिति भावः । अतितरां रसपरवशता द्योतनाय रसत्यागश्च नायकस्य नीरसतामेवापादयतीति तदुभयपरिजिहीर्षया रसान्तराङ्कुरेण सम्भोगशृङ्गारपरां कामशास्त्रपाठयितुं श्रीहर्षेण भैमीनलयोर्भिक्षुदेशावस्थापित्यकथनोपक्रमः कृतः ॥ १५३ ॥

न्यवारीव यथाशक्ति स्पन्दमन्दं वितन्वता ।
भैमीकुचनितम्बेन नलसम्भोगलोभिना ॥ १५४ ॥

न्यवारीवेति । नलसम्भोगलोभिना भैमीकुचनितम्बेन मन्दं शनैः स्पन्दगमनं वितन्वता स्वीयपीवरताऽतिशयेन शीघ्रं गन्तुमददता मता भैमी शक्तिमनतिक्रम्य शीघ्रगमनप्रतिबन्धकत्वरूपनिजशक्त्यनुसारेणैतां रतिगृहाद् बहिस्त्वया न गन्तव्यमिति न्यवारीव न्यषेधीव । निर्गताऽपि

किमिति सम्भावनया तद्विलोकनार्थं पत्युद्वारदेशं पार्श्वद्वारप्रदेशं प्रति लक्षीकृत्य प्रतिमुहुर्मुहुर्मुहुर्दृशं दिशन् ददान, तथा प्रियतमाया वि-च्छेदो वियोगस्तज्जन्येन खेदेन दुःखेनालसोऽपि तया हरध्यानार्चना-दे समाप्य मध्याह्नस्यासत्तौ प्रतिनैकट्ये सत्यामपि हठ यथा स्यादेव बलात्कारेण गलमध्यानन्दमाहरन्निव परावलम्बन्निव अघनादिरेव क्षणा-न्तरमयस्तदासत्याऽपीति वा विरहक्लेशायासे सत्यपि नित्याह्निककाल-लोपभिया शिवभक्त्या च सानन्दवशाद्गृहान्निर्गत इत्यर्थः । श्लोकचतुष्ट-येनोत्तरसर्गमङ्गलं सूचितम् इति ज्ञेयम् । प्रतिमुहुरित्यर्थे प्रतेर्मुहु शब्दे-न सह सुपेति (पा०२।१।४) समासः मुहुर्मुहुरित्यर्थः ॥ १६१ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
द्व्यन्यक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महाकाव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ १६२ ॥

समाप्तो विंशः सर्गः ॥

श्रीहर्षमिति । पूर्वार्द्धं पूर्ववत् ॥ अन्यैः श्रीहर्षव्यतिरिक्तैः क-विभिरक्षुण्णा रसस्य शृङ्गारादेः प्रमेयस्य समासोक्त्युत्प्रेक्षादेश्च भणिति-र्गुम्फना यत्र तादृशेऽपूर्वरसादिमति महाकाव्ये यः विंशः सर्गः विंशते-पूरणः व्यगलत् समाप्तिमित । भणितौ । भाषितपुंस्क विंशः तस्य पू-रणे डडिति (पा०५।२।४८) डट ॥ १६३ ॥

इति श्रीमल्लरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे विंशः सर्गः ॥

# उत्तरनैषधचरिते ।

## एकविंशः सर्गः ।

---

तं विदर्भरमणीमणिसौधादुज्जिहानमनुदर्शितसेवैः ।
स्वार्पणाद्भुजकरस्य नरेन्द्रैरात्मनः करदता पुनरूचे ॥

इदानीं पूर्वसर्गान्तप्रस्तावितमध्याह्नस्नानदेवपूजादिवर्णनार्थमेकविंशं सर्गमारभते । तमिति । विदर्भरमण्या भैम्या मणिसौधान्मणिबद्धसुधाधवलितप्रासादात् सकाशादुज्जिहानं बहिर्निर्गच्छन्तं नलमनुलक्षीकृत्य दर्शिता अत्र पुरद्वारि प्रणामादिना ज्ञापिता सेवा यैः, अवसरप्रतीक्षं बहिःस्थितैरन्तःपुरद्वारि नरेन्द्रैस्तस्य हस्तावलम्बनार्थं निजकरस्यार्पणाद्धेतोरात्मनः स्वस्य करदता पुनरूचे पुनरुक्तीचक्रे इत्यर्थः । पूर्वं सर्वेऽपि राजानः बलिरूपकरसमर्पणात् करदा अभूवन्, इदानीं तु सोपानमार्गेणावतरतो नलस्य हस्तावलम्बनार्थं निजपाणिसमर्पणात् करदा जाता इति छलेनोत्प्रेक्षा । एतेन नलस्य चक्रवर्तित्वं द्योत्यते ॥ १ ॥

तस्य चीनसिचयैरपि बद्धा पद्धतिः पदयुगात् कठिनेति । तां व्यधत्त शिरसा खलु माल्यैः राजराजिरजिनः प्रणमन्ती ॥ २ ॥

तस्येति । राजिवतीव द्वेधा अभितः पार्श्वद्वयेऽपि प्रणमन्ती राजराजिः पंक्तिपरम्परा सा निचयैर्बद्धामपि पद्धतिं शिरस्थमाल्यैः शिरोधृताभिः पुष्पमालाभिः व्यधत्त आच्छादयति स्म । इति किं । चीनसिचयैः देशविशेषोद्भवैः सूक्ष्ममृदुभिर्वस्त्रैर्बद्धा संजाता आच्छादितापि सती पद्धतिः तस्य नलस्य पदयुगात् सकाशात् कठिनेति, मृदुतरयोर्हि चरणयोर्मृदुतरपुष्पद्वारा भुवि गमनं युक्तं इति शिरोधृतपुष्पस्रजः यावद्भवति तावत्पर्यन्तं मध्यमार्गे तस्य चादरं दधतः प्रणामं सर्वेऽपि चक्रुरित्यर्थः ॥ २ ॥

द्रागुपाह्रियत तस्य नृपैस्तद्दृष्टिदानबहुमानकृतार्थैः। स्वस्वदेश्यमथ रत्नमपूर्वं यत्नकल्पितगुणाधिकचित्रं ॥ ३ ॥

द्रागिति। अथ प्रणामानन्तरं तेन कृत दृष्टिदान नेत्रनिरीक्षण तद्रूपेण बहुमानेन कृतार्थैः सफलजन्मभिर्नृपैः देशे भव देश्यं स्वस्वदेश्यं स्वोपस्वोपदेशभवं तथान्यत्र वाऽपूर्वं दुर्लभं अत्युत्तमं, तथा यत्नेन मुद्विपूर्वं शिल्पयत्नेन कल्पितैरारोपितैः सत्योज्ज्वलत्वादिरमणीयकत्वादिगुणविशेषैरधिकं अतितरां चित्रमाश्चर्यरूपं सहजैराहितैश्च गुणैरतितरामाश्चर्यकारि मणिमुक्ताकरितुरगादिरत्नं वस्तु तस्य द्राक् शीघ्रं प्रणामानन्तरमव्यवहितमेवोपाह्रियत उपदीकृतं। तत्र उपदीकृते रत्नजाते दृष्टिदानमेव बहुमान इति वा। केनेदमिदमानीतमित्यादरप्रश्नपूर्वं तेषु दृष्टिदानमेवेति वा यत्नेति पाठे यत् कल्पितगुणाधिकचित्रं न भवति किन्तु स्वाभाविकगुणाधिकचित्रमेतद्रत्नमिति सम्बन्धः। देश्य नयार्थे दिगादित्वाद्यत् दिश्यमिति पाठेऽपि, रत्नजातविशेषणं, एवमुत्तरश्लोकेऽपि ॥ ३ ॥

अङ्गुलीचलनलोचनभङ्गीभूतरङ्गविनिवेदितदानं। रत्नमन्यनृपढौकितमन्ये तत्प्रसादमलभन्त नृपास्तत् ॥ ४ ॥

अङ्गुलीति। अन्ये चिरकालसेविनस्तदानीमेवागता वा नृपा अन्यनृपैर्ढौकितमुपदीकृतं तत्पूर्वोक्तं मणिमुक्तादिरत्नजातमेव तस्य नलस्य प्रसादं पारितोषिकं दानं अलभन्त। किम्भूतं। अङ्गुलीचलनेन लोचनभङ्ग्या प्रसादसूचकनेत्रवीक्षणविशेषेण भूतरङ्गेण च एतस्मै एतद्देहीति सेवकान् प्रति एतत् त्वं गृहाणैतत् त्वं गृहाणेति राज्ञ प्रत्येकं वा विशेषेण निवेदितं दानं यस्य। अन्यैरानीतमन्येभ्यो दत्तवान् न तु कोषागारे निवेशितवानित्यनेनौदार्यातिशयश्चातुर्यं च सूच्यते। चतुरो हि तदीयमेव तस्मै न ददाति। अङ्गुल्यादिचालनेन आदानादिवेदनमीश्वरजातिः ॥ ४ ॥

तानसौ कुशलसूनृतसेकैस्तर्पितानथ पितेव विसृज्य । अस्त्रशस्त्रखुरलीषु विनिन्ये शैष्यकोपनमितानमितौजाः ॥ ५ ॥

तानिति । अथ नूतनागतराजस्वीकृतोपदानानन्तरं चिरागतराजभ्यो वितरणानन्तरं असौ अमितौजा अतुल्यपराक्रमो नलो नूतनागतान् राज्ञः कुशलसूनृतसेकैः कुशलप्रश्नसम्बन्धिमत्प्रियवचनामृतसेचनैः जयतां राष्ट्रे देहे च कुशलं भवतां कार्यं करिष्यामीत्येवंरूपैः कृत्वा तर्पितान् प्रीणितान् सबहुमानं स्वशिबिरं विसृज्य शैष्यकेण शिष्यभावेन प्रयोजकेनोपनमितान् समीपमागतान् अस्त्रादिशिक्षार्थं समीपमागतानन्यन्नृपान् अस्त्राण्याग्नेयादीनि शस्त्राणि बाणादीनि तेषां खुरलीषु हस्तचरणादिसंस्थानचातुरीविशेषेषु विनिन्ये तद्विषयं कौशलमशिक्षयदित्यर्थः । क इव, पितेव । शैष्यकेति भावे योपधाद्वुञ् । शिष्यकेति च पाठः ॥ ५ ॥

मर्त्यदुःप्रचरमस्त्रविचारं चारु शिष्यजनतामनुशिष्य । स्वेदबिन्दुकितगोधिरधीरं स श्वसन्नभवदाप्लवनेच्छुः ॥ ६ ॥

मर्त्येति । स नल आप्लवनेच्छुः स्नानावगाहनाय साभिलाषोऽभवत् । किम्भूतः । मर्त्येषु दुःप्रचरमविद्यमानप्रसरं मर्त्यैः दुःप्रचर्यमिति दुःप्रचरं नरातिरिक्तैर्मर्त्यमात्रैरज्ञाताशेषविशेषं अस्त्राणां आग्नेयाद्यस्त्राणां विचारं मोक्षोपसंहारोपायप्रकारविशेषं चारुः प्रौढप्रतिभः शिष्यजनस्तत्समूहं चारुसम्यक् अनुशिष्य शिक्षयित्वा स्थितोऽनन्तरं श्रमवशाज्जाता ये स्वेदबिन्दुकास्तैः सञ्जाता यस्य तादृशो गोधिः ललाटं यस्य अत एव धीरं दीर्घं न धीरमल्पं श्वसन् । बिन्दुकेत्यत्राल्पार्थे कन् । तारकादित्वादितच् । ललाटमलिकं गोधिरित्यमरः ॥ ६ ॥

यक्षकर्दममृदून्मृदिताङ्गं प्राक्तु रङ्गमदमीलितमौलिं । गन्धयाम्निरनुबन्धितभृङ्गैरङ्गना सिषिचुरञ्चकुचास्तं ७

यशेभि । उच्चकुचा अङ्गनास्त बहुलपरिमलेनानुयन्धिता मिलन्तो प्रङ्गा यषु तैगन्धधारिभि कर्पूरादिवासितजले सिषिचु अभ्यङ्गस्नानम कारयन्नित्यर्थ । किम्भूत । प्राक् पूर्वं कर्पूरागरुकस्तूरीचन्दनकङ्कोलचूर्णरूपण यक्षकर्दमेन सुगन्धिद्रव्येण कृत्वा मृदु यथा तथा शनै उन्मृदित अङ्ग यस्य तथा पश्चात् कुरङ्गमदेन कस्तूरिकया मौलित सम्बन्ध प्रापित मौलियस्य कस्तूरिकानिर्वासिततैलशिरसमिति यावत् । तथा।

कर्पूरमगरुश्चैव कस्तूरीचन्दन तथा ।
कङ्कोल च भवेदेभि पञ्चभिर्यक्षकर्दम ॥

इति॰ विष्णुपुराणात् ॥ ७ ॥

भूभृत पृथुतपो घनमाप्लुत शुचिः स्नपयति स्म पुराधा । सन्दधज्जलधरस्खलदो घस्तीर्थवारिलहरीरुपरिष्टात् ॥ ८ ॥

भूभृतमिति । अभ्यङ्गस्नानानन्तर शुचि आषाढ आप्त हित स्वकुलपरम्परायात पुराधा पुरोहित जलधराज्जलपूर्णात स्वर्णकलशात स्खलन पतन्नोघ सन्ततधारापरम्परा यास ता प्रभासादितीर्थवारीणा लहरीस्तरङ्गान उपरिष्टात सन्दधत प्रक्षिपन सन् पृथुना तपसा सान्द्र यथादित्यवेन च पृथ्वेन घन पूर्ण त भूभृ नल स्नपयति स्म । पूर्व सुगन्धोद्वर्तनेन शरीरशुद्धि कारयित्वा मङ्गलपूर्व शीतलोदकेन वेदोक्तमन्त्रस्नानमकारयदिति भाव । शुचिराषाढ पृथुना तपसा माघमासेनाघन माघमारभ्य ग्रीष्मा गलितघनत्वाद्गमन एवम्भूत पक्षेतमाप्तिविद्युती विशिष्टा लहरीरुपरि धारयन् बहुजल विक्षिपन आषाढ पृथुतपा यथा शैलपङ्क्तिभिघन निरन्तरव्याप्त पक्षलक्षभिर्विद्युतीति वा । तपा माघ इत्यमर शुचिस्त्वयमाषाढ इति च ॥ ८ ॥

प्रेयसी कुचवियोगमहार्त्तं गृजन्मधूमवितती रिव बिभ्रत् । स्नायिन. करसरोरुहयुग्म तस्य गर्न्न घनदर्भमराजत् ॥ ९ ॥

* गद्गद इति पाठ ।

स्नानक्रमनाह ॥ प्रेयसीति । स्नायिनो भव्यवशीर्यगाङ्गायगाहनस्ना-नविधिना स्नानं कुर्वाणस्य करसरोरुहयुगमगर्भयोरन्तर्भनीकनिष्ठान्तरान्त-योर्धृतौ दर्भौ येन एवम्भूतमराजत् शुशुभे । किम्भूतमिव प्रेयसा धृते । प्रेयस्याः कुशवियोग एव हविर्भुक् तस्मात्जन्म यामान्ताः धूमविततो-र्विच्छदिव दर्भाणां श्यामत्वाद्धूमविततिरियं युक्तम् ॥ ९ ॥

कल्प्यमानममुनाचमनार्थं गाङ्गमम्बु चुलुकोदर-
चुम्बि । निर्मलत्वमिलितात्प्रतिबिम्बाद्द्यामय-
च्छदुपनीय करे नु ॥ १० ॥

कल्प्येति । अमुना आचमनमर्थः प्रयोजनं यस्य आचमनं कर्तुं वा कल्प्यमानं स्वीक्रियमाणं चुलुकोदरचुम्बि चुलुकमध्यवर्ति गाङ्गमम्बु कर्तृ निर्मलत्वेन मिलितस्तस्मिन् जातः प्रतिबिम्बो यस्यास्तां द्यां स्वर्गं उपनीय समीपस्थां कृत्वा हस्तप्राप्यां कृत्वा करे अयच्छत् दानृदाने तदुत्प्रेक्षायां स्नानप्रारम्भानन्तरमाचमनं चकारेत्यर्थः । अन्य-दपि दुर्लभं वस्तु हस्ते आनीय दीयते ॥ १० ॥

मुक्तमाप्य दमनस्य भगिन्या भूर्भरात्तद्दयितं
धृतरागा । अङ्गमङ्गमनुकं परिरेभे तं मृदो
जलमृदुग्रहयालुं ॥ ११ ॥

मुक्तमिति । भूमिः आत्मनो भूपतित्वाद्दयितं प्रियं भर्तारं नलं स्नानकाले दमनस्य भगिन्या भैम्या मुक्तं विरहितमाप्य लब्ध्वा धृतो रागो लौहित्यं यया अथ च सानुरागा सती ऊषरादिमृत्तिकानिषेधात्त-त्परिहाराय जलस्पर्शमात्रेण शिथिलायमानाः मृदुतरस्पर्शा स्नानार्थमानीताः मृदो गङ्गादिमृत्तिका ग्रहयालुं गृह्णन्तं अनुकं आत्मनः कामुकं तं अङ्गमङ्गं प्रत्यङ्गं परिरेभे आलिलिङ्ग । श्रौतमार्गेण ललाटाद्यङ्गेषु रक्तमृत्तिकालगनव्याजेनान्यदा तु प्राप्यं स्ववल्लभं भूरालिलिङ्गेति भावः । प्रतीयमानोत्प्रेक्षा । अन्याऽपि सपत्नीमुक्तं वल्लभं चिरात्प्राप्य सानुरागा सती प्रत्यङ्गमालिङ्गति कं सुखं लक्षीकृत्य सुखार्थं येनालिलिङ्गेति वा ।

शुक्ला विप्रस्य रक्ता तु क्षत्रियस्याथ मृद्विशः ।

मिश्रा शूद्रस्य कार्या तु क्रमान्मृद् उदाहृता ॥

इति स्मृतेः । अनुक्त अनुकाभिकाभीक कमिता (पा०५।२।७४) इति साधु । अनुकिमिति पाठे सर्वाण्यङ्गानि लघीकृत्य परिरेभे किमित्यर्थः ११

मूलमध्यशिखरस्थितवेधा शौरिशम्भुकरकाङ्घ्रिशिरस्थैः । तस्य मूर्ध्नि च करे शुचिदर्भैर्वारि वान्तमिव गाङ्गतरङ्गैः ॥ १२ ॥

मूलेति । सप्तमूलैस्त्रिभिरगर्भैर्दर्भैस्तस्य मूर्ध्नि शुचि निर्मलं कुम्भाप्यसत्त्वात् पवित्रतरञ्च मार्जनसमत्र तत्सम्बन्धि वारि च करे विक्षिप्त । कृविक्षेपे । किम्भूतैः ।

कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।
कुशाग्रे शङ्कर विद्यात्त्रयो देवाः कुशे स्थिताः ॥

इति वचनात् मूले मध्ये शिखरे च क्रमेण स्थितानां वेधशौरिशम्भूनां ब्रह्मविष्णुहराणां क्रमेण करके कमण्डलौ अङ्घ्रौ पदाम्बुजे शिरसि च गङ्गा सत्त्वं देति पुराणप्रामाण्यस्थितैरेवम्प्रकारेण दर्भैः समन्वयङ्गिर्गङ्गासम्बन्धिभिस्तरङ्गैर्वान्तमिव उद्गीर्णमिव कुशमूलादिस्थितब्रह्मादिदेवता यत्र करकादिनिष्ठगाङ्गतरङ्गत्वैरिव पवित्रैर्दर्भाग्रजलैः स्नानाङ्गभूत मार्जनमकरोदित्यर्थः । कमण्डलौ च करक इत्यमरः । वान्त इदित्व क्त यस्य विभाषेति (पा० ७।२।१५) निष्ठायामिनिषेधः ॥ १२ ॥

प्राणमायतवतो जलमध्ये मज्जमानमभजन्मुखमस्य । आपगा परिवृढोदरपूरे पूर्णकालमुचितस्य सुधांशोः ॥ १३ ॥

प्राणमिति । सुवर्णघटितमहापात्रस्तीर्थस्योपकल्पितमनुत्तककरकृतायगाहनजलमध्ये ।

गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ।
प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ इति ।

य एवलक्षणोक्तलक्षणलक्षित प्राणं प्राणायामं आयतवत कृतवत

वेषमिषेण ॥ १५ ॥

भीमजामिति । राजकन्याया सदाचारनृपाणां मध्ये इन्द्रः स नल. उत्तरीयस्योपरितनवस्त्रस्य परिवेषमिषेण वेष्टनव्याजेन हृदय मन अथ च वक्ष स्थल समन्तात् प्रावकार ववन्ध पिदधे च । किम्भूत । यत प्रतिपल वार वार भीमजा मनुलक्षीकृत्य अनुरागातिशयाच्चलद-भिमुख धावत । किम्भूत इव तद्धृदय सविधमुरिव सम्यक् नितरा नियन्तु मिच्छु रिव समनात्र त्वया न गन्तव्यमिति गाढ सयत्र कर्तुमि-च्छति वा स्मृत्यादायेकवासस कर्मानधिकारोक्तेरुत्तरीयवस्त्रधारणं यु-क्तं । अन्योऽप्यन्यत्र गमनोत्सुको बलाद्गृहवादिना स्थाप्यते समन्ता-दिति च पाठ । राजा ऋषिरित्यक इति प्रकृति भाव ॥ १५ ॥

स्नानवारिघटराजदुरोजा गौरमृत्तिलकबिन्दुमुखेन्दुः । केशशेषजलमौक्तिकदन्ता तं बभाज सुभगाप्लवनश्री ॥ १६ ॥

स्नानेति । सुभगा मनोहरा अथ च सौभाग्यवती आप्लवनश्री स्नानलक्ष्मीस्तं बभाज सिषवे स्नानेन नितरा शुशुभे इत्यर्थ. । किम्भूता । स्नानार्थं वारि तद्युक्ता. सुवर्णघटास्त एव राजन्तौ उरोजौ कुचौ यस्या सा तथा ऊर्ध्वं वृत्तं तिर्यगर्धचन्द्राकारा. यथोना क्रमात्ति-लका इति दत्तवचनात् । ललाटे धृतो गौरमृत्तिलकबिन्दुर्गङ्गातीरमृ-द्गोपीचन्दनादिरचितो वर्तुलस्तिलक स एव गौरवृत्तत्वान्मुखेन्दुर्यस्या सा तथा. हस्तयत्नेन मार्जयेदिति स्मार्तवचनेन वेषस्नानानन्तर वस्त्रा-दिना केशमार्जनस्य निषेधात् केशेषु शेष जल केशप्रान्तेभ्यो गलद्व-च्जल जलबिन्दवस्त एव मौक्तिकानि दन्ताश्च यस्या, यद्वा जलमौक्ति-कानि मुक्तावत् स्थूलजलबिन्दवस्त एव दन्ता यस्या सा एवम्भूता रमणीयदशना तिलक दधारेति भावः । अन्याऽप्येवंविधा तरुणी कञ्चिद्भजत इति ॥ १६ ॥

श्वैत्यशैत्यजलदैवतमन्त्रस्वादुताप्रमुदितां चतुरा

द्वीं । वीक्ष्य सोऽघमृतसौरभलोभं घ्राणमस्य स लिलघ्‌मिवाभूत् ॥ १७ ॥

शैत्येति । शैत्येन सौत्येन च अनवद्यमं येषां तैराप्यैः सलिलदैवतं वरुणस्तत्सम्बन्धिभिर्याजुषैर्मन्त्रैः शब्दात्मकैः स्वादुतया मधुररसतया च जलगतविशिष्टरूपस्पर्शशब्दरसलक्षणस्य स्वविषयलाभेन प्रमुदितां अतितरां सन्तुष्टां चतुराक्षीं इन्द्रियचतुष्टयं क्रमेण चक्षुस्त्वक्श्रोत्ररसन-समाहाररूपां नेत्रादिचतुष्टयीं वीक्ष्य घ्राणेन्द्रियं सहजगन्धस्य पृथिव्या असाधारणगुणत्वाज्जले तदसम्भवात् कर्पूरादिवासितस्य च जलस्य दे-वस्नापनादिधर्म्मकर्म्मसु प्रतिषेधादौपाधिकस्याप्यसम्भवात् लोपो नि-ष्फल एव धृत सौरभे शोभनगन्धे लोभो येन लोभस्तज्जातीयस्पृहां विगलितविवेक सन् अस्य चैत्यादिरूपस्य चमर्षेण चुलुकोदकस्पृहांमि-षेण सलिलं जिघ्रतीति सलिलघ्रं जलाघ्राणं कुर्वदिवाभूत्, लोभरयद्वां-भ्यां विगलितविवेको ह्यविषयेऽपि प्रवर्त्तते । सन्ध्याचमर्षेण चकारेति भाव. । शैत्यं वर्णवादित्वात् ष्यञ् । चतुराक्षीं समाहारे द्विगोरिति (पा० ४ । १ । २१) ङीप् । सलिलघ्रं आदन्तत्वात् क ॥ १७ ॥

राज्ञि भानुमदुपस्थितयेऽस्मिन्नात्तमम्बु किरति स्वकरेण । भ्रान्तयः स्फुरति तेजसि चक्रुस्त्वष्टृतर्कुचलदर्कवितर्कं ॥ १८ ॥

राज्ञीति । अस्मिन् राज्ञि भानुमत सूर्यस्योपस्थितये उपस्थानार्थं आत्तं गृहीतमर्घ्यदानसम्बन्धि स्वकरेण स्वपाणिना अर्घ्यदानानन्तर या "असावादित्यो ब्रह्म" इत्यादि मन्त्रपूर्वकं जलं शिर परितः स्व-पाणिना स्फुरति प्रकाशमाने तेजसि सौरप्रभाप्रसरे मध्ये गलद्बिन्दु क्रमेण किरति सति भ्रान्तय शिशोदकस्येव प्रादक्षिण्यपरिभ्रमणानि लोकस्य त्वष्टुर्विश्वकर्म्मणस्तर्कुं शाणचक्रं तत्र घर्षणवशाच्चलतो भ्रा-म्यतो विश्वकर्मणतीक्ष्णतेज करणस्य अर्कस्य वितर्कं तद्विषयविशिष्टमूह चक्रुः । प्रकाशमानसौरप्रभा मध्यपतद्बिन्दुजलभ्रमणदर्शनेन विश्वक-र्मणा सूर्यः पुनरपि शाणचक्रे धृत किं । अत एव तीक्ष्णा. पत-

जले यथार्पण कर्मभूत पुनरुक्तमाख्यत् अकरोदित्यर्थः । देवतर्पणं हि यवै क्रियते ते चाङ्गुलीपर्वसु पूर्वमेव वर्तन्ते एवमायत्यैव पौनरुक्त्यं । तथा न्युप्यमानेन पितृभ्यो दीयमानेन जलेन योगिभिः सङ्गादिप्यमाणैः कृष्णतिलौघैः कृत्वा स नलो द्विरुक्त पुनरुक्तः करतलाङ्गुलिः करकमलमध्यवर्तीमातृमुद्रिकलक्षणभूतः सूक्ष्मकालतिलाकारो यश्चिह्नो यस्य तादृशोऽभूत् । पितृतर्पणं हि तिलैः क्रियते स च तिलस्तलहस्त मध्ये वर्तत एवेति पौनरुक्त्यं ब्रह्मयज्ञदेवपितृतर्पणमपि तेनाकारीति ज्ञाय । आद्यन्तयोर्देवपितृतर्पणयोर्मध्ये वर्तमान ऋषितर्पणमपि तेन कृतमिति ज्ञेय । न्युप्यमान प्रज्ञादित्वात् समप्रसारण ॥ २० ॥

पूतपाणिचरणः शुचिनोच्चैरध्वना नितरपादहतेन । ब्रह्मचारिपरिचारिसुरार्चावेश्म राजऋषिरेष विवेश ॥ २१ ॥

पूतेति । एष राजा चासौ ऋषि श्रुतिधर्माचरणशीलो नल देवपूजागृहप्रवेशोचित्यार्थं पूतं जलक्षालित पाणिचरणं यस्यैवंभूत सन् शुचिना गोमयलिप्तेन पवित्रेण तथा नितरस्य नलातिरिक्तस्य पादेनाहतेऽन्यचरणरपर्शादूषितेनेत्यर्थः । उच्चैः कर्तुं अध्वना सोपानबहुलमार्गेण । यद्वाऽनितरपादहतेन अत एवोच्चैनितरां शुचिनाऽध्वना ब्रह्मचारिण उपनीता द्विजा परिचारिणो देवसेवाकारिणो यत्र एवम्भूत सुरार्चावेश्म सुवर्णादिनिर्मितमन्त्रसंस्कृतप्रतिमा गृह देवपूजासम्बन्धिनो गृह विवेश ॥ २१ ॥

क्वापि यत्र नभसि धूपजधूमैर्मेचकागुरुभवैर्भ्रमराणाम् । नूयते स्म सुमनः सुमनःस्रग्दामधामपटले पटलेन ॥ २२ ॥

क्वेति । यस्य देवपूजागृहस्य नभसि अन्तरावकाशे क्वापि कस्मिन्नपि प्रदेशे सुमनसा देवाना पूजार्थमानीताः सुमनसः पुष्पाणि नाना स्रग्दामानि नानाप्रकाराः । यद्वा स्रज कण्ठमाला दामानि शिरोमाल्यानि तेषा धामानि स्थानानि मध्यस्थापितपुष्पपर्णमृण्मयादिपा-

त्राणि तेषां पटलं समूहे विषये तेषामुपरिष्टात् मेचकागरुसमूहैः कृष्णागरुमसृद्रव्यैर्धूपनैः सौगन्ध्यार्थं रचितैर्धूमोत्करैर्धूमैरेव स्त्रगराजा पटलेन गगनं भूषितं स्म जातं । पुष्पाणामुपरि भ्रमरैर्भाव्यं तथा च धूमजधूमा एव तत्स्थाने जाता इत्यर्थः । सुमनसो मालत्याः पुष्पाणां मालापरम्परास्तासां स्थानं तदुचितमिति यावत् एव पटलं वितानं यत्र तादृशी या देवानामुपरि पुष्पवितानमपि निबद्धं यत्रेत्यर्थः । देवपूजार्थं उपहृतपुष्पमालापरम्परायाः स्थानभूतं पटलं गृहप्रान्तच्छदिर्यत्र तादृशाद् न्तरप्रदेशो देवतागारं हि छदिः प्रान्ते । सौरभरामणीयकार्थं पुष्पमाला बध्यन्ते तासामुपरि धूमा एव स्रजा जाता इत्यर्थः इति वा । बहुतरा धूपाः पुष्पमालाश्च यत्र सन्तीति च अ. । सुमना मालतीजातिरित्यमरः । प्रान्तोऽयं पटलं छदिः ॥ २२ ।

साङ्कुरेव रुचिपीततमाभिर्यैः पुरास्ति रजनीरजनीव । ते धृता वितरितुं त्रिदशेभ्यो यत्र हेमलतिका इव दीपाः ॥ २३ ॥

साङ्कुरेति । यत्र देवगृहे तं दीपाः हेमलतिका इव त्रिदशेभ्यो वितरितुं धृताः स्थापिताः सन्ति ते के ये. यैर्दीपैः रुच्या दीप्त्या पीततमं प्रस्तं तमो यस्यास्तादृशी या भूता भविष्यति वा रजनी रात्रिः साङ्कुरेवोद्भिन्नप्रत्यग्रतेजोऽङ्कुरसहितेव पुरास्ति अभूत् भविष्यति वा । तथा यैः कृत्वा कान्त्या पीततमा अतितरां पीतवर्णा अत्यन्तगौरी रात्रिः सङ्कुरवत् प्रकुरा रजनीव हरिद्रेव अभूत् भविष्यति वा । रात्रिः पीतीभूततया हारिद्रावत् , प्रदीपकलिकाश्च तदङ्कुरा इवेत्युत्प्रेक्षाद्वयं वा । निशाख्या काञ्चनी पीतेत्यमरः । पीततमा पक्षे साक्त पक्षे तमसन्त । पुरास्तीति पुरिलुङ् चेति ( पा० ३ । २ । १२२ ) यावत् पुरेति ( पा० ३ । ३ । ४ ) भविष्यति वा लट् ॥ २३ ॥

यत्र मौक्तिकमणेर्विरहेण प्रीतिकाममनुनन्तुमिपदेन । कुङ्कुमेन परिपूरितमन्तः शुक्तयः शुशुभिरेऽनुभवन्त्यः ॥ २४ ॥

स राजा नलः शिवमपूजयदिति भावः । घनूर कनकाह्वय इत्यम-र । वाग्भावश्चियत्रपि तु काहलेति विश्वः ॥ ३४ ॥

अर्चयन् हरकरस्मितभाजा नागकेसरतरोः प्रस-वेन । सोऽयमापयदतिर्यगवाक्षिक्रकपालपाण्डु-रकपालविभूषा ॥ ३५ ॥

अर्चयन्निति । स्मितं विकासं भजते स्मितभाक् तेन विकसितेन नागकेसराख्यस्य तरोः प्रसवेन पुष्पेण कृत्वा हरकरं सुवर्णादिघटित-दक्षिणादूर्ध्वादिशिवप्रतिमापाणिं अर्चयन् पूजार्थं स्थूलतरं शुभ्रतरं केसरकुसुमं तस्याग्रे स्थापयन् सोऽयं नलः तिरश्च्या दिशः ति-र्यक्त्वे सति प्राच्यादिदिगष्टकात् अवाच्या अधोदिशः सकाशाच्चान्या अतिर्यगवाक्षिक ऊर्ध्वा तस्याः पाता रक्षकः ब्रह्मा तस्य चिरका-लपर्यन्ताद्भुतं शिरः पाण्डुरं धवलं शिरः तत् ब्रह्मकपालम् इत्या विभू-षा अलङ्कृतिः कपालरूपा विभूषा आपयत् प्रापयत । हरेण ब्रह्म-णः पञ्चमं शिरः छिन्नं तत्प्रायश्चित्तं कुर्वता हरस्य भिक्षार्थं करे स्थि-तमिति तत्र हरप्रतिमायामपि तेन भवितुं युक्तमिति नागकेसरपुष्पकृ-पेण ब्रह्मकपालेन तत्करस्याप्यलङ्कारत्वम् । धाम्पत्य कनरा नागकेसर क्षुद्राह्वय इत्यमरः । हरकरमर्चनायाप्तया कर्मत्वम् , पदे आप्नोते-र्गत्यर्थत्वाद्दरो कर्तुर्णिकर्मत्वम् । तिर्यगवाक्षिति अव्ययं तिर्यगवा-क्पात्रो दिक्ष वा इति समासः ॥ ३५ ॥

नीलनीरजमाल्यमधी स न्यस्य तस्य गलनाल-विभूषा । स्फाटिकीमपि तनुं निरमासीन्नीलक-ण्ठपदसान्वयतायै ॥ २६ ॥

नीलेति । स नलः तस्य हरस्य स्फाटिकनिर्मितामपि तनुं हरप्र-तिमां नीलनीरजरूपाया माल्यं माला तन्मयीं गलनालं कण्ठं तस्य विभूषा भूषणं न्यस्य आबध्य नीलकण्ठवाचकं यत्पदं तस्य सान्वयता-यै अन्वयमाहित्याय नीलः कण्ठो यस्येति सम्यगन्वयार्थत्वाय निरमा-

सीत् निर्मितवान् । नीलोत्पलमालां कण्ठे बध्वा स्फाटिकीमपि शिवप्रतिमां नीलकण्ठपदसहितामकरोदित्यर्थः । कण्ठे एव नीलोत्पलपूजां चकार अन्यत्र तु चन्दनश्वेतपुष्पादिभिः पूजितवानिति भावः ३६

प्रीतिमेष्यति कृतेन ममेहक्कर्मणा पुररिपुर्मदनारि. । तत्पुर पुरमतोऽयमधाक्षीद्धूपरूपमथ कामशरञ्च ॥ ३७ ॥

प्रीतिमिति । पुराणां दैत्यविशेषाणां रिपुस्तथा मदनस्य शरिः शिवः मम कृते ईदृशा कर्म्मणा पुरकामशरदाहरूपव्यापारेण प्रीतिमेष्यति प्रसन्नो भविष्यति । अतो हेतोरेव इति बुध्द्यैव अयं नलस्तस्य पुररिपोः कामारेः पुरं धूपस्वरूपं अथच धूपविशेषधारिणं पुरं गुग्गुलं अधाक्षीत् ददाह । अथ च तद्दाहानन्तरं धूपविशेषरूपं कामशरञ्च ददाह यस्मारियंद्रिपु शरश्च यदश्च येन दह्यते स तस्मिन् प्रीयत एव । शिवजयेन वैपान्तरधारिणं पुरं दैत्यं कामवाणञ्च मोहनाख्यं ददाहेत्यर्थः । धूपसमर्पणान्तां शिवपूजामकरोदिति भावः । ईदृशपुष्पपूजातेन भक्तिपूर्वकेनापि कर्म्मणा पुररिपुः कामारिः शिवो मम कृते मदर्थं मयि विषये प्रीतिं न यास्यति एतावताऽपि सन्तुष्टो न भविष्यति, अतः कारणादिव तदर्थे पुरं कामशरञ्च ददाह । एवं कृते सन्तुष्टो भविष्यतीति धियेति भावः इति वा । पुररिपुर्मदनारि इति च योगसैवात्र प्राधान्यान्न पौनरुक्त्यम् । गुग्गुलौ कथितं पुर इति विश्वः । तत्पुरं द्वीपपष्ठीसमासः । अन्यथाऽव्ययेन सह षष्ठीसमासनिषेधः स्यात् । तदिति लुप्तषष्ठीकविभक्तिप्रतिरूपकमव्ययं पृथक् पदं वा ॥ ३७ ॥

तन्मुहूर्त्तमपि भीमतनूजाविप्रयोगमसहिष्णुरियाय । शूलिभौलिशशिजीनतयाऽमुष्यानमूर्च्छनमिमीलितनेत्रः ॥ ३८ ॥

तदिति । तन्मुहूर्त्तं तस्मिन् देवपूजाक्षणेऽपीत्यर्थः । भीमतनूजायाः विप्रयोगमसहिष्णुरयं नलः शूलिनौली यर्शमानाख्यशशिनो शीतलयथ विरहव्यथेन यस्य कर्म वकापतारतया प्रलय तेन हेतुना निमी-

लोल। भृङ्गभङ्गिरिव रुद्रपरस्त्रेणिराश्रयत रुद्रपरस्य ॥ ४१ ॥

व्यापृतेति। रुद्रशब्दात् परेषां पदाद्दुच्चार्य्यमाणानां रुद्राणामित्यर्थः। रुद्रः परा दैवतं येषां ते रुद्रपराः शिवभक्तास्तत्सम्बन्धिना तेषांर्थमाणानामिति यावत्। तादृशानाम् अक्षाणां मणीनां श्रेणिर्माला भृङ्गभङ्गिर्भ्रमरपङ्क्तिरिवास्य नलस्य नवपल्लववल्लीनां यस्य नवपल्लवसदृशमित्यर्थः। एवंविधं पाणिं करम् आश्रयत सिषेवे। किम्भूतस्य। रुद्रपरस्य शिवभक्तस्य शत एव शतं रुद्रा देवता यस्य शतरुद्रसम्बन्धिनः शतरुद्रियसंज्ञस्य "नमस्ते" इत्यादिशिवसूक्तस्य जपे विधौ व्यापृतस्य सव्यापारस्य रुद्राक्षाणां रुद्रमित्यर्थः नमस्त इत्यादिरुद्रजप रुद्राक्षजपमालया चकारेत्यर्थः। भृङ्गमालाऽपि नवपल्लवं सेवते। शतरुद्रियेत्यत्र शतरुद्राद्घश्चेति वक्तव्यात् (पा०४।२।२८ वा०) घः। आसौ नितुश्चेति (पा०७।३।२८) इड् निषेधः। "पद्माक्षैश्चैव रुद्राक्षैः" इत्यादि हारीतोक्तो इत्युक्तस्तु जपमालाविधिर्द्रष्टव्यः। अणिमादिसिद्धये पद्माक्षैश्चैव रुद्राक्षैरिति ज्ञातव्यम् ॥ ४१ ॥

उत्तमं स महति स्म महीभृत् पूरुषं पुरुषसूक्तविधानैः। द्वादशापि च स केशवमूर्तीर्द्वादशाक्षरमुदीर्य्य ववन्दे ॥ ४२ ॥

उत्तममिति। स महीभृन्नल उत्तमं पूरुषं पुरुषोत्तमं पुरुषसूक्तस्य सहस्रशीर्षेत्यादिषोडशर्चो विधानैरनुष्ठानप्रकारविशेषैः।

"दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः" ॥

तथा। "ओङ्कारपूर्वकैरेव वर्गैर्मन्त्रैः पृथक् पृथक्।
आवाहनासनं पाद्यमर्घ्यमाचमनीयकम् ॥
स्नानं यज्ञोपवीतञ्च गन्धमाल्यादि च क्रमात्।

धूप दीपञ्च नैवेद्य नमस्कारं प्रदक्षिणं ।
षोडश्योद्वासनं कुर्य्यादेव नारायणो विधिः" ॥

इत्यादिस्मृतिवाक्यविहितमत्यक्रमं निर्दिष्टषोडशोपचारैरेहति स्म धापूजयत । तथा च मनः "यदादेमुवासवगभमोत्,, इति व्य क्रमोक्तं द्वादशाक्षरं वासुदेवमन्त्रं वैरवागमोक्तक्रमेण सदीयां मम्यगुच्चार्य द्वादशापि केशवमन्त्यिमोमूर्त्तीर्व्ध्यावो द्वादशशालग्रामशिलामूर्त्तीर्यदन्दे तुष्टाय प्रणाम या ता अभ्यपूजयदिति भावः ।

"शिला द्वादश भो वैश्य शालग्रामसमुद्भवाः ।
विधिवत् पूजिता येन तस्य पुण्यं वदामि ते ॥
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ।
यत्स्याद्द्वादशकल्पेषु दिनेनैकेन तद्भवेत्" ॥

इति विष्णुपुराणादिति भाव । पूर्वोक्तद्वादशाक्षरमुच्चार्य्य द्वादशसङ्ख्याका अपि केशवसन्व्यिमोर्त्तीः सामर्थ्यादेतन्मन्त्राक्षरक्रमनूचिता । "ओं केशवाय धात्रे नमः,, इति प्रकारेण

"द्वादशादित्यसहिता मूर्त्तीर्द्वादश चिन्तयेत् ।
केशवाद्याः क्रमाद्देवे वक्ष्यमाणविधानतः ॥
ललाटे केशवं धात्रा कुक्षौ नारायणं पुनः ।
अर्य्यम्णा हृदि मित्रेण माधवं कण्ठदेशतः ॥
वरुणेन च गोविन्दं पुनर्दक्षिणपार्श्वके ।
अंशुना विष्णुमंसे भगेन मधुसूदनं ॥
गले विवस्वता युक्तं त्रिविक्रममनन्तरं ।
वामपार्श्वस्थमिन्द्रेण वामनाख्यमथांसके ॥
पूष्णा श्रीधरनामानं गले पर्जन्यसंयुतं ।
हृषीकेशमथपृष्ठे पद्मनाभं ततःपरं ॥
त्वष्ट्रा दामोदरं पश्चाद्विष्णुना ककुदि न्यसेत् ।
द्वादशार्णमथामन्त्रं ततो मूर्द्ध्नि प्रचिन्तयेत्,, ॥

द्वादशाक्षरमन्त्रगर्भितमिति ज्ञातव्यं । इति प्रकारान्तरमागमोक्तं द्रष्टव्यं । महीयानिति पाठे निखिलागमशास्त्रकोविदः परमभक्तश्च-

स्वर्णकेतककृतानि स हेम्नः पुण्डरीकघटनां रजतस्य। मालयारुणमणेः करवीरं तस्य मूर्ध्नि पुनरुक्तमकार्षीत् ॥ ४५ ॥

स्वर्णेति। स नलः तस्य पुरुषोत्तमस्य मूर्ध्नि केशैः सुवर्णघटितपुष्पाणां मालया कृत्वा स्वर्णकेतकीपुष्पाणां शतानि, तथा रजतस्य रूप्यघटितपुष्पाणां मालया कृत्वा पुण्डरीकाणां सिताम्भोजानां घटनां समर्पणां, तथाऽरुणमणेः समर्पितमाणिक्यपद्मरागादिरक्तवर्णमणीनां मालया च कृत्वा करवीरपुष्पाणि एतत् सर्वं पुनरुक्तमकार्षीत्। सुवर्णेनाप्यनेनैव पूजायाः सिद्धत्वात् स्वर्णकेतकादिभिरधिकं चकारेत्यर्थः। स्वर्णकेतकादिभिः सुवर्णघटितपुष्पादिभिश्च श्रीपुरुषोत्तमपूजादिति भावः। विष्णुपूजायां कमलकरवीरजपावाणपुष्पव्यतिरिक्तानां रक्तपुष्पाणां निषेधः। नृपारोपितकरवीरकुसुमपूजानिषेध इत्यविरोधः। पुनरुक्तं नपुंसकमनपुंसकेन (पा०१।२।६९) इत्येकशेषैकवद्भावौ ॥ ४५ ॥

नाल्पभक्तबलिरन्ननैवेद्यैस्तस्य हारिणमदेन स कृष्णः। शङ्खचक्रजलजातपदार्चः शङ्खचक्रजलपूजनयाऽजन् ॥ ४६ ॥

नाल्पेति। स पुरुषोत्तमः तस्य नलस्यान्ननैवेद्यैः तेन समर्पितैर्नानाविधौदनानामुपहारैः कृत्वा नाल्पोऽतिमहान् भक्तबलिः, औदनोपहारो यस्य, अथ च अतिमहानभक्त्या श्रद्धापरो बलिर्यस्यैवंविधस्तोऽभूत्। तथा नलसमर्पितेन हारिणमदेन कस्तूर्या कृष्णवर्णोऽथ च कृष्णनामाऽभूत्। तथा शङ्खचक्रादिचिह्नदक्षिणावर्तादिशङ्खानां चक्रं समूहस्तत्र स्थितेन जलेन कृत्वा या पूजना अभिषेकार्घ्यदानादिरूपा तया कृत्वा शङ्खचक्रजलेन जातपदी सम्पन्नाऽर्चा पूजा यस्य, स च च शङ्खः पाञ्चजन्यः चक्रं सुदर्शनं जलजातं पद्मं तानि निषेवन्ते यस्यास्तादृशी शङ्खचक्रपद्मयुक्ताऽर्चा प्रतिमा यस्यैवम्भूतोऽजन्। पुरुषोत्तमसम्बन्धिनामेतेषां शब्दानामन्वर्थत्वं। एतत्कृतान्ननैवेद्यादिमर्प

येन इदानीमजूदित्यर्थः । एतन्नियमेन संशय्य यत्नाः मस्ता इति था । अत्र प्रतीयमानोत्प्रेक्षा । प्रसितोत्सुकाभ्यां पुंसि इत्यमरः । नाएपे- ति न समास. । हारितोऽपि सम्बन्धेऽण् ॥ ५६ ॥

राज्ञि कृष्णगुरुधूपजधूमाः पूजयत्यहिरिपुध्वज मस्मिन् । निर्ययुर्भयधुता भुजगा भीरुर्वंशो म लिनना इव जालैः ॥ ५७ ॥

राज्ञीति । कृष्णगुरु कृष्णागुरुः तस्य धूपजधूमा धूपकरणसम्बन्धि नो धूमा अस्मिन् राज्ञि नले ऽहिरिपुर्गरुडो ध्वजे यस्य तं गरुडध्वज धूपोपचारेण पूजयति सति जालेभ्यो गवाक्षेभ्यो बहिर्निर्ययुः । उत्प्रेक्षते । भीरि र्वंशो गरुडागमेति भयजन्येन कम्पेन धूता कम्पिता अपि म- लिनिनाः श्यामीकृता देवतागारस्थितेन गरुडेन हरेण स्वदेहे भूषणत्वे न धूता वासुकिप्रमुखा भुजगा इव । अयमस्मद्रिपुकम् पाजयति, अ- स्मिन् विपुनिकटे स्थातुमशक्यमिति इवाश्रिताः सबला अपि सर्पा दुर्व- र्णा मलिनिना इव दह्यमानकृष्णागुरुधूमव्याजेन जालैर्निर्ययुरित्य- र्थः । अन्योऽपि भीमलिना जालादिद्वारेण निर्गच्छति । अगुरुपर्यायो लघुवत्स. तत्र कृष्णागुरुरित्यत्र ॥ ५७ ॥

अर्घनिस्वमणिमाल्यविमिश्रैः स्मेरजातिमयदाम सहस्रैः । तं पिधाय विदधे बहुरत्नक्षीरनीरनिधिमग्ननिवेशः ॥ ५८ ॥

अर्घेति । स च नल अर्घं । मूल्येन निःस्वा दरिद्रास्तेषां अत्युत्तमाना मणीनां माल्यैर्मालाभिर्विमिश्रैः स्मेरजातिमयदाम सहस्रैर्विकसितमा- लतीकुसुममालासहस्रैः तं पुरुषोत्तमं पिधाय आच्छाद्यैव बहूनि रत्ना- नि यस्मिन् स बहुरत्नो यः क्षीरनीरनिधिस्तत्र मग्नमिव विदधे चकार सर्वं सर्वे मणिमालाभिर्मिश्रं पुष्पमालाभिः संवेष्ट्य बहुरत्नक्षीरसमुद्र मग्नमिव चकारेत्यर्थः । रत्नस्थाने रत्नान्येव क्षीरस्थाने च तानि दा मानि हि राजिभिः पर्यपूपुरदिति भाव । समुच्चयनिवृत्तो जलनिधि

प्रतिपत्तिं । इत्युदग्रपुलकं वलिनोक्तं त्वां नमामि कृतवामनमायं ॥ ६३ ॥

एवं वामनेनोक्ते बलिरुत्तरमाह । दातेति । हे वामन अहं कृता वामनस्य ह्रस्वपुरुषस्य माया येन तथाऽहमनेन छात इति ख्यात्या वात्सल्यं वशादुदग्रपुलकं सञ्जातरोमाञ्चमिति पूर्वोक्तप्रकारेण वलिना कथितं त्वां नमामि । इति किं । हे ब्रह्मन् अस्मि दानधारिभिर्दरिद्राय कृताभिलाषाय ते तुभ्यं त्रिलोकीसम्पदः सुगता प्रतिपत्ति सङ्कल्पेन दानं यदिदं दास्यामि । सर्वामपि सम्पदं तुभ्यं दातुमिच्छामि । अथ त्वं दानवानामरि शत्रुरसि तत्र कायविभूते शरीरवैभवस्य प्रतिपत्तिं पुनः निवारामहमिच्छामि कीदृशं महच्छरीरं धारयिष्यसि तद्द्रष्टुमिच्छामीत्यर्थः । यद्वा तव कायवैभवस्य प्रतिपत्तिं कृपान्तरं धारयिष्यामीति त्वया पूर्वितं सुखेन धारणीयमित्यहं कामये इत्यर्थः । अस्मीत्यहमर्थेऽव्ययं ॥ ६३ ॥

भोगिभिः क्षितितले दिवि वासं बन्धमेष्यसि चिरं ध्रियमाणः । पाणिरेष भुवनं वितरीति च्छद्मवारिभरयं वामन विश्वं ॥ ६४ ॥

अथ बलिनोक्ते वामनः प्राह । भोगिभिरिति । हे वामन इति एवमुक्तवाभि छद्मवारिभिः कपटवचनैरुपलक्षितस्त्वं विश्वं अयं ददौ । इति किं । भो बले चिरं चिरायुषेन बहुकालं क्षितितले भूलोके दिवि वा ध्रियमाणोऽवतिष्ठमानस्त्वं भोगिभिः सुखिभिर्मित्रज्ञातादिभिः सह सम्बन्धं सयोगं एष्यसि प्राप्स्यसि यदि, यदि भूलोकेऽवस्थितिमिच्छसि तर्हि तत्र, यदि दिवि तत्र वा मित्रादिभिः सह सुखेन चिरकालमवस्थितिं प्राप्स्यसीत्यर्थः । इत्याशीः । एष प्रतिग्रहे मे प्रसार्यमाणः प्रत्यक्षदृश्यो मम करोऽस्ति तस्मादत्र पाणौ यद्दानसम्बन्धिभुवनं जगत् वितर देहीति । अथ च क्षित्यास्तले पातालतलभवे दिवि रमणीयत्वात् स्वर्गे भोगिभिः सर्पैर्ध्रियमाणो बध्यमानः सन् चिरकाल वासं तु एवहु लत्वाद् वमतिरूप बन्धन प्राप्स्यसि । यद्वा चिरञ्जीवन् पाताले सर्पैः

सह याम यत्नश्च स्यसि वा । स्वर्गौ वा । दिवि चेत्यर्थं । यथा सुखिभि सह स्वर्गे तिष्ठन् सम्यक् प्राप्नोषि तथेदानीमेव पाता लेम- पि सह सम्यग्गमेष्यसि । यद्वाऽदिवि स्वर्गव्यतिरिक्ते पाताले तृतीय पादार्थं स्वर्गात् सकाशात् त्वमस्वर्गरूपपाताले पातयिष्यसीत्यर्थं । ए व चक्रविशेषतत्परो मम करोऽस्ति, इन्द्राद्‌ गृहीत भुवन त्रैलोक्य दे हि पुनस्तस्मै समर्पयेति' भुवन वितरेत्यस्यारप्रयोजन सूच्यते । जी- वन भुवन जल, विष्टप भुवन । इति चामर ॥ ६४ ॥

श्चाशयस्य विवृतिः क्रियते किं दिसुरास्मि हि भवच्चरणेभ्य । विश्वमित्यभिहितो बलिनाऽस्मान् वामन प्रणतपावन पायाः ॥ ६५ ॥

एव वामनेनोक्ते बलि पुनराह । श्वाशयस्येति । हे वामन प्रण- तपावन बलिना इति पूर्वोक्तप्रकारेण अभिहित उक्तस्त्व अस्मान् पाया रक्ष । इति कि । भो वामन त्वया शयस्य पाणेर्विवृति प्रसार- ण कि क्रियते ऽपि तु तन्न कर्तव्य । अत्रश्चो ऽधःपतया शिर क- म्पपूर्वक वारणाभिनये । अनुचितमेतन्न कर्तव्यमित्यर्थं । श्चा याम- स्त्येन नितरा शयस्य विवरण कि क्रियते ऽपि तु तन्न कर्तव्यमिति वा, वाक्यपूरणे वा । हि यस्मान्नवच्चरणेभ्य पूज्यभ्या भवद्भ्य विश्व स- कल ईश्वरत्वादि च दित्सुर्दातुमिच्छुरस्मि चरणस्त्र पूजाय । अह सर्वमिदानीमेव ददामि किमिति पाणिप्रसारणेनैतावदधैर्यं प्रकटी- क्रियत इत्यर्थं । यत्र च महत्त्वपात्वाद्‌ बहुभ्यो भवदीयपादेभ्य सर्वं दित्सुरस्मि सर्वं त्वदानीम भवच्चरणान् पूजयिष्यामि तस्मात् करप्रसारण कि क्रियते ॥ ६५ ॥

क्षत्रजातिमदिताय भुजाभ्यां या तवैव नुवनं स जतः प्राक् । जामदग्न्यवपुपस्तव तस्यास्ती त यार्यमुष्टिनी विजयेना ॥ ६६ ॥

लोकद्वयेन परशुराम स्तौति ॥ क्षत्रेति । हे भगवन् तव तौ भुजौ

विजयेतां सर्वोत्कर्षेण वर्तेतां । तौ कौ । प्राक् सृष्ट्यादौ भुवनं सृजतो ब्रह्मरूपिणस्तवैव "बाहू राजन्यः कृतः" इति श्रुतिप्रामाण्याद् भुजाभ्यां सकाशाद् या क्षत्रजातिः क्षत्रियमात्रं तदियाय उत्पन्ना तस्याः क्षत्रजातेर्लयाय सपाणौ जामदग्न्यवपुषस्तव यौ भुजौ उचितौ, कारणे कार्यलयस्यौचित्यात् ।

"अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति" ॥

इति च लयश्रवणाद्वा अवतारप्रयोजनमुक्तम् । जातेर्नित्यत्वादुत्पत्तिविनाशावयुक्ताविति ये आक्षिपन्ति ते आविर्भावतिरोभावयोर्विवक्षितत्वेनोत्तरणीयाः । वेदान्तिनस्तु जातेर्नित्यत्वमसहन्ते इत्यपि । जामदग्न्येति गर्गादिषु पाठसामर्थ्याद् यञ् इति ज्ञातव्यम् । विजयेतां विपराभ्यां जेरिति (पा० १।३।१९) तङ् ॥ ६६ ॥

पांसुला बहुपतिर्नियतं या वेधसाऽरचि रुचा न
वखण्डा । तां भुवं कृतवतो द्विजभुक्तां युक्तका
रितरता तव जीयात् ॥ ६७ ॥

पांसुलेति । नियतं सर्वदा पांसुला धूलिबहुला बहवो गन्धादयः पतयो यस्याः सा गन्धादिमती, पालिता च या भूः वेधसा रुचैव नवखण्डा भारतादिनवखण्डविभागाऽरचि निर्मिता । तां नवखण्डामपि सकलां भुवं द्विजभुक्तां काकादिपक्षिभिः कृतोपभोगां व्याप्तां, अथ च ब्राह्मणैर्गृहीतफलां कृतवतः क्षत्रियकुलं स्वप्रियमानं हत्वा निष्कण्टकीकृत्य प्रतिग्रहं ब्राह्मणेभ्यो ददतस्तव युक्तकारितरता नितरामुचितकरणशीलता जीयात् सर्वोत्कर्षेण वर्तताम् । एवंविधमतिशूरं दानशूरञ्च त्वां प्रति प्रणतोऽस्मीत्यर्थः । नियतमित्युत्प्रेक्षायां वा । रुचा निजया रुचयेत्यर्थः इति वा । अथ च या स्वैरिणी स्त्री एव बहुभिर्जारैर्भुक्ता सती सत्वरं कोपेन करचरणादिच्छेदेषु पृथक् तदवयवच्छेदेन नवानि प्रत्यग्राणि खण्डानि यस्यास्तादृशी कृतखण्डा तामग्निसंस्कारनिवारणाद् नोः काकादिभिः पक्षिभिर्भक्षितां कुर्वतो युष्मद्युक्तकारिता सर्वैः कीर्त्यते । स्वैरिणी पांसुला समेत्यमरसिंहः ॥ ६७ ॥

कार्तवीर्यभिदुरेण दशास्ये रैणुकेय भवता सुखनाश्ये । कालभेदविरहादसमाधिं नौमि रामपुनरुक्तिमहं ताम् ॥ ६८ ॥

कार्तवीर्येति । हे रैणुकेय रेणुकापुत्र कार्तवीर्यभिदुरेण यदीयकारागारे नियद्धो रावणोऽपि बहूनि वर्षाण्यत्यतिष्ठत् तं कार्तवीर्यं सहस्रार्जुनं हतवता भवता दशास्ये रावणे सुखेन अनायासेन नाश्ये हन्तुं शक्ये सति कालभेदस्य विरहादुभयोरवतारयोरेककालीनत्वादसमाधिं परिहाररहितां मनुष्यावतारेण क्षत्रियेण दाशरथिना रामेण विधेयान्तराभावात् तस्मिन्नेव काले किमर्थमवतीर्णमिति वक्तुमशक्यत्वात् प्रयोजनाभावादन्ते भो राम पुनरुक्तिं दाशरथिरूपजामदग्न्यरूपां दाशरथिरूपां वाऽहं नौमि स्तौमि । अन्यत्र पुनरुक्तेः कार्यभेदात् कालभेदाद्वा परिहारः कर्तुं शक्यते । वीप्सायामप्येककालप्रयुक्तस्यापि शब्दस्य भयादरभक्त्यादिना परिहारोऽस्त्येव, अत्र तु पूर्वेणैवोत्तरावतारकार्यस्यापि कर्तुं शक्यत्वात् कार्यभेदाभावाच्च परिहारो नास्तीत्यर्थः । स्वतन्त्रस्य तव केनाप्यनुयोगः कर्तुं न शक्यत इति भावः । जामदग्न्यस्य सानुपत्येऽपि हैहयानस्य तथैव सद्भावाद् विद्याध्यायत्वस्य रावणं प्रत्यात् तस्य तेन हन्तुमशक्यत्वाद्रावणवधपर्यन्तं च श्रीरामस्य हैयमानाज्ञावान्मानुषत्वेन तेनैव तस्य हन्तुं शक्यत्वात् कार्यभेदादेकस्मिन्नपि कालेऽवतारान्तरस्य युक्तत्वात् सूक्ष्मः परिहारोऽस्त्येव । तथापि स्थूलदृष्ट्या परिहाराभाव उक्त इति ध्येयम् । कार्तवीर्ये जलक्रीडां कुर्वता सहस्रार्जुनेन रावणः कारागारे निक्षिप्त इतीतिहासः । रैणुकेय इति क्षत्रियत्वसूचनं । अपत्यार्थे स्त्रीभ्यो ढक् (पा० ४।१।१२०) इति ढक् ॥ ६८ ॥

हस्तलेखमसृजत् खलु जन्मस्थानरेणुकमसौ भवदर्थम् । राम राममधरीकृततत्तल्लेखकः प्रथममेव विधाता ॥ ६९ ॥

यादजयाच्च वह्नौ विशुद्धाऽपि सीता त्यक्ता, इत्येवं द्विप्रकारं त्यक्ते-
त्यर्थः । एवं पितुराज्ञाकारी लोकापवादभीरुश्च कोऽपि नास्तीति भा-
वः । चान्योन्यसमुच्चये । तथा वारिराशिररिराशिश्च द्विवारं द्विधा
च न लङ्घितः किमु; अपि तु सेतुं बद्ध्वा समुद्रोऽपि लङ्घित एव ।
तथा रावणादिशत्रुसमूहोऽपि पराभूत एव । वा चार्थे इवार्थे वा ।
अरिराशिश्च वारिराशिरिव वागन्यतरार्थोद्भतो क्वापि वाशीति वा स
वामावरिराशिश्च स पक्षो वैरसङ्घ इत्यर्थः । किम्भूत । उरुकाङ्कगा
जलमध्यगा लङ्का यस्य यदीयजलमध्ये लङ्कास्तीत्यर्थः । अरिराशिरपि
समुद्रजलमध्यवर्तिनी लङ्का यस्य । समुद्रपक्षे पक्षे त्वस्योदकेन सम्ब-
न्धः । अरिराशिपक्षे तु लङ्कायाः । एतावान् विशेषः । उरुकष्टमकं दुः
खं यस्यास्तादृशी छाङ्कृता लङ्का यस्येति वा । उरुकष्टमक कर्तनलक्षणं
दुःखमुदकं तदेवाङ्कचिह्नं येषां तादृशा गलाः कण्ठा यत्र क्रियायां य-
था तथा कः किमु शत्रुसङ्घो न लङ्घितः, अपि तु सर्वोऽपीति वा ।
सागरस्यापि बन्धनाद्रावणस्यापि वधाच्च एतादृशो महाप्रतापः शूरश्च
च त्वदन्यः कोऽपि नास्तीति भावः ॥ ७२ ॥

कामदेवविशिखैः खलु नेशं मार्पयज्जनकजा-
मिति रक्षः । देवतास्मरणे वरवाक्यं तथ्ययंस्त्व-
मपुनाद्भवदस्त्रैः ॥ ७३ ॥

कामदेवेति । रक्षः रावण इतीव हेतोर्देवतास्मरणाभावविषयं देवा
हेतोर्न मरिष्यामीति ब्रह्मणो वरवाक्यं यत् सत्यं कुर्वन् स्वमात्मानं भ-
वदस्त्रैरपुनात् पूतकल्मषं चकार । इति किं । जनकजां सीतां राम-
यार्पयदिदं रक्षः कामदेवस्य मोहनशोषणादिभिर्विशिखैः खलु नि-
श्चितं मा नेशं तद्विरहसन्तापवशान्मृतो मा भूवमिति । सीतामत्यर्प-
णे कामदेवस्य देवत्वात् तद्बाणैर्मरणे वरवाक्यमसत्यं स्यादितीव ताम-
दददु वरवाक्यसत्यत्वार्थं मानुषावताररामरूपभवद्बाणैरात्मानं नाशित-
वानित्यर्थः । कामबाणात् शरीरविनाशमात्रं त्वद्बाणात्तु मरणे समा-
रहेतुनि शेषकल्मषक्षय इति महान् विशेषोऽपुनादित्यनेन सूच्यते ।
नेशं मापेर्गादेर्ङ भावः । तथ्ययत् तत्करोतीति ( वा० ३ । १ । २६ वा० )

वयन्तान्निष्ठा ॥ ७३ ॥

तद्यशो हसति कम्बुकदम्बं शम्बुकस्य न किम
म्बुधिचुम्बि । नामशोषितरासैन्यदशास्यादस्तमा
प यदसौ तव हस्तात् ॥ ७४ ॥

तदिति । हे रघुनाथ नामशोषितः यथाशोषितरसो हत सैन्यो मन्थितो दशास्यो येन तस्मात् तव हस्तादसौ शम्बुकः यत् अस्तं विनाशम् आप तत् शम्बुकस्य शम्बुकनाम्नः शूद्रस्य अम्बुधिचुम्बि समुद्रव्यापि यशः कम्बु कदम्बं शङ्खवृन्दं धवलतया किं न हसति अपि तु हसत्येव तत्तुल्यं भवतीत्यर्थः । येन त्वयातिशूरो रावणो हतस्तेनैवात्यधमोऽधमो दुर्बलः शम्बुकोऽपि हत इति महत् तस्य भाग्यमित्यर्थः । यो महत्कष्टं बलिनं हन्ति तेनैव हीने दुर्बले हते दुर्बलस्य महद् यशो भवति । ब्राह्मणस्य बालपुत्रमरणनिमित्तं शूद्राणामविहितधूमपानमधोमुखं कुर्वन्तं शम्बुकं शूद्रं श्रीरघुनाथो हतवानितीतिहासः । अथ च शम्बुकस्य जलशुक्तेः श्वेतरूपं यशः समुद्रमध्यस्थं शङ्खवृन्दं हसति तत्तुल्यं भवतीति युक्तमेव । नामशोषितेति । तत्करोतीति (पा०३।१।२६वा०१) ण्यन्तान्निष्ठा ॥ ७४ ॥

मृत्युभीतिकरपुण्यजनेन्द्रत्रासदानजमुपार्ज्य य
शस्तत् । ह्रीणवानसि कथं न विहाय क्षुद्रदुर्ज
नगिरा निजदारान् ॥ ७५ ॥

मृत्युभीतीति । यस्मात् मृत्योर्यमादन्येषां भीतिस्तस्यापि मृत्योर्भीतिकरः पुण्यजनेन्द्रो राक्षसेन्द्रो रावणस्तस्यापि मरणपर्यन्तं त्रासदानात् भयप्रदानाद्धेतोर्जातं तत् अतिप्रसिद्धं लोकत्रयेऽपि गीयमानं यशः उपार्ज्य सम्पाद्य क्षुद्रोऽत्यल्पको दुर्जनस्तस्माद्गिरा वचनेन पामरलोकापवादश्रिया निजदारानात्मनः प्रियां सीतां विहाय परित्यज्य कथं न ह्रीणवान् लज्जितवानसि लज्जितस्त्वं तावत् स्यादित्यर्थः । यो रावणाय भयं दत्तवान् तस्य दुर्जनभीत्या निष्ठुरजनापवादभयेन प्रियापरित्यागे लज्जैव युक्ता । अभिमानान्वितानां रावणो नाशितो लोकापवा-

दत्त्वापि सापि परित्यक्तेति एतादृशः पुराऽभिमानी लोकापवादभी-
रुश्च कोऽपि नास्तीति भावः । यातुधानः पुण्यजन इत्यमरः । भीति
करेति ताच्छील्ये टः ॥ ७५ ॥

इष्टदारविरहौर्वपयोधिस्त्वं शरण्य शरणं स म
मेधि । लक्ष्मणक्षणवियोगकृशानौ यः स्वजीवि
तलघ्वाहुतिमयजत् ॥ ७६ ॥

इष्टेति । हे शरण्य शरणागतभक्तरक्षक रघुनाथ स त्वं मम शरणं रक्षकः मयि भव । स कः । यस्य इष्टदाराया सीतायाः विरहः एव तु महत्त्वादौर्वो वडवानलः तस्य पयोधिः समुद्रः एवंविधः सन् लक्ष्मणस्य क्षणमात्रमपि वियोगः स एव तु महत्त्वात् कृशानुस्तत्र स्वजीवितानामात्मप्राणानामेव तृणानामाहुतस्तद्रूपहोमद्रव्यस्य यज्वा होता । यो हि लक्ष्मणवियोगं क्षणमात्रं सोढुमशक्तस्तुर्यादिच्छामात्रेण स्वप्राणांस्तत्याज । स यावज्जीवं सीताविरहानलं कथं सोढवानिति क्रिययोर्विरोधादाश्चर्यं । पयोधिना वाहुरिति ग्नौ दूयते । सीताविरहसहनेन जितेन्द्रियधुर्यत्वं सूचितं । इन्द्रजिता शक्त्या मूर्च्छिते लक्ष्मणे स्वयमपि मुमूर्च्छ तथा मुनिरूपकालकृतसमयभङ्गभग्नप्रतिज्ञे लक्ष्मणे रघुनाथेन शरयूतीरप्रवेशेन कृतदेहत्यागे सति तद्वियोगसहनासमर्थस्तत्क्षणमेव रघुनाथोऽपि शरयूतीर्थे जलप्रवेशेन स्वयमपि स्वस्थानं प्रापेति युद्धकाण्डोत्तरकाण्डरामायणकथा । अतस्त्रीवियोगदुःखादपि भ्रातृवियोगदुःखं महदिति सूचितं । परमकारुणिकत्वं शरणागतं मामपि रक्षेति सूचितं ॥ ७६ ॥

क्रौञ्चदुःखमपि वीक्ष्य शुचा यः श्लोकमेकमसृ
जत् कविराद्यः । स त्वदुरयकरुणः खलु काव्य
श्लोकसिन्धुमुचितं प्रबन्धः ॥ ७७ ॥

क्रौञ्चेति । दैवी वाक् येन भुवं प्रथममानीता स आद्यः प्रथमकविवर्णको वा वाल्मीकिः क्रौञ्चयोः पक्षिणोर्द्वयोर्मध्ये निरमायेक-

सिन् व्याधेन हतेऽन्यस्य दुःखशोकमपि वीक्ष्य तिर्यग्योनेरपि तस्य दुःखं दृष्ट्वा उत्पन्नया शुचा शोकेन हेतुना ।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ।

इत्यादिकमेकं श्लोकमसृजत् । स कविस्त्वयि उत्पन्नकरुणारसो यस्य सीताविरहविह्वलमहानुभावभवद्दर्शनोत्पन्नशोक इव शोकानां चिन्तु सागरतुल्यं चतुर्विंशतिसहस्रमितरामायणाख्यं काव्यमुचितं योग्यं प्रबबन्ध । तिर्यग्योनिविषये शोकेन येन श्लोकः कृतः तस्य उत्तमपुरुषविषये महाकाव्यनिर्माणमुचितमेव । अथ च त्वया सिन्धुर्बद्धः । अयमपि त्वदेकचित्तः सिन्धुं बबन्धेत्युचितं । परित्यक्तसर्वसङ्गो मुनिरपि त्वद्वर्णनां कृतवान् । एतादृशः परमपुरुषोऽसीति तात्पर्यं ७७

विश्रवःपितृकयाप्रमनर्हं सश्रवस्त्वमनयेत्युचितज्ञः । त्वं चकर्त्तिथ न शूर्पणखायाः लक्ष्मणेन वपुषा श्रवणौ वा ॥ ७८ ॥

विश्रव इति । हे रघुनाथ, इति हेतोः उचितं जानाति यः स उचितकारी त्वं चतुर्दशवर्षात् लक्ष्मणलक्षणेन स्वीयेनैव वपुषा शूर्पणखायाः श्रवणौ कर्णौ त्वं न चकर्त्तिथ अपितु कर्त्तितवान् एव । इति किं । विश्रवा मुनिः पिता यस्याः, अथ च कर्णरहितः पिता यस्यास्तयाऽनया शूर्पणखया सश्रवस्त्वं सकर्णत्वं प्राप्तुमनर्हमयोग्यमिति स्वीयपक्षानौचित्यात् कर्णच्छेद एवोचितः, यतः अकर्णपितृकाया अकर्णत्वमौचित्यात् कर्णौ लक्ष्मणेन कर्त्तयामासिथेत्येवंविधः समुचितकारी महाप्रतापोऽसीति भावः । वा इवार्थो वा इतीव हेतोरिति योजना । विश्रवः पितृकया न वृन्दयेति ( पा० ५ । ४ । १५३ ) कप् । शूर्पणखा पूर्वपदात् संज्ञायामिति ( पा० ८ । ४ । ३ ) णत्वं । नखस्य स्वाङ्गत्वेऽपि नखमुखात् संज्ञायामिति ( पा० ४ । १ । ५८ ) ङीषभावः । स्वागता चेयं वृत्ता ॥ ७८ ॥

ते हरन्तु दुरितप्रततिं मे यैः स कल्पविटपी तव

द्राणभुजाजंघच्छेदनार्थं कपंरीभिरभिरत्य तदङ्गवयवं यदकारि तद् बालक्रीडनकसाम्यमभूत् इत्यर्थः । कर्पर्यो घाते ते तदङ्गच्छेदनमिति वाणजातिः । घायतारप्रयोजनमुक्तं ॥ ८० ॥

कर्णशक्तिविफलां खलु कर्तुं सज्जिताऽर्जुनरथाय नमस्ते । केतनेन कपिनाऽरसि शक्ति लक्ष्मणं कृतवता हृतशल्यं ॥ ८१ ॥

कर्णेति । हे कृष्ण ते नमोऽस्तु । किम्भूताय । ते उरसि लग्ना इन्द्रजिन्मुक्ता शक्तिर्यस्य तं लक्ष्मणं द्रोणाचलानीतविशल्यकरीषधिप्रक्षेपेण हृतं निष्काशितं शक्तिलक्षणं शल्यं यस्य तादृशं कृतवता । केतनेन ध्वजस्यपताकारूपेण कपिना हनुमता कर्त्वा कर्णस्य शक्तिमाह्निक खलु, अथ च इन्द्रदत्तां शक्तिं अफलां कर्तुमिव सज्जितौ योजितौ अर्जुनरथो येन तस्मै नरनारायणरूपाय । यो हि यत्र कर्मणि शक्तः स तत्र नियोक्तुमुचितः स हनूमांश्च शक्तिविफलीकरणे दृष्टप्रभावस्तस्मात् कर्णशक्तिविफलीकरणार्थमिवाऽर्जुनरथे त्वं स्थापितवानसीति भक्तवत्सलाय तुभ्यं नम इत्यर्थः । यो मर्मभूता उरःस्थिता शक्तिं विफलीकरोति सोऽन्यगतस्या सुतरां विफलीकरोत्येवेति छलोक्तिः, खलु इवार्थे. उरसि शक्ति. अमूर्द्धमस्तकादिति अलुक् (पा०६।३।१२) ॥ ८१ ॥

नापगेयमनयः सशरीरं द्यां वरेण नितरामपि भक्तं । मा स्म भून् सुरवधूसुरतश्रीर् दिव्यपि व्रतविलोपमियेति ॥ ८२ ॥

नेति । हे कृष्ण त्वं नितरां भक्तमपि आपगेयं भीष्मं सशरीरेण प्रमादेन स्वर्ग इति विचार्य कारणात् वा द्यां स्वर्गं न अनयः न प्रापितवानसि । इति किं । स भीष्मः अनेन शरीरेण सुरतं न करिष्याम्यद्यप्रभृति मम ब्रह्मचर्यमिति नियमवान् व्रतस्य विलोपाङ्गीकृतया भिया हेतुना दिव्यपि स्वर्गेऽपि सुरवधूना रम्भादीनां सुरतश्रीः मा भूत् इति । भक्तजनस्य वरदानेन यद्यपि तेनैव शरीरेण स्वर्गप्रापा

समुचित तथाऽपि तस्य शरीरस्य स्वर्गप्रापणेऽपि न कोऽप्युपयोगस्तेन तच्छरीरस्यातितुच्छत्वात् तच्छरीरं विनाश्य यत स्वगमनय न तु तच्छरीरसहितस्य प्रापण तथाशक्तिरिति भाव । यद्वा भुक्तेरतितुच्छत्वाच्छरीर विनाश्य मुक्तिमेव प्रापितवानिति हेतु । प्रापगय अपत्यार्थे स्त्रीभ्य इति (पा०४।१।१२७) ढक् ॥ ८२ ॥

घातितार्कसुतकर्णदयालुर्जैत्रितेन्दुकुलपार्थकृतार्थः । अर्हदुःखसुखमभ्यनयस्त्व साश्रुभानुविहसद्विधुनेत्र ॥ ८३ ॥

घातितेति । अर्कसुतेन प्रयोज्येन समरे घातितो योऽर्कसुत कर्णस्तस्मिन् विषये दयालु सकरुण । तथा स्वसामर्थ्येन जैत्रितो जेता कृतो हतशय इत्यर्थ । इन्दुकुल सोमवंशभूत पार्थोऽर्जुनस्तेन कृत्या कृतार्थ सम्पादितावतारप्रयोजन कृतकृत्यत्वात सहर्ष, अत एव क्रमेण साश्रु पुत्रशोकवशाद् रुदन् भानु सूर्य्य पुत्रविजयाद्विशेषेण हसन् हर्षमनुभव कुर्वन विधुश्चन्द्र तावेव दक्षिणवामनेत्रे यस्य एतादृश त्व यथाक्रम अर्हद्दुःख अर्हत्सुखञ्च अभ्यनय, अभिनयेन युगपद्दर्शयामासिथ । परमार्थतोऽविद्यमानमभ्यनाद्यविद्याविलासाद्दर्हिनाटितवानसीत्यर्थ । सूर्य्यचन्द्रयोर्विष्णुनेत्रत्वात् कर्णस्य च सूर्य्यपुत्रत्वात् शोके शोकात् सूर्य्यस्य साश्रुत्व अर्जुनस्य च सोमवंशत्वात् तद्विजये चन्द्रस्य हर्षेण विहसितत्वात् ताभ्यामर्हद्दुःखसुखाभिनयेन अद्भुतरूपाऽसीति भाव । घातितेति हेतुमण्णन्तात्क्त । जैत्रितेति तत् करोतीति (पा०३।१।२६ वा०) णयन्तात्क्त । पार्थेति कुरुत्वात् ऋष्यन्धकेत्यण् (पा०४।१।११४) अर्हदुःखञ्च तद्दुःखञ्चेति द्वन्द्वगर्भ, कर्म्मधारय ॥ ८३ ॥

प्राणवत्प्रणयिराधन राधापत्रशात्रुसरसता मदृशी ते । श्रीप्रियस्य सदृगेव तव श्रीवत्समात्महृदि धत्तुमजस्रं ॥ ८४ ॥

पि दीर्घत्वधवलत्वाभ्यां जराधवलदीर्घकेशमाहृत्यधारणं युक्तमेव । कारणगुणा हि कार्ये गुणानारभन्त इति न्यायाच्च युक्तमेव । अथ यतारो वलभद्र इति चोक्तं । अत्र श्वेतकेशः सहज एव न तु जरायोगादिति वा । यतो हरिर्नित्यतरुण इति पुराणादिप्रसिद्धिः । वस्तुतस्तु कस्य ब्रह्मपुरुषस्य सदृशौ गुणस्वरूपावित्यर्थः । प्रकाशत्वेन सत्त्वस्य सितश-ब्दवाच्यत्वात् मोहकत्वेन च तमसः कृष्णशब्दवाच्यत्वात् सितकृष्णौ सत्त्वतमोगुणद्वयात्मकावेताववतारौ भूभारोत्तारणार्थं प्रजुराहिन राघ-व स्वस्मात् प्रकटीचकारेति विष्णुपुराणस्यसितकृष्णपदस्यार्थः । "कृ-ष्णस्तु भगवान् स्वयं" इति श्रीभागवतवचनेन कृष्णस्तु लीलाविग्रहधारी परब्रह्मैव । "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः" इति भगवद्व-चनात् । बलभद्रस्तु अवतारः, रामो रामश्च रामश्चेति वचनात्, अन्य-था बलभद्रस्य सत्त्वमूर्तित्वं कृष्णस्य तमोगुणमूर्तित्वं प्राप्नुयात्, न च तथास्तीति बलभद्रस्य तत्र प्रधानत्वदर्शनादित्याशयः । शितिकेश इ-ति पाठे शितौ धवलमेचकावित्यभिधानात् । त्वदीयपुराणतनौ स-त्यपि शितिकेशः श्यामकेशरूपस्त्वं हली च धवलकेशरूपः स एव च हलीति शेषः । बलभद्रः शेषावतार इति पुराणादौ । स त्वदीयधव-लकेशविलासः चन्द्र तदेव तु । कृष्णस्य कृष्णवर्णत्वात् हलिनश्चासितगौर-त्वाद्यथा क्रमश्यामितगौरत्वमौत्प्रेक्षिकत्वं नेत्र व्याख्येयमित्यलमति विस्तरेण । तावकापरेति पाठः साधीयान्, यतः युष्मदस्मदोरिति ख-ञि (पा०४।३।१) तवकादेशे सति च यद्विमिमित्तस्योति (पा०६।३।३५) पुं-वद्भावप्रतिषेधे प्रसक्तेऽपि कस्य धारयत्वात् पुंवत्कर्मधारयेति (पा०६। ३।४२) प्रतिप्रसवात् पुंवद्भाव अवतर पूर्ववत् ॥ ८५ ॥

हृद्यगन्धवह शेषगतीश शेषरूपमपि बिभ्रदशेषः । शेषभूतिमदिरारुचिरश्रीरुल्लसत्कुमुदबन्धुरुचिस्त्वम् ॥ ८६ ॥

हृद्येति । हृद्यो हृदयानन्दकारी गन्धश्चन्दनादिसौरभं तं वहसि धारयसीति तत्सम्बोधने हे एवंविधरम्यसौरभधारिन् श्रीकृष्ण त्वं शेषरूप ध-

बलभद्ररूपं । अथ च नागाधीशरूपं बिभ्रत् धारयन्नपि अशेष उभयवि धोऽपि शेषो न भवसि इति विरोधः अथ च न विद्यते शेषः शिष्टं भिन्नं यस्मात् असौ ऽशेष सकलजगदात्मकत्वमिति तत्परिहारः । अथ च बलभद्रोऽप्यतिशङ्करित्याद् हृद्यगन्धवह , अत एव भोगवती- नां सुखीनां गोपिकादीनां ईशः प्राणप्रियः । अथ च भोगवत्या अति तरां सुखिन्याः रेवत्या ईश पतिरिति । श्रीकृष्णोऽपि हृद्यगन्धशरीरं स्वाभाविकं चन्दनादिजन्यञ्च गन्धं वहन्तीनां भोगवतीनां सुखिनीनां गोपिकादीनामीशः । शेषोऽपि जलक्रीडाक्षालितचन्दनकर्पूराद्यङ्गराग- सम्बन्धिहृद्यसौरभधारिण्याः भोगवत्याः पातालनद्याः पतिः । कर्पूरा- दिवहनसौरभयुक्ताया नागर्या वा तत्सिद्धहेतुत्वाद् हृद्यो गन्धवहो वायु र्यस्य स चासौ नागपत्न्यां नद्या वा पतिः । तथा कामरूपस्य भोग- स्य सुखस्य भूतेर्हेतोः मदिरावत् रुचिं सुखं राति जनयति या तादृशी श्रीःकायकान्तिर्यस्य स । भोगः शेषरूपः नरकायो वा स एव भू स्था नं तस्य कृतिः आसन स्याधिष्ठानेन रक्षणं तेन माद्यति हृष्यतीति भो गभूतिमत्तो । तथा इराया भूमेरिव रुचिरा रमणीया दूर्वादलश्यामला श्रीः कान्तिर्यस्य स, स्निग्धश्यामलकायकान्तिरित्यर्थः । इरायाः भार- त्याः प्रियायाः धरण्या वा रुचिरा रमणी श्री कान्तिर्यस्मादिति वा । तयोरुभयोः सदृशावपि रुचि प्रीतिं ददाना समवर्तिनी श्री हृदिस्था लक्ष्मीर्यस्येति वा । नागानां कालियफणानां भूतिरैश्वर्यं तज्जनितो दर्पः स मत्तोऽति तादृशो वा । एवंवा पद । गोपिकादिसम्भोगसुखसमृद्धि- र्भोगभूतिः तद्वान् स चासौ नक्षत्र्या इराकाचिरश्रीश्चेति वा । अथ च बलभद्ररूपस्य भोगस्य सुखस्य भूतिरुत्पत्तिर्हेतुः तादृशी या मदि रा तया कृत्वा रुचिरा रमणीया सरागा कान्तिः शोभा यस्य । बलदे- वो हि सर्वदा मदिरामत्तः । अथ च शेषरूपस्य भोगस्य स्वकायस्य फणानां या भूतिः समृद्धिः तद्वान् अतिदीर्घशरीरकायः सहस्रफणासमृ- द्धिमान् वा । तेन माद्यति स चासौ स्वशिरःसु धारणेन भूमेः रुचि राति ददातीति रुचिरा श्रीः कायकान्तिर्यस्य सः । तथा कृष्णरूपस्य जलमग्नो कुमुदयर्षोः चन्द्रस्य सम्बन्धिनी रुचिः प्रीतिर्यस्मिन् सर्वां

ह्लादकारित्वाच्चन्द्र इव सत्वप्रेमास्पदभूत इत्यर्थः । कुमुत् श्वेत कैरव तस्य सबन्धु तद्विरोधिनी कृष्णा रुचि श्रीयस्य जलदश्याम इत्यर्थ इति वा । उल्लसन्ती कुमुदाख्ये वानररूप सुहृदि रुचि प्रीतिर्यस्य रामावतारे इति वा । पृष्ठे दष्ट्रया वा उल्लसन्ती कु पृथ्वी यस्मिन्स दन्त इति मुद स चासौ स च तथा बन्धुषु बन्धौ वा बलभद्रे वा रुचि प्रीतिर्यस्य स चासौ स चेति वा । उल्लसन्ती कुमुदतुल्येऽतिगौर बन्धौ बलभद्रे रुचि प्रीतिर्यस्य स इति वा । उल्लसन्ति कुमुदानि येन स चन्द्र एव तद्दापकत्वाद्वन्धुर्यस्य स प्रद्युम्नावतार काम तत्र रुचि पुत्रत्वात प्रीतिर्यस्येति वा । स्वय च बलभद्ररूपस्त्व उल्लसन्ती कुमुद बन्धु कैरवसदृशी गौरतरा कमुदबन्धोश्च द्रस्यत्र वा गौरतरा रुचि कान्तिर्यस्य । उल्लसन्ती कु पृथ्वी यस्मात तस्मिन्मुदे सहर्षे बन्धौ सानुज श्रीकृष्ण रुचि प्रीतिर्यस्य वा । उत्कर्षेण लसत् कुमुदबन्धु चन्द्र तस्येव रुचिर्यस्य । उल्लसत् कुमुदब धौ उक्तप्रकारेण प्रद्युम्ने रुचिर्यस्येति वा । स्वय च श्यामरूपस्त्व उल्लसन्ती कुमुदनाग्नि सूर्ये सुहृदि प्रीतिर्यस्य । उल्लसन्ती चन्द्रस्येव धवला कान्तिर्यस्य वा । उल्लसन्ती कुमुदस्य चन्द्रस्य बन्धु सदृशी कान्तिर्यस्य वा । उल्लसत्प्रतीक सहृत्सु सुहृत्प्रीतिर्यस्य वा । कुमुदेऽपि कुमुत्प्रोक्तमिति विश्व । गौरा कु पृथिवी पृथ्व्यानन्तर । भोग सुख वधे वाहे शरीरफणयोरपि इति विश्व । इरा वारिसुराभूमिभारतीषु इति च । उल्लसति । प्रवर्तेत्तिभि वरस्वरेति (पा०६।४।१९) यस्योपधायाश्च ऊठि । मुत् इति सान्ततमपीतेव क्विपि । मुद् इगुपधलक्षण क ॥ ८६ ॥

रेवतीश्च सुषुमा किल नीलस्याम्बरस्य रुचिरा तनुभासा । कामपाल जनत: कुमुदाविर्भाविता वितरुचरुचितैव ॥ ८७ ॥

रेवतीश्चेति । हे रेवतीनाम्न्या प्रियाया ईश, तथा हे कामपाल पूरक कु पृथ्वी तस्या मुदा हर्षस्याविर्भावेन प्रादुर्भावेन भाविता उच्चारिता रुचि प्रीतिरिच्छा वा यस्य तस्य भवत श्रीकृष्णतनुजामा कायकान्त्या कृत्वा नीलाम्ब अम्बरस्य तत्तुल्यस्येत्यर्थ । तव रुचिरा

शोजना लोकानां रुचिं प्रीतिं ददाना या । रेवतीशसुषमा चन्द्रमण्डिनीपरमा शोभा उचितेव किल । आकाशस्य चन्द्रशोभा उचितेव । अथ च बलभद्रस्वरूपत्वाद् रेवतीशसुषमा बलभद्रस्य परमशोभा उचितेव । किम्भूतस्य । कुः पृथ्वी तस्या मुदस्य हर्षस्य आविर्भावेन प्रकटनेन भाविनी त्रिलोकानां रुचिः प्रीतिर्येन । कुमुदस्य चन्द्रस्य आगिर्भावेन या । अथ च रेवतीनाम्नी प्रिया सदृशी । तथा हे कामपाल बलभद्र कुः पृथ्वी तस्या मुदस्य हर्षस्याविर्भावेन प्रादुर्भावेन भाविता सञ्चारिता रुचिः प्रीतिरिच्छा वा यस्य तस्य भवतः तव तनुभामा कायकान्त्या नीलस्याम्बरस्य वस्त्रस्य रुचि दीप्तिं राति ददाति एवंविधा सुषमा उत्कृष्टशोभा उचिता योग्यैव किल । घवलवस्तुसम्पर्कान्नील शतिशयेन शोभते । अथ च हे कामपाल कन्दर्पपोषक रेवतीश चन्द्रकुमुदानां कैरवाणां अविकासेन भाविता स्फुरिता रुचिः कान्तिः प्रीतिर्वा यस्य भवतः तनुभामा विम्बतेजसा नीलस्य अम्बरस्य आकाशस्य सुषमा परमा शोभा उचितेवति ध्वनिः ॥ ८७ ॥

एकचित्सततिरद्वयवादिन् न त्रयीपरिचिताऽप्यबुधस्त्वं । पाहि मां विधुतकोटिचतुष्कः पञ्चवाणविजयी षडभिज्ञः ॥ ८८ ॥

चतुर्भिः श्लोकैर्बुद्धं वर्णयति ॥ एकेति । हे अद्वयवादिन् द्वैतवाद्यपटपटादिभेदानामसत्यतया प्रतिपादनेनैकस्य ज्ञानकारणस्यैव सत्यत्वाङ्गीकारादद्वैतवादिन् त्वं मां पाहि । किम्भूतः । एकैव चित्सततिः ज्ञानसन्ततिर्यस्य दीपकलिकान्यायेन क्षणिकज्ञानप्रवाह एवैकोऽस्य मतेन तु सदतिरिक्तं न किञ्चिदप्यस्ति तादृश । अत एवाद्वयवादित्विति योजना । तथा त्रय्या अपरिचितो ज्ञातस्तादृशो न भवसीत्यत्रयीपरिचितो नञ् समासो वा । नेति पृथक्वा । वेदत्रयीगम्योऽपि न भवसीत्यर्थः । अथ च वेदत्रय्या परिचितः कृतपरिचयः वेदत्रयी परिचिता अभ्यस्ता येन तादृशो वा न भवसि । सर्वस्य क्षणिकत्वाङ्गीकाराद्धर्माधर्माभावव्यवस्थाया निरासादनङ्गीकृतवेदप्रामाण्य इत्यर्थः । अत एव बुध पण्डितः । न हि पण्डित विना वेदादिप्रामाण्यदूषणसा-

यां त्रय्यस्य बुद्धिः सम्भवति । अथ च त्रयीपरिचितोऽपि बुध इति विरोधाभासः । न हि वेदत्रयमजानानस्यापि पण्डितत्वं सम्भवति । अथ च यः पण्डितः एकमेवाद्वितीयं ब्रह्मेति मन्यमानो वेदान्ती स वेदत्रयीं न मन्यत इति विरोधः । वेदान्तिना हि वेदप्रामाण्यस्य स्वीकृतत्वात् । अथ च षड्दर्शनाद् द्वित्वसङ्ख्यामपि यो नाङ्गीकरोति स त्रित्वसङ्ख्यां न मन्यत इति युक्तमेवेत्यर्थः । तथा माध्यमिकानामपि किञ्चिन्मात्रमतभेदेन बौद्धसिद्धान्तपातित्वात् ।

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
*चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

इति । अनिर्वचनीयप्रपञ्चवादित्वाद् विधुतं निराकृतं सत्, असत्, सदसत्, तद्विलक्षणं, कोटिचतुष्कं प्रकारचतुष्टयं येन, अथ च त्रित्वनिषेधान्निरस्तचतुष्टयः, तथा विरुद्धाद्वितत्त्वस्य च पञ्चबाणकामस्तद्विजयी मारजित्, अथ च षडभिज्ञ इत्यस्मात् षडिति वाचशब्दः । स पञ्चसङ्ख्यावाचिनं पञ्चशब्दं न सहत इत्यर्थः । यो हि चतुष्टयं न सहते स पञ्चापि न सहत इति युक्तमेवेत्यर्थः । तथा देशाद्यव्यवहितवस्तुदर्शनं देशाद्यव्यवहितशब्दश्रवणमतीतजन्मस्मृतिस्वरूपं परचित्तज्ञानमविद्यास्मितारागद्वेषाभिनिवेशाख्यपञ्चक्लेशक्षयः, अणिमादिसिद्धयश्चेति षडभिज्ञा ज्ञानप्रकारा यस्य स षडभिज्ञः । वेदानुसारिभिर्दैत्यैः पराभूता देवा ब्रह्माणं शरणं गताः, ब्रह्मणः प्रसादितो नारायणो बुद्धरूपेणावतीर्य दैत्यबुद्धिं वेदार्थेभ्यश्चावयित्वा बौद्धमतमुपदिदेश, ततस्ते देवानां वध्याः सम्पन्ना इति । अत एव चैतदीयमतपरिभाषयैव स्तुतिरकारि । परिचिताऽप्यबुद्ध बुधस्त्वमिति पाठे नेति पदं भित्त्वा त्वया वेदत्रयी न परिचिता न स्वीकृतप्रामाण्या । इत्यविरोधः । तथापि बुधस्त्वमित्यर्थः । परिचिताऽबुध इति पाठे त्रयीपरिचितानां वैदिकानामध्वनि मार्गे बुधः पण्डितो न भवसि अवैदिकमार्गमेव जानान इत्यर्थः ॥ ८८ ॥

तत्र मारजयिनि त्वयि साक्षात्कुर्वति क्षणिक-
तात्मनिदर्शौ । पुष्पवृष्टिरपतत् सुरहस्तात् पु

* चतुष्कोटीति पाठान्तरम् ।

पुष्पशरमन्ततिरेव ॥ ८९ ॥

तत्रेति । तत्र तस्मिन्नयतारूपे सौन्दर्य्याज्जितेन्द्रिये मारजयिनि कामस्य जैत्रे त्वयि सविक्रला, मन्ये सविषक सत्यात्, तथा आत्मनिषेधश्च, "समनस्क न्द्रियजन्यनीलपीताद्याकारसविकल्पकनिर्विकल्पकयासमोपहितविरमन्ततिरेवात्मा, भूतान्येव चेतयन्ति मनसा संयोगेन ज्ञानमुत्पद्यते, तस्मादेह एवात्मा ॥ न तु नित्योऽन्य कश्चित् इत्यादिप्रकारेण सर्वभावाना, क्षणमात्रावस्थायिना नैरात्म्यञ्च त्वदर्शनोक्तसमाधिना साक्षात् कुर्वति सति पुष्पशरस्य कामस्य शरसन्ततिर्वाणपरम्परारूपा सुरहस्तात् पुष्पवृष्टिरिवापतत । अनिवल हि शत्री भीताना करादायुधानि पतन्ति । कामोऽपि त्वत्तो भीत , पुष्पशरश्च तया च तस्य करात् त्वद्भयेन पतिता पुष्परूपबाणपरम्परा सविकलात्मनिषेधौ साक्षात् कुर्वति त्वयि विषये सुरमुक्ता पुष्पवृष्टिरिवापतदित्युत्प्रेक्षा । यामोऽपि देव यत्र पुष्पवृष्टिसाधने हेतु । यो हि लोकोत्तर वस्तु प्रत्यक्षगोचर करोति यश्च कञ्चन विजयते तयोरुपरि देवै पुष्पवृष्टि क्रियत इत्यादि ज्ञातव्य ॥ ८९ ॥

तावके हृदि निपात्य कृतेव मन्मथेन दृढधैर्य्यतनुत्रे । कुण्ठनादनितमा कुसुमानाञ्छत्रमित्रमुरलेत्र शराणा ॥ ९० ॥

तावक इति । मन्मथेन दृढमभेद्य धैर्य्यमेव तनुत्र कवच यस्य तस्मिंस्तावके हृदि मनसि अथ च वक्षसि अर्पित शरान् निपात्य नितरा दृढपातपूर्व यथा तथा पातयित्वा दृढतनुत्रत्वादेव अतितमा कुण्ठनात् तैक्ष्ण्यत्यागाद्धेतो कुसुमरूपाणा शराणा छत्र मित्रञ्च येषा तानि, छत्रस्य वा मित्राणि सुराणि येषा ते अग्नत्यादिशकलितमुखा तेषा भावस्तत् मुखोमुखतापरित्यागेन छत्रतुल्यवृत्तमुखतेव प्रत्यक्षदृश्या कृता । दृढतनुत्रे हि पतितो बाण कुण्ठितत्वाद्वृत्तमुखा भवति । स्मरशरा शरत्वात् पूर्व मुखीमुखा आसन्, इदानीं धैर्य्यकञ्चुके त्वदीये हृदि निपात्य नितरा कुण्ठनादिव तेषा पुष्परूपाणा शराणा छत्राकारमुखता जातेत्युत्प्रेक्षोपमा वा । विकसितानि पुष्पाणि छत्र-

तुल्यानि भवन्ति । अथ च छत्रं छायाकारित्वात् सुखदमेव न तु दुःखदं यथा तथा कामशरा अपि रुद्रहृदयस्य निर्वापका एव जाताः, न तु त्वां जेतुमशक्नुवन्नित्यर्थः । एतादृशो जितेन्द्रियः कोऽपि नास्तीति भावः । निपात्य यदन्तात् क्यप् ॥ ९० ॥

यत् तव स्तवविधौ विधिरास्यैश्चातुरीं चरति
तच्चतुरास्यः । त्वय्यशेषविदि जाग्रति शर्वः स
र्वविद्ध्रुवतया शितिकण्ठः ॥ ९१ ॥

यदिति । विधिः तव स्तवविधौ स्तुतिविधौ बहुभिरास्यैर्मुखैः चातुरीं वैदग्ध्यं यद् यदि चरति प्राप्नोति नानाप्रकारैर्यदि वर्णनं करोति तत् तर्ह्येव । चतुराणि वर्णननिपुणानि आस्यानि यस्य वा तादृशो भवेत्कान्यः । अथ च त्वद्वर्णनविधौ यस्माच्चातुरीं प्राप्नोति तस्मादेव हेतोश्चतुराण्यास्यानि यस्येति चतुरास्यो न तु चत्वार्यास्यानि यस्येति विग्रहेण चतुरास्यः । आस्यानाञ्चतुष्टं सत्यपि तत्रार्थे गौरवाभावात्, अत्र तु गौरवसद्भावात् तथैवोच्यत इत्यर्थः । त्वदीयस्तुतिपरत्वाद् ब्रह्मणो लोकत्रयेऽप्येव कीर्तिरजनीति भावः । तथा शर्वो हरः त्वयि बुद्ध एव अशेषविदि सर्वज्ञे जाग्रति सति सर्वविदं सर्वज्ञमात्मानं ब्रूते स सर्वविद्ध्रुवत्वलक्षणेन परगुणस्यात्मन्यारोपणेन हेतुना कलङ्केन शितिकण्ठो नीलकण्ठः न तु कालकूटभक्षणेन नीलकण्ठः त्वत्स्पर्धितया लोकत्रयेऽपि महेशस्य एवमपयशो जातमित्यर्थः । ब्रह्महेशाभ्यामपि मत्सकाशात् त्वमेव परमपुरुषः सर्वज्ञश्चेति भावः । अन्यस्य यथाऽऽत्मस्तुत्या सर्वज्ञसन्निधौ लज्जया मालिन्यं भवति ९१

धूमवन् कलयता युधि कालं म्लेच्छकल्पशिखिना
करवालं । कल्किना दशनयं मम कल्कं त्वं
व्युदस्य दशमावतरेण ॥ ९२ ॥

श्लोकद्वयेन कल्किनं स्तौति ॥ धूमवदिति । त्वं धूमवत्कालं करवालं खड्गं युधि म्लेच्छैः सह युद्धे कलयता धारयता कालं मृत्युरूपं करवालं खड्गं धूमवद् धूममिव धारयता वा । अत एव म्लेच्छानां

र्थ यामपि वादिनां त्वत्समाधिरेव सिद्धान्त इत्यर्थः । मुक्तिहेतुत्वमेवे ति भाव. । न तावत् स्फुरतीति वा ॥ १०४ ॥

ऊर्ध्वदिक्कृतदलनो द्विधकार्षीः किं तनुं हरिहरी भवनाय । किंच तिर्यगभिनो नृहरित्वे कः स्वयनन्तमनु नन्वनुयोगः ॥ १०५ ॥

ऊर्ध्वेति । हे विभो त्वं हरिहरीभवनाय अहरिहरयोरपि हरिहर योर्भवनाय हरिहरमूर्तीभवितुं ऊर्ध्वा दिग्यस्मिन् तदूर्ध्वदिक्कमेवम्भूतं दलनं विभागो यस्यास्तादृशीं तनुं द्विप्रकारं किं किमर्थमकार्षीः. हरि हरमूर्तौ चरणादिमूर्द्धपर्यन्तं तत द्विमदृशचरणादिधारणोऽधोभागमारभ्यो र्ध्वभागपर्यन्तं किमर्थमकार्षीः । नृहरित्व इव तिर्यग्विभागमेव कि मिति नाकार्षीरित्यर्थः । चरणादेशरस्य देवताबर्णनस्य कर्तुं युक्तत्वा दूर्ध्वदिकेत्युक्तं । यदि च हरिहरतनु स्वमूर्ध्वदिक्कविभागमकार्षीस्तर्हि नृहरित्वे च नरहरीभवितु तिर्यग्यथा तथा किमित्यभिनः विभक्तवा न् । कण्ठादधोभागे नरत्वेन ऊर्ध्वभागे सिंहत्वेनैव तिर्यग्दिक्कविभागं किमित्यकार्षीः । हरिहरस्य इव ऊर्ध्वदिक्कविभागमेव किमिति नाका र्षीरित्यर्थः । अत्र क्षेपद्वय स्वयमेव परिहरति । ननु भो विभो त्वम नन्त त्वां अनु त्वां प्रति अनुयोग प्रश्न कः, अपि तु न युक्तोऽयं प्र श्नद्वारक आक्षेपः । समर्थो हि स्वेच्छया यत्किञ्चित् करोति पर किम र्थमेव करोषीत्याक्षेपार्हः स न भवतीत्यर्थः । न खलु परनन्त्र प्रभु- रिव इति न्यायेन स्वेच्छामात्रेण तथारूप करोषीति भाव, अत्र हरि हरनरहरिवर्णनं । ऊर्ध्वदिकेति बहुव्रीहौ कप् ॥ १०५ ॥

आप्तकाम सृजसि त्रिजगत् किं किं भिनत्सि यदि निर्मितमेव । पासि चेद्भवतीर्य मुहुः किं स्वात्मनाऽपि यदवश्यविनाश्य ॥ १०६ ॥

आप्तेति । हे आप्तकाम अवाप्तसकलाभिलाष विभो त्व त्रिजगत् किं सृजसि । यदि निर्मितमेव तर्हि निष्प्रयोजनमेव किं भिनत्सि । यदि चेद स्वात्मनाऽपि यदवश्यं विनाश्य स्वयमपि निश्चयेन सहर-

हा यस्य तवोदरे चाद्यं सर्वं वस्तु दृष्ट्वा मार्कण्डेयो जठरस्थेन त्वयैव विनिर्गमुज्जयं स्वगज्ञानन् सन् निर्ययौ स कतमोऽनेकेष्ववतारेषु मध्ये को वा विशिष्टस्तवावतार इति त्वमेव जानीषे नान्यः कश्चित् स्वावतारान् स्वाकाशत्वादित्यर्थ इति व्याख्येयं । कतम इत्यत्र बहूनां जातिपरिप्रश्ने डतमच् ( पा० ५ । ३ । ९३ ) ॥ १०९ ॥

ब्रह्मणोऽस्तु तव शक्तिलतायां मूर्द्धि विश्वमथ
पत्युरहीनां बालकस्य जठरे वा सर्वथा
ऽसि जगतामवलम्बः ११० ॥

ब्रह्मण इति । स्थावरजङ्गमात्मकं विश्वं ब्रह्मणः परमात्मस्वरूपस्य तव शक्तिरूपायां मायाख्यरूपायां लतायां सृष्टेः प्राक् अस्तु वर्तताम् । सृष्टेः प्रागमूर्ते ब्रह्मणि विश्वं लीयत इति पुराणोक्तेः । तथा च त्वन्मायालतायां विश्वं वर्तत । अथ सृष्ट्यनन्तरं सृष्टं विश्वं त्वदंशस्याहीनां पत्युः शेषस्य मूर्द्धि वर्तताम् । प्रलये च वटाराये बालकं मायाशिशुत्वं कलयतोऽङ्गीकुर्वतः तवैव जठरे वास्तु समस्तमास्तामित्यर्थं सर्वथा सर्वप्रकारेण त्वं जगतामवलम्बोऽसि । वा समुच्चये । एतेन सृष्टिस्थितिलयकर्ता त्वमेवेति सूचितं । अस्तीत्यपि क्वचित् पाठ ॥ ११० ॥

धर्मबीजसलिला सरिदङ्घ्रावर्थमूलमुरसि स्फु
रति श्रीः । कामबीजमपि प्रद्युम्नस्ते ब्रह्म मु
क्तिदमसि त्वमेव ॥ १११ ॥

धर्मेति । हे विभो धर्मस्य प्रथमपुरुषार्थस्य बीजं प्ररोहकारणं सलिलं यस्याः सा सरिद् गङ्गा तव अङ्घ्रौ चरणे स्फुरति शोभते । तथा अर्थस्य द्वितीयपुरुषार्थस्य मूलमादिकारणं श्रीलक्ष्मीरुरसि स्फुरति । तथा कामपदैकवाच्यं कामरूपतृतीयपुरुषार्थोऽपि ते प्रद्युम्नः कामरूपस्य तव तनयत्वेन पुत्रत्वादधीन वर्तत इत्यर्थः । तथा मुक्तिदं चतुर्थपुरुषार्थनिर्वाहदायकं ब्रह्म परमात्मरूपमेव त्वमसि चतुर्विधपुरुषार्थैः इत्थं तथा धर्मार्थकाममोक्षादिना त्वदुपासनैवोचितेति भावः १११

लीलयाऽपि तव नाम जना ये गृह्णते नरकनाशकरस्य । तेभ्य एव नरकैरुचिता भीस्ते तु बिभ्यतु कथं नरकेभ्यः ॥ ११२ ॥

इदानीं कतिचिद्भिः श्लोकैः भगवन्नामसङ्कीर्तनमाहात्म्यं वर्णयति । लीलयेति । हे विष्णो ये जना नरकस्य भौमासुरस्य नाशकरस्तस्य, अथ च पुण्यश्लोकत्वान्निरयनाशकारिणस्तव नाम राम विष्णो इत्यादिमञ्जुमङ्कलपरिहासादिप्रसङ्गान्तररूपया लीलया विलासमात्रेणापि गृह्णते उच्चारयन्ति तेभ्य एव त्वन्नामग्राहिभ्य एव सकाशात् पातकिपातनास्थानभूतैर्महारौरवादिनरकैर्भीस्त्रासः कर्तृभिः तदधिकरणा वा भीतिरुचिता योग्या तेभ्य एव तैर्भयं प्राप्नुमुचितमित्यर्थः । ते तु नरकनाशकारिभगवन्नामग्राहिणः क्षीणपापा नराः पुनः नरकेभ्यः सकाशात् कथं नाम बिभ्यतु भयं प्राप्नुवन्तु, अपि तु न कथञ्चित् । तदुक्तं श्रीभागवते ।

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ इति ।

लीलया ऽपीत्यपिशब्दे न ये बुद्धिपूर्वं भगवन्नामजपमेव कुर्वन्ति तेभ्यो नरका बिभ्यतीति किमु वक्तव्यमिति सूचितं । नरकैर्भीरिति कर्तृकरणयोः तृतीयेति ( पा० २ । ३ । ६५ ) षष्ठी प्राप्तावपि भीरिति सम्पदादित्वात् क्विपि । क्वचिदधिकारविहितत्वात कीप्रत्ययत्वे कर्तृकरणयोरिति ( पा० २ । ४ । १८ ) कर्तरि तृतीया ॥ ११२ ॥

मृत्युहेतुषु न वज्रनिपाताद् भीतिमर्हति जनस्त्वयि भक्तः । यत् तदेच्चरति वैष्णवकण्ठान्निष्प्रयत्नमपि नाम तव द्राक् ॥ ११३ ॥

मृत्युहेतुष्विति । हे विष्णो त्वयि विषये भक्तो जनोऽनेकेषु मृत्युहेतुषु मध्ये वज्रनिपातान्मृत्युकारणात् सकाशाद्भीतिं नार्हति भयं प्राप्तुं योग्यो न भवति । यद्यस्मात् कारणात तदा वज्रपातसमये तस्य वैष्णवस्य कण्ठान्निष्प्रयत्नं निरन्तरं हरिस्मरणाभ्यासबलेन तस्मिन्

काले विशिष्टमुद्यमं विनापि तव श्रीरामकृष्णादिनाम द्राक् शीघ्रमुच्चरति निर्गच्छति। वज्रनिपातान्मरणे सञ्जातेऽपि तस्मिन् समये उक्तरीत्या नामोच्चारणसद्भावात् तावन्मात्रेण मोक्षप्राप्तिः पुनर्जन्माभावान्मृत्योरयं वैशसस्य नास्तीति भावः। मृत्युहेतुषु मध्ये अन्यापेक्षया दारुणात् मृत्युहेतोर्वज्रनिपातादपि सकाशाद्विभ्यतो भयं नार्हति, अन्येभ्यो नार्हतीति किं वाच्यमित्यर्थः। तस्मान्मृत्युसमये वैशसकण्ठाक्रियमाणमपि तव नाम द्राक् निर्गच्छति। व्याघ्राद्यनेकेषु मृत्युषु हरिस्मरणादेव मृत्युभयं नास्तीति ज्ञातव्यं। उच्चरति सकर्मकत्वाभावात् तङभावः॥ ११३॥

सर्वथापि शुचिनि क्रियमाणे मन्दिरोदर इवावकिरा ये। उद्भवन्ति भविचेतसि तेषां शोधनीभवदनुस्मृतिधारा॥ ११४॥

स्मरणमाहात्म्यमाह। सर्वथेति। हे विष्णो सर्वथा मनोवाक्कायनियमाद्यनेकप्रकारैर्निर्धूतपापतया शुचिनि शुद्धे ब्रह्मार्पितफलत्वेन बन्धककर्मरहिते वा क्रियमाणेऽपि भविनां संसारिणां चेतसि मनसि ये अज्ञानप्रमादकृता अवकरा रागादिदोषा उद्भवन्ति तेषां दोषाणां भवतोऽनुस्मृतिध्यानं तस्य धारा परम्परैव शोधनी क्षालनहेतुर्मार्जनी कथित्। कस्मिन्निव। मन्दिरोदरे गृहमध्ये इव यथा पुनःपुनर्मार्जनेन विरलस्के क्रियमाणे गृहमध्ये ये तृणरज पुञ्जाः यथा यथा उद्भवन्ति तेषां शोधनी सम्मार्जनी भवति तथेत्यर्थः। त्वदनुस्मृतिरेव चित्तशुद्धिमभ्यादनद्वारा नैष्कर्म्यसम्पादनेन मोक्षहेतुरिति भावः। भुवीति पाठे चेतस्येव भुवि स्थाने इत्यर्थः। सम्मार्जनी शोधनी स्यात्। सङ्करोऽवकरस्तथेत्यमरः॥ ११४॥

अस्मदाद्यविपर्ययेऽपि विशेषे रामनाम तव धाम गुणानां। अन्यथान्य भवतैव तु कस्मादन्यथा न नु जनुस्त्रितयेऽपि॥ ११५॥

पुनरपि नामान्तरापेक्षया रामनाम्नो माहात्म्यमाह। अस्मदिति।

मन्त्रेते गुणाः सन्तीति विशेषाकारेण विशेषे असदादीनामज्ञानामपि पथे बुध्यगोचरे सत्यपि तव सहस्रनामसु मध्ये रामेति नाम गुणाना धाम स्थान । यद्वा हे राम तव नाम गुणाना स्थान । अज्ञातेऽपि विशेषे कुत एव तन्निर्णीतमित्याशङ्क्य अर्थापत्तिं प्रमाणयति । अन्यथा तु पुनर्यद्येव न स्यात् तर्हि ननु जन्मत्रितयेऽपि जामदग्न्यदाशरथियदुभद्ररूपजन्मत्रयेऽपि भवतैव कस्माद्धेतो आग्रहेण पौन पुन्येन वा रामरामेत्येव नाम अन्वजन्धि अङ्गीकृतं । अनेकजन्मस्वेतस्य त्वयैव स्वीकारात् तयाप्येतत् प्रियतममिति ज्ञायते । तस्माद्रामनाम गुणगणस्थानमित्यर्थापत्तिः । तथा च शिवेनापि राम रामेति रामेत्यादि पाद्मेर्नो प्रत्युक्त ॥ ११५ ॥

भक्तिभाजमनुगृह्य दृशा मां भास्करेण कुरु वीततमस्कं । अर्पितेन मम नाथ न ताप लोचने न विधुना विधुनासि ॥ ११६ ॥

भक्तीति । हे नाथ त्व भास्करेण सूर्यरूपया दक्षिणया दृशा त्वयि भक्तिभाज मामनुगृह्य मयि प्रसाददृष्टिपात कृत्वा वीततमस्क गताज्ञान कुरु । प्रसाददृष्टिपातमात् मम सकलामप्यविद्या विनाशयेत्यर्थ । सूर्येण च तिमिर निरस्यते । तथा मयि अर्पितेन प्रसादनिहितेन विधुना चन्द्ररूपेण वामलोचनेन कृत्वा मम त्रिविधमपि ताप न विधुनासि न दूरीकरोषि, अपि तु निराकुर्विति काकु । चन्द्रेण च शीतलत्वात तापशान्ति क्रियते । एव स्तुवन्त मा प्रसाददृष्ट्या विलोक्य कृतार्थीकुर्विति भाव ॥ ११६ ॥

लङ्घयन्नहरहर्भवदाज्ञामस्मि हा विधिनिषेधमयीं य । दुर्लभं स तपसाऽपि गिरेव त्वत्प्रसादमहमिच्छुरलज्जः ॥ ११७ ॥

लङ्घयन्निति । हे स्वामिन योऽह, सन्ध्यावन्दनादि कुर्यादिति विधि , ब्राह्मणहननादि न कुर्यादिति निषेध , तन्मयीं तद्रूपां भ-

यदाज्ञा श्रुतिस्मृतिरूपामहरहः प्रतिदिनं लङ्घयन्नतिक्रामन्, यत् कर्त्तव्यतया त्वयोपदिष्टं तन्न करोमि, यन्न कर्त्तव्यमित्युपदिष्टं तत् करोम्येवेति त्वदाज्ञां लङ्घयन् अस्मिन् वर्त्ते । हा कष्टं, अनुचितकारी सोऽहं महीयसा तपसा दुर्लभं त्वत्प्रसादं इच्छुः प्रसीदेति गिरैव प्रार्थयमानः सन् अलज्जो निर्लज्जोऽस्मि । यो हि एकदाऽपि प्रभोराज्ञां करोति सोऽपि कथञ्चित् स्वामिप्रसादं लभते । यस्तु कदापि स्वाम्याज्ञां न करोति स दण्ड्योऽपि भवति य प्रार्थेत प्रसादमिच्छन्निर्लज्ज एव । अत एव दयालुस्त्वं प्रसीद प्रसीदेति भावः । त्वत्प्रसादं न लोकेति षष्ठीनिषेधः (पा० २ । ३ । ६९) ॥ ११७ ॥

विश्वरूप कृतविश्व कियत् ते वैभवाद्भुतमणौ हृदि कुर्वे । हेम नह्यति कियन्निजचीरे काञ्चनाद्रिमधिगत्य दरिद्रः ॥ ११८ ॥

विश्वेति । हे विश्वरूप स्थावरजङ्गमात्मक, तथा कृतविश्व स्थावरजङ्गमकारिन् विभो, अहं ते तव वैभवाद्भुतं सामर्थ्यातिशयजन्यं तद्रूपं वा आश्चर्यं अणौ परमाणुरूपे हृदि मनसि कियत् किं परिमाणं कुर्वे, अपि तु आधारस्याल्पीयस्त्वादाधेयस्य च महीयस्त्वात् सर्वं वैभवाद्भुतमणौ हृदि धारयितुं न शक्नोमीत्यर्थः । यद्यपि ते सामर्थ्यं महत् तथापि किमप्यल्पमेव धारयामीति वा युक्तमेतत् । यस्मात् दरिद्रोऽकिञ्चनो जनः काञ्चनाद्रिं सुमेरुमधिगत्य प्राप्य स्वर्णसुवर्णग्रहणाभिलाषोऽपि सन् शतधा शकलीभूते अत्यन्तजीर्णे निजचीरे स्वीये वस्त्रे कियत् किं परिमाणं हेम नह्यति बध्नाति, अपि स्वल्पमेव ग्रन्थौ बध्नाति असामर्थ्यात्, तथा सकलगुणवर्णनाभिलाषे सत्यपि सामर्थ्याभावात् कियन्मात्रं गुणवर्णनं करोति भाव इति स्तुत्युपसंहारः ॥ ११८ ॥

इत्युदीर्य्य स हरिं प्रति सम्प्रज्ञातवासिततमः समपादि । भावनाबलविलोकितविष्णोः प्रीतिनाक्तिमद्भुतानि चरित्रः ॥ ११९ ॥

इतीति । स नलो हरिं प्रति इत्युक्तप्रकारेण उदीर्य्य प्रसादं सम्प्राप्य द्विविधसमाधिमध्ये सम्प्रज्ञाताख्येन समाधिना तत्र वासिततमः अतितरां वासितमनाः तदेकतानः समपादि जातः, अत एव भावनाबलेन सम्प्रज्ञाते ध्यानबलेन विलोकिते साक्षात्कृते विष्णौ विषये प्रीतेः प्रेम्णः भक्तेश्च सदृशानि योग्यानि कर्म्माणि आनन्दबाष्पगीतनृत्यादीनि चरितुं कर्त्तुं शीलं यस्य सः । यदुक्तं भागवते ।

शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्म्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः ॥ इति ।

अयं सम्प्राप्य प्रतिमादिसाकारध्यानेन विष्णुं साक्षात्कृतेति भावः । विष्णुरिति पाठे भावनाबलेन विलोकितो विष्णुर्येन सः, अत एव प्रीतिभक्तिसदृशानि चरित्नुः विष्णुप्रीत्यर्थे भक्तियोग्यान्युपहारादीनि यस्य । ध्यानसमाधिर्हि द्विविधः सम्प्रज्ञातोऽसम्प्रज्ञातश्च । ध्येयध्यातृभावयुक्तः साकारध्यानसमाधिः सम्प्रज्ञातः । सम्वित्संवेद्यभेदविलोपि न निराकारस्वप्रकाशपरमाणुलक्षणात्ममात्रध्यानसमाधिरसम्प्रज्ञात इति योगशास्त्रं ॥ ११९ ॥

विप्रपाणिषु भृशं वसुवर्षी पात्रसात्कृतपितृक्रतुकव्यः । श्रेयसा हरिहरौ प्रतिपूज्य सद्म एष शरणं प्रविवेश ॥ १२० ॥

विप्रेति । एष नलः सद्मः सम शरणं भोजनगृहं प्रविवेश, नत्वस्य गृहप्रवेशिनः कालः । किम्भूतः । विप्रपाणिषु भृशं नित्यदानसम्बन्धिवसुगोभूतिलहिरण्यादि वर्षत्येवंशीलः । तथा पात्रसात्कृतः विद्यातपोव्रतयुक्तपात्रभूतब्राह्मणाधीनं देयं कृतं पितृक्रतुकव्यं नित्यश्राद्धरूपपितृयज्ञसम्बन्धि कव्यं येन । तथा श्रेयसा स्नानदेवपूजादिनित्यश्राद्धोत्तरकर्म्मानुष्ठानजन्येन पुण्येन पुष्पादिना च हरिहरावभेदबुद्ध्या विष्णुशिवरूपनारायणं परिपूज्य तस्मिंस्तदर्पणेन तं परितोष्य भक्तिनम्रः सन् नमस्कारं कृत्वा नित्यश्राद्धान्तर्ब्रह्मार्पणं कृत्वा भोजनार्थं गृहं प्रा-

भीमात्मजाऽपि कृतदैवतभक्तिपूजा पत्यौ च भुक्तवति भुक्तवती ततोऽनु । तस्याङ्कमङ्कुरिततत्परिरिप्सुमध्यमध्यास्त भूषणभरातिगुरालसाङ्गी ॥ १२२ ॥

भीमेति । ततो मलमासादारोहणानन्तरं भीमात्मजाऽपि तस्याङ्कमध्यास्त । कीदृशी । कृता गौर्यादिदेवतानां भक्त्या षोडशोपचारपूजा यया । तथा पत्यौ च भुक्तवति सति स्वयमपि भुक्तवती । अनन्तरञ्च भूषणभरेण अलङ्कारबाहुल्येन योऽतिभरो गौरवं तेन अलसमङ्गं यस्याः सा । भूषणबाहुल्येन अतिभरा यया वा भूषणभरमपि वोढुमसमर्थो अतिमृद्वी स्तनाम्यां मन्दगतिर्वा । कीदृशमङ्कं । अङ्कुरिता सम्यगुदिता तत्परिरिप्सा भैम्यालिङ्गनवाञ्छा यस्य तादृशो मध्यो मध्यदेशो यस्य । उक्तविशेषणविशिष्टा सती नलाश्रया तदङ्कं समुपाविशदिति भाव । अपि समुच्चयार्थः । पत्यौ भुक्तवतीति पतिव्रतात्तिः । परिशुद्धमध्यमिति पाठान्तरं चिन्त्यं । अङ्कं अधिशीङ्स्थासामिति (पा० १।४।४६) कर्मत्व ॥ १२२ ॥

तामन्वगाद्विगणयिष्यविपाकचञ्चोः स्पष्टं शलाटुपरिणत्युचितच्छदस्य । कीरस्य काऽपि करयोरिरुहे वहन्ती सौन्दर्यपुञ्जमिव पञ्जरमेकमाली ॥ १२३ ॥

तामिति । काऽप्येकादिपुनामा अतिसुन्दरी आली सखी तां भैमीं अनुलक्षीकृत्य पश्चात् अगात् जगाम । कीदृशी । कीरस्य शुकस्यैकं पञ्जरं करयोरिरुहे पाणिपद्मे वहन्ती । उत्प्रेक्षते । शुकस्य साक्षात् सा सुवर्णादिघटितत्वात् पञ्जररूपेण वा मूर्तं सौन्दर्यं पुञ्जमिव पथक्करे पञ्जररूपेण वहन्तीति सम्बन्धः । किम्भूतस्य कीरस्य । अशितस्य भक्षितस्य पक्वस्य बिम्बीफलस्य विपाकः परिणामस्तद्रूपा चञ्चुर्यस्य अतिप्रियभुक्तपक्वबिम्बीफलमेव तदीयचञ्च्वाकारेण परिणतमिति यावत् । तादृशस्यातिरक्तचञ्चोरित्यर्थः । तथा स्पष्टं सर्वथापि शलाटु अपरिपक्वं यत्किञ्चित् फलं भुक्तबिम्बीफलमेव वा तस्य परिणतिः अति-

नीलता तया रचिता तद्योग्यास्तत्तुल्या अतिनीलाः छदाः पक्षा यस्य। अपक्वानि श्यामानि जम्बितानि यानि फलान्तराणि बिम्बीफलान्येव वा यदीयच्छदाकारेण परिणतानीति यावत्। तादृशस्य हरितपक्षस्य रक्तचञ्चुत्व नीलपक्षत्वस्य जातिः। पाठितशुकादिपञ्जरादिधारिण्या अस्या अपि नायिकानुगमन जातिः। भोजनानन्तर पाठितशुकसारिकादिशब्दानां गीतस्य च श्रवणेन नृत्यादिदर्शनेन च क्रीडन राज्ञामपि जातिः। आमे फले शलाटुः स्यादित्यमरः॥ १२३॥

कूजायुजा बहुलपक्षशितिम्निनीत्वा स्पष्टं कुहू
पदपदार्थमिथोऽन्वयेन। तिर्य्यग्धृतस्फटिकद
ण्डकवर्त्तिनैका तामन्ववर्त्तत पिकेन मदाधिकेन १२४

कूजेति। एका सखी पिकेन कोकिलेन सह उपलक्षिता वा तां भैमीं अन्ववर्त्तत अनुलक्षीकृत्य जगाम। किम्भूतेन पिकेन। कूजया मधुराव्यक्तेन शब्देन सह आत्मानं युनक्तीति युजा युक्तेन कुहूशब्दं कुर्वतेत्यर्थः। तथा बहुलो भूयान् पक्षाणां शितिमा कृष्णत्वं तस्मिन् नीत्वा अवधिभूतेन अत एव विशेषेण कुहूरिति पदस्य तथा तदर्थस्य तत्पदवाच्यस्य अमावास्यारूपस्य च मिथो अन्योन्यसम्बन्धो यत्र तादृशेनैव स्पष्टमुत्प्रेक्षायां कुहूपदयोगित्वात् कृष्णतरत्वाच्च अमावास्याविषयं कुहूपदपदार्थयोस्तादात्म्यरूपणमिति यावत्। अमावास्या अपि कृष्णपक्षसम्बन्धिनी सम्यादृशी भवति। अत एव कुहूशब्दवाच्या च। तथा तिर्य्यक तिरश्चीन करधृतस्फटिकदण्डकः हस्तदण्डः तत्र वर्त्तिना स्थितेन तथा मदाधिकेन मदोन्मत्तेनेत्यर्थः॥ १२४॥

शिष्याः कलास्वविधिषु भीमभुवो वयस्या वीणा
मृदङ्गणनकर्माणि याः प्रवीणाः। आसीनमेन
मुपवीणयितुं ययुस्ता गन्धर्वराजतनुजा मनु
जाधिराजं॥ १२५॥

शिष्या इति। या भीमभुवो भैम्या वयस्याः सख्य कलाविधिषु

यतः षष्टिकलाकर्मसु विषये भैम्या सख शिष्या , तथा वीणाया मृदङ्गा-दिवादनकर्मणि मधुरशब्दरूपे व्यापारे प्रवीणास्ता गन्धर्वराजा विश्वावसु-स्तस्य तनुजा कन्या तत्तुल्याः प्रासाद आसीन एव मनुजाधिराज नल उपवीणयितु वीणयोपगातु यथु प्राप्तु ॥ १२५ ॥

तासामभासत कुरङ्गदृशां विपञ्ची किञ्चित् पुरः कलितनिष्कलकाकलीका । भैमीतथामधुरकण्ठलतोपकण्ठे शब्दायितुं प्रथममप्रतिभावतीव ॥ १२६ ॥

तासामिति । तासा कुरङ्गदृशां विश्वावसुकन्याना विपञ्ची वीणा अभासत शुशुभे । किम्भूता । किञ्चित् पुर ईषत्पूर्वं प्रारम्भसमये कलिता अङ्गीकृता निष्कला गम्भीरमन्द्रस्वरगुणितवर्णविशेषाभिव्यक्तिर-हिता काकली सूक्ष्ममधुरा अव्यक्तारावविशेषा यया । अत एवोत्प्रे-क्षते । भैम्यास्तथा अनिर्वचनीयमधुरस्वरयुक्ताया कण्ठलताया उप-कण्ठे शब्दायितु तस्या पुरस्ताच्छब्दं कर्तुं प्रथम प्रारम्भे अप्रतिभा-वतीव प्रतिभारहितेव अधृष्टेव । अन्योऽप्यधिकविदुषः पुरस्ताद्गायितु गातु वा अधृष्टत्वादप्रगल्भ सन् प्रथम मन्दमेव भाषते गायति वेति सङ्गीतविद्याविदामिय जातिः । प्रथम गायमाना प्रारम्भे काकलीमा रचयन्तीति काकल्यादिसङ्गीतशास्त्रादवगन्तव्य । काकलीकेति नद्यु-तश्चेति कप् ( पा० ५ । ४ । १५३ ) शब्दायितु शब्दवैरेति (वा० ३ । १ । १७) क्यङ् ॥ १२६ ॥

सा यद्गताखिलकलागुणभूमभूमीभैमीतुलाधिगतये स्वरसङ्गतासीत् । तं प्राग्रसावविनय परिवादमेत्य लोकोऽधुनाऽपि विदिता परिवादिनीति ॥ १२७ ॥

सेति । सा विपञ्चीधृतानामखिलाना गीतनृत्यादिचतुःषष्टिकलाना सौन्दर्यादिगुणानाञ्च भूम्नो बाहुल्यस्य भूमी स्थानभूता भैमी तस्या-

स्तुताधिगतये साम्यप्राप्तये स्वयमपि पूर्वोक्तप्रकारेण तादृशी मनो भैमीस्वरतुल्यत्वप्राप्तये यत् स्वरैः षड्जादिभिः मङ्गला सम्यस्था आसीत्। अथ च भैम्या सार्द्धं साम्यप्राप्तये स्वरस्वाम्यन्याभिलाप गताऽभूत। असौ विपञ्ची न भैमीसाम्यस्वाच्छन्द्याभिलापरादाग्रमविणयमत्युत-मावमाननमेव परिवाद लोकमुखे स्फुट दोष प्राक् पूर्वं श्रुत्य प्राप्य। अथ च परिवाद वीणावादनसाधन तद्रूपमविनय प्राप्य अधुनाऽप्य-द्य यावदपि लोके परिवादिनीति विदिता ख्याता परिवादयोगात् परिवादिनीत्यद्यापि गीयत इत्यर्थः। अथ च वीणावादनसाधनयुक्ता। यद्वा सप्ततन्त्रीयुक्ता वीणा परिवादिनी। भीतो भयानि पश्यतीति न्यायेन पूर्वमपि लोके दुष्टता प्राप्ता पुनरपि तत्तस्य पुरस्तात् प्रागल्भ्ये दोषान्तर शङ्कमानेव अप्रतिभायतीति प्राचीनश्लोकार्थहेतुतया वाच्य। परिवाद कलङ्क स्याद्वीणावादनवस्तुनीति विश्व ॥१२७॥

नादं निषादमधुरं ललमुज्जगार साऽभ्यासभाग
अनिभृतकुलकुञ्जरस्य। स्तम्बेरमीव कृतसश्रुति
मूर्द्धकम्पा वीणा विचित्रकरचापलमाभजन्ती॥१२८॥

नादमिति। अनिभृता कुल वंशस्तत्र कुञ्जर श्रेष्ठस्तस्य नलस्य अभ्यासभाक् समीपवर्तिनी सा तन्वी वीणावाद्यरूपा निषादस्वरेण मधुर श्रव्य नाद उज्जगार उद्गीर्णवती। किम्भूता। कृत सश्रुतीना द्वाविंशतिश्रुतियुक्ताना षड्जादीना मूर्द्धि नादप्रान्त कम्प कम्पितस्वरो यया, कृत सह श्रुतिभिर्यया तथा मूर्द्धनि वीणाया एव उपरितनभागे कम्पित स्वरो यया वीणोर्द्ध्वं मध्याङ्गुलि संयोगाद्धि निषादस्वरो जायते तादृशी वा। कृत सश्रुतीना द्वाविंशतिविदा सङ्गीतशास्त्रविदा मूर्द्धनि कम्पो यया वा। तथा विचित्र करचापल नानारूप-आरोहावरोहादिक्रमेण अङ्गुलिप्रान्तस्पर्शवशेन वादकपाणिचापल्य तत्प्रधानमेवानेकस्थानावस्थानलक्षण त्वा सामस्त्येन भजन्ती निषादप्रधान ललितादिमङ्गलगीत प्रकटीचकारेत्यर्थः। कथ। स्तम्बेरमी हस्तिनीव। साऽपि अनिभृत पर्वतः कुल वंश उत्पत्तिस्थान यस्य सादृशपर्वतभवस्य हस्तिश्रेष्ठस्य राजसम्बन्धिनो वा हस्तिनः

गृह्यकस्ताः कीरः किरन्मुदमुदीरयति स्म विश्वा ॥१३०॥

तदिति । अथ काकल्यद्विरणानन्तरं गन्धर्वराजकन्यानां वीणा त योर्द्वयोः श्रुतीनां कर्णानां मधूनि अमृततुल्यानि भैमीनलप्रियस्तुतिकारिणीना चाटुगाथा श्लोकान् तथा तेन प्रकारेण अतिस्फुटो यः वर्णवन्धः तन्त्रीविनिबद्धाक्षरविन्यासो यस्मिंस्तद्यथा तथा जगुः । यथा येन प्रकारेण वसुमत्या भूमौ रतिरूपाया भैम्या गृह्यकः पञ्जरबद्धः कीरः शुको मुद किरन् आतृणां हर्षमुत्पादयन् विश्वाः सर्वाः सप्तद्वयंमात्रादिसहिता गाथा इत्थं वक्ष्यमाणरीत्या उदीरयति स्म । तिर्यग्योनि शुकोऽपि यथा श्रवणमात्रेण सर्वा अपि गाथा अनुवदितुं शक्नोति तथा तन्त्रीषु स्फुटतराक्षरवन्धान् भैमीनलस्तावकश्लोकान् वीणा-स्फुटं गायन्ति स्मेति भावः । एतेन गन्धर्वराजकन्यानां वीणाप्रावीण्यं शुकस्यापि प्रज्ञातिशयः सूचितः । गृह्याः सक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते, इत्यमरः ॥ १३० ॥

अस्माकमुक्तिभिरवेप्यथ एव वद्धेर्गाधं यवामतिमती स्तुमहे तथापि । ज्ञानं ह वागवसरावचनाद्भवद्भ्यामेतावदप्यनवधारितमेव न स्यात् ॥ १३१ ॥

इत्यमितिं यदुक्तं तदेवाह । अस्माकमिति । यद्यपि अतिशयिता मतिः प्रज्ञा ययोस्तौ युवा अस्माकमुक्तिभिर्गाथारूपाभिरेव अस्मद्वाग्यनाभिः अस्माकं बुद्धेर्गाधं बहानार्थत्वं अवेप्यथ एव ज्ञास्यथ एव तथापि वयं युवां स्तुमहे स्तुम एव । हि यस्मात् भवद्भ्यां वागवसरे स्तावकादिवचनावसरे सत्यपि अवचनात् अभाषणाद्धेतोरेतावत् अत्यन्तार्थेऽत्यल्पमपि अस्मदीयं ज्ञानं नावधारितमेव न स्यात् अज्ञातमेव न स्यान्मास्तु इत्यर्थः । तस्मात् स्तुम एव । वर्णनाया क्रियमाणाया अयमल्पज्ञानी बहुज्ञान इति वा ज्ञातुरर्थे प्रसिद्धो जयति तस्माद्वर्णयाम इति भावः । इत्येव वीणानिबद्धगन्धर्वपुत्रीवचनं शुके अन्वयदित्यर्थः । एवमुत्तरत्रापि ज्ञेयं । एतेन गन्धर्वपुत्रीणां स्वमौद्धत्यं परिहृतं ॥ १३१ ॥

भूभृद्भवाङ्कभुवि राजशिखामणेः सा त्वं चास्य भोगसुभगस्य समः क्रमोऽयम्। यन्नाकपालकलनाकलितस्य भर्तुरत्रापि जन्मनि सती भवती स भेदः ॥ १३२ ॥

भूभृदिति । सा भूभृद्भवा हिमाचलसुता पार्वती भोगैर्भुजङ्गादिसपंशरीरैः सुभगस्य भूषितस्य राजा चन्द्र शिखामणिर्यस्य चन्द्रमौलेः अङ्कभुवि उत्सङ्गदेशे, वर्तत इति शेष, प्रियतमत्वात् । त्वञ्च त्वमपि भीमपुत्री चन्दनादिभोगैर्मनोहरस्य राज्ञां मुकुटमणेः श्रेष्ठतमस्यास्य नलस्य उत्सङ्गदेशं वर्तसे, इत्ययं क्रमः समः । परिपाटी उचिता । पार्वत्या महेशस्य च तव नलस्य च राजन्यायाः राजश्रेष्ठस्य च अन्योन्यसम्बन्ध समुचित इत्यर्थः । अयं च समस्तुल्य । यथा तयोः सम्बन्ध तथा युवयोरपीत्यर्थः । अयं चाऽयं शब्दश्लेषरूप सम्बन्धस्तुल्य । एव यद्यपि क्रमः समस्तथापि स पुनर्भेदो विसदृशत्व यत् नाकपालस्येन्द्रस्य कलनाशत्वेन एव भवन तया कलितस्य ख्यातस्य राजत्वादिद्राघत्वेन प्रसिद्धस्य भर्तुर्नलस्य सम्बन्धिनी अत्राप्यस्मिन्नपि जन्मनि भवती सती पतिव्रता । अपि शब्दात्न केवलमत्रैव किन्तु जन्मान्तरेऽपि त्वं सत्येव । अन्यथाऽत्रापि सतीत्वानुपपत्तेः । पार्वती तु ब्रह्मकपालस्य कलनया करे धारणया कलितो विदितो न भवति अकपालकलनाकलितस्तादृशाऽपि न भवति । कपालित्वेन ख्यातस्य भर्तुर्महेशस्य सम्बन्धिनी पूर्वजन्मनि दक्षापत्यत्वे एव सती न तु हिमवदपत्यत्वेऽपीति महद्वैषम्यं । हरस्य नलस्य चोक्तप्रकारश्लेषसाम्यत्वेऽपि पार्वत्यास्तव किञ्चिदेव शब्दश्लेषसाम्य न तु सर्वं तस्मात्त्वं तस्या अधिकत्यादित्यर्थः । हिमवदपत्यत्वे पार्वत्या सतीत्वाक्तेर्निन्दा, न चाशङ्कनीया भैमीस्तुतिपरस्य सतीशब्दस्य पार्वत्या नामपरत्वमात्रव्याघातकत्वे नोक्तेर्निन्दापर्यवसानाभावात् ॥ १३२ ॥

एषा रतिः स्फुरति चेतसि कस्य यस्याः सूतेरति द्युतिरथ त्वयि चातनोति । त्रैयक्ष्यवीक्षणवि

चन्द्रनामा वृद्धिं प्रापितः पयसां राशिः समुद्र इव । काशिव । धरा भूमिरिव । यथा पृथ्वीं अङ्के धारयन् समुद्रः शोभते । किम्भूता धरा । सरितो नद्यः एव छव्या कान्त्या हारिणो मनोहरा हारा यस्यास्तां । तथा अन्तर्वेद्याख्या या गङ्गायमुनामध्यजन्मा श्रोणिस्तस्याः । तत्र जननसमो प्रियो मध्यदेशो विन्ध्यहिमाचलान्तरभूभागरूप आर्य्यावर्तपरपर्याय. पुण्यभूर्मध्यदेशो यस्यास्तां ।

हिमवद्विन्ध्ययोर्मध्ये यत् प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥

इति मनुः । इन्दुमानन षष्ठीसमासः ॥ १३४ ॥

दत्ते जयं जनितपत्रनिवेशनेयं साक्षीकृतेन्दु
वदना मदनाय तन्वी । मध्यस्थदुर्बलनमत्यफल
किमि दुर्भुक्तिर्यदत्र तव चारिसनमस्यकेतो ॥ १३५ ॥

दत्त इति । जनितानि सखीभिः कस्तूर्य्यादिविरचितानि यत्र निवेशनानि मकराद्याकारपत्रवल्लीलिखितानि यस्यां सा पत्रवल्लीविभूषिता, तथा छविभ्यां सह वर्त्तमान साक्ष. छसाक्ष साक्षीकृत समीपता प्रापित साक्षीकृतः स चासाविन्दुश्च स यत्र वदन यस्याः सा चन्द्राधिकवदना इयं तन्वी कृशाङ्गी भैमी मदनाय जय दत्ते । एवंविधभैमीदर्शनेन कामो नितरामुल्लसतीत्यर्थ । अथ च कामाय जय दत्ते । एवंविधभैमीदर्शनवशीकृतस्त्व कामेन जीयस इत्यर्थः । यद्व तामकान्त्या अतिसुन्दरो जितो मत्स्यकेतुः कामो येन तस्य तव अत्र भैम्या विषये भुक्तिरेतच्छरीरोपभोगः एतन्मध्य उदरभागे स्थितस्य वर्त्तमानस्य दुर्बलनमत्यस्य कार्श्यस्य फल परिपाक किमिति प्रश्न, सम्भावना वा । अतिसुन्दरस्य तवैतच्छरीरभोगेऽतिकृशेनदुदरभागेनाशक्यकमेव प्रयोजकमित्यर्थः । अय च मध्यदेशवर्त्तिनोऽतिकार्श्यस्य फल एतदेव यदतिसुन्दरस्य तवात्र भुक्तिर्भोगमित्यर्थः । कामेन तव विजये एतन्मुखचन्द्रस्य च साक्षाद्द्रष्टव्यत्वात साक्षित्व युक्तं । अय च कामेन जितमिति कामस्य जयदाने साक्षीकृता इन्दुवदनाः स्वमरस्य उपयाता । अपि हि कामेन नलो भैमीवशीकृत इति जानन्ति एव सत्यपि कूरोक्त्यादिना

कामोत्सवयत्यां अस्यां भवद्रूपायां राजधान्यां ते तव भ्रुवौ तोरणं न ब्रूयते। अपि तु मन्ये ऽपि जनास्त्वद् भ्रुयुगं कामाभ्युदयोत्थितपक्षि-तशिख यंत्रद्वयनिबद्धं आम्रादिमाङ्गलिकसुजातपल्लवरूप तोरणमेव व दन्ति। कामस्त्वदेकाश्रय सन् सर्वोत्कर्षेण वर्तत इति भाव। यत्रापीत्यपि पाठः स्वप्नार्थे राजेति पाठो मुख्य। राजाह इत्यादिना (पा०५।४।९१) समासान्तष्टच् ॥ १३६ ॥

अस्या भवन्तमनिशं भवनस्तथैनां कामः श्रमं न कथमृच्छतु तामगच्छन्। छायेव यामथ गतागतमाचरिष्णोरस्याश्रमजश्रमहरा मकरध्वजस्य ॥ १३७ ॥

अस्या इति। हे नल अस्या भैम्या मकाशात् भवन्त अनिशं गच्छन्, तथा भवतः सकाशात् एनां भैमीं अनिशं गच्छन् प्राप्नुवन् यातायात कुर्वन् कामः कथं नाम श्रम ऋच्छतु गच्छतु अपि तु श्रमं न गच्छत्येव। सदा यातायात कुर्वन् श्रम गच्छतीति युक्तमेव। अथ च यस्मात् या युवयो छाया कायकान्तिरेव तत्करोत्या गतागतमाचरिष्णोस्तस्य मकरध्वजस्य अध्वनि जात श्रम हरति श्रमहरा एवम्भूता भवतीति शेष। दृश्यमानभवच्छायावशादेव यातायातश्रमं न वेत्तीत्यर्थः। अथ च वृक्षच्छायादिनिर्मितच्छायाभागे गतागतं कुर्वतः पुरुषस्य श्रम हरत्येव। भैम्यास्त्वय्येव कामस्तव च भैम्यामेव नान्यत्रेत्येव परस्परानुराग. कुत्रापि नास्तीति भाव ॥ १३७ ॥

स्वेदाप्लवप्रणयिनी तव रोमराजी रत्यै यदाचरति जागरितव्रतानि। शृङ्गारितेन नरनाथ मधूत्थसान्द्रभरनाममेपुरारकेसरदन्तुराङ्गः ॥ १३८ ॥

स्वेदेति। हे नरनाथ स्वेदो घर्मजल तस्मिन् तेन वा आप्लव स्नान तत्र प्रणयिनी प्रीतिमती सात्त्विकभावजस्वेदपूरस्नाता तव रोमराजिः रत्यै सुरतार्थे जागरितस्य उद्बुद्धस्य व्रतानि उद्गतरोमाञ्चनिचयान्

यदाचरति तन्निद्रा जयतीति यावत् । तेन कारणेन रोमाञ्चेन वा त्व मधुन पुष्परसस्योत्थानेनोद्‌गमेन सान्द्र पुष्परसपूरेण निरन्तरं व्याप्त्वाच्छरीरान्तःप्रविष्टा असमेषोः कामस्य पुष्परूपा शरास्तेषां कसरे पिच्छप्रायैर्दन्तुर उच्चावचीकृत अङ्गं यस्य एवम्भूतस्य स्वेदरोमाञ्चौ युक्तत्वात् प्रत्यङ्गमन्तर्मध्ये ममधुकामबाणसम्बन्धिपिच्छरथस्थितौ यत्र म स रागश्यामाङ्ग इवाभासि भैमीयोगात् सस्वेदरोमाञ्चो विरतु कामशरप्रयोजितः सुतरां शोभसे इत्यर्थः । अथ च रोमराजिदूतीस्थानीया तया च तव दूती रोमराजि कृततोपंस्ताना रत्यै कामप्रियां त्वद्धीना कर्तुं यस्य जागरणादिनियमान् करोसि तेन कारणेन विशिष्टनिखातकामबाणपिच्छमञ्जुल इव शोभसे । अन्याऽपि तरुणीः तत्र गा रत्यर्थं कान्तेन सह स्वेदात् सकला रात्रिं जागर्ति ॥ १३८ ॥

प्राप्ता तवापि नृप जीवितदेवतेयं घर्म्माम्बुशी
करकरम्बनमम्बुजाक्षी । ते ते यथा रतिपतेः
कुसुमानि बाणाः स्वेदस्तथैव किमु तस्य शर
क्षतास्रम् ॥ १३९ ॥

प्राप्तेति । हे नृप अम्बुजाक्षी तव जीवितदेवता प्राणेश्वरी इयं भैम्यपि घर्म्माम्बुशीकरकर बन स्वेदजलबिन्दुमिश्रण प्राप्ता । इयमपि त्वदीयस्पर्शवशात् सात्त्विकस्वेदयुक्ताऽभूदित्यर्थः । न केवल त्वमेव स्विन्नः अपि तु इयमपीत्यपेरर्थः । अथ च देवताया. स्वेदो नास्ति इयन्तु देवताऽपि सस्वेदेति चित्रमित्यपि शब्दार्थः । अतश्च कुसुमान्येव यथा येन प्रकारेण ते ते नीलोत्पलारविन्दादिरूपेण प्रसिद्धपराक्रमा मोहनशोषणादिका कामबाणा तथैव तेनैव प्रकारेणाय स्वेदस्तस्य कामस्य सम्बन्धि कामेन रचित शरक्षतास्रं स्त्रीपयाणयूथरुधिरं किम् । यतस्याः कामबाणविद्धत्वात् स्वेदः । तज्जन्यव्रणरुधिरस्य नैव सम्भावयितुं युक्त यादृशो यत्र तादृशो बलिरिति न्यायेन पुष्पबाणानां धवलत्वात् तज्जन्य रुधिरमपि तादृगेव युक्त इति स्वेदजलस्य रुधिरत्वं युक्तमित्यर्थः । कुङ्कुमाङ्गरागस्पर्शनाद्वा रक्तत्वात् स्वेदजलस्य रुधिरत्वं युक्तं । इयमपि कामबाणविद्धा विरमुरस्तीति भावः ॥ १३९ ॥

रागं प्रतीत्य युवयोस्तमिमं प्रतीची भानुश्च किं
द्वयमजायत रक्तमेतत् । तद्वीक्ष्य वा किमिव
केलिसरित्सरोजैः कामेषुतोचितमुखत्वमधीय
मानं ॥ १४० ॥

रागमिति । प्रतीची दिक् भानुश्च एतद्द्वयं युवयोः तं सात्त्विकस्वेदरोमाञ्चसूचितं इमं प्रत्यक्षदृश्यमिव अनुरागं प्रतीत्य किं ज्ञात्वैव रक्तम् अजायत लोहितवर्णमभूत् भैमीनलावधुना रिरंसू अपि दिवामैथुननिषेधभिया साशङ्कौ वर्तेते । तस्मादहं रात्रिं करिष्यामीति सूर्यमस्तं प्रापयितुमिव प्रतीची रक्तवर्णाऽभूत् । इदानीं मयाऽप्यस्तं गन्तुं युक्तमितीव सूर्योऽपि रक्तवर्णोऽभूदित्यर्थः । अथ च सरागौ युवां दृष्ट्वा तद्द्वयमपि सरागमभूत् । अथ च युवयोरेव केलिसरित्सरोजैः कमलैः तद् भानुप्रतीचीरूपं रक्तमिथुनं वीक्ष्य वा निर्मलैश्च वीक्ष्य किं दृष्ट्वैव सन्ध्यासमयकामस्य इषुतोचितं शरस्योचितं मुखं च येषां तद्भावस्तत्त्वं तीक्ष्णाग्रत्वम् अधीयमानम् अभ्यस्यमानं विद्यते इति भावः । युवां च सानुरागौ दृष्ट्वा कमलैर्मुकुलीभवनव्याजेन पुष्पबाणतीक्ष्णाग्रत्वमनुभूयते किं । कामो हि विरहिणौ यौ दृष्ट्वा तीक्ष्णमुखैः शरैर्विध्यतीत्यर्थः । अथ च यतो भैमीनलौ प्रतीचीभास्करौ च यदि सरागौ जातौ तदिदानीं रात्रिः सन्निहिताऽस्तीति अस्माभिरपि मुकुलीभावं प्राप्तुमुचितमिति तैरपि मुकुलीभूतं । पद्मानां सङ्कुचितमुखत्वं कामशरयोग्यं तीक्ष्णतुण्डभावेनाध्यवसितं सन्ध्याकालो जातः, कमलानि च मुकुलितानि इति भावः । १४० ।

अन्योन्यरागरचयोर्युवयोर्विलासस्वच्छन्दताच्छि
दपयातु तदालिवर्गः । अत्याजयन् सिचं यमा
जिमकारयन्या दन्तैर्नखैश्च मदनो मदनः कथं
स्यात् ॥ १४१ ॥

अन्योन्येति । आलिवर्गः अन्योन्यरागेण परस्परानुरागेण रमणाभि

तापय यशयो रिरसया ऽन्योन्याधीनयोर्युवयोर्विलासस्य स्वच्छन्दता नि शङ्कप्रवृत्तिं छिनत्ति कामक्रीडाविघ्नकारी यस्मात् तस्मादपयातु गृहाद्बहि निर्गच्छतु, यस्मान् मदनः काम मिथयमनं ध्यत्याजयन् अपरिहारयन् ध्यर्यात् स्त्रीपुंसौ तया दन्तैर्नखैश्च करग्रहूते ध्यांज मल्लाम एतैरुपल क्षित वा नानाबन्धकरसुरतमल्लयुद्ध च स्त्रापुंसौ अकारयन् सन् मादय तीति मदन मदकारी कथ वा स्यादपि स्वयमेव कारयन् मदनो ह पकारी भवेदेव तस्मात्सखीवर्गो गृहान्निर्गच्छत्वित्यर्थ । मदनः कथ स्यात् कथं भवेत्, मदनः, नन्द्यादित्वात् ल्यु ॥ १४१ ॥

इति पठति शुकेऽपा ययुस्ता बहुनृपकृत्यमवेत्य सान्ध्यवेल । कुपितनिजसखीदृशार्द्धदृष्टाः कम लतयेव तदा निकोचवत्यः ॥ १४२ ॥

इतीति । ता गन्धर्वराजपुत्र्यः सख्यश्च शुके इति पूर्वोक्त पठति सति व्यक्त भाषमाणे सति गन्धर्वपुत्रीवीणानिबद्धा गाथाः स्वगृहमु यदति सति सान्ध्यवल दिनरात्रिसन्धिवेलाया भव बहुनृपकृत्य सन्ध्या वन्दन याग होमादिक नलस्य नित्यकर्म अवेत्य ज्ञात्वा नृपालोयमेव ध्यत्रेदानीं भवतीभि न स्थातव्यमिति शुकास्माभिरुपासयसि तर्हि वय याम इति मिषमात्रेण ययुर्गृहाद्बहिर्निर्जग्मुः । रिरसुरपि नल सन्ध्या वन्दनादिसमये नित्यकर्माण्यतिक्रम्य सम्भाग न करोति रिरसुर्भैम्यपि स्वय यद्द न करोति इति यद्यपि ता जानन्ति तथापि भैमीपरिहासाय तादृश शुकवचनमेव ध्यङ्गीकृत्य बहिर्निर्गता इत्यर्थ । किंभूतास्ता कमलतयेव कमलरूपत्वेनेव तदा सन्ध्यासमये निकोचयत्यः सङ्कोचव त्यः । कमलानि सन्ध्याया सङ्कुचन्ति । तादृश्याः पृथगसमारम्भे च यी डाशीलमज्जनमात् कुपिताया निजसख्या भैम्या दृशार्द्धेन एकदेशेन दृ ष्टाः विलोकिता सङ्कोचात्मप्रतोपभागनिर्व्यापारेणेव दृशा । कुपिता हि मानिनी दृगन्तेन पश्यति । निकोचः भावे घञ ॥ १४२ ॥

अकृत परभृतः स्तुविस्तदीति स्तुनवचनस्तगनू हिचुचुचुचचुः । पठितनलनुति प्रतीय कीरं

तमिव नृपं प्रति जातनेत्ररागः ॥ १४३ ॥

अरुणेति । यस्याः पूर्वं गायीत परजन काकिलोऽपि उन्मत्तत्वात् स्वभावाच्च जातो नेत्रयो रागो लौहित्यं यस्य एवंविधं मन स्तुहिस्तु- हीत्येव नृपं शब्दमकृत, पिकः स्वभावादेव स्तुहिस्तुहीत्यव्यक्तजल्प- र्थं । सभोऽप्रसक्तेः । पठिता समाप्तिं प्रापिता यस्या नृतिस्तुतिर्येन तं स्तुतिं कृत्वा तूष्णीभूतं कीरं शुकं प्रतीव उद्दिश्येव स्तुहिस्तुहीत्यकृत । हे कीर किमिति तूष्णीम्भूतोऽसि इत परं नलस्य स्तुतिं कुर्विति नल स्तुतौ बुद्धिं प्रावर्तयदित्यर्थः । एव वचनं पिकस्य कथं सामर्थ्य मि- त्याशङ्क्याह । श्रुता श्रोत्राभिमुखशुकानूदितवचनस्रक् यस्याः अनूक्ति च ग्रामवाद तया विता प्रसिद्धा प्रत्यावर्त्यपर्यंस्य तादृशं शुकानूदितं स्व वृं मनूद्य इत परमपि स्तुहिस्तुहीत्याहेत्यर्थः । नेत्ररागस्तु प्रकृते तं न स प्रतीव लक्षीकृत्येव जातनेत्र प्रीतिसुन्दरतरं नयनानन्दकारिणं नलं दृष्ट्वा जातनेत्रप्रीतिः स्तुहिस्तुहीत्यकृतेत्यर्थः इति रागशब्देनाप्रसिद्धः अ- नूक्तिश्चुन्द्वरिति तेन वित्त इति (पा०५।२।२६) चुञ्चुप ॥ १४३ ॥

तुङ्गप्रासादवासादथ भृगकृशतामायती केलिकु ल्यामद्राक्षीदर्कबिम्बप्रतिकृतमणिना भीमजा राजमाना । वक्रं वक्रं व्रजन्तीं फणियुवतिरि ति त्रस्नुभिर्व्यक्तमुक्त्वान्योन्यं विद्रुत्य तीरे रथपदमिथुनैः सूचितामाश्रिकृत्या ॥ १४४ ॥

तुङ्गेति । अथैव श्रोत्राकृतानुवादिशुकालापानन्तरं भीमजा केलि कुल्या क्रीडाकृत्रिमनदीमद्राक्षीत् । किम्भूता भैम्या तुङ्गे उन्नतरे प्रा सादे धामात् स्थितैर्हेतोः भृशं कृशतां आयती प्राप्नुवतीं । अधोदशे स्थिता स्वयं महीयस्युच्चतरदेशे स्थिता नेत्रो प्रत्यल्पत्वेन प्रतिभा- समाना तामित्यर्थः । तथा प्रसरगामिनोऽर्कबिम्बस्य प्रतिकृत्या प्रति- बिम्बरूपेण महाप्रकाशेन मणिना राजमाना । तथा वक्रं वक्रं स्वभाव कुटिलं व्रजन्तीं गच्छन्तीं अत एव फणियुवतिरिति क्रमप्रयोपमिति त्रस्नुभिः त्रासशालि रथपदमिथुनैश्चक्रवाकस्त्रीपुंसयुगलैः व्यक्तं स्पष्ट

मस्तमन्योन्यं परस्पर यथा तथा तीरे विषये विद्रुत्य पलाय्य कर्म भूते वा द्वे तीरे प्रतिगत्वा प्रार्थितत्वा विरहपीडामस्वस्थिना रुतेन कृत्वा सूचिना प्रकटीकृता । दूरस्थत्वात् मान्द्यतमसावृतत्वाच्च स्पष्टतरमदृश्यमानाऽपि नदीयमिति चक्रवाककूजितेन ज्ञापिता । कर्णायुगलमिति सूचितामिति वा । कृष्णमप्यंपि कृष्णा भवति सूर्यं बिम्बतुल्यं न शिरस्थेन मणिना शोभते च । चक्र चक्र युजितान्व दृष्ट्वा जनाः पक्षिणो वा पलाय्य दीनस्वरोपलक्षिता परस्परमन्वास मुञ्चन्ति । सूर्यं मस्त जिगमिषु दृष्ट्वा चक्रवाकमिथुनानि मान्द्यविरहपीडया रुत कृत्वाऽन्यान्य मुक्त्वा पलाय्य कलिकुल्यापराधारे तीरे तिष्ठन्तीति भैमी ददर्शेत्यर्थः ।। उपसेऽस्मिन्निति पाठः । तुङ्गप्रासादमारुह्य प्रद्वाकीदिति स्वबन्धापो वा ॥ १४४ ॥

अथ रथचरणौ विलोक्य रक्तावतिविरहौ सततातता विवास्यैः । अपि तमकृत पद्मसुप्तिकालं श्वसनविकीर्णसरोजसौरभं सा ॥ १४५ ॥

अथेति । अथ कलिकुल्यादर्शनानन्तर सा भैमी रक्तौ परस्परानुरक्तौ स्वभावेन रक्तवर्णौ च अतिविरहौ सततं नितरां वियोगावहिष्णु तथाऽऽहतौ कामशरैर्विद्धौ, रक्तैः रुधिरैरिव रक्तौ रथचरणौ चक्रवाकौ विलोक्य स वर्तमानपद्मानां सुप्तिकालं सङ्कोचसमयं साय सन्ध्यासमयमपि विरहपीडितकोकदर्शनदुःखेन सञ्जातश्वसनो निश्वासभरस्तु निर्गमेन कृत्वा विकीर्ण सरोजसौरभं यस्मिन्, तादृशं अकृत, सन्ध्यासमये पद्मसङ्कोचात् सौरभाभावेऽपि निश्वासकोषेन पद्मिनीत्वात् पद्मसौगन्ध्यं तदानीमपि विस्तारयति स्मेत्यर्थः । तौ तादृशौ दृष्ट्वा भृश नि श्वसितेत्यर्थः । अन्योऽप्यस्त्रयुतरक्तपाद् दृष्ट्वा भृशं नि श्वसिति । विरहाप्तमाम्यविवास्यैरिति पाठ सुयोज्य । रथचरणौ पुमान् स्त्रिया (पा० १ । २ । ६७) इत्येकशेष ॥ १४५ ॥

अभिलपति पतिप्रति स्म भैमी सदय विलोकय कोकयोरवस्थां । मम हृदयमिमौ च निन्द

तौ हा क इव विलोक्य नरो न रोदिति

मा ॥ १४६ ॥

अभीति । भैमी पतिं प्रति इति अभिलपति स्म अभाषत । इतीति किम् । हे सदय सकरुण त्वं कोकयोरवस्थां विरहविह्वलत्वं विलोकय हा कष्टम् । इमौ काकौ भिन्दन्तौ पृथग्देशावस्थितौ कुर्वन्तौ अत एव मम भैम्या अपि हृदयं स्वशोकेन विदारयन्तौ इमौ कोकयोरवस्थां विरहविह्वलत्वं विलोक्य क इव नरः सचेता मनुष्यो न रोदिति अपि तु सर्वोऽपि परिदेवनं करोत्येव । सदयत्वात्तव दुःखं भविष्यतीति किं वक्तव्यमित्यर्थः ॥ १४६ ॥

कुमुदमुदमुदस्यन्नीमसोढा रविरविलम्बितुकाम

तामतानीत् । प्रतितरु विरुवन्ति किं शकुन्ताः

स्वहृदि निवेशितकोककाकुकुन्ताः ॥ १४७ ॥

कुमुदेति । हे प्रिय रविः उदेष्यन् उदयं प्राप्स्यमानः कुमुदानां मुदं विकासरूपं हर्षं असहिष्णुः सोढुमशक्त इव अविलम्बितुं सत्वरं गन्तुं कामो यस्य तद्भावस्तत्तां तामतानीत् विस्तारितवान् । आकाशास्तमयौ वर्तेते इत्यर्थः । तथा शकुन्ताः पक्षिणः प्रतितरु विरुवन्ति विशेषेण रुतं कुर्वन्ति आसन्नप्रभातनिमीलनावमादिनो विरुवन्तः स्वस्वनिवासमुपगच्छन्तीत्यर्थः । तत्रानेन स्वहृदि निवेशिता काकानां काकुः शोकविकृता ध्वनिः एव अतिपीडाकारित्वात् कुन्ताः भल्लविशेषास्तादृशाः किम् । चक्रवाकशोकपीडिता इव पक्षिणः क्रन्दन्तीत्युत्प्रेक्षा । अन्योऽपि वैरिणः उदेष्यन्तीं अभिवृद्धिं असहमानः सत्वरं कुत्रचिद्गच्छति । तथा अपरः सकृपः कश्चिद् दुःखितं कञ्चिद्दृष्ट्वा क्रन्दति । मोदो मुत् । मुद नलाकीति ( पा० ३। ३। ६९ ) पञ्चानिपच । उदेष्यती आच्छीनद्योरिति (पा० ७।१।८०) विकल्पान्नुमभावः ॥ १४७ ॥

अपि विरहमनिष्टमाचरन्तावधिगमपूर्वकपूर्वस

र्वचेष्टौ । इदमहह निदर्शनं विरहौ विधिवश

चेतनचेष्टितं तु नाने ॥ १४८ ॥

अपीति । हे प्रिय स्वस्यानिष्टमपि विरहमाचरन्तौ स्वयमेव क्र-याणौ तर्हि मदास्यानिष्टाचरणस्वभावावेव भविष्यत इत्यत आह । अधिगमो ज्ञानं तत्पूर्विका पूर्वा विरहाचरणात् प्राचीना, सदर्थ-बुद्धा कर्त्तव्यता ययास्तौ । अधिगमो लाभो हितमिति यावत् । त-त्पूर्विकायास्तदुद्देश्या पूर्वा चेष्टा ययोस्तादृशौ वा । बुद्धिपूर्वकारी हि स्वाहितेन प्रवर्त्तते, काकयोश्च दिने भोजनादय सकलाश्चेष्टा ज्ञान-पूर्विका स्वहिता. । एव सति अननैव स्वभावादप्येतौ सन्ध्यायां स्वकस्मादेवान्योन्यविरहे स्वयमेव यस्मादाचरत तस्माद्विधिवश दैवा-धीन चेतनानां प्राणिनां चेष्टितं पूर्वकर्माधीन प्राणिनामाचरणमि-त्येवरूपे अनुमाने कार्य्यकारणविज्ञानरूपे विषये यावेतौ विशिष्टौ विहङ्गौ काकौ । इदमेव निदर्शनं, अयमेव दृष्टान्तः । अहह अद्भुते खेदे वा, तस्मात प्राचीनकर्मानुसारेणैव प्राणी कदाचित् हित कदा-चिच्चाहितमाचरतीति भाव । प्राणिनो दैवाधीनचेष्टिता ज्ञानेऽपि प्र तिकूलतया प्रवर्त्तमानत्वात् । चक्रवाकवत् । इत्यनुमान ॥ १४८ ॥

स्फुट ब्रस्यारुणिमप्रकाशिसरणौ शोणे कृपाणः
स्फुट कालोऽयं विधिना रथाङ्गमिथुनं विच्छेत्तु
मन्विच्छता । रश्मिग्राहिगरुत्मदग्रजमहारथ्या
विरामभ्रमी दग्धभ्राजिनि भानुशाणवलये सस
ज्य किं निज्यते ॥ १४९ ॥

स्फुटमिति । स्फुटमुत्प्रेक्षते हे प्रिय रथाङ्गमिथुन विच्छेत्तु वियो-जयितु । अथ च विशेषेण विदारयितुं अन्विच्छता विधिना ब्रह्मणा दै-वेन वा अयं काल सन्ध्यासमय एव स्फुट शोणगुणयोगात् काल एव खलमारणाय कृपाण भानुशाणवलये सूर्य्यरूपे शाणचक्रे ससज्य स-योज्य निज्यते किं तीक्ष्णीक्रियते किमित्यर्थ । किम्भूते वलये । अ-स्तसमयकालसान्निध्यात् अरुणिम्नस्य किरणस्यारुणिमा सैव इष्टका-विसरणानि इष्टकाचूर्णप्रसारणानि तैः शोणे रक्तवर्णे तथा रश्मिग्रा-

ह्रिया गरुत्मतोऽग्रजेन अरुणेन समारब्धाऽविरामा नितरां भ्रमिर्भ्रमणं यस्य तस्मिन् सदा अरुणेन कृतभ्रमण । अथ वा आकर्षणरज्जुग्राहिभि अरुणमयैरत्युद्गतैरश्वैरिव पुरुषैः आरब्धनिरन्तरभ्रमणो तथा दण्डसङ्गकेन सूर्यपार्श्ववर्तिना स्थाणिना शोभनशीले । अथ च शाणचक्राधारभूतेन आकर्षणरज्जुसंयुक्तेन दारुमयेन दण्डेन शोभमाने मणिशिलास्तम्भमयसूर्यशाणमध्यासमयसान्निध्याच्चक्रवाकयुगं तीक्ष्णतरखड्गविदारितमिव विधिवशाद्वियुक्तं सत् व्यथत इति भावः । अन्योऽपि किञ्चिच्छेत्तुं खड्गमुत्तेजितुमिच्छन् शाणचक्रे तीक्ष्णं करोति । किरणग्रहणौ रश्मी माठर पिङ्गलौ दण्डदण्डाशो परिपार्श्विका इत्यमरः । भ्रमतीति भ्रमिः पुरुषः । निजनिर्मितिर्वीचे इत्यस्मात् कर्मणि यक् । मकारतकारस्थानेऽस्यैव तिङ्यत इति पठन्ति तदसत् ॥१४९॥

इति स विधुमुखीमुखेन मुग्धालपितसुधासव-
मर्पितं निपीय । स्मितशबलबलन्मुखोऽवदत् ता
स्फुटमिदमीदृशमीदृशं यथात्थ ॥ १५० ॥

इतीति । स नलोऽपि तां भैमीमिति अवदत् । इति किं । हे प्रिये त्वं यथा आत्थ तत् स्फुटं निश्चितं ईदृशं सत्यमेवत्यर्थः । किंभूतः । इति पूर्वोक्तरीत्या विधुमुख्या भैम्या मुखेनार्पितं दत्तं मुग्धं मनोहारि आलपितं मञ्जुभाषितमेव सुधासवं रसवाहुल्यादमृतं उन्मादकत्वाच्च मधु निपीय आस्वाद्य सादरमाकर्ण्य च स्मितेन शबलं मिश्रितं वलन् भैमीसम्मुखं भवन् मुखं यस्य सः । कामिनो हि कामिनीमुखार्पितं मद्यं सानुरागं पिबन्ति अनन्तरं चलितमुखाः सहासं किञ्चिद्वदन्ति च ॥ १५० ॥

स्त्रीपुंसौ प्रविभज्य जेतुमखिलावालोचितौचि-
त्ययोर्नर्म्मां वेद्मि रतिप्रसूनशरयोश्चापद्वयीं त्वद्-
भ्रुवौ । त्वन्नासाच्छलनिह्नुता द्विनलिकी नाली-
कमुक्त्येपिणोस्त्वन्निश्वासलतेम् मधुव्रतज वा

यव्यमस्त्वं तयोः ॥ १५१ ॥

स्त्रीति । स्वयि प्रिये अत्र वक्तरे त्वद्भुवौ इति प्रसूनशर कामश तथाभेघा स्त्रीजपाय रत्या पुरुषाय च कामेन आकणमाकृष्य वक्रिता चापद्वयीं वेद्मि । त्वद्भ्रुवावेव तयोधनुषी इत्यर्थः । किम्भूतयो । अखिलौ त्रिजगति वर्तमानौ तसज्जातीयौ स्त्रीपुंसौ प्रविभज्य विभाग कृत्वा पृथग् जंतु आलोचित विचारित औचित्य याभ्या तयो । स्त्रिया स्त्र्येव जेतु योग्या । पुमश्च पुमानेवति आलोचितौचित्ययोरित्यर्थ । तथा नालीकाना वितस्तिमात्रनालीकाख्यशरविशेषाणा मुक्ति मोक्षणमिच्छत एवशीलया । रतिकामयो सम्बन्धिनी द्विनलिकीं नालीकमोचनोपायभूतसरन्ध्रवशद्वयपर्यंद्वय त्वन्नासाच्छलेन त्वदीयवामदक्षिणनासापुटद्वयव्याजेन निह्नुता गोपिता जानामि । त्वन्नासापुटद्वयमेतन्न भवति किन्तु नालीकद्वयमुक्त्युपायभूता रतिकामयो द्विनलिकीत्यहं शङ्के इत्यर्थ । तथा त्वन्निश्वासलते वामदक्षिणनासानिश्वासश्च रात्रय तयो रतिकामयो प्रत्यक्ष मधुव्रसनज वसन्तकालीनमलयानिलप्रजय वायव्य वापुदेवताक अस्त्रमेवाह वेद्मि, सुन्दरत्वद्भ्रूनासाद्यवयवदर्शनमात्रेण कामवश्यत्व भवतीति भाव । द्विनलिकीं समाहारे द्विगौ ङीप । वायव्य वाऽस्य देवता (पा०४।२।२४) इत्यर्थे वाय्वृतुपित्रुषसोयत (पा०४ २।३१) ॥ ११ ॥

पीतो वर्णगुणस्तत्रातिमधुर कायेऽपि सोऽयं य था य बिभ्रत् कनक सुवर्णमिति कैराहृत्य नोरकी र्यते । का वर्णान्तरवर्णना धवलिमा राजैव रूपेपुयस्तद्रागादपि यात्रदेति रजत दुर्वर्णताद्यंशः ॥ १५२ ॥

पीत इति । हे भैमि वर्णेषु शुक्लादिषु मध्ये गुणो वैशेषिकादिभिर्गुणपदार्थत्वेन निर्दिष्ट पीतो हरिद्राभो वर्ण स च स एव अतिमधुरो रमणीयतरो न [illegible] वर्णान्तर मधुरमित्यर्थ । यथा येन कारणेन अय पीतो वर्णः सोऽपि तथापि काये देहे वर्तते, अत्युत्तमया त्वया-

पि देहे धार्य्यते तस्मादयमत्युत्तम इत्यर्थः । अथ च रूपान्तरापेक्षया शुक्लरूपस्यैव प्रधानत्वादन्येषां चाप्रधानत्वाद् वर्णेषु मध्ये गुणो प्रधानभूतोऽपि पीतो हरिद्राभो वर्णः स यथातिमधुरः प्रधानभूत इत्यर्थः । यस्मादयं ते काये वर्त्तते । अप्रधानस्यापि कस्यचिदत्युत्तमेनाङ्गीकृतत्वाद्धि प्राधान्यं भवति, तथा च त्वयाङ्गीकृतत्वात् प्राधान्यं युक्तमेवेत्यर्थः । अथ च गुणः पीत एव नान्यो गुणः पीतवर्ण एव गुणरूपोऽन्ये तु दासरूपा इत्यर्थः । स एव च अतिमधुरः । उभयत्रापि हेतुः । पीतोऽयं तव काये वर्त्तते तस्माद्गुणोऽतिमधुरश्चेत्यर्थः । अथ च तव काये वर्त्तमानोऽयं प्रत्यक्षगम्योऽतिमधुरो रसो यथा पीतः सततं चुम्बनस्थानचुम्बनेनास्वादितः, तथा तव काये सोऽतिप्रसिद्धो वर्णगुणो गौरिमाऽपि पीतः सादरं निराक्षितोऽयं च हरिद्राभ इत्यर्थः । अपिशब्दान्यत्समुच्चये । सोऽतिमधुरोऽधरो यथा पीतस्तथायं वर्णगुणोऽपि पीत एवेति वा सम्बन्धः । अथ च तव अतिमधुरो वर्णगुणो वर्णात्मकशब्दलक्षणो यथा पीतः आस्वादितः अतिमधुरा तव वाणी पीतेत्यादि यावत्स्य एव कलत्वेनोक्ताः प्रकृतपीतरूपवर्ण एव युक्तिमाह । त्वच्छरीराश्रयं पीतवर्णं विभ्रत् कनकचम्पकशोभना वर्णो यस्य तत् सुवर्णमिति केवलं न त्वस्य आदरेण नारकीयैर्नैव गीयते । अपि तु त्वदङ्गधृतसुवर्णस्तुल्यवर्णधारणादेव वर्णक सुवर्णमित्युच्चैः कीर्त्यते । अथ च त्वच्छरीराश्रयं पीतवर्णं धारयच्चामीकरं शोभनो वर्णोऽस्येति व्युत्पत्त्या सुवर्णमिति केवलैरादरेण नोद्घाप्यते अपि तु त्वच्छरीराश्रितपीतवर्णमिति त्वदीयाङ्गमेव सुवर्णमिति कीर्त्तिं लेभे इत्यर्थः । अथ च शोभनो वर्णः स्तुतिपरस्त्वदङ्गस्य विरुदावलितरां स्तुत्य न तु स्वत इति मुख्यया वृत्त्या सुवर्णमिति त्वदीयमङ्गमेव, कनकं तु त्वद्गात्रसवर्णसाम्यधारणाद्गौण्या वृत्त्या लोकेन कथ्यत इत्यर्थः । अत एव पीतवर्णस्य पुरस्ताद् प्रधानानां वर्णान्तराणां नीलरक्तादीनां वर्णानां का अपि तु सा नैव कुत्राप्युपयुज्यते, तत्कथा न कार्यैव यावद्यत कारणात् यो धवलिमा शुक्लगुणः षड्विधेषु रूपेषु मध्ये राजैव श्रेष्ठतम एव निर्मलत्वादभ्यर्हितत्वाद् रूपविभागवेलाया वैशेषिके प्रथमाङ्गीकृतत्वाच्च प्रधानभूत एव तस्य प्रधानभूतस्यापि योगात् सम्बन्धाद् र

देव मङ्गच्छत इत्यर्थ. । एवंविशिष्टफल यदि भवेत् तर्हि तदेव ता-
वदतिमधुरं तस्मादप्यतिमधुरं वस्तु विद्यते किं इति पृष्टे निःसीम-
मधुरतमस्यान्यस्याभावात तमप् प्रत्ययान्तमधुरशब्देन भवद्वाग्येवोक्त-
मत्वेन दातु योग्या न तु विशिष्टमर्पोक्तफलं निःसीममाधुर्याभावात्
तमप् प्रत्ययानुपपत्ते , किमुत मधुराणि द्रव्यान्तराणि त्वद्वचनवन्म-
धुरतम वस्तु किञ्चिदपि न दृष्ट इति भाव । एवंविधं क्षेत्रे यदि पु-
ष्टको रोहति स च पयसा विवर्द्धन दोहदेन द्राक्षाद्रवसेचनेन दोह-
देन यदि फलं धत्ते इति वा । कादम्बिनी मेघमालेत्यमर । पुष्टो
दैत्यविशेषेत् भेदेऽपीति विश्वः । तत स्वार्थे कन् ॥ १५३ ॥

उन्मीलद्गुडपाकतन्तुलतया रज्ज्वा भ्रमीरर्जयन्
दानान्तर्गतशर्कराचलमथस्ते नामृतान्धः स्मरः ।
नव्यामिक्षुरसोदधेर्यदि सुधामुत्थापयेत् सा भ
वज्जिह्वायाः कृतिमाह्वयेत परमा मत्कर्णयोः
पारणां ॥ १५४

उन्मीलदिति । अमृतमेवान्धोऽन्न यस्य देवत्वात् तादृशो भवन्
स्मरो यदि, इक्षुरस एवादधिस्तस्मात् सकाशात नव्या देवासुरोत्पा-
दितपूर्व सुधाया अन्यादृशी सुधामात्मनैवोत्पाद्य विनिर्गमयेत तर्हि सा
मधुरतमा सुधा मत्कर्णयो परमा पारणां अद्वितीयतृप्तिहेतु भवत्या
जिह्वाया कृतिं त्वद्वचनानिर्मितां वाणीं आह्वयेत स्पर्द्धापूर्वकमा-
कारयेत् । किम्भूत स्मर । उन्मीलन् प्रतिभासमान. अतिशयित
गुडस्य इक्षुरसविकारस्य पाक तज्जन्या ये तन्तव ऊर्ध्वाधःप्रसारित-
गुडनिर्गतदोरका स एव दैर्घ्याल्लता तयैव रज्ज्वा मन्थनपाशदोरकेन
कृत्वा दानान्ते तुलापुरुषदानादिमध्ये आयुरारोग्यैश्वर्यादिफलक ग्र-
स्तः शर्कराचल. स एव मथो मन्थानमन्दरः तस्य भ्रमाभ्रमणानि अ-
र्जयन् कुर्वन् , तया रज्ज्वा शर्कराचल मन्थान चालयन् अतिमधुरमा-
मृतीमम्यादित हि मधुरतम जयतीत्येवंविधमधुरसामग्रीकस्यान्मधुर-
तमाऽपि अन्या सुधा भवद्वाणीतुल्या भवेद्वा न वा तदन्या ॥ नैव-

त्यर्थं ।

घ्राणात् सम्प्रवक्ष्यामि शर्कराचलमुत्तमं ।
यस्य प्रदानाद्विश्वकरुद्रास्तुष्यन्ति सर्वदा ॥

इति दानखण्ड । आस्ये त्वं स्पर्द्धायामाह ( पा० १ । ३ । ३१ ) इति तङ् ॥ १५४ ॥

आस्ये या तव भारती वसति तल्लीलारविन्दोल्लसद्वासे तत्कलवेणनिक्कणमिलद्वाणीविलासामृते । तत्केलिभ्रमणाहंगैरिकसुधानिर्माणहर्म्याधरे तन्मुक्तामणिहार एव किमयं दन्तस्रजा राजते ॥ १५५ ॥

आस्य इति । हे प्रिये तवास्ये या भारती सरस्वती वसति । किम्भूते आस्ये । तस्या भारत्या एव हस्ते स्थितस्य लीलारविन्दस्येव उल्लसन् प्रसरन् वासो गन्धो यस्मिन् पद्मिनीत्वात् पद्मतुल्यपरिमले । तथा तस्या एव कलो वेणो निक्कण मधुर स्फुटा वीणा सम्बन्धी नाद तद्वत मिलत् सम्बध्यमान वाणीविलासरूप वक्रोक्त्यादिनानाविध वाणविलासरूप अमृत यस्मिन् । तथा तस्या एव केलिभ्रमणार्हे लीलागमनयोग्य गैरिकोक्तधातुविद्रावण सुधया धवलतया धवलसाधनचूर्णद्रव्येण च चित्रादिनिर्म्माण यत्र तादृश यत हर्म्यं गृह तद्रूपस्तुल्यो ऽधरो यस्मिन् तादृशे आस्ये पुरा दृश्यमाने ये दन्तस्रजी है दन्तमाल राजत शोभेत । तद्रूपः अयं पुरो दृश्यमान तस्या भारत्या मुक्तामणिरचिता हार एव किं तद्वत् रेजाते इत्यर्थं । सरस्वती वीणा क्वणितमतुल्या तव वाणीत्यर्थ । अत्र प्राधान्येन वाणीवर्णनं, भाव्यस्यानर्कं । पद्मगन्धादिभिर्मुखे भारतीवासोऽनुमीयते । ईश्वराणां गृह गैरिकादिविचित्र भवति गैरिकयुक्ता सुधेति वा ॥ १५५ ॥

वाणी मन्मथतीर्थमुज्ज्वलरसस्रोतस्विनी काऽपि ते खण्डा खण्ड इतीदमीयपुलिनस्याल्पते

वालुका । एतन्नीरमृदैव किं विरचिताः पूताः सिताश्चक्रिका. किं पीयूषमिदम्पयांसि किमि दन्तीरे तवैवाधगे ॥ १५६ ॥

वाणीति । हे भैमि ते वाणी काऽपि वर्णयितुमशक्यत्वात् लोकोत्तरा, अथ वा निर्दिश्यमाना उज्ज्वलरसशालित्वतो शृङ्गाररसमम्बन्धिनी वा नदी, अथ च निर्मलजलसम्बन्धिनी वा नदी अत एव मन्मथस्य लीलै कामोद्दीपिका,तथा इष्टमीयस्या अस्या नद्याः सम्बन्धिन पुलिनस्य सम्बन्धिनी वालुकैव इक्षुविकाररूपः खण्ड इति आलप्यते गीयते। तथा पूता निर्मला. सिताः शुभ्रा चक्रिका शर्कराकृतचक्राणि एतस्याः नीरस्य मृदैव धवलमृत्तिकयैव रचिताः किं । तथा पीयूष अमृत अस्याः सम्बन्धीनि पयांसि इदम्पयासि किं अस्याः जलान्येव अमृतत्वे नालप्यन्ते किं । तथा तवाधरावेव इदन्तीरे अस्या नद्यास्तीरे उभौ तटौ किं । शृङ्गाररसप्रधाना कामोद्दीपिका त्वद्वाणी मधुरतमेति भाव ॥ १५६ ॥

परभृतयुवतीनां सम्यगायाति गातु न तव तरुणि वाणीय सुधासिन्धुवेणी । कति न रसि कक्गठं कर्तुमभ्यस्यतासौ भवदुपविपिनाम्रे ताभिरास्रे डितेन ॥ १५७ ॥

परेति । हे तरुणि प्रादुर्भूतयौवने सुधासिन्धुवेणी सुधानदीप्रवाह रूपा तव इयं वाणी परभृतयुवतीना सम्यग्यथाऽस्मेन गातु भाषितुं नायाति, यस्मादेताभिः कोकिलाभिरसौ त्वद्वाणी भवत्या उपविपिने उपवने स्थितो य आम्रवृक्षः तस्मिन् स्थित्वा रसालाङ्कुरास्वादेन रसिकेऽतिमधुरे, अथ च मम प्येव वाणी भवत्येव साभिलाषे कण्ठे कतु कण्ठस्था कर्तुं आम्रेडितेन पुन पुनर्घोषणेन कतिवारानाभ्यास ते अपि तु बहुवारमभ्यस्यत एव । तस्मादद्यापि ताभ्य भवद्वाणी स म्यग् नायातीति ज्ञायत इत्यर्थः । कोकिलालापादपि त्वद्वाणी मधुर-

मिति प्रश्नं कुर्वाणे जने विषये यस्त्वद्गुरुरेव उत्तरं न दत्ते । स विद-ग्धानां चतुराणां समाजे सभायां सदा अपाङ्क्तेयतां पङ्क्तिबहिर्भूतत्वं याति गच्छति तेषां पङ्क्तौ नोपवेश्यते सोऽप्यचतुर इत्यर्थः । तथा सुधा नाम कीदृगिति पृच्छति प्रश्नं कुर्वाणे जने यतो गिरस्त्वदुत्तरं न दत्ते स्मरस्य विशिखास्तत्र पुरुषं स्प्रष्टुमपि विगानात्कुत्सां जुगुप्सायै कृतोद्यमा नीरसोऽयमिति जुगुप्सया न स्पृशन्ति न भिन्दन्तीति किं वाच्यं सोऽप्यचतुर इत्यर्थः । त्वद्वाणी सुधाया अपि मधुरतमेति भावः । अधरादिवर्णनं तु प्रासङ्गिकं । प्रश्न । याजाद्यवज्ञौ (पा० ४।२।९४) इति समर्थे च । पाङ्क्तेय न ह्यादित्वाड्ढक् । १५९॥

मध्ये यद्धाणिमा यत्सगरिममहिमश्रोणिवक्षो-
जयुग्मा जाग्रद्वशित्वकान्ता स्मितघनलघिमा
मा प्रतीशित्वमेषि । सूक्तौ प्राकाम्यरम्या दिशि
विदिशि यशोलब्धकामावसाया भूतीरष्टावपी-
शस्त्वददित मुदितः स्वस्य शिल्पाय तुष्यं ॥ १६० ॥

मध्य इति । हे प्रिये त्वं यद् यस्माद्धेतोर्मध्ये उदरभागे धृतो धृत अणिमा सौक्ष्म्यातिशयो यया सा कृशोदरी, तथा गरिममहिमभ्यां गुरुत्वमहत्त्वाभ्यां सह वर्तमानं श्रोणिनितम्बं वक्षोजयुग्मं स्तनयुगञ्च यस्याः सा गुरुस्थूलनितम्बा महोच्चकुचा च, तथा जाग्रत् स्फुरद्रूपं चेतसि वशित्वं जितेन्द्रियता यस्याः सा पतिव्रता । तथा स्मिते ईषद्धास्येऽपि घनो लघिमाऽल्पत्वं यस्याः सा, अल्पहासेत्यर्थः । तथा मां प्रत्युद्दिश्य ईशित्वं स्वामितामेषि, मम प्राणेश्वरी । तथा सूक्तौ वचनचातुर्यविषये प्राकाम्येन प्रकारबाहुल्येन रम्या वक्रोक्त्यादिनानाप्रकारवाणीं वक्तुं यो यथा वाञ्छति तथा वक्तुं त्वमेव जानासि नान्या । तथा दिशि प्राच्यादौ विदिशि आग्नेयादौ च यशसा सौन्दर्यादिविषयकीर्त्या यशसा वा कृत्वा लब्ध कामेन स्वेच्छया अवसितः तत्प्रसरोऽवसाया गतिर्यया सा त्रैलोक्यप्रसरत्कीर्तिः , एवंविधा यस्मात् तस्मात् कारणात् मुदितो हृष्टः ईश ईश्वरः त्वां निर्माय सौन्दर्या-

स एव चरणक्षालनादि करोति ॥ १६१ ॥

शोकश्चेत् कोकयोस्त्वां सुदति नुदति तद्व्याहराज्ञाकरस्ते गत्वा कुल्यामनस्तं व्रजितुमनुनये भानुमेतज्जलस्थं। बद्धे यद्यञ्जलावप्यनुनयविमुखः स्यान्ममैकग्रहोऽयं दत्त्वैवाभ्यां तदम्भोञ्जलिमिह भवतीं पश्य मामेष्यमाणं ॥ १६२ ॥

शोकेति। हे सुदति कोकयोर्विरहजनित शोक सदयहृदयत्वात् त्वां चेन्नुदति तर्हि व्याहर आज्ञापय। ते आज्ञाकर अहं कुल्यां गत्वा एतस्याः कुल्यायाः जलस्य उदकप्रतिबिम्बित भानुं सूर्यं अनस्तं अस्ताभाव व्रजितुं प्राप्तुं अस्तमगन्तु, यद्वा अनस्तं अस्ताचलप्रतियोगिभूत उदयाचल गन्तुं अनुनये प्रार्थये। इदानीं त्वया अस्तो न प्राप्तव्य पुनरुदयाचले गन्तव्य इत्येव सूर्यं कातरपूदयालमया सम्प्रार्थ्यं पुनः प्रार्थीं नेष्यामीति यावत्। यदि मया अञ्जलौ बद्धेऽपि अयं सूर्यः मदनुनये प्रार्थनाया विमुख स्याद् यत एक केवलो यद्वोऽञ्जिनिर्बन्धा यस्य एवंविध, अयं च एकः मुख्यो ग्रहराज तर्हि सूर्यार्घ्यदानसम्बन्धिन अम्भोञ्जलि आभ्यां कोकाभ्यामेव दत्त्वा इह प्रासादे भवतीं प्रति पुनरेष्यमाणमागमिष्यन्त मां पश्य, एव कोकमध्याजेन यदि कन्यामुपासीनेति वचनात सायंसन्ध्योपासनानिमित्त बहिर्निर्गमनार्थमनुज्ञा याचितवानिति भाव.। सुदतीत्यनेनात्याऽनन्तर ईश्वरदत्ताकिरणप्रकाशेन महामानन्दा भविष्यत तदर्थं व्याहरेति प्रार्थ्यत इति सूच्यते। दत्त्वेति पाठे उत्प्रेक्षा। एष्यमाण गत्यर्थादेट्ठा लट- शानच् ॥ १६२ ॥

तदानन्दाय त्वत्परिहसितकन्दाय जगतो निजां लीनां लीनां स्थितिमिह मुहूर्तं मृगयतां। इति व्याजात् कृत्वाऽलिषु बलितचित्तां सहचरीं स्वयं सोऽयं सायन्तनविधिविधित्सुर्व्यहरत् ॥ १६३ ॥

तदिति । सोऽयं नलः स्वप्न सायन्तनं विधिं सन्ध्याग्निहोत्रादिकं कर्म विधित्सुः कर्तुकामः सन् प्रासादाद्बहिरभूत्, निरगादित्यर्थः । किं कृत्वा इति व्याजादेवप्रकारेण सूर्य्यार्घ्यनयमसोगवेषणामिषेण सह धरों भैमीं आलिषु सखीषु विषये चालिङ्गनादिषु चलितं चित्तं यस्यास्तां तूष्णीं कृत्वा । इति किं हे प्रिये अहं सूर्य्यार्घनयार्थं नदीमुपलि गमिष्यामि प्रयतो च निजातीना निजसखीना दृष्टान्वेव क्वापि चित् प्रदेशे त्वया न द्रष्टव्यमिति लीना गुप्ता स्थिता स्वरकर्तृकं कर्म्मकं वा परिहसितं परिहासितं परिहासमक्रीडेयं कन्दी मूल तत्स्थितिहेतुर्यस्य तां तूष्णीं लज्जितायां तासां सखीनामानन्दाय मुहूर्तं मृगयतां गवेषयतु इति । एवं तद्वचनाद्भैमी क्वचिल्लीनां सखीमन्वेषितुं निर्गता । ननोऽपि सायसन्ध्यां कर्तुं बहिर्गमनादिना उद्वर्गमङ्गति सूचिता । विधित्सुं द्वितीयेति योगविभागात् समासः ॥ १६३ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं श्री
हीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं ।
तस्यागादयमेकविंशगणनः काव्येऽति नव्ये कृ
तौ भैमीभर्तृचरित्रवर्णनमयो सर्गो निसर्गोज्ज्व
लः ॥ १६४ ॥

श्रीहर्षमिति । तस्य कृतौ श्रीहर्षकृते अतिशयेन नव्ये अपूर्वतर-प्रमेयपरिपूर्णे भैमीभर्तुः चरित्रवर्णनं प्राचुर्येण प्रस्तुतं तत्र तादृशे काव्ये एकविंशतेः पूरणः एकविंशगणना सङ्ख्या यस्य यद्वा एकविंशतेः पूरणी एकविंशा गणना सङ्ख्या यस्य स सर्गोऽगात् समाप्तः ॥ १६४ ॥

इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते उत्तरनैषधीयव्याख्याया एकविंशः सर्गः ॥ २१ ॥

प्राय ता भैमीमपि अधिवास्य तत्रोपवेश्य । पर्य्यङ्क अधिशीङ् ( पा० १।४।४६ ) इति कर्मत्वम् । अधिशास्य ण्यन्ताद्वस्तेर्ल्यप् तस्य धात्वन्तरत्वात् उपान्वध्याङ्वस (पा० १।४।४८) इति कर्मत्वाप्राप्तेस्तामधिवास्येत्यत्र सामर्थ्यात्तत्रैवेति ज्ञेयं । उपश्लोकयति सत्यापपाशेति (पा० ३।१।२५) णिचि स्म योगे भूते लट् ॥ २ ॥

विलोकनेनानुगृहाण तावद्दिशं जलानामधिपस्य दारान् । आश्लाघि लाक्षापयसैव येयमपूरि पट्टैरिव कुङ्कुमस्य ॥ ३ ॥

विलोकनेनेति । हे भैमि त्वं जलानामधिपस्य वरुणस्य दारान् भार्यां पश्चिमां दिशं विलोकनेनानुगृहाण कृतार्थीकुरु तावदादौ विलोकनेनानुगृहाण वर्णनया तु पश्चादित्यर्थः । यावच्चन्द्रोदयादिना प्राच्या रामणीयकं भवति तावत्सन्ध्यारागेण कृतरामणीयकां पश्चिमां दिशं विलोकयेति वा तावच्छब्दार्थः । जलाधिपस्य च भार्यां दुःखितां विलोकनादिना अनुग्रहीतुमर्हा भवतीत्युक्तिः । येयं पश्चिमा दिक् लाक्षापयसाऽलक्तरसेन कृत्वा कयापि अश्लाघीव क्षालितेव । तथा कुङ्कुमस्य पट्टैः कृत्वा कयापि अपूरीव । एवंविधा रक्ता दृश्यते यतस्तस्माद्रमणीयामेतां विलोकयेत्यर्थः ॥ ३ ॥

उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः । तस्यैव पातेन विचूर्णितस्य सन्ध्यारजोराजिरहो विजृम्भते ॥ ४ ॥

उच्चैरिति । हे प्रिये रविरेव गैरिकाख्यधातुविशेषसम्बन्धी गण्डशैलः उच्चैस्तरादत्युन्नतादम्बरशैलस्य गगनगिरेर्मौलेः शिखरात् सकाशाच्च्युतः पतितः स्वयं पपात तथा च पतितोऽयमत्रावसितः पततो गगनगिरिशिखरादस्य पतनेन हेतुना विचूर्णितस्य विशेषेण चूर्णचूर्णीकृतस्य तस्यैव गैरिकगण्डशैलस्य सम्बन्धिनी सन्ध्यैव रजोराजिः सन्ध्या सम्बन्धी राग इत्यर्थः । इह सायङ्काले पश्चिमदिशि वा उज्जृम्भते उपरिष्टात् प्रसरति । अस्तमयसमये सूर्यस्य रक्तत्वाद्गगनगिरिशिखरात्-

च्युतत्वाच्च गैरिकगण्डशैलत्व । उन्नतरात् प्रदेशात् पतितो गण्डशैल-चूर्णीभवति । चूर्णीकृतस्य रजोराशिरुर्द्ध्वं प्रसरति । तद्रजोराशिरेव स-न्ध्यारागः प्रायेणोर्द्ध्वं गच्छति प्रसरतीत्यर्थः ॥ ४ ॥

अस्ताद्रिचूडालयपक्कणालिकुक्कुटपेटकस्य । यामान्तकूजोल्लसितैः शिखौघैर्दिग्वारुणी द्रागरुणीकृतेय ॥ ५ ॥

अस्तेति । हे प्रिये कुक्कुटानां पेटकस्य समूहस्य यामान्ते प्रहरान्ते या कूजा शब्दिस्त तदुत्थादुल्लसिते प्रकाशमाने किञ्चिदुच्चीभूते सत्कु-सुमजपाकुसुमतुल्ये. शिखानां शिरसि रक्तचर्म्मनयकमरायामौघैर्त्रृन्दै किमिव वारुणी दिक् द्राक् अकस्मादरुणीकृता रक्तीकृतेत्युत्प्रेक्षा । किम्भूतस्य । अस्ताद्रेश्चूडा शिखरं सैव लय स्थानं यस्य स च पक्क-णा शबरगृहं तस्यालि समूहस्तत्र कुक्कुटस्याऽऽसक्तस्य शबरैर्गृहेषु बद्धत्वे-तस्य, कुक्कुटानां कूजने उत्तमितशिखत्व जाति , ते च यामान्ते कू-जन्ति सायं समये कूजनादुत्फुल्लशिखावृन्दमस्यत्वादरुणीकरणसम्भवार्थं यामान्तेत्याद्युक्तम् । पक्कणः शबरालयः । गृहासक्ताः पक्षिमृगाश्छे-कास्ते इत्यमरः । पेटकं पुस्तकादीनां मञ्जूषायां कदम्बकमिति विश्वः ॥ ५ ॥

पश्य द्रुतास्तङ्गतसूर्य्यनिर्य्यत्कराव्लीहिङ्गुलरक्तचेत्रयाऽत्र । निषिध्यमानाहनि सन्ध्ययाऽपि रात्रिप्रतीहारपदेऽधिकारः ॥ ६ ॥

पश्येति । सन्ध्ययाऽत्र सायसमये चन्द्रस्य नायिका रात्रि स्तस्य-स्वामिनः प्रतीहारस्य दौवारिकस्य पदेऽधिकारमास्पदमपि पश्य वि-लोकय । किम्भूतया । द्रुतं शीघ्रं अस्तङ्गतस्य सूर्य्यस्य निर्य्यन्तो बहि-र्निर्गच्छन्तो करावली किरणपरम्परैव हिङ्गुलं हिङ्गुलाख्य रक्तकरद्रव्य विशेषेण रक्तं चेत्रं दण्डविशेषोऽस्यास्तया । किम्भूते पदे । निषिध्य-मानं निवार्य्यमाणप्रवेशं अहो दिनं यस्मिन । स्त्रिया हि दौवारिकी रूपेण युक्तमिति सन्ध्यैव रात्रेर्दौवारिकी जातेत्यर्थः । सूर्य्योऽस्तमितो

वा च्चापिशब्दार्थ । अथ च स प्रसिद्धो महानटस्ताण्डवनृत्तकर्त्ता शिव भानो सूर्य्यस्य रागे सति अस्तमितार्द्धे सूर्य्ये सतीति यावत् । तत्र सन्ध्यासमये मत शिलातुल्यवर्णा अचिरस्थायित्वात् कुत्सितनर्त्तकीरूपा या ईंशा देवी सन्ध्याय सम्यग् ध्यात्वा साय सन्ध्यावन्दन कृत्वाऽप्यमूर्त्तिषु मध्ये तारापरम्परैव माला यस्या तया गगनरूपयाऽपि अमूर्त्तयाऽपि कृत्वा इदानी सन्ध्यावन्दनानन्तर अङ्गहार सुराकरपार्श्वीयाङ्गाना विक्षेप करोति किमिति वितर्के । अमूर्त्तस्याङ्गहारकरण विचित्रमिति विरोधार्थो ऽपिशब्द । न केवल चन्द्रसूर्य्यभोगादिभूषितयैव तन्वाऽङ्गहार करोति किन्तु वियताऽपि तन्वेति समुच्चयार्थो वा । ईश्वरोऽपि साय समये नृत्यति । भानुरागे मत शिलातुल्यवर्णा सन्ध्या सपोश्या सहचरी पार्वती विचिन्त्य विशिष्टया वियद्रूपयाऽपि तन्वाऽङ्गहार तनोति । पार्वतीसमीपेऽपीश्वरा नृत्यति । अथ च महानतिप्रवीणो नट कुत्सिता नटीं नृत्तेऽनतिचतुरामपि सन्ध्या वय सन्धौ वर्त्तमाना तरुणीं रसभावसन्धौ वर्त्तमाना वा रसभावज्ञा । अत एव सभाया अनुरागे ईंशा सभ्यानुरागजनने समर्था सञ्चिन्त्य वियत्तुल्ययाऽतिविशालया शुद्धमौक्तिकपरम्परारूपया मालयोपलक्षितया तन्वा अङ्गहार तनोति तदसाम्प्रत किन्तु रसभावादिजनयन्त्या तया सभ्यानुरागे समुत्पादितेऽपि नृत्तकर्म्मकौशलेनापि सभ्यानुरागार्थं स्वयमङ्गहार तनोतीति युक्तमेवेत्यर्थ । अथ च महान्नर्त्तको वय सन्धौ रसादिसन्धौ वा वर्त्तमाना तथा समृद्धिमतीमपि किन्तु कुत्सिता नटीं नृत्तानभिज्ञा ज्ञात्वा सभानुरागे निमित्ते विशिष्टया तन्वा स्वयमङ्गहार तनोति तदसाम्प्रत किं नु यदि तु तस्या नृत्तकौशलाभावान्नृत्ते न सभानुरञ्जने सामर्थ्याभावात् सभानुरञ्जनार्थं स्वयमेव निपुण नृत्यतीति युक्तमेवेत्यर्थ । अथ वा अन्योऽपि महानतिवृद्धो घटते सर्वत्र गच्छति तादृशोऽतिचञ्चलोऽतिप्रसिद्धो नट कुनटीमपि नृत्तविद्यायामपि मया कान्त्या कृत्वाऽपि या ऽनुरागस्तद्विषये ईंशा सौन्दर्य्यातिशयेनैव रागमुत्पादयन्तीं तथा शैशवतारुण्ययो सन्धौ वर्त्तमाना प्रादुर्भूतयौवना रससावसन्धिस्थत्वाद्रसभावज्ञा वा सञ्चिन्त्य कायकान्त्या

ऽनुरागे सति कुलटीमपि तरुणीं रमणमावहां या तयोर्गां सम्पन्नान्त्व विचिन्त्य तन्वा तदीयशरीरस्यातिविश्लिष्टतया शुद्धमौक्तिकमालया हारं विरचयति तत्रानुरक्तः सन् तस्यै मुक्ताहारं वितरतीत्यर्थः । एवमन्या अपि योजनाः सुधियोहनीयाः । समानुरागैः सन्ध्ययेति पाठो बहुषु पुस्तकेष्वदृष्टत्वादुपेक्ष्य । अतः यथाद्यम् । सन्ध्या दिगादित्वाद्यत् । तारशब्दस्य नक्षत्रकनीनिकाभिधायित्व दशमसर्गे एवोक्तं ॥७॥

भूषास्थिदाम्नस्त्रुटितस्य नाट्यात् पश्यो‍डुकोटी
कपटं वहद्भिः । दिङ्मण्डलं मण्डयतीव खण्डैः
सायं नटस्तारकराट्किरीटः ॥ ८ ॥

भूषेति । हे भैमि तारकराट् चन्द्रः किरीटे यस्य स शम्भुः सायं नटति सायं नटनशीलः सन् उद्धतात् नाट्यात् नृत्ताद्धेतोस्त्रुटितस्य भूषास्थिदाम्नो भूषणास्थिमालाया उच्छलितैः खण्डैः शकलैः तैरेव उडुकोटीकपट कोटिमङ्कानक्षत्रव्याज वहद्भिर्धारयद्भिरिह सायं समये दिङ्मण्डलं मण्डयति पश्य । एतानि नक्षत्राणि न किन्तु ताण्डवत्रुटिता स्थिमालोच्छलणखण्डान्येव दिक्षु शोभन्त इत्यर्थः । अन्योऽपि चन्द्रतुल्यकिरीटो नटो नृत्यंस्त्रुटितहारखण्डैःक्षोणीवृन्दं मण्डयति । मण्डयतीवेति पाठे उत्प्रेक्षा ॥ ८ ॥

काल किरातः स्फुटपद्मकस्य वधं व्यधाद्यस्य
दिनद्विपस्य । तस्यैव सन्ध्या रुचिरास्त्रधारा
ताराश्च कुम्भस्थलमौक्तिकानि ॥ ९ ॥

काल इति । हे प्रिये काल. सन्ध्यासमय एव किरातो ऽथ च कृष्णवर्णो हिंसकत्वान्मृत्युरूपो वा कालो गिरिगह्वरवनचारी शबरः स्फुटानि विकसितानि पद्मानि यस्मिन्, यद्वा विकसितकमलं कं जलं यस्मिन्, एष च प्रकटीभूतशुण्डादण्डाग्रे प्रकाशमानं पद्मक रक्तबिन्दुवृन्द यस्मिन् तादृशस्य दिनरूपस्य द्विपस्य वध व्यधात्करोत् । स यदेवेह तस्य करिणो रुधिरा रम्या सन्ध्याऽस्त्रधारा रुधिरधारा । ताराः नक्षत्राणि विदारितमदीयकुम्भस्थलमौक्तिकानि, सन्ध्यारागो र-

क्तधारा ताराश्च स्थूलमुक्ता इव शोभन्त इत्यर्थः । स्फुटपद्मकरपेति च हुग्रीह्रौ कप् ॥ ९ ॥

सन्ध्यासरागः ककुभो विभागः शिवाविवाहे विभुनायमेव । दिग्वाससा पूर्वमवैमि पुष्पसिन्दूरिकापर्वणि पर्य्यधायि ॥ १० ॥

सन्ध्येति । विभुना प्रभुणा हरेण पूर्वं शिवाया पार्वत्या विवाहावसरे सन्ध्यया सरागो रक्तवर्णोऽयमेव ककुभ पश्चिमाशाया विभाग प्रदेश पुष्पवसंयुक्ता सिन्दूरिका रक्तवस्त्र तत्सम्बन्धिनि तद्योगात् पुष्पसिन्दूरिकाख्ये पर्व्व ण्युत्सवे पर्य्यधायि परिहित । यता दिग्वासस एव वासा यस्य तेन रक्तवस्त्रपरिधानावसरेऽपि दिग्वसनादौचित्या रक्तदिग्भाग एव परिहित इत्यवैमि शङ्के । विवाहस्य चतुर्थे दिने प्रथमदिनपरिहितानि वस्त्राणि प्रक्षालनार्थं परित्यज्य पुष्पसिन्दूरिकाख्यपर्व्वणि कौसुम्भादिरक्तवस्त्राणि वधूवरेण परिधीयन्त इति वृद्धाचार । तत्रेशस्य दिग्वसनत्वाद्रक्तपश्चिमभाग एवानेन परिहित इत्यर्थ । यत्र कमलपुष्पस्थाने तारा सिन्दूरिकास्थाने सन्ध्यासराग पश्चिमदिग्भाग इति भाव ॥ १० ॥

सतीमुमामुद्वहता च पुष्पसिन्दूरिकार्थं वसने सुनेत्र । दिशौ द्विसन्ध्यीमभि रागशोभे दिग्वाससोभे किमलम्भिपाता ॥ ११ ॥

प्रात सायसन्ध्ययो प्राचीप्रतीच्याद्वयोरपि तुल्यवत्त्वात सायसन्ध्यारक्तपश्चिमदिश एव पुष्पसिन्दूरिकास्थ कथ यथयत इत्याक्षेपे तस्य परिहारार्थं प्राच्या अपि तद्भावमाह । सतीमिति । ह सुनेत्रे सतीं दाक्षायणीमुमा पार्वतीं च उद्वहता परिणयता दिग्वाससा हरेण पूर्वं रक्तपुष्पसिन्दूरिकार्थं द्विसन्ध्यीमभि द्वे अपि प्रात सायसन्ध्ये लक्षीकृत्य द्वे प्राचीप्रतीच्यौ दिशावेव रागेण रक्तवर्णेन शोभा ययोस्ते रक्तवर्णेन शोभेते इति वा । तादृश रक्ते उभे द्वे वसने ऽलम्भिपाता

प्राप्ते किं । विवाहद्वये सन्ध्याद्वयरक्तदिग्द्वयमेव दिग्वसनत्वाद् रक्तवस्त्रद्वयं शिवेन लब्धमित्यर्थः मन्ये इत्यर्थः । शिवेन द्वे दिशावेव वस्त्रे द्वे सन्ध्ये लक्षीकृत्य रागेण रञ्जकद्रव्येण कृत्वा ये शोभे कर्म्मभूते ते प्रापिते किं । विवाहे वस्त्रं रञ्जनाय कस्यचित् करे समर्प्यते तस्माच्छिवेन दिग्द्वयरूपे मम वस्त्रे त्वयतीभ्यां रक्तशोभे प्रापणीये इति स्वयं सन्ध्याद्वयं आज्ञप्तं स दिग्द्वयं रक्तशोभं चकारेत्यर्थं इति वा । मुनेत्रीति पाठे सयागोपधादिति ( पा०७।१।६३ ) निषेधात् ङीप् चिन्त्य । द्विसन्ध्यी समाहारे द्विगोरेकत्वे आयन्तो वेति ( पा०२।४।३०। वा०४ ) स्त्रीत्वे च द्विगोरिति (पा०४।१।२१) ङीपि सन्ध्याशब्दस्य तद्धितान्तपदत्वाद्धलस्तद्धितस्येति (पा०६।४।१५०) यलोप, अभिरभागे इत्यभे (पा० १। ४।९१) कर्म्मप्रवचनीयत्वात् तद्योगे द्वितीया । गत्यर्थत्वादणौ कर्त्तुर्णौ कर्म्मत्व ॥ ११ ॥

आदाय दण्ड सकलासु दिक्षु योऽयं परिभ्राम्य
ति भानुभिक्षुः । अब्धौ निमज्जन्निव तापसोऽयं
सन्ध्याभ्रकाषायमधत्त सायं ॥ १२॥

आदायेति । योऽयं भानुरेव भिक्षु परिव्राट दण्डं पारिपार्श्विकमेव वेणवयष्टिमादाय सकलासु दिक्षु परिभ्राम्यति सोऽयं तापसः परिव्राट् सायङ्काले अब्धौ निमज्जन् पाताल प्रविशन्नेव च बहुजले जलाशये स्नानं कुर्व्वन् सन्ध्यायासत्र गगनं तदेव काषायं रक्तवस्त्रमधत्तेव, उपरि स्वस्योर्द्धभाग अथ चाचलतटस्योपरि दण्डस्योपरि वा निजमस्तकोपरि वा घृतवानिव । एव यतिरपि बहुकालमयस्यानस्य निषिद्धत्वादुक्तकालतः सन् परिभ्रमन काषायं वस्त्र धारयति । काषायेण इव सन्ध्या शोभते इत्यर्थः । माठर पिङ्गलो दण्ड, भिक्षु परिव्राट कर्म्मन्दीति चामरः । काषायं तेन रक्त (पा०४।२।१) इत्यण् ॥ १२ ॥

ध्वस्ताध्वत्योऽस्मिन्निकषोपलाभे सन्ध्याकषोल्लेख
परीक्षितो यः । विक्रीय त हेलिहिरण्यपिण्ड
ताराबराटानियमादित द्यौः ॥ १३ ॥

अस्तेति । यः सूर्यः अस्मिन् प्रतीच्यां वर्त्तमाने निकषोपलाभे सुवर्णपरीक्षापाषाणतुल्ये ऽस्ताचले सन्ध्याराग एव कषोल्लेखः घर्षणोल्लेखस्तेन परीक्षित इव द्यौस्तं हेलि सूर्य्यमेव हिरण्यपिण्डं विक्रीय विनिमयेन कस्मैचिद्दत्वा ताराख्यान् वराटकान् कपर्द्दकान् आदित जग्राह । उत्तमं सुवर्णं रक्तपीतं भवति तथा च रक्तपीतसुवर्णसूर्यगोलकस्य निकषपरीक्षितसुवर्णरेखेव सन्ध्या दृश्यते । ताराश्च वराटका इव दृश्यन्त इत्यर्थः । द्यौरिति लोकव्यवहारानभिज्ञत्वद्योतनार्थं स्त्रीनिर्देशः । स्त्री हि सुवर्णं दत्वा मूर्खतया वराटकान् गृह्णाति धूर्तैर्वञ्च्यते च । वराटकस्य व्यवहारे देशे सुवर्णमपि दत्वा वराट एव गृह्यते ॥ १३ ॥

पचेलिमं दाडिममर्कबिम्बमुन्नाथ्य सन्ध्या त्वगिवोज्झिताऽस्य । तारामयं बीजभुजाऽऽदसीयं कालेन निष्ठ्यूतमिवास्थियूथम् ॥ १४ ॥

पचेलिममिति । दाडिमबीजभुजा कालेन रक्तमर्कबिम्बमेव पचेलिम तरौपर्येव स्वयं पक्वं दाडिमफलमुन्नाथ्य गगनतरोस्त्रोटयित्वा बीजग्रहणार्थे भित्वा वा सन्ध्यात्वगिव अस्य दाडिमस्य पक्वत्वाद्रक्तकृत्तिरेवोज्झिता परित्यक्ता, तद्बीजभक्षणार्थमुपरितनबीजकोशवत् सन्ध्या पृथक् कृता । तथा बीजभक्षणानन्तरं तारमयं ताराख्यं अदसीयममुष्य दाडिमस्य अमीषां बीजानां वा सम्बन्धि अस्थ्यां बीजजन्यस्थले श्वेतकणानां यूथं वृन्दं निष्ठ्यूतमिवोद्गीर्णमिव, बीजानि भक्षयित्वा गृहीतं रसमन्तर्गतश्वेतकणावृन्दं पुनः फूत्कृतमिव । न हि कालादृते सूर्यदाडिमं भक्षितुं समर्थः । अन्योऽपि दाडिममुन्नाथ्य त्वचं परित्यज्य बीजान्यास्वाद्य गृहीतरसान् बीजकणान् फूत्कृत्य त्यजति ॥ १४ ॥

ताराततिर्बीजमिवाम्रमाम्रमिव निष्ठीवि यदस्थियूथं । तन्निष्कुलीकृत्य रविं त्वगेषा सन्ध्योज्झिता पाक्तिमदाडिमस्य ॥ १५ ॥

तारेति । सामर्थ्यात् कालेन कर्त्रा रविमेव तत् पाक्तिमं पचेलिमं

दाडिम निष्ठ्यूतीकृत्य निर्गलद्बीजकुलं कृत्वा बीजरूपं सारं गृहीत्वा तदीया त्वगेषैव सन्ध्या उज्झिता, यागस्य सम्भावनायामुज्झिता किमित्यर्थः। तत्किमित्याशङ्क्याह। बीजानि आदमाद आखादयित्वा यस्य सूर्यरूपस्य पक्वदाडिमस्य सबन्धि अस्थियूथमिव इयं तारावलिः निरष्ठीवि निष्ठ्यूता। आध्मा आध्मा इति आदमादं अदेराभीक्ष्ण्येन द्विर्वचनञ्च। निरष्ठीवि कर्मणि चिण् निष्ठ्यूतीकृत्य निष्ठ्यूतनिक्षेपणे (पा०५।४।६२) इति डाच्। रूपकोऽयं श्लोकः॥ १५॥

सन्ध्यावशेषे कृतताण्डवस्य चण्डीपतेर्यत्पतनाभिघातात्। कैलासशैलस्फटिकाश्मखण्डैर्मणिह पञ्चयोत्पतयालुभिर्द्यौः॥ १६॥

सन्ध्येति। हे प्रिये सन्ध्यावशेषे सन्ध्यावन्दनान्ते कृतं ताण्डवं नृत्यं येन तस्य चण्डीपतेः पदोर्चरणयोर्द्वयस्य पतनेनाभिघाताद्धेतोः उत्पतयालुभिरुत्पतनशीलैरुच्छलितैः कैलासशैलसम्बन्धिस्फटिकात्मना खण्डैः घ कले द्यौरम्बरमिह अलङ्कृता पश्य, कैलासस्फटिकखण्डा एव गगने तारारूपेण शोभन्ते। उत्पतयालुभि इत्यत्र गृहीत्यालुच् (पा०३।२।१५८)१६॥

इत्थं ह्रिया वर्त्मनजन्मनेव सन्ध्यामपक्रान्तवतीं प्रतीत्य। तारातमोदन्तुरमन्तरिक्षं निरीक्षमाणः स पुनर्बभाषे॥ १७॥

इत्थमिति। स नलः पुनर्भैमीं बभाषे। किम्भूत। इत्युक्तप्रकारेण वर्त्मजन्मना स्तुतिजातया ह्रियेव अपक्रान्तवतीं निर्गतां सन्ध्यां प्रतीत्य निश्चित्य निश्चित्य अन्तरिक्षं गगनं तारातमोभ्यां दन्तुरितं मिश्रितं निरीक्षमाणः। अन्योऽप्युक्तो निजवर्णनजातलज्जयाऽपक्रामति १७॥

रामेपुमर्मव्रणनात्तिवेगाद्रत्नाकरः प्रागयमुत्पपात। ग्राहौघकिर्मीरितमीनकम्बु नभो न भोः कामशरासनभ्रु॥ १८॥

रामेति। भो हे कामशरासनभ्रु: कामशरासनमेव भ्रुवौ यस्याः

न्दर्शनमात्रेण कामोदयकारिणि नेमि रामस्य राघवस्य जामदग्न्यस्य वा भृगुणां मर्मणो व्रणनाद्वेदनाहेतोरुत्पन्ना आर्तिः पीडा तस्या, वेगादाधिक्याद्धेतोर्निजस्थानं स्थातुमशक्तः सन् भीत्या रत्नाकर एवायं प्राक् तस्मिन्नवसरे उत्पपात ऊर्ध्वमागात्, नेदं नभो। यः पूर्वमुत्पपात सः श्यामजलः स्फुटरत्नगर्भो रत्नाकर एवायं न त्वेतन्नभ इत्यर्थः। कीदृशः। ग्राहाणां जलचारिणां जन्तूनामोघैः किर्मीरिता मिश्रिता तत्सहिता मीनाः मत्स्याः शङ्खाश्च यस्मिन्। नभस्तु ग्रहसम्बन्धि ओघः शुक्रबृहस्पत्यादिताराग्रहसमूहो ध्रुवमण्डलग्रहसम्बन्धी समूहो वा, तेन मिश्रितो नानाख्यो राशिः कर्कः शङ्खः कारविगाख्यमत्स्यश्च यस्मिन्। रघुनाथेन किल सेतुबन्धसमये शरेण समुद्रः भेत्तुमारब्ध इति तावन्मात्रेण पीडातिशयादुत्पतित इत्युच्यते। परशुरामेणापि निजवसत्यर्थं समुद्रो बाणेन परास्तः समुत्पतितः, समुद्रजलस्यैवायं कालिमा न तु गगनस्येत्यर्थः। समुद्रस्याधोदेशे स्थितानि रत्नग्राहादीनि ऊर्ध्वस्थितेन जलेन सुखेन द्रष्टुं शक्यन्ते। मकरकर्कटादयः साक्षान्मत्स्यादय एव। न तु राश्यादिभूताः शिष्टाश्च ताराः समुद्रमौक्तिकान्येव न तु तारा इत्यादि ज्ञातव्यं। शरासनजूरित्युपन्यस्तत्वात्कदीत्वाभावादस्वत्वाभावः। इत्यपादस्तु सहैकवंशप्रभवत्वेनेति यत् समर्थनीयः। यद्वा श्लिष्टकविप्रयोगदर्शनाद् ज्ञातव्यं ॥ १८ ॥

मोहाय देवाप्सरसां विमुक्तास्ताराः शराः पुष्प
शरेण शङ्के। पञ्चास्यवत् पञ्चशरस्य नाम्नि
प्रपञ्चवाची खलु पञ्चशब्दः ॥ १९ ॥

मोहायेति। हे नेमि पुष्पशरेण कामेन देवानामप्सरसाञ्च मोहायान्योन्यमत्यन्तानुरागसञ्जननार्थं देवादीनामुपरि वर्तमानत्वाद्विमुक्ता ऊर्ध्वं क्षिप्ताः, शुभ्रपुष्परूपाः शरा एव तारा इत्यहं शङ्के। ननु कामस्य पुष्पशरत्वेऽपि पञ्चबाणत्वात् ताराणां बहुतरत्वात् कथं कामबाणत्वमित्याशङ्क्य समर्थयते। खलु यस्मात् पञ्चशरस्य नाम्नि पूर्वपदत्वेन वर्तमानः पञ्चशब्दः प्रपञ्चवाची प्रकृष्टः पञ्चो विस्तारः तद्वाचकः, न तु सङ्ख्यावाचकः, पचि विस्तारवचने इति स्वार्थणिजन्ताद्धातोः पचा

दपि पद्मपत्ति विम्मृता भवन्ति पञ्चाः शरा यस्येति विग्रहो न तु प द्मसङ्काकाः शरा यस्येति, तस्मात् पुष्पबाणत्वं ताराणां युक्तमेवेत्यर्थः। कस्येव। पञ्चास्यवत् "सिंहो मृगेन्द्रः पञ्चास्यः" इति सिंहाभिधायि नि पञ्चास्यशब्दे सिंहस्य पञ्चमङ्कमुखत्वाभावात् पञ्चयति विस्तृतं भ वति पञ्चं विस्तृतमास्यं यस्यासौ पञ्चास्य इति व्युत्पत्त्या पञ्चशब्दो य था विस्तारवाची तथेति व्यासः। प्रपञ्चो विस्तार इति हलायुधः॥१९॥

नभोनदीकूलकुलायचक्रीकुलस्य नक्तं विरहाकुलस्य। दृशोरपां सन्ति पृषन्ति ताराः पतन्ति तत्सङ्क्रमणानि धाराः॥ २०॥

नभ इति। नक्तं विरहेणाकुलस्य पीडितस्य नभोनद्या मन्दाकिन्याः कूलमेव कुलायः स्थानं यस्य तस्य चक्रीकुलस्य चक्रवाकीसमूहस्य दृशो र्नेत्रयोरपामश्रुजलानां पृषन्ति बिन्दवः सन्ति त एव तारका अधःस्थि तिर्जनैर्दृश्यन्ते। तथा तासां ताराणां सङ्क्रमणानि पुण्यक्षयवशाद्भू मिं प्रत्यागमनानि गलद्बाष्पजलानां धारा एव पतन्ति। दृशोः सन्ति चिरस्थितिमन्ति यानि बाष्पपृषन्ति तानि तारा इति वा। तत्सङ्क्र मणानि स्थिततारापतिबिम्बभूतानि तत्तुल्यानि पतन्त्यधःपातीनि या नि पृषन्ति तानि धारा अश्रुप्रवाहाः तासां ताराणां सङ्क्रमणानि वी थयो मेषादिसङ्क्रान्तयो वा। धारा अश्रूणां प्रवाहा इति वा। स्त्रि यो हि विरहमसहमाना रुदन्ति। पतन्तीति तिङन्तं। पृषद्विशेषणं वा॥ २०॥

अमूनि मन्ये सुरनिर्झरिण्या यादांसि गोधा मकरः कुलीरः। तत्परखेलत्सुरस्त्रीतिदूरमग्नान्यधः स्थप्रमितः प्रतीमः॥ २१॥

अमूनीति। हे प्रिये गोधाख्यास्तारा गोधा मकरराशिसम्बन्धिन्य स्ताराः मकरः कुलीरः कर्कटराशितारासम्बन्धिन्यस्ताराः अमूनि प्रत्यक्ष दृश्यानि सुरनिर्झरिण्या मन्दाकिन्या यादांसि जलजन्तव एवेत्यहं मन्ये। गोधा मत्स्याः कर्कटा अपि जले वर्तन्ते उपरि च दृश्यन्ते स-

स्याद्येयनद्या यादांस्येतानीत्यर्थः । तर्हि उपरिवर्त्तमानेन द्रष्टु योग्या न त्वध स्थितेनेत्यत आह तस्या नाकनद्याः पूरे प्रवाहे खेलन्तः क्रीडन्तः सुरास्तस्य मकाशाद्धील्या दूरतलपर्यन्तमग्नानि अत एव जलतलगामित्वादधोभागे स्थिता भूदेशादपि स्पष्टं सुखेन जानीमः । भूभागे स्थिता अपि जलगामित्वाद्ग्राहादियादांसि व्यक्तं जले पश्याम इत्यर्थः । गोधाकारं भुजमण्डलं गोधा ज्येष्ठा वा ॥ २१ ॥

स्मरस्य कम्बुः किमयञ्चकास्ति दिवि त्रिलोकीजयवादनीयः । कस्यापरस्योडुमयैः प्रसूनैर्वादित्रसृष्टिर्घटते भटस्य ॥ २२ ॥

स्मरस्येति । त्रिलोकीविजये वादनीयो वादनार्हः स्मरस्य सम्बन्धी अयं मत्स्याकृत्या विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किं । उच्चैःशब्देन वादितयाऽस्य शङ्खस्याकर्णयत इति गगने स्थापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः । यस्मादपरस्य कस्य भटस्य योद्धुस्तारारूपैः प्रसूनैः कृत्वा वादित्रसृष्टिः वाद्यनिर्माणं घटते, स्मरस्यैव धनुषः पुष्परूपत्वदर्शनात् तदीयस्यैव वाद्यस्य पुष्परूपत्वसम्भावनायुक्तत्वात् । ताराकुसुमरूपः कामशङ्ख एवायं गगने भ्राजते न त्वन्यदीय इत्यर्थः ॥ २२ ॥

किं योगिनीयं रजनी रतीशं याऽजीजिवत् पद्ममसूमुहच्च । योगर्द्धिरस्या महतीमलग्नमिदं यदत्यम्बरचुम्बि कम्बु ॥ २३ ॥

किमिति । इयं रजनी योगिनी स्त्रीपुंसयोगवती, अथ च शाक्तमन्त्रसिद्धा मारणोच्चाटनाद्यभिज्ञा स्त्री किं । या रतीशं दिवा निर्जीवमिव वीजसन्निधेरजीजिवत् सञ्जीवं चक्रे, पद्मममूमुहत् पद्मानि च समकोचयत् । रात्रौ च स्त्रीपुंसयोगे कामः उदितो भवति पद्मानि च सङ्कुचन्ति । अलग्नं निराधारं अम्बरचुम्बि आकाशवर्त्ति ताराभासात्मकत्वादलग्नमनाश्रितभूतं यः इदं मत्स्याकृतिरूपं कम्बु

स्माद्दैवनद्या यादांस्येतानीत्यर्थः । तर्हि उपरिवर्त्तमानेन द्रष्टुं योग्या न त्वधःस्थितेनेत्यत आह तस्या नाकनद्याः पूरे प्रवाहे खेलन्तः क्रीडन्तः सुरास्तेभ्यः सकाशाद्भीत्या दूरतलपर्य्यन्तमग्नानि, अत एव जलतलगामित्वादधोभागे इतो नृदेशादपि स्पष्टं सुखेन जानीमः । भूभागे स्थिता अपि जलगामित्वाद्गोधादियादांसि व्यक्तं जले पश्याम इत्यर्थः । गोधाकारं ध्रुवमण्डलं, गोधा ज्येष्ठा वा ॥ २१ ॥

स्मरस्य कम्बुः किमयञ्चकास्ति दिवि त्रिलोकीजयवादनीयः । कस्यापरस्योडुमयैः प्रसूनैर्वादित्रसृष्टिर्घटते भटस्य ॥ २२ ॥

स्मरस्येति । त्रिलोकीविजये वादनीयो वादनार्हः स्मरस्य सम्बन्धी अयं प्रत्यक्षदृश्यो विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किं । उच्चतरदेशे वादितत्वाद्यः सर्वानाकर्षयत इति गगनं व्यापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः । यस्मादपरस्य कस्य जटरस्योडुमयैस्ताराकृपैः प्रसूनैः कृत्वा वादित्रसृष्टिः वाद्यनिर्माणं घटते, स्मरस्यैव धनुषः पुष्परूपत्वदर्शनात् तदीयस्यैव वाद्यस्य पुष्परूपत्वसम्भावनायुक्तत्वात् । ताराकुसुमरूपः कामशङ्ख एवायं गगने शोभते न त्वन्यदीय इत्यर्थः ॥ २२ ॥

किं योगिनीयं रजनी रतीशं याऽजीजिवत् पद्ममसूमुहच्च । योगर्द्धिमस्या महतीमलग्नमिदं यदत्यम्बरचुम्बि कम्बु ॥ २३ ॥

किमिति । इयं रजनी योगिनी स्त्रीपुंसयोगवती, अथ च शाक्तमन्त्रसिद्धा मारणोच्चाटनादर्याभिज्ञा स्त्री किं । या रतीशं दिवा निर्जीवमिव योजसन्निधेरजीजिवत् सञ्जीवं चक्रे, पद्ममसूमुहत् भयपद्मानि च समकोचयत् । रात्रौ च स्त्रीपुंसयोगे काम उदितो भवति पद्मानि च सङ्कुचन्ति । अलग्नं निराधारं अम्बरचुम्बि आकाशगतापि ताराभात्रात्मकत्वादलग्नमराधिभूतं वा इदं प्रत्यक्षरूपं कम्बु

द्यपि पञ्चयन्ति विस्तृता भवन्ति पञ्चाः शरा यस्येति विग्रहो न तु प ञ्चसङ्ख्याकाः शरा यस्येति, तस्मात् पुष्पबाणस्य ताराणां युक्तमेवेत्यर्थः । कस्येव । पञ्चास्यवत् "सिंहो मृगेन्द्रः पञ्चास्य" इति सिंहाभिधायि नि पञ्चास्यशब्दे सिंहस्य पञ्चसङ्ख्यमुखत्वाभावात् पञ्चयति विस्तृतं भ वति पञ्चं विस्तृतमास्यं यस्यासौ पञ्चास्य इति व्युत्पत्त्या पञ्चशब्दो य था विस्तारवाची तथेति भावः । प्रपञ्चो विस्तार इति हलायुधः ॥१९॥

नभोनदीकूलकुलायचक्रीकुलस्य नक्तं विरहाकुलस्य । दृशोरपां सन्ति पृषन्ति ताराः पतन्ति तत्सङ्क्रमणानि धाराः ॥ २० ॥

नभ इति । नक्तं विरहेणाकुलस्य पीडितस्य नभोनद्या मन्दाकिन्याः कूलमेव कुलायः स्थानं यस्य तस्य चक्रीकुलस्य चक्रवाकीसमूहस्य दृशो र्नेत्रयोरपामश्रुजलानां पृषन्ति बिन्दवः सन्ति त एव तारका अधःस्थि तैर्जनैर्दृश्यन्ते । तथा तासां ताराणां सङ्क्रमणानि पुनःपुनःपतनाद्भू मिं प्रत्यागमनानि गलद्बाष्पजलानां धारा एव पतन्ति । दृशोः सन्ति चिरस्थितिमन्ति यानि बाष्पपृषन्ति तानि तारा इति वा । तत्सङ्क्र मणानि स्थिततारामतिबिम्बभूतानि तत्तुल्यानि पतन्त्यधःपातीनि या नि पृषन्ति तानि धारा अश्रुप्रवाहाः. तासां ताराणां सङ्क्रमणानि वी थयो मेषादिसङ्क्रान्तयो वा । धारा अश्रूणां प्रवाहा इति वा । स्त्रि यो हि विरहमसहमाना रुदन्ति । पतन्तीति तिङन्तं । पृषद्विशेषणं वा ॥ २० ॥

अमूनि मन्ये सुरनिर्झरिण्या यादांसि गोधा मकरः कुलीरः । तत्पूरखेलत्सुरभीतिदूरमग्नान्यधः स्पष्टमितः प्रतीमः ॥ २१ ॥

अमूनीति । हे प्रिये गोधाख्यास्तारा गोधा मकरराशिसम्बन्धिन्य स्तारा: मकरः कुलीरः कर्कटराशिसम्बन्धिन्यस्तारा: अमूनि प्रत्यक्ष दृश्यानि अमरनिर्झरिण्या मन्दाकिन्या यादांसि जलजन्तव एवेत्यहं मन्ये । गोधा मत्स्या. कर्कटा अपि जले वर्तन्ते उपरि च दृश्यन्ते त-

स्मात् वियन्नद्या याद्रास्यैतानीत्यर्थः । तर्हि उपरिवर्तमानेन द्रष्टुं योग्या न त्वधःस्थितेनेत्यत आह तस्या नाकनद्याः पूरे प्रवाहे खेलन्त क्रीडन्तः मराः तेभ्य. मकराशङ्कोत्या दूरतलपर्यन्तमग्नानि, अत एव जलतलगामित्याद्यधोजाने इतो दूरदेशादपि स्पष्टं सुखेन जानीम । भूभागे स्थिता अपि जलगामित्वाद्गोधादियादांसि व्यक्तं जले पश्याम इत्यर्थः । गोधाकारं भुजमवहलं गोधा ज्येष्ठा वा ॥ २१ ॥

स्मरस्य कम्बुः किमयश्चकास्ति दिवि त्रिलोकीजयवादनीयः । कस्यापरस्योडुमयैः प्रसूनैर्वादित्रसृष्टिर्घटते भटस्य ॥ २२ ॥

स्मरस्येति । त्रिलोकीविजये वादनीयो वादनार्हः स्मरस्य सम्बन्धी अयं प्रत्यक्षदृश्यो विशाखानक्षत्ररूपः कम्बुः शङ्खः दिवि चकास्ति किं । सबद्देवं वादितवाद्यः सर्वत्राकर्णयत इति गगने स्थापितो लोकत्रयविजयवादनार्हः कामस्यैव कम्बुः किमित्यर्थः । यस्मादपरस्य कस्य च भटस्योडुमयैस्ताराख्यैः प्रसूनैः कृत्वा वादित्रसृष्टिः वाद्यनिर्माणं घटते, स्मरस्यैव धनुषः पुष्परूपत्वदर्शनात् तदीयस्यैव वाद्यस्य पुष्परूपत्वसम्भावनायुक्तत्वात् । ताराकुसुमरूपः कामशङ्ख एवायं गगने शोभते न त्वन्यदीय इत्यर्थः ॥ २२ ॥

किं योगिनीयं रजनी रतीशं याऽजीविजन्न पद्ममममूमुहच्च । योगर्द्धिमस्या महतीमलग्नमिदं वदत्यम्बरचुम्बि कम्बु ॥ २३ ॥

किमिति । इयं रजनी योगिनी स्त्रीपु संयोगवती, अथ च शाक्तमन्त्रसिद्धा मारणोच्चाटनादयभिज्ञा स्त्री किं । या रतीशं दिवा निर्जीवमिव योजनविधेरजीजिवत् सञ्जीवं चक्रे, पद्मममूमुहत् पद्मानि च समकोचयत् । रात्रौ च स्त्रीषु संयोगे कामः उदितो भवति पद्मानि च सङ्कुचन्ति । अलग्नं निराधारं अम्बरचुम्बि आकाशवासि तारामात्रात्मकत्वादलग्नमराशिभूतं वा इदं प्रत्यक्षरूपं कम्बु

तारारूपः शङ्खोऽस्या रात्रियोगिन्या महतीं योगर्द्धिं वदति, दिवा दर्श- नाभावादिदानीं दृश्यमान. शङ्खा रात्रिजालेति कथयति । योगशक्ति वि- ना निराधार वस्तु कथ स्थापयेत् । योगिन्यपि मृतमपि जीवयति कि- ञ्चिच्च मोहयति मूर्च्छां प्रापयति भ्रान्तं करोति वा, तस्माद्योगिनी किमित्युत्प्रेक्षा । कम्बुशब्दस्य नपुंसकत्वमप्यस्तीति पूर्वमेवोक्तं स्मर्त्तव्यं । अलोपितवदमूमुहदिति चौपधोत्युपधा ह्रस्वः ॥ ॥ २३ ॥

प्रबोधकालेऽहनि बाधितानि ताराः खपुष्पाणि निदर्शयन्ती । निशाऽऽह शून्याध्वनि योगिनी यं मृषा जगद्दृष्टमपि स्फुटाभं ॥ २४ ॥

प्रबोधेति । हे प्रिये प्रबोधकाले जागरणसमयेऽथ च सम्यग्ज्ञा- नोत्पत्तिसमयेऽहनि दिवा बाधितानि सूर्यदीप्तिध्वस्तकान्तीनि ताराः नक्षत्ररूपाणि खपुष्पाणि गगनसम्बन्धीनि कुसुमानि नितरां दर्शयन्ती प्रकाशयन्ती, अथ च दृष्टान्तीकुर्वती शून्याध्वनि बौद्धाध्वनि शून्या- दिदर्शने विपक्षयोगिनी काचित् प्रव्रजितेवेयं निशा स्फुटाभंनितरां दृष्टमपि प्रत्यक्षेण प्रतीयमानमपि स्थावरजङ्गमात्मकं सकलं जगन्मृषा ऽसत्यमाह ब्रूते । बौद्धादिदर्शने हि मानसैव घटाद्याकारस्याना- तिरिक्त सर्वं मिथ्येति बोध्यते । योगिन्यपि प्रपञ्चो मिथ्येति दर्शयति तथैवमपि रात्रिरहन्यपि पुष्पतुल्यानि नक्षत्राणि निजयोगात् गगने दर्शयतीति भावः । निदर्शनं करोति येति प्रतीयमानोत्प्रेक्षा ॥ २४ ॥

एण. स्मरेणाङ्कमयः सपत्नीकृतो भवद्भ्रूयुगधन्वना यः । मुखे तवेन्दौ लसता स तारापुष्पालिग्रासानुगतो गतोऽयं ॥ २५ ॥

एण इति । हे भैमि तव मुखे सर्वेन्द्रायाह्लादकत्वादिगुणयोगा- च्चन्द्रे नमसा प्रकाशमानेन, तथा भवद्भ्रूयुगमेव धनुर्यस्य तेन स्मरेण तव मुखेन्दौ विगतो मृगचांचन्द्रत्वात् यन्नप्रतिपन्नवदित्यनुमानप्रसिद्धो योऽङ्कमय इत्यङ्करूप एणो मृगः सपत्नीकृतः मुखे, तथापदर्शनाज्ज

ह्वलः पूर इवान्धकारः ॥ २७ ॥

इदानीं सर्वदिग्व्यापितमोवर्णनं प्राच्यादिक्रमेणोपक्रमते । प्र चीति । हे भैमि अन्धकारः प्राच्याः सपत्नी दिक् प्राची तस्या वासरूपस्य सेतोः सूर्यस्य प्रभामर्यादाया नाशादुच्छृङ्खलो निरर्गलः प्रकृत्रस्य दानद्रवो दानोदकं तस्य निर्झरप्रवाहस्तस्य श्याम· पूर इव पोप्लूयते भृशं प्रसरति प्राचीं प्राप्नोतीत्यर्थः । त्व पश्य प्राच्यामैरावतदानजलप्रवाहपूरसमयः जलपूरोऽपि सेतोरपगमादप्रतिहतप्रसरः सुतरां प्रसरति । पुङ् गतौ इत्यस्माद्भृशार्थे यङ् ह्रियंवन ॥ २७ ॥

रामालिरोमावलिदक्षिणाहि ध्वान्तायते वाहनमन्तकस्य । यद्वीक्ष्य दूरादिव बिभ्यतः स्वा नश्वान् गृहीत्वाऽपसृतो विवस्वान् ॥ २८ ॥

दक्षिणदिग्व्यापितमो वर्णयति । रामेति । श्रीरामस्यालिः सेतुः सेतुयन्ध एव श्यामत्वाद्रोमावलिर्यस्यास्तस्या दक्षिणस्या दिशो विगाहि नितरां व्यापकं अन्तकस्य दिक्पतित्वाद्दक्षिणदिक्स्थं तद् वाहनं महिष एव ध्वान्तायते कज्जलमीलो ऽन्धकार इवाचरति । विवस्वान् सूर्यः यद्यमवाहनं दूराद् वीक्ष्य महजातमहिषवैरस्मरणाद्बिभ्यतः स्वभयात् स्वानश्वान् गृहीत्वाऽपसृतः पलायित इव । दक्षिणदिशि तिमिर यमवाहनमहिषश्यामलमित्यर्थः । अन्तकपदेन तद्वाहनस्य दारुणत्वं सूचितम्, अत एव ततोऽश्वानां भयं युक्तं । ध्वान्तायते उपमानादाचारे कर्तुः क्यङिति (पा० ३।१।११) क्यङन्तात् लट् । सेतुराली स्त्रियां पुमानित्यमरः ॥२८ ॥

पक्वं महाकालफलं किलाभीन् प्रत्यग्गिरेः सानुनि भानुबिम्बं । जिघ्नस्य तस्येव दृशान्तिपातानीजानि जानामितमां तमांसि ॥ २९ ॥

प्रतीचीव्यापितमो वर्णयति । पक्वमिति । भानुबिम्बं प्रत्यग्गिरेः

प्रतीच्यां यद्वर्तमानस्यास्ताचलस्य भानुनि कालयशात् पक्व महाकाल-स्यैन्द्रवारुण्याः फलमासीत् किलैवमहं मन्ये इत्यर्थः । तथाऽस्तमति-पक्वत्वादतिशयस्यादुच्चतरदेशादधस्तात् दृषदि शिलायां निपातात् तदभिघाताद्धेतोर्विलस्य विदीर्णस्य तस्य भानुबिम्बरूपस्य महाकाल-फलस्य कृष्णतमानि बीजान्येव तमांसीति जालामिततमां नितरां मन्ये । पद्मसादिकठिनभूमसमुद्भवं जम्बीरवर्तुलं पक्वं ध्वलितिरिक्तकरणीयं महाकालफलं गृहोपसर्गनिवारणार्थं गृहद्वारे वृद्धैर्बध्यते । अस्तमय-सम्बन्धात् परिणतकालं रक्तं भवतः कालस्य फलभूतश्च भानुबिम्बं महाकालफलमिव । तमांसि विदीर्णस्य तस्य कृष्णतमानि बीजानीव प्रसरन्तीत्यर्थः अन्यदिगपेक्षया प्रतीच्यां सायसमये सूर्यस्तत्परस्परत्व-म्भिनः प्रकाशस्यासत्त्वादल्पान्धकारसूचनार्थे तमसा बीजत्वेन नि-रूपणं ॥ २९ ॥

पत्युर्गिरीणामयशः सुमेरुप्रदक्षिणाद्भास्वदनादृतस्य । दिशस्तमश्चैत्ररथान्यनामपत्रच्छटाया मृगनाभिशोभि ॥ ३० ॥

उदीचीव्यापितमो वर्णयति । पत्युरिति । चैत्ररथं कुबेरवनं तदेवान्य-नाम यस्यास्तादृशी पत्रच्छटा पत्रवल्ली यस्याश्चैत्ररथाख्यवनरूपपत्रवल्लि-काया उत्तरस्या दिशो मृगनाभिः पत्रवल्लीरचनामाधनभूता कस्तूरी तद्वच्छोभते एवशीलं कृष्णतम तमोगिरीणां पत्युर्हिमाचलस्यायश एव, यतः सुमेरोः प्रदक्षिणीकरणाद्भास्वता सूर्येणानादृतस्याशातस्य । हिमाद्रिर्यद्यपि गिरीणां पतिस्तथापि सूर्येणानादृतत्वाद्धीन एव । मेरुरेव महान् । अस्योद्यानं चैत्ररथमित्यमरः ॥ ३० ॥

ऊर्ध्वं धृतं व्योम यदुष्णरश्मेर्दिवा सहस्रेण करैरिवासीत् । पतनदेवांशुमता विनेदं नेदिष्ठतामेति कुतस्तमिस्रं ॥ ३१ ॥

ऊर्ध्वदिग्व्यापितमो वर्णयति । ऊर्ध्वमिति । तमालश्यामलं

यद्व्योम दिवा सहस्ररश्मे: सहस्रमह्व्यैः करैः किरणैश्च च स्तैरूर्ध्वं दूरोच्चप्रदेशे धृतमियासीत् तन्नभ एवेदं तमालश्यामलं अंशुमता विना सायंसमये सूर्यविनाशाद्धारकेणानेन विनाऽधःपतत् सत् नेदिष्ठतामतितमां नैकट्यमेति, तमिस्रं कुतः कस्मादकस्मादागतमपि तिमिरं नाम किमपि नास्ति, किन्तु निकटीभवद्गगनमेव तमिस्रमित्यर्थः। पतद्व्योद्भैव तमिस्रं कुतो भूमौ निकटतामेति, न तु तदतिरिक्तं नभोऽस्तीति वा। अन्यदपि यत् कस्यचित्, कराभ्यामूर्ध्वं धार्यते तद्भावेऽधः पतत्येव। नेदिष्ठतां गतिशयनं इष्ठनि अन्तिकबाढयोरिति (पा० ५।३।६३) नेदादेशः। कुतः। पक्षे सार्वविभक्तिकस्तसिः॥ ३१॥

ऊर्ध्वार्पितन्युब्जकटाहकल्पे यद्व्योम्नि दीपे
न दिनाधिपेन। न्यधायि तद्भूममिलद्गुरुत्वं
भूमौ तमः कज्जलमस्खलत् किं॥ ३२॥

अथोदिग्व्यापितमो वर्णयति। ऊर्ध्वेति। सामर्थ्याद्विधिना ऊर्ध्वे सूर्यदीपस्यैवोपरिभागेऽर्पितान्युब्ज कज्जलधारणार्थमधोमुखोऽवनतमा. महाकटाहः कर्परं तत्कल्पे तत्तुल्ये कृष्णतमे व्योम्नि अधिकरणे प्रकाशकारिणा कज्जलधारणार्थेन दिनाधिपेनैव दीपेन करणेन यत् कज्जलं न्यधायि न्यस्तं तत्कज्जलमेव तमो भूत्वा क्रमभन्ज्ञातवाहुल्येन कृत्वा मिलत् पुञ्जं नयत् पतनस्य कर्मकारणं गुरुत्वं यस्य तादृशमत् भूमावस्खलत् किं, अतिभारेण पतितं किं। गुरुत्वाद्धि पतन युक्तं तत् कज्जलमेव भूमौ पतितं किं, अपि तु तमो नाम न किञ्चिदित्यर्थः इति वा। कज्जलमपि कर्परस्थं क्रमेण बहु भवद् गुरुत्वाद्धः पतति कटाहः कर्परं सर्वे निपतुः। ईषदसमाप्तौ कल्पप्प्रत्ययः॥ ३२॥

ध्वान्तैणनाभ्या शितिनाम्बरेण दिशः शरैः
सूनशरस्य तारैः। मन्दाक्षलक्ष्या निशि भाम
निन्दौ येष्यां भयायान्त्यभिसारिकाभाः॥ ३३॥

ध्वान्तेति। ध्वान्तमेवैणनाभ्या कस्तूर्या तथा शितिना नीलेन-

न्धरैव गगनेनाथ च यत्रेण । यद्वा । ध्वान्तैघनाम्ना कृत्वा नीलेन गगनेनोपलक्षितास्तथा निशित्वात् पुष्पतुल्यरूपत्वाच्चोज्ज्वलैस्तारैर्नक्षत्रैरेव सूनशरस्य कामस्य शरैरुपलक्षिताः, अथ च तारैरुज्ज्वले पुष्पैरुपलक्षितास्तथा प्रकाशाभावान्मन्दाक्षैर्मन्दनयनैर्नरैर्लक्ष्या लक्षणीयाः, अथ च मन्दाक्षस्य लज्जाया विषयभूता सलज्जा अत एवाभिसारिकाभाः स्वैरिणीतुल्याः दिशः, अभिन्दौ चन्द्ररहितायां अनुदितचन्द्रत्वाच्छायाया निशि समायान्ति प्रत्यागच्छन्ति तस्मात् सर्वाश्छायाच्या तथ सेव्या भव । अभिसारिका अपि शुभ्राया रात्रौ शुभ्रवस्त्राद्याभरणाः, कृष्णायाश्च रात्रौ कृष्णवस्त्राद्याभरणाः समायान्तीति । ता अपि कस्तूरीकृताङ्गरागा नीलवसना प्रच्छन्नधृतपुष्पाः कामबाणापीडिताः सलज्जाः सत्य कामुकं प्रति समायान्ति तदीयनायिकाय सेव्यां भवन्ति, तथा दिशोऽपीत्यर्थः । सर्वा अपि दिश एकत्र मिलिता इति प्रतीतिः । तिर्यग्व्यापितमो वर्णितमनेन । कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिकेत्यमरः । मन्दाक्षमन्दा इति पाठे मन्दनयनानामल्पदृष्टयासमीपाहुल्यात् । अथ च लज्जाबाहुल्यान्मन्दाश्च अत एव मन्दगमनाः, लज्जया वा मन्दगमना इत्यर्थः । तारशब्दः पूर्ववत् ॥ ३३ ॥

भास्वन्मयीं मीलयतो दृशं द्राङ् मिथोमिलद्
दृग्व्यञ्चलमादिपुंसः । आचक्ष्महे तन्वि तमांसि
पक्ष्म, श्यामत्वलक्ष्मीविजितेन्दुलक्ष्म ॥ ३४ ॥

भास्वदिति । हे तन्वि कृशाङ्गि भास्वन्मयीं रविरूपां दक्षिणां दृगगनस्तमयव्याजेन द्राक् शीघ्रं मीलयतः सङ्कोचयत आदिपुंसः श्रीविष्णोर्मिथोऽन्योन्यं मिलन्ती द्वावव्यञ्चलावूर्ध्वाध पुटे यस्य निमीलनवशादन्योन्यसंलग्नपुटत्वात्त्रिविहरोमक, अत एव श्यामत्वलक्ष्म्या विजितं नितरां पराभूतं इन्दुलक्ष्म येन तादृश पक्ष्म नेत्रसम्बन्ध्यूर्ध्वाध पुटे पुनर्घनीभूतरोमाण्येव तमांसि वयमाचक्ष्महे ब्रूमः, न तु ततोऽन्यानि तमांसीत्यर्थः । तिमिरव्याप्तत्वात् किमपि न दृश्यत इति भावः । पक्ष्मेति जात्येकवचनं ॥ ३४ ॥

विवस्वताऽनायिपतेश्र मिश्राः स्वगोसहस्रेण स
मञ्जनानां । गावोऽपि नेत्रापरनामधेयास्तेनेद
मान्ध्यं खलु नान्धकारैः ॥ ३५ ॥

विवस्वतेति । विवस्वता नेत्रमित्यपरनामधेय यासां ताः सुरूपा जनानां गावोऽपि स्वस्य गवां किरणानां सहस्रेण सम सह मिश्रा दिने निमीलिता सत्यः अनायि पतेश्च नीता इव यस्मात् तेन खलु तेनेदमान्ध्य प्रकाशाभावान्नेत्रापगमाद्रूपाग्रहणं, नत्वन्धकारैः कृत्वेदमान्ध्य, तमोवशात् किमपि न दृश्यत इति भावः । अन्येनापि गोपालेन स्वगोसहस्रेण मिश्रिता परेषामपि गावो नीयन्त इति ३५॥

ध्वान्तस्य वामोरु विचारणायां वैशेषिकं चारु
मतं मतं मे । औलूकमाहुः खलु दर्शनं तत्
क्षमं तमस्तत्त्वनिरूपणाय ॥ ३६ ॥

ध्वान्तस्येति । हे वामोरु असिसुन्दरोरु ध्वान्तस्य विचारणायां तमः स्वरूपनिरूपणे विषये वैशेषिकं मतं षट्पदार्थसाधर्म्यवैधर्म्यनिरूपणात्मकं कणाददर्शनं चारु सदुपपत्तिकं न त्वन्यदिति मे मतं सम्मतं । खलु यस्मात् कारणात् सम्प्रदायविद तद्दर्शनं वैशेषिक शास्त्रमौलूकमाहुर्वदन्ति । अत एव तमसस्तत्त्वनिरूपणाय अनारोपितस्वरूपनिरूपणाय क्षमं समर्थमुलूकस्य घूकस्य सम्बन्धि, दृश्यते अनेनेति दर्शनं चारु सदुपपत्तिक न त्वन्यदिति मे मतं सम्मतं । खलु यस्मात् कारणात् तद्दर्शनं वैशेषिक शास्त्रमौलूकमाहुर्वदन्ति । वैशेषिकमप्युलूकापरनाम्ना कणादमुनिना प्रोक्तमित्यौलूकदर्शनं, ततश्चैतदपि तमस्तत्त्वनिरूपणाय समर्थमिति युक्तमित्यर्थ इति शब्दच्छल । वैशेषिकदर्शने च किमिदं तमो भावरूपं, अभावरूपं वेति सन्देहे भाभावमात्रमेव तम इति सूत्राविरोधेन व्योमशिवाचार्यादयः षट्पदार्थवैधर्म्याभावरूपमेव तमो न्यरूपयन् । श्रीधराचार्यास्त्वारोपितं भूरूपमेव तम इति निर्णयं भाभावे सत्येव तम प्रतीतिर्भाभाव एव तम इत्युक्तिरिति सूत्रविरोध पर्यहार्षुः । एतद्मतद्वयमाश्रीमदुदयनाचार्या

दयः पुनर्मांसामजायमेव तमस्त्वेन निरनैषुः, यस्मात्तदौलूकं दर्शनं वैशेषिकशास्त्रं समस्ततत्त्वनिरूपणाय क्षममाहुरिति वाऽन्वयः । महत्यन्धकारे सत्यपि घटादिपदार्थं को वा पश्यतीति ध्वान्तविचारणायां क्रियमाणायां घूकनेत्रमेव चारु सर्वेभ्योऽप्यधिकमिति मे मतं पुनः पुनः सम्मतमित्यर्थः । उलूकनेत्रमेव महान्धकारे घटादिविलोकयितुं समर्थं, अस्मदीयनेत्राणां त्वान्ध्यमेव जातमिति भावः । यतो वैशेषिकं घटादीन् विशेषयत्येवेति तादृशं महान्धकारे घूकनेत्रमेव घटादीन् भेदेन जानाति न त्वस्मदीयं नेत्रं, तस्मात् तदेव चार्विति । तत्र युक्तमस्मत्यर्थमुत्तरार्द्धं । उलूकवृत्त्या कणानत्तीति कणादस्यैवोलूक इति नाम तेन प्रोक्तत्वादौलूकं । चारु मध्ये प्रतीपे च द्रविणे चातिसुन्दरे, इति विश्वः । वामोरु संहितशफेत्यादिना (पा० ४ । १ । ७०) ङऊ नद्याद्युह्रस्वः । औलूकं तेन प्रोक्तं (पा० ४ । ३ । १०१) इत्यण् पक्षे तस्येदमिति च (पा० ४ । ३ । १२०) ॥ ३६ ॥

ग्लानिस्पृशः स्पर्शनिषेधभूमेः सेयं त्रिशङ्कोरिव
सम्पदस्य । न किञ्चिदन्यत् प्रति कौशिकीये
दृशौ विहाय प्रियमातनोति ॥ ३७ ॥

ग्लानीति । ग्लानिस्पृशः कालिमस्पर्शिनः श्यामस्याथ च चैडालत्वान्मालिन्ययुक्तस्य निःश्रीकस्य तथाऽभावरूपत्वात् स्पर्शगुणनिषेधस्य भूमेः स्थानस्याथ च चण्डालत्वादेवास्पृश्यस्यास्यतमसः त्रिशङ्कोरिव सेयं प्रसिद्धा प्रत्यक्षेण गृह्यमाणा च सम्पद् बाहुल्येन स्वरूपलाभोऽथ च राज्यसमृद्धिः कौशिकीये औलूकेऽथ च विश्वामित्रदृशौ नेत्रे विहायान्यत् किञ्चित्प्रति अपरं किमपि वस्तु लक्षीकृत्य प्रियं हितं नातनोति, किन्तु तदीय एव नेत्रे लक्षीकृत्य हितं करोति । अन्यत्प्रति किञ्चिदल्पमपि प्रियं नातनोतीति वा । अन्धकारे ह्युलूकनेत्र एव पदार्थान् पश्यत इति तत्सम्पत्तयोः प्रिया । त्रिशङ्कोश्च सम्पद्विश्वामित्रस्यैव नेत्रयोः प्रिया नान्यस्य । एतदुपाख्यानं रामायणादौ प्रसिद्धं । कौशिकीये वृद्धाच्छः (पा० ४ । २ । ११४) ॥ ३७ ॥

मूर्द्धाभिषिक्तः खलु यो ग्रहाणां तद्भासमास्कन्दितनक्षत्रशोभां । दिवान्धकारं स्फुटलब्धरूपमालोकतालोकमुलूकलोकः ॥३८ ॥

मूर्द्धेति । यो रविर्नवानां ग्रहाणां मध्ये खलु निश्चितं मूर्द्धाभिषिक्तो राजा, उलूकानां लोकः सङ्घः तस्य रवेर्भया दीप्त्या समास्कन्दिता नितरां पराभूता ऋक्षशोभा नक्षत्रकान्तिर्यस्मिन् तस्य या स्फुटं उपलब्धानि अन्यजनेन दृष्टानि घटादिस्वरूपाणि यस्मिंस्तादृशमपि दिवा कर्म्मीभूत दिनमन्धकारमेवावलोकत, अपश्यत् दिने तस्य दर्शनाशक्तेः दिनमन्धकाररूपत्वेनैव मेन इत्यर्थः । तथा व्यक्तं लब्धानि घटादिरूपाणि यत्र तादृशमन्धकारमेवालोकमपश्यद्दर्शनसहकारिप्रकाशरूपत्वेनैव मेने, अर्थाद्रात्रावित्यर्थः । अन्धकारं स्फुटलब्धरूपमित्यावृत्त्या योज्य तेन तामसा विपरीतदृश एव भवन्तीति व्यज्यते । एवंविधमन्धकारञ्च स्फुटमतिप्रसिद्धं शुक्लभास्वरात्मकं लब्ध रूपं येन तादृशमालोकमेवापश्यत् । कृष्णरूपमपि तमः शुक्लभास्वरालोकत्वेनापश्यदिति विरुद्धमित्यर्थः । अथ च यो ग्रहराज. सूर्य्यः, आक्रान्तनक्षत्रलक्ष्मीकान्तद्भासं सूर्य्यदीप्तिमेवायमुलूकलोको दिवा दिनेऽन्धकारमपश्यत्, रात्रौ चान्धकारमालोकमपश्यत्, दिने सूर्य्यालोक एव तमो रात्रौ च तम एव सूर्य्यालोक इति ददर्शेत्यर्थः । कीदृशीं तद्भासं कीदृगन्धकारं स्फुटमुपलब्धानि घटादिरूपाणि यस्यामन्यजनेन तादृशीं स्फुटं चक्षुस्तत्स्वरूपलाभश्चेत्यन्धकारस्य नपुंसकत्वात्कपुंसकैकशेषैकवद्भावेन वा व्याख्येयं सूर्य्यदीप्त्याऽसमास्कन्दिताऽपराजूता नक्षत्रलक्ष्मीर्यत्र तं, अन्धकारविशेषणं वा । रात्रौ सूर्य्यदीप्तेरभावादतिरस्कृतनक्षत्रशोभमित्यर्थः । सूर्य्यदीप्तेरेव समास्कन्दनसामर्थ्यात् तमसैव रात्रौ यत् तिरस्करणं तेनैव नक्षत्रशोभा यस्मिन्निति वा, इत्यादिव्याख्यानानि ज्ञातव्यानि । नक्षत्रीमिति पाठे नदीत्वेऽपि समासान्तविधेरनित्यत्वात् कबभावः । मूर्द्धाभिषिक्तो राजन्यः, अन्धकारोऽस्त्रियाम्ध्वान्तमित्यमरः ॥ ३८ ॥

दिने मम द्वेषिणि कीदृगेषां प्रचार इत्याक

लनाय चारीः । छाया विधाय प्रतिवस्तुल
ग्ना. प्रावेशयत् प्रष्टुमिवान्धकारः ॥ ३९ ॥

दिन इति । अन्धकार इत्याकलनाय सामस्त्येन ज्ञानार्थं प्रतिव-स्तुलग्ना पदार्थमात्रसम्बद्धा प्रतिच्छाया एव चारी गूढार्थपदिका-चारनारीर्विधाय चारपद ताभ्या दत्त्वा दिन प्रति सम्प्रेष्य समाग-तास्ता तत्रत्यवृत्तान्त प्रष्टुमिव पुन प्रावेशयत्, निशनैकत्यमित्य-र्थात् । इति कि । ममान्धकारस्य द्वेषिणि भासवसाने दिने विपये एना वस्तूना कीदृक् प्रचारो विहरण जहादिव्यवहारश्चेति । दिवा प्रतिपदार्थसम्बद्धा छाया एव रात्रौ समागत्य मिलिता निशस्यामि-तमन्धकार माविशन् । रात्रौ हि प्रकाशाभावे छाया अन्धकारेण सर्वै-कीभवतीति तत्सम्बन्धादेव महानन्धकार प्रतीयत इति भाव । ए-तेन प्रतिच्छायाऽपि तम एवेति वर्णित । अन्योऽपि राजो लोकस्थि-ति ज्ञातुकाम स्त्रीणा सर्वत्र प्रवेष्टु शक्यत्वात् चारनारी सम्प्रेष्य तत्रत्यवृत्तान्त विचार्य समागतास्ता प्रष्टुमात्मनिविध प्रवेशयति । छाया एव चारी प्रतिवस्तुलग्ना विधायेति वा । चारपद दत्त्वा प-द्दिन प्रत्येव प्रेषयामास, अत एव ता दिने प्रतिवस्तुलग्ना दृश्यन्त इति वा । चारी पुयागान्डीप् ॥ ३९ ॥

ध्वान्तस्य तेन क्रियमाणयेत्थ द्विष. शशीत्रासं
नयाऽऽय रुष्ट । उदस्तु प्रत्याशि जपारुणश्री
नराधिपेनानुनयेच्छयेव ॥ ४० ॥

इदानीं चन्द्रोदय वर्णयितुमुपक्रमते । ध्वान्तस्येति । तेन नरा-धिपेन नलेनेत्थ क्रियमाणया द्विष शत्रुभूतस्य ध्वान्तस्य वर्त्तनया रु-ष्ट क्रुद्ध इव जपाकुसुमवदरुणा श्रीयस्य स उदयन उदय प्राप्नुवन् श-शी तेनैव राज्ञा अथानन्तर अनुनयच्छया प्रसादनवाञ्छयवोपाशाकि शाकैस्तानुमारम्भि । अन्याऽपि वैरिवर्त्तनया रुष्ट सन् अरुणा न-यति, तत्परिहारायमुदित सन् वर्णकेन प्रसादनार्थं स्तूयत इति प्र-तीयमानोत्प्रेक्षा । इव शब्दस्यान्यत्र योजना वा । नपाशाकि इत्यत्र

(पा० ३ । १ । २५) णिजन्तात् कर्मणि णिच् ॥ ४० ॥

पश्यावृतोऽप्येष निमेषमद्रेरधित्यकाभूमितिरस्करिण्या । प्रवर्षति प्रेयसि चन्द्रिकाभिश्चकोरचञ्चूचुलुकान् प्रतीन्दुः ४१ ॥

पश्येति । हे प्रेयसि प्राणप्रिये एष इन्दुश्चन्द्रिकाभिश्चकोराणां चन्द्रिकाम्रवदमृतपायिनां पक्षिणां चञ्चू एव चुलुकास्तान् प्रति पूरयित्वा प्रकर्षेण वर्षति सुधामित्यर्थात् । यावता चकोरचञ्चुपूरणं भवति तावत्प्रमाणां वर्षतीत्यर्थः । त्वं पश्य । किम्भूतः । अद्रेरुदयाचलस्याधित्यकाभूम्योर्ध्वशिखरेणैव तिरस्करिण्या जवनिकया निमेषलक्षणमल्पकालमावृतोऽपि सन् सम्पूर्णानुदितोऽपि प्रथमचन्द्रिकाभिरेव चकोराणामानन्दं करोति किं पुनरुदितः सन्निति भावः । अन्योऽप्युपकारी दूरस्थोऽप्युदयोन्मुखोऽन्येषामुपकरोति ॥ ४१ ॥

ध्वान्ते द्रुमान्तात्तमिसारिकास्त्वं शङ्कस्व सङ्केतनिकेतमाप्ताः । छायाच्छलादुज्झितनीलचेला ज्योत्स्नानुकूलैर्गलिता दुकूलैः ॥४२ ॥

ध्वान्त इति । हे प्रिये त्वं चन्द्रोदयात् पूर्वं ध्वान्ते सति द्रुमान्तात्, तत्तन्निकटदेशानेव वृक्षाधोभागानेव सम्भोगार्थं कामुकदत्तसङ्केतनिकेत प्राप्ताः ता अभिसारिकाः स्वैरिणीः शङ्कस्व सम्भावय । तथा इदानीं चन्द्रोदये सति मूलाधोभागवर्तिच्छायाच्छलादुज्झित पूर्वधृत तमोऽनुकूल चेल यत्र याभिस्ताहृशीः सती. सवर्णत्वाज्ज्योत्स्नानुकूलैश्चन्द्रिकानुगुणैर्धवलतरैर्दुकूलैरुपलक्षिता सतीर्गलिताः सम्भोगं कृत्वा स्वगृहं प्रति पुनः परावृत्तास्त्वं सम्भावय । तमसि सत्येव केनापि न ज्ञातव्यमिति बुद्ध्या नीलं वस्त्रं परिधाय सङ्केतस्थानमागताः, चन्द्रोदये पुनर्नीलवस्त्रपरिधाने पूर्वं वङ्गीत्या तत् तत्रैव विहाय श्वेतं दुकूल सवर्णत्वात् परिधाय केनापि न ज्ञाताः । नीलचोला इति पाठे चोलः कूर्पासः ॥ ४२ ॥

त्वदास्यलक्ष्मीमुकुरं चकोरैः स्वकौमुदीमादय
मानमिन्दुं । दृशा निशेन्दीवरचारुभासा पी
बोरु रम्भातरुपीवरोरु ॥ ४३ ॥

त्वदिति। हे रम्भातरुपीवरोरु रम्भातरुवदतिपीवरौ ऊरू यस्यास्तत्सम्बुद्धि त्वं निशायामिन्दीवरं नीलोत्पलं तद्वच्चारुभा यस्यास्तया दृशा ऊरु सादरमिन्दुं पिब विलोकय। किम्भूतं। त्वदास्यलक्ष्म्या मुखशोभाया अवलोकनार्थं मुकुरं दर्पणमिव। तथा चकोरैः प्रयोज्यैः स्वकौमुदीमादयमानं निजकौमुदीं चकोरान् पाययमानं। उदिते चन्द्रे चकोराः सानन्दा जाता नीलोत्पलानि च विकसितानीति भावः। एतेनेन्दोः परोपकारित्वं सूचितं। विकसितेन्दीवरतुल्यया दृशा पिबेत्यनेन चन्द्रोदये हीन्दीवरं विकसति त्वं चैवम्भूतया दृशा यदा चन्द्रमवलोकयिष्यसि तदा जगत्त्वद्दृशं चन्द्रावलोकनविकसितमिन्दीवरमेवैतदिति ज्ञास्यतीति सूचितं। दिव सद्भावादसाद्दृश्यमिति। इन्दीवरस्य विकसितत्वद्योतनार्थं निशापदं। चकोरैः गतिबुद्धीति (पा० १।४।५२) कर्मत्वप्राप्तावपि आदिखाद्योर्न (पा०१।४।५२।वा-२) इति प्रतिषेधात् कर्तरि तृतीया। आदयमानं निगरणचलनार्थेभ्यश्च इति परस्मैपदप्राप्तावपि अदेः प्रतिषेधो वक्तव्यः (पा०१।३।८७।वा १) इति निषेधात् णिचश्चेति (पा० १। ३ ७४) तङ् ॥ ४३ ॥

असंशयं सागरगाद्गुदस्थात् पृथ्वीधरादेव म
थ पुरा य। अमुष्य यस्मादधुनाऽपि सिन्धौ
स्थितस्य शैलादुदयं प्रतीमः ॥४४ ॥

असंशयमिति। पुरा पूर्वं सागरभाक् समुद्रगतस्योऽयं चन्द्रः मथोद्यतभूतात् पृथ्वीधरात् पर्वतान्मन्दराद्रेरेव हेतोरुदस्थादुत्पन्न इत्यसंशयं निश्चितं पुराणादौ यदेव श्रूयते तत सत्यमित्यर्थः। पुरा उदस्थात् प्रथमसम्भवावसरे तस्मादेव समुत्थित इति वा। तत्र हेतुमाह यस्माद्धेतोरधुनाऽपि सम्भवान्तरावसरेऽपि सिन्धौ स्थितस्य सागरगर्भस्थस्याप्यमुष्य चन्द्रस्य शैलादुदयाचलादेवोदयमुत्पत्तिं मवीमा जानीम।

